# सिद्धान्तलेशसंग्रहः ।

श्रीअप्पयदीक्षितविरचितः ।


पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण


प्राचीनां व्याख्यामवलम्ब्य सङ्कलितया व्याख्यया समलङ्कृतः

तेनैव संस्कृतः प्रकाशितश्च ।

द्वितीय संस्करणम् ।


कलिकातानगर्य्याम् ।

नारायणयन्त्रे

मुद्रितः ।

इं १८९७ ।



पण्डितकुलपतिः

**श्रीजीवानन्दविद्यासागर वि, ए,**

PANDIT-KULAPATI

JIBANANDA VIDYASAGARA, B.A.

Superintendent Free Sanskrit College, Calcutta.

# सूचीपत्रम् ।

## प्रथमपरिच्छेदे



## द्वितीयपरिच्छेदे

## तृतीयपरिच्छेदे



## चतुर्थपरिच्छेदे



---

# सिद्धान्तलेशसंग्रहस्य

## प्रथम परिच्छेदः ।



अधिगतभिदा पूर्वाचार्य्यानुपेत्य सहस्रधा
सरिदिव महीभेदान् सम्प्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥ १ ॥

---

अधिगतभिदेति । दृष्टान्तमुखेन श्रीमूर्त्तिचरणारविन्द-गङ्गयोरनुसन्धानलक्षणम् अपि मङ्गलं करोति शौरीति । शौरिपदोद्गता सरित् महीभेदान् सम्प्राप्य यथा सहस्रधा अधिगतभिदा तथा भगवत्पादश्रीमन्मुखाम्बुजनिर्गता ब्रह्माद्वयै-कपरायणा जननहरणी सूक्तिः पूर्वाचार्य्यान् व्याख्यातॄन् व्याख्ये-यत्वेन उपेत्य अर्थतः सहस्रधा अधिगतभिदा सती जयतीति सम्बन्धः । अत्र सूक्तिः सहस्रधाधिगतभिदेति सूक्तिविशेषणेन स्वग्रन्थे प्रदर्शयिष्यमाणसिद्धान्तभेदानां सर्वेषां भगवत्पादश्रीम न्मुखाम्बुजनिर्गता सूक्तिरेव मूलमिति सूचितम् । अभिगतभिदा प्राप्तभिदा सरित् गङ्गा महीभेदान् भूप्रदेशान् शौरेः श्रीमहा-विष्णोः पदोद्गता पादाम्बुजनिर्गता जयति सर्वोत्कर्षेण वर्त्तते इति स्तुतिः । भगवत्पादश्रीमन्मुखमेव अम्बुजं कमलं तस्मात् निर्गता मुखे अम्बुजत्वारोपे कान्तिमत्त्वादिरूपं श्रीमत्वं निमित्तमिति सूचनार्थं श्रीमदिति विशेषणम् । जननहरणी जननं संसारस्तत् स्वजन्यब्रह्मज्ञानद्वारा हरतीति जननहरणी सूक्तिः ग्रन्थतोऽर्थ-

प्राचीनैर्व्यवहारसिद्धिविषयेष्वात्मैक्यसिद्धौ परम्
सन्नह्यद्भिरनादरात् सरणयो नानाविधा दर्शिताः।
तन्मूलानिह संग्रहेण कतिचित् सिद्धान्तभेदान् धियः
शुद्ध्यै सङ्कलयामि तातचरणव्याख्यावचःख्यापितान्॥२

---

तस्य निरवद्यं भाष्यं ब्रह्माद्वयैकपरायणा ब्रह्म च तत् अद्वयञ्च ब्रह्माद्वयं ब्रह्माद्वयञ्च तत् एकञ्च ब्रह्माद्वयैकं परायणं परमतात्पर्य्यविषयो यस्याः सूक्तेः सा ब्रह्माद्वयैकपरायणा। अनेन विशेषणेन अद्वितीयं प्रपञ्चशून्यम् एकं रूपं सत्यज्ञानानन्दलक्षणं ब्रह्म सूक्तिपदसंगृहीतस्य भाष्यात्मकशास्त्रस्य विषय इत्युक्तं भवति। जननहरणीति विशेषणेन शास्त्रस्य मुक्तिः प्रयोजनमिति उक्तम्। अर्थात् मुक्तिकामः शास्त्रस्य अधिकारी, मुक्तेरधिकारिणश्च प्राप्यप्रापिभावलक्षणः सम्बन्धः सूचितः। एवं श्रुत्यर्थाभ्यां साक्षात् श्लोकेन भाष्यात्मकवेदान्तशास्त्रस्य विषयादिकं कथयता ग्रन्थकारेण स्वकीयग्रन्थस्य वेदान्तशास्त्रस्य प्रकरणत्वात् तु अस्यापि तदेव विषयादि इति सूचितं भवति॥ १॥

इदानीं चिकीर्षितं प्रतिजानीते।

प्रचीनैरिति। प्राचीनैः आचार्य्यैः आत्मैक्यसिद्धौ परम् अत्यन्तं सन्नह्यद्भिः तात्पर्य्यवद्भिः आत्मैक्यसिद्ध्युपायतया व्यवहारसिद्धविषयेषु भ्रान्तिमात्रसिद्धपदार्थेषु जीवेश्वरजगद्रूपेषु अनादरात् सरणयः प्रकारा नानाविधाः परस्परविरुद्धा दर्शिताः। अनादरादित्यनेन परस्परविरुद्धेषु जीवैकत्वनानात्वतत्प्रतिविम्बत्वादिरूपप्रकारेषु अभिनिवेशवतामाचार्य्याणां भेदवादिनामिव अनाप्तत्वं स्यादिति शङ्का निराकृता भवति। विवक्षित-

तेषूपपादनापेक्षान् पक्षान् प्रायो यथामति।
युक्त्योपपादयन्नेव लिखाम्यनतिविस्तरान् ॥३॥

---

वस्तुप्रतिपत्त्युपायतया विरुद्धनानाप्रकारप्रदर्शनमाचार्य्याणां न दोषाय भवति किन्तु अलङ्काराय भवति प्रतिपत्तृणां प्रज्ञा-वैचित्र्येण कस्यचित् प्रतिपत्तुः केनचित् प्रकारेण मुक्तिःसाधनब्रह्मात्मैक्यज्ञानलाभात्। तदुक्तं सुरेश्वराचार्य्यैः"यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता" इति। व्युत्पत्तिः बोधः प्रत्यक्चासौ आत्मा च प्रत्यगात्मा सर्वान्तरश्चिदात्मा तस्मिन् विषये प्रक्रिया प्रकारः इह वेदान्तशास्त्रे साध्वी निरवद्या गुणभूता च अनवस्थिता नानाविधा परिमले दीक्षितैरप्येतदुक्तम्, अकल्पितवस्तुप्रति-पत्त्युपायतया कल्प्यमानेषु पदार्थेषु विरोधो न दोषावहः यथा तात्त्विकारुन्धतीप्रतिपत्त्युपायतया नानापुरुषैः कल्प्य-मानासु तत्प्राच्योदीच्यादिनक्षत्ररूपासु स्थूलारुन्धतीषु विरोधो न दोषावह इति तन्मूलान् प्राचीनप्रदर्शितनानाविध-सरणिमूलान् इह स्वग्रन्थे धियःशुद्ध्यै स्वबुद्धिपरिष्काराय। वस्तुतस्तु लोकानुग्रह एव प्रयोजनमिति बोध्यम्। तातचरणानां पितृचरणानां व्याख्यारूपैर्वचोभिः ख्यापितान् ज्ञापितान् अनेन स्वस्य ब्रह्मविद्यामाचार्य्यादेव लब्धां दर्शयति स्वग्रन्थे स्वोपादेयत्वसिद्धये इह संग्रहेण सिद्धान्तभेदान् सङ्कलयामि इति उक्तमेव विवृण्वन्। ननु प्राचीनग्रन्थसिद्धान्तानामेव स्वग्रन्थे संग्रह इत्युक्तमयुक्तं, प्राचीनग्रन्थेषु अविद्यमानस्यापि युक्तिभिः उपपादनस्य स्वकीयसंग्रहग्रन्थे तत्र तत्र उपलम्भादिति शङ्कां निराकरोति तेषु इति ॥ २ ॥ ३ ॥

तत्र तावत् आत्मा वा अरे द्रष्टव्यः श्रोतव्यः इति अधीतसाङ्गस्वाध्यायस्य वेदान्तैः आपातप्रतिपन्ने ब्रह्मात्मनि समुदितजिज्ञासस्य तज्ज्ञानाय वेदान्तश्रवणे विधिः प्रतीयमानः किंविध इति चिन्त्यते ॥४॥

त्रिविधः खलु विधिर्विधाः अपूर्वविधिर्नियमविधिः परिसङ्ख्याविधिश्चेति । तत्र कालत्रयेऽपि कथमपि अप्राप्तस्य प्राप्तिफलको विधिराद्यः, यथा

---

स्वग्रन्थे प्रथमं श्रवणविधिर्विचार्यते इत्याह तत्र तावदिति । श्रवणविधावधिकारिणं निर्दिशति अधीतेति । वेदान्तैर्जनितापातप्रतिपत्तिविषये ब्रह्मभिन्नात्मनि सम्यग् दार्ढ्येन उदिता उत्पन्ना जिज्ञासा निर्णयरूपज्ञानेच्छा यस्य इत्यर्थः । अधीतवेदस्यापि शिक्षाकल्पव्याकरणादीनां वेदाङ्गानाम् अध्ययनाभावे सति व्युत्पत्तेरभावात् जिज्ञासा हेतुभूता पातप्रतिपत्तिरपि न सम्भवेदित्यभिप्रेत्य अधीतसाङ्गस्वाध्यायस्य इत्युक्तम् । न च निर्दोषवेदान्तजन्मायाः ब्रह्मात्मप्रतिपत्तेः कथम् आपातत्वमिति वाच्यं ? नाहं ब्रह्मेति प्रत्यक्षविरोधादिशङ्कया, प्रमारूपायामपि ब्रह्मात्मप्रतिपत्तौ अप्रामाण्यशङ्कास्पदत्वरूपस्यापातत्वस्य सम्भवादिति भावः । वेदान्तश्रवणे श्रोतव्य इति विधिः प्रतीयमान इति सम्बन्धः । तज्ज्ञानायेति । अप्रामाण्यशङ्कानास्पदब्रह्मात्मज्ञानाय इत्यर्थः ॥४॥

खलुशब्देन अपूर्वविधित्वादिप्रकारत्रयस्य पूर्वतन्त्रे प्रसिद्धिर्द्योत्यते कालत्रयेऽपि इति । कथमपि दृष्टार्थत्वेन अदृष्टार्थत्वेन

व्रीहीन् प्रोक्षतीति । नात्र व्रीहीणां प्रोक्षणस्य संस्कारकर्मणो विना नियोगं मानान्तरेण कथमपि प्राप्तिरस्ति ॥५॥

पक्षे प्राप्तस्य अप्राप्तांशपरिपूरणो विधिर्द्वितीयः । यथा व्रीहीनवहन्तीति अत्र विध्यभावेऽपि पुरोडाशप्रकृतिद्रव्याणां तण्डुलनिष्पत्त्याक्षेपादेव अवहननप्राप्तिर्भविष्यतीति न तत्प्राप्त्यर्थोऽयं विधिः किंतु आक्षेपादवहननप्राप्तौ तद्वदेव लोकावगतकारणत्वाविशेषात् नखविदलनादिरपि पक्षे प्राप्नुयात्

---

वा केनापि प्रकारेण कालत्रयेऽपि कदापि विधिं विना प्राप्तिरहितस्य प्रोक्षणादेः प्राप्तिफलको विधिराद्यः अपूर्वविधिरित्यर्थः । व्रीहीनिति, द्वितीयाश्रुत्या व्रीहीणां संस्कार्य्यत्वावगमात्, प्रोक्षणस्य संस्कारकर्मत्वमुक्तमिति मन्तव्यम् । नियोगमिति विधायकशब्दमित्यर्थः ॥५॥

पुरोडाश इति। दर्शपूर्णमासयोराग्नेयादि पुरोडाशादिद्रव्यं विहितम् । व्रीहयस्तूत्पन्ने यागे यागानुवादेन विहिताः । तथा च व्रीहीणामुत्पन्नशिष्टानामुत्पत्तिशिष्टपुरोडाशावरुद्धे यागे साक्षात्साधनत्वायोगात्, पुरोडाशप्रकृतिद्रव्यत्वेन यागसाधनत्वं पर्य्यवस्यति । पुरोडाशप्रकृतित्वञ्च व्रीहीणां तण्डुलनिष्पत्तिद्वारकं, तण्डुलनिष्पत्तिश्च स्वकारणमाक्षिपति । तण्डुलनिष्पत्तौ च कारणमन्वयव्यतिरेकाभ्यामवहननं निश्चितमिति विधिं विनापि विधित्सितावहननं प्राप्नोतीत्यर्थः ।

इति अवहननाप्राप्तांशसम्भवात् तदंशपरिपूरणफलको विधिरयम् ॥६॥

द्वयोः शेषिणोरेकस्य शेषस्य वा एकस्मिन् शेषिणि द्वयोः शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य वा निवृत्तिफलको विधिस्तृतीयः, यथा अग्निचयने इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इति। यथा वा चातुर्मास्यान्तर्गतेष्टिविशेषे गृहमेधीये आज्यभागौ यजतीति। अग्निचयनेऽश्वरशनाग्रहणं गर्दभरशनाग्रहणं चेति द्वयमनुष्ठेयम्। तत्र अश्वरशनाग्रहणे इमामगृभ्णन्निति मन्त्रो लिङ्गादेव रशनाग्रहणप्रकाशनसामर्थ्यरूपात् नित्यं प्राप्नोतीति न तत्रापूर्वार्थस्तदप्राप्तांशपरिपूरणार्थो वा विधिः किन्तु लिङ्गाविशेषाद्गर्दभरशनाग्रहणेऽपि मन्त्रः प्राप्नुया-

---

ननु अवहननस्य लोकतः प्राप्तौ तस्य लोकत एव नित्यप्राप्तिरपि स्यादित्यत आह किन्त्वित्यादिना। आक्षेपादिति तण्डुलनिष्पत्त्या आक्षेपादित्यर्थः। किन्तु अवहननाप्राप्तांशसम्भवात् तदंशपरिपूरणफलक इति सम्बन्धः ॥६॥

द्वयोरिति। द्वयोः शेषिणोः एकस्य शेषस्य नित्यप्राप्तौ शेष्यन्तरस्य निवृत्तिफलकः एकस्मिन् शेषिणि द्वयोः शेषयोर्नित्यप्राप्तौ शेषान्तरस्य निवृत्तिफलको विधिस्तृतीय इति योजना। न तदिति।

दिति तन्निवृत्त्यर्थः। तथा गृहमेधीयस्य दर्शपूर्णमा-सप्रकृतिकत्वात् अतिदेशात् एव आज्यभागौ नित्यं प्राप्नुत इति। न तत्र विधिस्तत्प्राप्त्यर्थस्तन्नियमार्थो वा, किं तु अतिदेशात् प्रयाजादिकमपि प्राप्नुया-दिति तन्निवृत्त्यर्थः। गृहमेधीयाधिकरणपूर्वपक्ष-रीत्येदमुदाहरणं यत्र क्वचिदुदाहर्त्तव्यमित्युदा-हृतम् ॥७॥

न च नियमविधावपि पक्षप्राप्तावहननस्य अप्राप्तांशपरिपूरणे कृते तदवरुद्धत्वात् पाक्षिक-साधनान्तरस्य नखविदलनादेर्निवृत्तिरपि लभ्यते इति इतरनिवृत्तिफलकत्वाविशेषात् नियमपरि-

---

प्राप्तत्वात् न तत्प्राप्त्यर्थः। नित्यप्राप्तत्वात् न तदप्राप्तांशपूरणार्थो वेत्यर्थः। अतिदेशात् एवेति। प्रकृतिवद्विकृतिः कर्त्तव्या इत्येवं-रूपादित्यर्थः। न तत्र विधिरिति। आज्यभागौ यजतीति विधिः आज्यभागयोः प्राप्त्यर्थो न भवति विधिं विना प्राप्तत्वात्, तयोरप्राप्तांशपरिपूरणार्थो वा न भवति नित्यप्राप्तत्वात्, किन्तु तन्निवृत्त्यर्थः इति योजना। ननु आज्यभागौ यजतीति विधे-रतिदेशप्राप्तेतराङ्गकलापपरिसंख्यायकत्वं न सिद्धान्त इत्यत आह गृहमेधीयाधिकरणेति ॥७॥

नियमविधावपीति। परिसंख्याविधाविव नियमविधौ अपीत्यर्थः। तदवरुद्धत्वादिति। अवहननेनैव अवरुद्धत्वात् तण्डुलनिष्पत्त्याक्षेपस्य शान्तत्वादित्यर्थः। फलत इति। नियम-विधेः पक्षे अप्राप्तावहननादिक्रियाविधायकत्वात् परिसंख्या-

सङ्ख्ययोः फलतो विवेको न युक्त इति शङ्क्यम् । विधितोऽवहननियमं विना आक्षेपलभ्यस्य नखविदलनादेर्निवर्त्तयितुमशक्यतया अप्राप्तांशपरिपूरणरूपस्य नियमस्य प्राथम्याद्विधेयावहननगतत्वेन प्रत्यासन्नत्वाच्च तस्यैव नियमविधिफलत्वोपगमात् तदनुनिष्पादिन्या अविधेयगतत्वेन विप्रकृष्टाया इतरनिवृत्तेः सन्निकृष्टफलसम्भवे फलत्वानौचित्यात् ॥८॥

एवं विविक्तासु तिसृषु विधेर्विधासु किंविधः श्रवणविधिराश्रीयते । प्रकटार्थकारादयः केचिदाहुः । अपूर्वविधिरयम् अप्राप्तत्वात् । न

---

विधेश्च नित्यप्राप्तक्रियादिविधायकत्वात् नियमपरिसंख्याविध्योः स्वरूपतो विवेकलाभेऽपि फलतो भेदो न युक्त इत्यर्थः । नियमस्य नियमविधिफलत्वोपगमे हेतुद्वयमाह प्राथम्यादित्यादिना । प्रत्यासन्नत्वादिति । विधिं प्रति प्रतिपत्त्यासन्नत्वादित्यर्थः । विधेयक्रियागतत्वं प्रत्यासन्नत्वे हेतुः इतरनिवृत्त्यपेक्षया प्रथमोपस्थितत्वरूपे प्राथम्ये हेतुमाह विधित इत्यादिना । अशक्यतयेत्यन्तेन इतरनिवृत्तेर्नियमविधिफलत्वानुपगमे हेतुद्वयमाह । तदनुनिष्पादिन्या इत्यादिना अप्राप्तांशपरिपूरणोपस्थित्यनन्तरमुपस्थिताया इत्यर्थः । अनेन विलम्बितोपस्थितिकत्वम् एको हेतुरुक्तः इति मन्तव्यम् । द्वितीये हेतौ विप्रकृष्टत्वे हेतुमाह । अविधेयेति । व्यावृत्तिर्नाम अननुष्ठेयता अनङ्गता वा सा चाविधेयनखविदलनादिगतेत्यर्थः ॥८॥

हि वेदान्तश्रवणं ब्रह्मसाक्षात्कारे हेतुरित्यत्रान्वय-व्यतिरेकप्रमाणमस्ति लोके कृतश्रवणस्यापि बहुशः तदनुत्पत्तेः अकृतश्रवणस्यापि गर्भगतस्य वामदेवस्य तदुत्पत्तेरुभयतो व्यभिचारात्। न वा श्रवणमात्रं श्रोतव्यार्थसाक्षात्कारहेतुरिति शास्त्रान्तरे गृहीतः सामान्यनियमोऽस्ति येनात्र विशिष्य हेतुत्वग्राहकाभावेऽपि सामान्यमुखेनैव हेतुत्वं प्राप्यते इति शङ्केत गान्धर्वादिशास्त्रश्रवणस्य

---

इदानीं प्रकृतं श्रवणविधिविचारमारभते एवमिति। अप्राप्तत्वादिति। ब्रह्मसाक्षात्कारं प्रति वेदान्तश्रवणस्य साधनतया मानान्तरात् अनधिगतत्वेन अप्राप्तार्थकत्वादित्यर्थः। ननु मानान्तरात् अनधिगतत्वमसिद्धम् अन्वयव्यतिरेकाभ्यां तदवगतिसम्भवात्। तथाहि वेदान्तश्रवणे सति ब्रह्मसाक्षात्कारो दृश्यते। असति च तस्मिन् न दृश्यते इति तत्राह न हीति। तदनुत्पत्तेरिति। साक्षात्कारानुत्पत्तेरित्यर्थः। वामदेवस्येति तथाच श्रुतिः "गर्भे एवैतच्छयानो वामदेव एवमुवाच" इति एवं पूर्वोक्तप्रकारेण एतत् ब्रह्मज्ञानजन्मना स्वकीयां मुक्तिमुवाचेत्यर्थः। ननु गान्धर्वशास्त्रश्रवणे षड्जादिस्वरसाक्षात्कारस्तदभावे तदभाव इति दृष्टं, तत्र श्रोतव्यार्थविशेषस्वरसाक्षात्कारं प्रति गान्धर्वशास्त्रविचारात्मकस्य श्रवणविशेषस्य कारणत्वग्रहकाले लाघवात् श्रोतव्यार्थसाक्षात्कारत्वावच्छिन्नं प्रति श्रवणमात्रस्य कारणत्वं गृह्यते। तथा च ब्रह्मसाक्षात्कारवेदान्तश्रवणयोर्विशिष्य कार्य्यकारणभावग्रहाभावेऽपि ब्रह्मसाक्षात्कारस्यापि श्रोतव्यार्थसाक्षात्कारत्वात् वेदान्तश्रवणस्यापि श्रवणत्वात्

षड्जादिसाक्षात्कारहेतुत्वाभ्युपगमेऽपि कर्मकाण्डादिश्रवणात् तदर्थधर्मादिसाक्षात्कारादर्शनेन व्यभिचारात्। तस्मादपूर्वविधिरेवायम्। भाष्येऽपि सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदित्यधिकरणे विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्योऽपूर्वत्वादिति

---

उक्तसामान्यरूपेण वेदान्तश्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वं प्राप्तमेवेति नापूर्वविधिरिति नेत्याह। न वा श्रवणमात्रमिति धर्मश्रवणस्थले अदृष्टरूपस्य अलौकिकश्रेयःसाधनताविशिष्टयागादिरूपस्य वा धर्मस्य साक्षात्कारयोग्यतया साक्षात्कारादर्शनेन उक्तसामान्यकार्य्यकारणभावस्य व्यभिचारात् न लाघवावतार इति। गान्धर्वशास्त्रश्रवणस्यान्वयादिना स्वरसाक्षात्कारहेतुत्वग्रहेऽपि वेदान्तश्रवणस्य न ब्रह्मसाक्षात्कारहेतुत्वप्राप्तिः इत्याह गान्धर्वेति। कर्मेति। अत्र आदिपदेन हिरण्यगर्भादिदेवताप्रतिपादकवाक्यजातम् गृह्यते। धर्मादि इत्यादिपदेन हिरण्यगर्भादिदेवता गृह्यते। तस्मादिति प्राप्त्यभावादित्यर्थः। अत्रार्थे सम्मतिमाह भाष्येऽपि इति। भाष्ये अपि अपूर्वविधिः एवाङ्गीकृत इति सम्बन्धः। अयमर्थः, बृहदारण्यके श्रूयते "तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन अनुष्ठाय बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरिति यस्मादतिक्रान्ता ब्राह्मणाः श्रवणादिसाधनैरात्मानं विदित्वा जीवन्मुक्तिव्यञ्जकं सकलविक्षेपरहितं परमहंसाश्रमं प्राप्तास्तस्मादिदानीन्तनोऽपि ब्राह्मणो ब्रह्मसाक्षात्कारार्थी पाण्डित्यं निर्विद्य बाल्येन स्थातुमिच्छेत्"।

**पाण्डित्यशब्दिते श्रवणे अपूर्वविधिरेवाङ्गीकृत इति ॥६॥**

---

विचारप्रयोजकाऽपातरूपा बुद्धिः पण्डा सा अस्य सञ्जातेति पण्डितः तस्य कृत्यं पाण्डित्यं श्रवणमित्यर्थः। बाल्यं नाम बालस्य शिशोः कृत्यं दम्भदर्पादिराहित्यं न तु बाले प्रसिद्धयथेष्टचेष्टारूपं तस्य वहिर्मुखत्वापादकत्वेन विद्याविरोधित्वात् दम्भादिराहित्यरूपभावशुद्धिवाचकेन बाल्यपदेन भावशुद्धिसाध्यं मननं लक्ष्यते श्रवणानन्तरभावित्वात् तस्य बाल्यं च पाण्डित्यं च निर्विद्य निश्चयेन लब्ध्वा तदुभयं सम्यगनुष्ठाय इति यावत्। अथ अनन्तरं मुनिः सम्यग् मननशीलो भवेदिति विधिः। ध्यानमत्र मननं ध्याननिष्ठे व्यासादौ मुनिशब्दप्रयोगदर्शनात्, ध्यानं विना विचारमात्रविश्रान्ते तदप्रयोगाच्च। तथा च अपूर्वत्वात् यथा श्रवणे विधिरेवं मौनस्य विद्यासहकारिणो विद्योत्पत्तौ साधनस्य विधिरेव आश्रयितव्यः। अपूर्वत्वादेवेति भाष्यार्थः, सूत्रार्थस्तु, तद्वतः श्रवणमननजनिततत्त्वनिर्णयरूपविद्यावतस्तत्त्वसाक्षात्कारार्थिनः सन्न्यासिनः पाण्डित्यबाल्यापेक्षया तृतीयं मौनमथ मुनिरिति वाक्येन विधीयते। ननु पाण्डित्यबाल्याभ्यां निर्णीततत्त्वसाक्षात्कारार्थी ध्याने स्वयमेव प्रवर्त्तते रत्नतत्त्वसाक्षात्कारार्थीव रत्नतत्त्वगोचरप्रत्ययसन्ततौ। न च तत्त्वसाक्षात्कारार्थिनः तत्साधनश्रवणादावपि स्वयमेव प्रवृत्तिः स्यादिति तत्रापि विधि वैयर्थ्यशङ्का तुल्येति वाच्यम्? विधिं विना वेदान्तश्रवणे प्रवृत्त्यसम्भवस्य साधितत्वात्। तथा च मौनविधिर्व्यर्थ इत्यत्राह पक्षेणेति। मौनस्य सहकार्य्यन्तरस्य विधित्वं सिध्यति एवं सति च नियमविधौ तदतिक्रमे नियमादृष्टालाभेन साक्षात्कारानुदय-

वेदान्तश्रवणस्य नित्यापरोक्षब्रह्मसाक्षात्कारहे-
तुत्वं नाप्राप्तम् अपरोक्षवस्तुविषयप्रमाणत्वावच्छे-
देन साक्षात्कारहेतुत्वप्राप्तेः शाब्दापरोक्षवादे
व्यवस्थापनात्। तदर्थमेव हि तत्प्रस्तावः। न च
तावता ब्रह्मप्रमाणत्वेनापातदर्शनसाधारणब्रह्म-
साक्षात्कारहेतुत्वप्राप्तावपि अविद्यानिवृत्त्यर्थमिष्य
माणसत्तानिश्चयरूपतत्साक्षात्कारहेतुत्वं श्रवणस्य

---

भीत्या स्वभावप्राप्तमपि विषयदर्शनं यत्नेन निवार्य्य ध्यान एव प्रवर्त्तत इति पक्षेणेति सूत्रभागाभिप्रायः। ननु ब्रह्मविद्याप्रधाने प्रकरणे कथं ध्यानादिविधिर्वाक्यभेदप्रसङ्गादिति नेत्याह विध्यादिवदिति। अङ्गविधिवदित्यर्थः। यथा प्रधानविधिपरे प्रकरणे अवान्तरवाक्यभेदेन प्रयाजाद्यङ्गविधिस्तथा ब्रह्मविद्याङ्गध्यानादिविधिरित्यर्थः। उक्तरीत्या मौनविधेर्नियमविधित्वे स्थिते भाष्यकृता अपूर्वत्ववचनं मौनविध्यंशे पाक्षिकाप्राप्त्यभिप्रायं द्रष्टव्यम्। यथा सूत्रं पक्षे प्राप्त्यभावादित्येव वक्तव्ये भाष्ये अपूर्वत्वात् इति वचनं श्रवणविधिरपूर्वविधिरेव इति ज्ञापनार्थमप्राप्तिमात्रं च दृष्टान्तदार्ष्टान्तिकभावो विवक्षित इति प्रकटार्थकारादीनामाशयः ॥८॥

अपूर्वविधित्वपक्षं दूषयति वेदान्तश्रवणस्येति। विचारविशिष्टवेदान्तरूपस्य श्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वं विधिं विनापि प्राप्तमित्यर्थः। ननु वाक्यस्य कथं साक्षात्कारहेतुत्वम् इन्द्रियजन्यज्ञानस्यैव साक्षात्कारत्वादत आह अपरोक्षवस्त्विति। अपरोक्षवस्तुविषयकत्वं ज्ञानस्य अपरोक्षत्वम्, न तु

न प्राप्तमिति वाच्यम्। विचारमात्रस्य विचार्य्य-मात्रनिर्णयहेतुत्वस्य ब्रह्मप्रमाणस्य तत्साक्षात्कार-हेतुत्वस्य च प्राप्तौ विचारितवेदान्तशब्दज्ञान-रूपस्य श्रवणस्य तद्धेतुत्वप्राप्तेः ॥१०॥

---

इन्द्रियजन्यत्वं वस्तु अपरोक्षत्वं च वस्तु व्यवहारानुकूलचैतन्या-भिन्नत्वमिति शाब्दापरोक्षवादे वक्ष्यते, तथा च नित्यापरोक्ष-त्वेन श्रुतिसिद्धब्रह्मरूपवस्तुविषयकत्वात् वेदान्तजन्यज्ञानस्य साक्षात्कारत्वसिद्धिरित्यर्थः। ननु अस्मिन् शास्त्रे शाब्दापरोक्ष-वादस्य का सङ्गतिरत आह तदर्थमेवहि इति। वेदान्तानां ब्रह्मापरोक्षप्रमितिजनकत्वसिध्यर्थमेव तद्वादसङ्गतिर्नान्यार्थम् इति एतत् प्रसिद्धमित्यर्थः। ननु अपरोक्षवस्तुविषयकं प्रमाणं स्वविषये साक्षात्कारहेतुरिति शाब्दापरोक्षवादे प्रसाधनेन वेदान्तानामपि स्वविषये नित्यापरोक्षे ब्रह्मणि अपरोक्षज्ञानसामान्यहेतुत्वमेव प्राप्तम्। न तु सत्तानिश्चय-रूपतत्साक्षात्कारहेतुत्वं तच्च विचारविशिष्टवेदान्तरूपश्रवणस्य एव युक्तम् अन्यथा विचारात् प्रागपि सत्तानिश्चयप्रसङ्गात्, न च वाक्यजन्यसाक्षात्कारमात्रादेव अविद्यानिवृत्तिलक्षणफल-सम्भवात् सत्तानिश्चयरूपत्वं साक्षात्कारस्य न अन्वेषणीयमिति वाच्यम्? तत्र तत्र ब्रह्मोपदेशप्रदेशेषु यावत् संशयनिवृत्तिः पुनः पुनः प्रश्नप्रतिवचनलिङ्गेन वेदान्तविज्ञानसुनिश्चितार्था इत्यादिस्मृत्या श्रुतब्रह्मणोऽपि यथापूर्वं संसारानुवृत्त्यनुमिता-विद्यानिवृत्त्यभावरूपलिङ्गेन च श्रवणमननध्यानशमदमभक्ति-वैराग्यादीनां ज्ञानपरिपाकहेतूनां विधिदर्शनलिङ्गेन च सत्ता-निश्चय-रूप-ब्रह्म-साक्षात्कारस्यैवाविद्यानिवृत्त्यर्थमिष्यमाणत्वात्

न चोक्त उभयतो व्यभिचारः सहकारिवैकल्येनान्वयव्यभिचारस्य अदोषत्वात्। जातिस्मरस्य जन्मान्तरश्रवणात् फलसम्भवेन व्यतिरेकव्यभिचाराभावात्। अन्यथा व्यभिचारेण हेतुत्वबाधे श्रुत्यापि तत्साधनताज्ञानासम्भवात्। घटसाक्षात्कारे चक्षुरतिरेकेण त्वगिन्द्रियमिव

---

तथा च वेदान्तश्रवणस्य उक्तरूपसाक्षात्कारहेतुत्वम् अप्राप्तमेव इति शङ्कते न च तावतेति। वेदान्तानामिति शेषः। अपरोक्षवस्तुविषयकं प्रमाणं स्वविषये साक्षात्कारहेतुरिति प्रसाधनमात्रेण इत्यर्थः। अपरोक्षवस्तुविषयकं प्रमाणम् अपरोक्षज्ञानहेतुरिति स्थिते विचारो विचार्यनिर्णयहेतुरिति च स्थिते कार्यकारणभावद्वयमेलनेन प्रवृत्ते विचारविशिष्टवेदान्तज्ञानरूपश्रवणं सत्तानिश्चयरूपब्रह्मसाक्षात्कारहेतुरिति सिध्यति इति आह, विचारमात्रस्येति ॥ १० ॥

सहकारीति। चित्तैकाग्र्यरूपसहकारिवैकल्येन इत्यर्थः। उक्तकार्यकारणद्वयरूपप्रमाणबलेन श्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वे सिद्धे वामदेवस्य जन्मान्तरीयश्रवणादिकं कल्प्यते। यथा जातमात्रे जन्तौ दृश्यमानभोगस्य कारणतया प्राग्भवीयं कर्म कल्प्यते, तद्वदतो न व्यतिरेकव्यभिचार इत्याह, जातिस्मरस्येति। पूर्वजातिं स्मरतो वामदेवस्य इत्यर्थः। अन्यथेति। उक्तरीत्या द्विविधव्यभिचारपरिहारानुपगम इत्यर्थः। व्यभिचारनिश्चयेन हेतुत्वाभावरूपबाधनिश्चयात् श्रवणविधेरबोधकतापत्त्या तवापि अपूर्वविधिर्न

ब्रह्मसाक्षात्कारे श्रवणातिरेकेण उपायान्तरमस्तीतिशङ्कायां व्यतिरेकव्यभिचारस्यापि अदोषत्वाच्च। तथा च प्राप्तत्वात् न अपूर्वविधिः। अत एवावृत्तिरसकृदुपदेशात् इति अधिकरणभाष्ये दर्शनपर्य्यवसानानि हि श्रवणादीनि आवर्त्तमानानि दृष्टार्थानि भवन्ति, यथा अवघातादीनि तण्डुलनिष्पत्त्यवसानानीति श्रवणस्य ब्रह्मदर्शनार्थस्य दृष्टार्थतया दर्शपूर्णमासिकाव-

---

स्यादित्यर्थः। ब्रह्मसाक्षात्कारे श्रवणमिव तपोविशेषादिकम् उत्कृष्टजन्मप्राप्तिरूपं वा कारणान्तरमस्तीति शङ्काकाले वामदेवस्य कारणान्तरात् ज्ञानमुत्पन्नमिति शङ्कासम्भवेन श्रवणस्य वामदेवे व्यतिरेकव्यभिचारज्ञानं श्रवणस्य साक्षात्कारहेतुत्वग्रहप्रतिबन्धकं न भवति। न च एकस्य पदार्थस्य ज्ञाने परस्परनिरपेक्षकारणद्वयासम्भवेन ब्रह्मसाक्षात्कारे कारणान्तरसत्ताशङ्कैव न जायते इति वाच्यं? लोके तथा दृष्टत्वादित्याह, घटेति। वेदान्तश्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वे विधिं विनैव प्राप्ते फलितमाह तथा चेति। श्रवणादिविधेर्नियमविधित्वे सति एव आवृत्त्यधिकरणं सङ्गच्छते इत्याह, अत एवेति। अपूर्वविधित्वाभावादेव इत्यर्थः। अतएव आवृत्त्युपदेश इति सम्बन्धः। दर्शनपर्य्यवसानानि इत्यारभ्य तण्डुलनिष्पत्त्यवसानानि इत्यन्तस्य भाष्यस्य इयं योजना दृष्टार्थानि श्रवणादीनि आवर्त्तमानानि सन्ति दर्शनपर्य्यवसानानि

घातन्यायप्राप्तौ आवृत्त्युपदेशः। अपूर्वविधित्वे तु स न युज्यते सर्वौषधाऽवघातवत्। अग्निचयने सर्वौषधस्य पूरयित्वाऽवहन्त्यथैतदुपदधातीत्युपधेयोलूखलसंस्कारार्थत्वेन विहितस्य अवघातस्य दृष्टार्थत्वाभावात् न आवृत्तिरिति तन्त्रलक्षणे स्थितम्। अतो नियमविधिरेवायम् ॥११॥

---

भवन्ति। यथावघातादीनि आवर्त्तमानानि तण्डुलनिष्पत्त्यवसानानि भवन्तीति दृष्टार्थानि इत्यत्र दृष्टफलमात्मदर्शनमेव। अयं भावः, आत्मा वा अरे द्रष्टव्यः श्रोतव्यः इत्यादिना आत्मदर्शनोद्देशेन श्रवणादीनि विधीयन्ते तत्र किमितानि सकृदनुष्ठेयानि किं वा यावदात्मदर्शनमावर्त्यानि ? इति संशये सकृदेव अनुष्ठेयानि तावता विधेश्चरितार्थात्। यथा अग्निचयने सर्वौषधस्य पूरयित्वा अवहन्तीति वाक्यविहितसर्वौषधीनाम् अवहननमुपधेयोलूखलसंस्काररूपं सकृदेव अनुष्ठीयते, तद्वत् तथा च सकृदनुष्ठितश्रवणादिजन्यम् अदृष्टं जन्मान्तरे ब्रह्मदर्शनहेतुरित्यपूर्वविधित्वं श्रवणादिविधीनामिति प्राप्ते सिद्धान्तः, श्रवणाद्यावृत्तिः कर्त्तव्या कुतः असकृदुपदेशात्। तथाहि भृगुवल्ल्यां भृगुं प्रति पिता असकृत्तपसा ब्रह्म विजिज्ञासस्व इति उपदिशति तपः आलोचनं ब्रह्मविचारस्तथा छान्दोग्यस्य षष्ठाध्याये श्वेतकेतुं पुत्रं प्रति पिता विचारपूर्वकम् असकृत् तत् त्वमसि इति उपदिशति। किञ्च श्रवणादिभिः आत्मदर्शनफले जननीये श्रवणाद्यावृत्तिरूपदृष्टद्वारसम्भवे अदृष्टद्वारकल्पनायोगात् तत्त्वम्पदार्थयोः श्रवणाद्यावृत्तिं विना दुर्बोधत्वाच्च

तदभावे हि यथा वस्तु किञ्चित् चक्षुषा वीक्षमाणस्तत्र स्वागृहीते सूक्ष्मे विशेषान्तरे केनचित् कथिते तदवगमाय तस्यैव चक्षुषः पुनरपि सप्रणिधानं व्यापारे प्रवर्त्तते एवं मनसाऽहमिति गृह्यमाणे जीवे वेदान्तैरध्ययन-गृहीतैः उपदिष्टं निर्विशेषब्रह्मचैतन्यरूपत्वमा-

---

तण्डुलनिष्पत्तिफलकावघातवदावृत्तिरेव न तु अग्निचयनान्त-र्गतावघातवत् अनावृत्तिः तदन्तर्गतावघातस्य अदृष्टार्थत्वेन वैषम्यादिति व्युत्पादितमावृत्त्यधिकरणे तदपूर्वविधिवादिनां न सङ्गच्छते इति। तल्लक्षणमेकादशाध्यायः अत इति प्राप्तत्वादित्यर्थः। अतो हेतोः एवकारार्थे अपूर्वविधित्वाभावे अन्वयः॥ ११॥

नियमविधित्वे हेतुमाह तदभावे हीति। तदभावे मनस एव सावधानं तत्र निधाने कदाचित् पुरुषः प्रवर्त्तते इति सम्बन्धः। मनसा गृह्यमाणात्मगतविशेषग्रहणाय मनोव्यापार एव यत्नेन प्रवृत्तौ दृष्टान्तमाह, यथेति। किञ्चिदिति रत्नादि इत्यर्थः। तत्रेति रत्नादावित्यर्थः। तस्य एवेति। नतु व्यापारा-न्तरे इति एवकारार्थः। पुनरपि चक्षुषो व्यापारे प्रवर्त्तते इति सम्बन्धः, प्रणिधानं यथा भवति तथा प्रवर्त्तते इति प्रवृत्ति-क्रियाविशेषणं प्रणिधानं तच्च रत्नादिवस्त्वभिमुखतया चक्षुषः स्थापनमनन्तरमुन्मीलनव्यापारानुकूलयत्नः प्रवृत्तिरिति प्रणि-धानप्रवृत्त्योर्भेदः। वेदान्तैरिति। नेह नानास्ति किञ्चन प्रज्ञानं ब्रह्माहं ब्रह्मास्मीति आदिभिरित्यर्थः। इह ब्रह्मणि नाना-

कथं तदवगमाय तत्र सावधानं मनस एव निधाने कदाचित्पुरुषः प्रवर्त्तेत इति वेदान्तश्रवणे प्रवृत्तिः पाक्षिकी स्यात्। अप्राप्य मनसा सहेति तु मनसैव अनुद्रष्टव्यं दृश्यते त्वग्र्यया बुद्ध्येत्यपि श्रवणेनाऽनवहितमनोविषयेति शङ्कासम्भवात् ॥१२॥

---

ज्ञातृज्ञानज्ञेयरूपेण भिन्नं विशेषजातं किञ्चिदपि नास्ति प्रकृष्टं ज्ञानं प्रज्ञानं नित्यस्वप्रकाशजीवचैतन्यं ब्रह्माहं बुद्ध्यादिसाक्षिभूतश्चिदात्मा ब्रह्माऽस्मि भवामीति श्रुतीनामर्थः। अध्ययनपदं साङ्गाध्ययनपरम्। आकर्ण्य परोक्षतया ज्ञात्वा श्रुतौ श्रद्दधानः तदधिगमाय इत्यर्थः। तत्रेति। अहमिति गृह्यमाणात्मनि इत्यर्थः। सावधानमैकाग्र्यं यथा भवति तथा। नन्वहमिति गृह्यमाणजीवे विशेषाकर्णनानन्तरं वेदान्तश्रवण इव कदाचित् मनोव्यापारे वेदान्तविचारनिरपेक्षेऽपि प्रवृत्तिः स्यादिति अयुक्तं श्रुत्या ब्रह्मणि मनोविषयत्वनिषेधात् साङ्गाध्ययनवतः तन्निषेधावगतिसम्भवादिति नेत्याह। अप्राप्य इति। श्रुतिरनवहितमनोविषयेति सम्बन्धः। वाचः सत्यज्ञानादिशब्दाः अप्राप्य शक्त्या ब्रह्म अप्रतिपाद्य मनसा सह निवर्त्तन्ते लक्षणामाश्रयन्ते इत्यर्थः। मनसा सह इत्यनेन मनसोऽपि ब्रह्मणि प्राप्तिर्निषिध्यते इति भावः। ब्रह्मणि मनोविषयत्वनिषेधवत् तद्विषयत्वमपि श्रुत्या उच्यते। तथाच श्रुत्योर्विरोधे सति मनः शब्दितबुद्धिगम्यत्वप्रतिपादकश्रुतौ बुद्धेः अग्र्यत्वविशेषणबलात् विषयत्वनिषेधश्रुतेरनवहितमनोविषयत्व-

अथ वा जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इत्यादिश्रवणाद्भिन्नात्मज्ञानात् मुक्तिरिति भ्रमसम्भवेन मुक्तिसाधनज्ञानाय भिन्नात्मविचाररूपशास्त्रान्तरश्रवणेऽपि पक्षे

---

निषेधार्थकत्वप्रतीतेस्तथा च साङ्गाध्ययनवत उक्तव्यवस्थाप्रतीतिसम्भवात् मनस एव व्यापारे प्रवृत्तिः दुर्वारा इत्याह। मनसैवेति अनवहितत्वमैकाग्रताशून्यत्वम्। शङ्कासम्भवादिति। अग्रत्वविशेषणसामर्थ्येन यथोक्तव्यवस्थानिश्चयसम्भवादिति वक्तव्ये शङ्कासम्भवादित्युक्तेरयमाशयः, निर्गुणब्रह्मसाक्षात्कारे मनसः करणत्वं नास्ति। औपनिषदत्वश्रुतिविरोधात् सोपाधिकात्मसाक्षात्कारेऽपि न तस्य करणत्वं तत् साक्षात्कारस्य नित्यसाक्षिरूपत्वात् मनसैवानुद्रष्टव्यमित्यादौ तृतीयावाक्योत्थवृत्तिसाक्षात्कारं प्रति साधनत्वाभिप्रायेत्यादिकं सर्वं शाब्दापरोक्षवादे वक्ष्यति। तथाच वस्तुतो मनसः करणत्वाभावात् मनस एव व्यापारे पुरुषः कदाचित् प्रवर्त्तेत इत्युत्प्रेक्षितं नियमविधिव्यावर्त्त्यमसङ्गतमेवेति ॥१२॥

अतएव व्यावर्त्त्यान्तरमाह अथ वेति। अधीतसाङ्गस्वाध्यायस्य हि तरति शोकमात्मवित् इत्यादि श्रुत्या आत्मज्ञानं मुक्तिसाधनमिति ज्ञानं भवति। न च साङ्गाध्ययनवतोऽपि लोके विचारमन्तरेण आत्मतत्त्वज्ञानजन्मास्ति आत्मप्रतिपादकवेदान्तेषु नानाविधयोजनासम्भावनया तात्पर्य्यसंशयादेरनुभवसिद्धत्वात् ततश्च मुक्तिसाधनज्ञानार्थी तत्ज्ञानप्रतिबन्धकतात्पर्य्यभ्रमसंशयादिनिरासाय वेदान्तविचारे प्रवर्त्तमानो यथा ब्रह्ममीमांसाशास्त्रे प्रवर्त्तते तथैव न्याय-

प्रवृत्तिः स्यात् इति अद्वितीयात्मपरवेदान्तश्रवण-नियमविधिरस्तु। इह आत्मशब्दस्येदं सर्वं

---

सांख्यादिशास्त्रविचारेऽपि कदाचित् प्रवर्त्तेत तत्रापि तदभिमतयोजनया वेदान्तविचारसत्वात्। न च सांख्यादितर्कशास्त्रगतात्मविचारस्य अद्वितीयात्मविचाररूपत्वाभावेन तादृशात्मनि वेदान्तानां तात्पर्य्यभ्रमसंशयाद्यनिवर्त्तकत्वात् विशिष्य स्वयमेव तत्र तात्पर्य्यभ्रमादिहेतुत्वाच्च न तत्र आत्मज्ञानार्थिनः प्रवृत्तिः सम्भवतीति वाच्यं ? जीवभिन्नपरमात्मज्ञानं मुक्तिसाधनमिति भ्रमेण तत्रापि प्रवृत्तिसम्भवात्। न च साङ्गाध्ययनवतो भिन्नात्मज्ञानं मुक्तिसाधनमिति भ्रमो न सम्भवति। अहं ब्रह्मास्मि ब्रह्मविदाप्नोति परम् इत्यादिवेदान्तेषु जीवाभिन्नपरमात्मज्ञानस्य मुक्तिसाधनत्वप्रतीतेरिति वाच्यं ? जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति श्रुतिगतान्यशब्देन भ्रमसम्भवात् यदा ईशं सन्निधिमात्रेण बुद्ध्यादिप्रवर्त्तकम् अन्यं वस्तुगत्या बुद्ध्यादिभ्यो भिन्नं भ्रान्त्या बुद्ध्याद्यभिन्नत्वेन चिदात्मनो गृहीतत्वात् भिन्नत्वोपदेशः सफलः न तु जीवभिन्नमित्यर्थः। जीवब्रह्मभेदस्य प्रत्यक्षसिद्धतया उपदेशानपेक्षत्वात् जुष्टं ऋषिसङ्घैः सेवितम् ऋषिसङ्घजुष्टमिति श्रुत्यन्तरात्, पश्यति ईशोऽहमिति साक्षात्करोति तदा अस्य ईशस्य महिमानं महत्त्वोपलक्षितं स्वरूपम् इति एति प्राप्नोति वीतशोकश्च भवतीति श्रुतेर्वास्तवार्थः। ननु श्रोतव्यवाक्ये आत्मविचारमात्रं प्रतीयते, न तु अद्वैतात्मविचारः ततश्च कथमनेन विधिना भिन्नात्मविचारव्यावृत्तिलाभ इत्यत आह, इहेति। अत्र

यद्दयमात्मेत्यादिप्रकरणपर्य्यालोचनया अद्वितीयात्मपरत्वात्। न हि वस्तुसत्साधनान्तरप्राप्तावेव नियमविधिरिति कुलधर्मः। येन वेदान्तश्रवणनियमार्थवत्त्वाय नियमादृष्टजन्यस्वप्रतिबन्धककल्मषनिवृत्तिद्वारा सत्तानिश्चयरूपब्रह्मसाक्षात्कारस्य वेदान्तश्रवणैकसाध्यत्व-

---

आदिपदेन आत्मनि दृष्टे सर्वं विदितं भवतीति प्रतिज्ञावाक्ये गृह्यते आत्मनः सर्वाधिष्ठानतया सर्वात्मकत्वेहि सति आत्मनि विदिते तद्व्यतिरिक्तं सर्वं तत्त्वतो विदितं भवति सर्वमात्मैवेति सामानाधिकरण्यञ्च सिध्यति नान्यथा तथा च श्रोतव्यवाक्यस्थमात्मपदमद्वितीयात्मपरमेवेति तद्विचारविधिना भिन्नात्मविचारव्यावृत्तिर्लभ्यते इति भावः। ननु तण्डुलनिष्पत्ताववहननस्येव नखविदलनादेरपि वस्तुतः साधनत्वात् तन्निवृत्तिफलको नियमविधिर्युक्त इह तु अद्वितीयब्रह्मसाक्षात्कारे भिन्नात्मविचारस्य न वस्तुतः साधनत्वमस्तीति तन्निवृत्तिफलको नियमविधिर्न युज्यते। न च माभूद्भिन्नात्मविचारस्य व्यावर्त्त्यत्वं नैतावता नियमविध्यनुपपत्तिः। प्रकृतेऽस्ति गुरुनिरपेक्षविचारभाषाप्रबन्धेतिहासपुराणादीनाम् उदाहरिष्यमाणानां सत्तानिश्चयरूपब्रह्मसाक्षात्कारहेतुत्वसत्वेन व्यावर्त्त्यसम्भवादिति वाच्यं? तेषामप्यनन्तरमेव वक्ष्यमाणरीत्या अविद्यानिवर्त्तकसत्तानिश्चयरूपब्रह्मसाक्षात्कारप्रतिबन्धककल्मषनिवृत्तिद्वारा गुर्वधीनवेदान्तविचारवत् साक्षात्कारहेतुत्वेन वस्तुतः साधनत्वाभावात्तथा च न नियम-

अथ वा गुरुमुखाधीनाध्ययनादिव निपुणस्य स्वप्रयत्नमात्रसाध्यादपि वेदान्तविचारात् सम्भवति सत्तानिश्चयरूपं ब्रह्मापरोक्षज्ञानं किं तु गुरुमुखाधीनवेदान्तवाक्यश्रवणनियमाऽदृष्टमविद्यानिवृत्तिं प्रति कल्मषनिरासेन उपयुज्यत इति तदभावेन प्रतिबद्धमविद्यामनिवर्त्तयत् परोक्षकल्पम् अवतिष्ठते। न च ज्ञानोदये अज्ञानाऽनिवृत्त्यनुपपत्तिः। प्रतिबन्धकाभावस्य सर्वत्रापेक्षितत्वेन सत्यपि प्रत्यक्षविशेषदर्शने उपा-

---

व्यावर्त्यान्तरमाह, अथ वेति। मात्रपदेन गुरुर्व्यवच्छिद्यते तर्हि उक्तब्रह्मापरोक्षज्ञानेनैव अविद्यानिवृत्तिलक्षणफलसिद्धेः किं गुर्वधीनश्रवणविधिना इति शङ्कते। किन्त्विति। श्रवणनियमविध्यर्थवत्त्वाय नियमादृष्टस्य ब्रह्मापरोक्षज्ञानेन स्वफलसिद्ध्यर्थमपेक्षणीयत्वकल्पनात् न उक्तापरोक्षज्ञानात् अविद्यानिवृत्तिसिद्धिरिति परिहरति गुरुमुखेति। निरासेनेति। निरासद्वारेत्यर्थः। इति इत्यनन्तरं कल्पनीयत्वेन इति शेषः। तदभावेन इति। कल्मषनिरासाभावेन कल्मषेण इत्यर्थः। कल्पमिति तुल्यमित्यर्थः। न च नियमार्थवत्त्वाय इत्यादिपूर्वग्रन्थे नियमादृष्टस्य कल्मषनिवृत्तिद्वारा ज्ञानोत्पत्तौ हेतुत्वमुक्तम्। अत्र च उत्पन्नेन ज्ञानेन अविद्यानिवृत्तौ जननीयायां तत्र प्रतिबन्धककल्मषनिवृत्तिद्वारा श्रवणनियमादृष्टस्य साधनत्वोक्तौ पूर्वापरविरोध इति वाच्यम्? मतभेदेन विरोधाभावात्। ननु एव-

धिना प्रतिबन्धात् प्रतिबिम्बरूपभ्रमाऽनिवृत्ति-
वत् तदनिवृत्त्युपपत्तेः। एवं च लिखितपाठादि-
नापि स्वाध्यायग्रहणप्रसक्तौ गुरुमुखाधीनाध्य-
यननियमविधिवत् स्वप्रयत्नमात्रपूर्वकस्यापि वेदा-
न्तविचारस्य सत्तानिश्चयरूपब्रह्मसाक्षात्कारार्थ-
त्वेन पक्षे प्राप्तौ गुरुमुखाधीनश्रवणनियमविधि-
रयमस्तु ॥१४॥

न च तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति
गुरूपसदनविधिनैव गुरुरहितविचारव्यावृत्ति-

---

मपि उत्पन्नब्रह्मविद्या स्वकीयाविद्यानिवृत्तये नियमादृष्ट-
साध्यां कल्मषनिवृत्तिमपेक्षते इत्ययुक्तं प्रमात्वात् शुक्त्यादि-
प्रमावत् इति मत्वा शङ्कते। न च ज्ञानोदये इति। अनिवृत्त्य-
नुपपत्तिरिति। अज्ञाननिवृत्तिरेव स्यादित्यर्थः। शुक्तिप्रमास्थले
अन्यापेक्षाभावेऽपि प्रतिबिम्बभ्रमस्थले विशेषदर्शनस्य प्रति-
बन्धकाभावापेक्षादर्शनेन ब्रह्मविद्याया अपि तदपेक्षोपपत्तेः
इति परिहरति। प्रतिबन्धकाभावस्य इति। यद्यपि प्रतिबन्धका-
भावस्य सिद्धान्ते न कुत्रापि हेतुत्वं तथापि अप्रतिबद्धा सामग्री
कार्यहेतुरिति उपगमादस्यैव अवच्छेदकतया प्रतिबन्धका-
भावापेक्षेति भावः। तदनिवृत्त्युपपत्तेरिति। गुरुरहित-
विचारसाध्यविद्यया अविद्यानिवृत्त्यभावोपपत्तेरित्यर्थः।
श्रवणनियमविधिं सदृष्टान्तमुपपादयति। एवं चेति। गुरु-
रहितविचारस्य व्यावर्त्यस्य लाभे सतीत्यर्थः। लिखितेति।

सिद्धेर्विफलो नियमविधिरिति शङ्क्यम्। गुरूपसदनस्य श्रवणाङ्गतया श्रवणविध्यभावे तद्विधिरेव नास्तीति तेन तस्य वैफल्याप्रसक्तेः। अन्यथा

---

अभ्युदयनिःश्रेयसकामस्य वेदार्थानुष्ठानं विना न अभ्युदयादिसिद्धिः तदनुष्ठानं च वेदार्थज्ञानं विना न सम्भवति तदर्थज्ञानं च स्वाध्यायपदवाच्यवेदावाप्तिं विना न सम्भवति वेदावाप्तिं प्रति च गुरुमुखोच्चारणानूच्चारणलक्षणमध्ययनं लिखितपाठादिश्च साधनत्वेन लोके प्रसिद्धं तथा चाध्ययनविधिवाक्येन वेदाध्ययनं नियम्यते, अध्ययनेन एव अक्षरावाप्तिं सम्पादयेदिति। तेन च लिखितपाठादिव्यावृत्तिर्लभ्यते यथा तथा प्रकृतेऽपि इत्यर्थः। ननु ब्रह्मविज्ञानार्थं गुर्वभिगमनं श्रूयते। न च तस्य श्रुतिजन्ये ब्रह्मज्ञाने साक्षात्साधनत्वमस्ति अतस्तज्ज्ञाने जननीये द्वारापेक्षायां गुर्वधीनविचार एव योग्यतया द्वारत्वेन कल्प्यते, न त्वदृष्टं दृष्टद्वारसम्भवेऽदृष्टकल्पनायोगात् गुर्वभिगमनस्य गुर्वधीनविचारद्वारा ज्ञानसाधनत्वे अभिगमनविधिना सिद्धे तेनैव गुरुरहितविचारव्यावृत्तिसिद्धे निष्फलः ॥ १४ ॥

श्रोतव्यवाक्ये श्रवणनियमविधिरिति शङ्कते न चेति। ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेनेति पूर्ववाक्यनिर्दिष्टो ब्राह्मणः स इति परामृश्यते निर्वेदं वैराग्यं प्राप्नुयात् इति यावत् केन प्रकारेण इत्यत आह, श्रुतिरकृतो नित्यो मोक्षः कृतेन कर्मणा नास्तीति अतो मोक्षब्रह्मज्ञानसाध्यं ज्ञात्वा तज्ज्ञानार्थं गुरुमभिगच्छेदित्यर्थः। श्रोतव्यवाक्येन गुर्वधीनविचारे नियमिते सति तदङ्गतया गुर्वभिगमन

अध्ययनाङ्गभूतोपगमविधिनैव लिखितपाठादिव्यावृत्तिः इति अध्ययननियमोऽपि विफलः स्यात्॥ १५ ॥

अथ वा अद्वैतात्मपरभाषाप्रबन्धस्य श्रवणस्य पक्षे प्राप्त्या वेदान्तश्रवणे नियमविधिरस्तु। न च न म्लेच्छितवा इत्यादिनिषेधादेव तदप्राप्तिः। शास्त्र-व्युत्पत्तिमान्द्यात् वेदान्तश्रवणमशक्यमिति पुरुषार्थनिषेधमुल्लङ्घ्यापि भाषाप्रबन्धेन अद्वैतं जिज्ञासमानस्य तत्रापि प्रवृत्तिसम्भवेन नियम-

---

विधीयते। श्रवणविध्यभावे तु उपगमनविधेः आत्मलाभाभावात् न श्रवणविधिवैफल्यापादकतेति परिहरति गुरूपसदनस्य इति। अङ्गविधिना प्रधानविधिवैफल्यापादनेऽतिप्रसङ्गमाह, अन्यथेति। विधिनैवेति गुरूपगमनस्य अक्षरावाप्तिं प्रति अध्ययनरूपदृष्टद्वारसम्भवे तत्त्यागायोगादिति भावः॥१५॥

व्यावर्त्त्यान्तरमाह, अथवेति। नियमविधिरस्त्विति अद्वैतजिज्ञासमानेन वेदान्ता एव विचारणीया न भाषाप्रबन्धा इति विचारविषयनियमविधिरस्त्वित्यर्थः। ननु म्लेच्छशब्दितस्य भाषाप्रबन्धरूपाव्यक्तशब्दस्य उच्चारणं पुरुषेण न कर्त्तव्यम् अन्यथा पुरुषः प्रत्यवायी भवेदिति निषेधबलादेव श्रवणाधिकारिणो भाषाप्रबन्धव्यावृत्तिसिद्धेः किं विधिनेति शङ्कते न चेति। यदि भाषानिषेधस्य ज्ञानाङ्गत्वं स्यात् तदा तन्निषेधमुल्लङ्घ्य तत्र प्रवृत्तौ ज्ञानानुत्पत्तिभयेन तत्र न प्रवर्त्तेत। ननु

विधेरर्थवत्त्वोपपत्तेः। अभ्युपगम्यते हि क्रत्वधिकरणे व्युत्पादितं पुरुषार्थे अनृतवदननिषेधे सत्यपि दर्शपूर्णमासमध्ये कुतश्चिद्धेतोरङ्गीकृततन्निषेधोल्लङ्घनस्याऽविकलां क्रतुसिद्धिं कामयमानस्य अनृतवदने प्रवृत्तिः स्यादिति पुनः क्रत्वर्थतया दर्शपूर्णमासप्रकरणे नाऽनृतं वदेदिति निषेध इति क्रत्वर्थतया निषेधस्यार्थवत्त्वम् ॥१६॥

---

एतदस्ति पुरुषार्थत्वात् तन्निषेधस्य तथा च तन्निषेधमुल्लङ्घ्यापि कदाचित् भाषाप्रबन्धादिश्रवणे प्रवृत्तिः सम्भवतीति परिहरति शास्त्रव्युत्पत्तीति। उल्लङ्घने हेतुमाह, अशक्यमिति। अशक्यत्वे हेतुर्व्युत्पत्तिमान्द्यम्। ननु यस्य अधिकारिणो व्युत्पत्तिमान्द्यात् वेदान्तश्रवणमशक्यं तं प्रति वेदान्तविचारनियमविधिः कथम् अशक्यार्थे विध्यनुपपत्तेरिति चेत्? न, मन्दस्य भाष्यादिविचारासम्भवेऽपि वेदान्तप्रकरणविचारस्य मन्दाधिकारिणोऽपि सम्भवात् तदुक्तं पञ्चदश्यां "मन्दप्रज्ञं तु जिज्ञासुमात्मानन्देन बोधयेत् बोधयामास मैत्रेयीं याज्ञवल्क्यो निजप्रियम्" इति आत्मानन्दनामप्रकरणेन इत्यर्थः। पुरुषार्थनिषेधमुल्लङ्घ्यापि महाफलसिद्ध्यर्थं निषिद्धे प्रवृत्तिस्तन्निषेधेन विधेः अर्थवत्ता च मीमांसकैरपि स्वीकृता इत्याह अभ्युपगम्यते हि इति। अङ्गीकृतं निषेधोल्लङ्घनयेन स तथोक्तः कुतश्चिदित्यनेन सूचितं हेतुमाह अविकलामिति। अर्थवत्त्वमिति व्युत्पादितमिति पूर्वेण अन्वयः॥ १६ ॥

यद्वा यथा मन्त्रैरेव मन्त्रार्थस्मृतिः साध्येति नियमस्तन्मूलकल्पसूत्रात्मीयग्रहणकवाक्यादीनामपि पक्षे प्राप्तेस्तथा वेदान्तमूलेतिहासपुराणपौरुषेयप्रबन्धानामपि पक्षे प्राप्तिसम्भवात् नियमोऽयमस्तु ॥१७॥

---

व्यावर्त्यान्तरमाह, यद्वेति। मन्त्रैरेव इति। अग्निमूर्द्धा इत्यादयो मन्त्राः श्रुत्यादिभिः क्रतौ विनियुक्ताः। किम् उच्चारणमात्रेण अदृष्टं कुर्वन्तः क्रतावुपकारं कुर्वन्त उत दृष्टेन एव अर्थस्मरणेन इति सन्देहे कल्पसूत्रादिनापि अनुष्ठेयाद्यर्थस्मृतिसम्भवात् अदृष्टार्था मन्त्र इति प्राप्तेराद्धान्तः मन्त्राणामर्थप्रकाशनद्वारा क्रतूपकारकत्वं दृष्टद्वारसम्भवेऽदृष्टकल्पनानुपपत्तेः। तथा च फलवदनुष्ठानापेक्षितक्रिया तत्साधनस्मरणद्वारा मन्त्राणां कर्माङ्गत्वं न च क्रिया तत्साधनस्मरणस्य मन्त्रैरिव कल्पसूत्रादिभिरपि सम्भवान्न तस्य द्वारत्वमिति वाच्यम्? मन्त्रैरेव मन्त्रार्थः स्मर्त्तव्य इति नियमविधिसम्भवात्। नियमस्त्वदृष्टार्थो भविष्यति तदुक्तं "यत्र दृष्टं न लभ्येत स्यात् तथादृष्टकल्पने"ति तथा च यथा मन्त्रनियमविधिना मन्त्रमूलककल्पसूत्रादिव्यावृत्तिः क्रियते तथा अधीतसाङ्गस्वाध्यायेन ब्रह्मजिज्ञासुना वेदान्ता एव विचार्या इति वेदान्तनियमे कृते तन्मूलेतिहासादीनां व्यावृत्तिर्लभ्यते इति दृष्टान्तदार्ष्टान्तिकग्रन्थयोः अर्थः याज्ञिकैः प्रणीतमनुष्ठानसमवेतपदार्थसंग्राहकवाक्यम् ग्रहणकव्याक्यम् इतिहासो महाभारतं पौरुषेयप्रबन्धः प्रबोधचन्द्रोदयादिः उदाहृतानि व्यावृत्त्यान्युपलक्षणमन्येषामपि व्यावर्त्यानां सम्भवात्।

सर्वथा नियमविधिरेवायम्। सहकार्य्यन्तर-
विधिरित्यधिकरणभाष्ये अपूर्वविधित्वोक्तिस्तु
नियमविधित्वेऽपि पाक्षिकाप्राप्तिसद्भावात् तदभि-
प्रायेति तत्रैव पक्षेणेति पाक्षिकाप्राप्तिकथनपर-

---

तथाहि तत्कारणं सांख्ययोगाभिपन्नमिति श्रुतौ ब्रह्मप्रतिपत्ति-द्वारा तत्प्राप्तिं प्रति उपायद्वयं निर्दिष्टम्। श्रवणमनननिदिध्यासनात्मकः सांख्यशब्दार्थ एकः तृतीये परिच्छेदे वक्ष्यमाणो योगशब्दोदितः उपासनामार्गस्त्वपरः तत्प्रकृतं कारणं जगत्कारणत्वेन उपलक्षितं ब्रह्म सांख्ययोगाभ्यां ज्ञानद्वाराभिपन्नम् आभिमुख्येन प्रत्यक्त्वेन प्राप्तमिति श्रुत्यर्थः। तथा सगुणब्रह्मोपासनमुपासकस्य ब्रह्मलोकं गतस्य तत्त्वसाक्षात्कारद्वारा ब्रह्मप्राप्तिहेतुरिति ब्रह्ममीमांसायां प्रसिद्धं तथा तपोविशेषादिकं साक्षात् तत्त्वज्ञानसाधनत्वेन पुराणादिप्रसिद्धमुदाहर्त्तव्यम्। तथाच गुरुदेवान्तेषु श्रद्धावतः कुशलस्य श्रवणाधिकारिणः तत्त्वज्ञानार्थमुक्तेषु योगमार्गसगुणोपासनयोः विशेषादिषु अपि वेदान्तश्रवण इव कदाचित् प्रवृत्तिः स्यादिति तन्निवृत्तिफलको नियमविधिः सम्भवति ॥ १७ ॥

नियमविधिपक्षमुपसंहरति, सर्वथेति। ननु नियमविधित्वपक्षे सहकार्य्यन्तरविधिरित्यधिकरणभाष्यविरोध इत्यत आह, सहकार्य्यन्तरेति। अपूर्वविधित्वस्य निराकृतत्वादिति भावः। तत्रैव इति तदधिकरणभाष्ये एव इत्यर्थः। श्रोतव्यवाक्येन निर्विचिकित्सपरोक्षशाब्दज्ञानोद्देशेन एव श्रवणं विधीयते। न तु शाब्दसाक्षात्कारोद्देशेन शब्दस्य स्वतः परोक्षज्ञानजननस्वाभाव्यात् विचारसहकृतस्य अपि शब्दस्य क्वापि साक्षात्कार-

सूत्रपदयोजनेन स्पष्टीकृतमिति विवरणानुसारिणः ॥ १८ ॥

कृतश्रवणस्य प्रथमं शब्दात् निर्विचिकित्सं परोक्षज्ञानमेव उत्पद्यते शब्दस्य परोक्षज्ञानजननस्वाभाव्येन क्लृप्तसामर्थ्याऽनतिलङ्घनात्। पश्चात् तु कृतमननिदिध्यासनस्य सहकारिविशेषसम्पन्नात् तत एव अपरोक्षज्ञानं जायते तत्तांशगोचरज्ञानासमर्थस्यापि इन्द्रियस्य तत्समर्थसं-

---

हेतुत्वादर्शनाच्च परोक्षज्ञानफलकोऽपि अयं नापूर्वविधिः विधिं विनाऽपि शब्दे शाब्दज्ञानहेतुत्वस्य विचारविचार्थ्यनिर्णयहेतुत्वस्य च प्राप्तौ तदुभयबलेन विचारविशिष्टवेदान्तरूपश्रवणस्य निर्विचिकित्सशाब्दज्ञानहेतुत्वप्राप्तेः साधितत्वात् ॥ १८ ॥

किन्तु पूर्वोक्तान्येव व्यावर्त्यान्यादाय नियमविधिरेव इति मतमाह. कृतश्रवणस्य प्रथममिति। ननु मनननिदिध्यासने किं निर्विचिकित्सशाब्दपरोक्षज्ञानोद्देशेन एव विधीयेते किंवा शाब्दापरोक्षं प्रति ? नाद्यः, मननाद्यनुष्ठानात् प्राक् श्रवणमात्रादेव तत्सिद्धेः। न द्वितीयः, शब्दस्य परोक्षज्ञानजनन एव सामर्थ्यस्य त्वदभिमतत्वादिति आशङ्कां द्वितीयपक्षपरिग्रहेण परिहरति पश्चादिति। शाब्दनिर्विचिकित्सपरोक्षज्ञानानन्तरमित्यर्थः। कृते मनननिदिध्यासने येन सः तथोक्तः। तत एवेति। शब्दादेव इत्यर्थः। सहकारिवैचित्र्यात् कार्य्यवैचित्र्यदर्शनादिति भावः। तदेव उदाहरणेन दर्शयति तत्तांशेति। तत्समर्थेति तत्तांश-

स्कारसाहित्यात् प्रत्यभिज्ञानजनकत्ववत् स्वतः अपरोक्षज्ञानजननाऽसमर्थस्यापि शब्दस्य विधुरपरिभावितकामिनीसाक्षात्कारस्थले तत्समर्थत्वेन क्लृप्तभावनाप्रचयसाहित्यात् अपरोक्षज्ञानजनकत्वं युक्तं ततश्च शब्दस्य स्वतः स्वविषये परोक्षज्ञानजनकत्वस्य भावनाप्रचयसहकृतज्ञानकरणत्वावच्छेदेन विधुरान्तःकरणवत् अपरोक्षज्ञानजनकत्वस्य च प्राप्तत्वात् पूर्ववन्नियमविधिरिति तदेकदेशिनः॥ १८॥

---

गोचरज्ञानजननसमर्थेत्यर्थः। शब्दस्य इति। शब्दस्य अपरोक्षज्ञानजनकत्वं युक्तम् इति उत्तरत्र सम्बन्धः। ननु तत्तांशसंस्कारस्य इन्द्रियसहकारित्वेन क्लृप्तावपि भावनाप्रचयस्य ज्ञानकरणसहकारित्वेन साक्षात्कारजननसामर्थ्यं न क्वापि क्लृप्तमित्याशङ्क्याह विधुरेति। तत्समर्थेत्यत्र साक्षात्कारजननं तच्छब्दार्थः। ननु एवमपि शब्दसहकारित्वेन मननध्यानात्मकभावनाप्रचयस्य मानान्तरेण शाब्दसाक्षात्कारं प्रति हेतुत्वाप्राप्तेर्मननादिविधेः अपूर्वविधित्वप्रसङ्ग इति नेत्याह ततश्चेति। परोक्षज्ञानजनकत्वस्य अपरोक्षज्ञानजनकत्वस्य च प्राप्तत्वादिति सम्बन्धः। परोक्षज्ञानहेतुत्वस्य प्राप्त्यभिधानं श्रवणविधेर्नियमविधित्वार्थमिति द्रष्टव्यम्। विधुरेति। भावनासहकृतस्य विधुरान्तःकरणस्य कामिनीसाक्षात्कारहेतुदर्शनस्थले वहिरस्वतन्त्रमपि अन्तःकरणं वाह्यवस्तुभावनासहकृतं सत्तत्साक्षात्कारहेतुरिति

वेदान्तश्रवणेन न ब्रह्मसाक्षात्कारः किन्तु मनसैव सः मनसैवानुद्रष्टव्यमिति श्रुतेः। शास्त्राचार्य्योपदेशशमादिसंस्कृतं मन आत्मदर्शने कारणमिति गीताभाष्यवचनाच्च। श्रवणं तु निर्विचिकित्सपरोक्षज्ञानार्थमिति तादर्थ्येनैव नियमविधिरिति केचित् ॥२०॥

---

विशिष्य कार्य्यकारणभावे गृहीतव्ये लाघवात् बाधकाभावाच्च भावनाप्रचयसहकृतं ज्ञानकरणत्वावच्छिन्नमपरोक्षज्ञानं प्रति हेतुरिति कार्य्यकारणभावो गृह्यते इति भावः। अत्र शब्दस्य परोक्षज्ञानजननस्वाभाव्यमेवासिद्धं ज्ञानगतपरोक्षत्वादेः करणविशेषपरोक्षत्वस्य च निराकरिष्यमाणत्वादतः शाब्दापरोक्षं प्रति मननादेरिव श्रवणस्यापि विधिर्नानुपपन्न इति अस्वरसं सूचयति तदेकदेशिन इति। विवरणैकदेशिन इत्यर्थः ॥१९॥

मतान्तरमाह, वेदान्तश्रवणेन न ब्रह्मसाक्षात्कार इति। शब्दस्य परोक्षज्ञानजननस्वाभाव्येन क्लृप्तसामर्थ्यानतिलङ्घनादिति हेतुरत्रापि मते द्रष्टव्यः किं तर्हि ब्रह्मसाक्षात्कारे करणमिति पृच्छति किन्तु इति। मन एव करणमिति मत्वा तत्र मानमाह मनसैवेति। क्वचित् किन्तु इत्यनन्तरं पृथक् मनसैवेति पाठोऽस्ति तदा न अनुपपत्तिः तत्रैव भाष्यसम्मतिमाह शास्त्रेति। शास्त्रं "तत् त्वमस्या"दिवाक्यम्, आचार्य्योपदेशः आचार्य्यकर्त्तृकवाक्यार्थविवरणरूपः, आदिपदं दमतितिक्षादिसंग्रहार्थं तथा चात्र ब्रह्मसाक्षात्कारस्य मानसत्वप्रतिपादनेन तत्कारणमनःसहकारितयैव मनननिदिध्यासनयोः विधिर्न

स्याभ्युपगन्तव्यत्वेन तत्र वस्तुतः साधनान्तराभावात् न नियमविधिर्युज्यते इति आशङ्क्येत किं तु यत्र साधनान्तरतया सम्भावनया पक्षे प्राप्त्या विधित्सितसाधनस्य पाक्षिक्यप्राप्तिर्निवारयितुं न शक्यते तत्र नियमविधिः। तावता एव अप्राप्तांशपरिपूरणस्य तत्फलस्य सिद्धेः ॥१३॥

---

विधिः सम्भवतीत्याशङ्क्याह न हीति। कुलधर्म इति कुलक्रमागतधर्मस्य यथा आवश्यकता तथा वस्तुसत्साधनान्तरप्राप्तेरावश्यकत्वं न हि इत्यर्थः।

येनेति। आवश्यकत्वेन इत्यर्थः। नियमार्थवत्त्वायेति। विधित्सितगुर्वधीनवेदान्तश्रवणेनैव गुरुनिरपेक्षविचारादिनापि सत्तानिश्चयरूपसाक्षात्कारस्वरूपोत्पत्तिसम्भवे सति गुर्वधीनवेदान्तश्रवणनियमस्य दृष्टप्रयोजनाभावान्नियमादृष्टमुपेयं तस्य च कल्मषनिवृत्तिद्वारा विद्यासाधनत्वञ्च कल्पनीयमेव इत्यर्थः। अदृष्टजन्यत्वं कल्मषनिवृत्तेर्विशेषणं स्वपदं साक्षात्कारपरम्। आशङ्क्येतेति। येनाशङ्क्येतेति सम्बन्धः। यत्र विधित्सितसाधनस्य अप्राप्तिः पाक्षिकी निवारयितुं न शक्यते तत्र नियमविधिरित्यत्र हेतुमाह तावता एव इति। अप्राप्तांशलाभमात्रेण एवेत्यर्थः। विधित्सितसाधनस्य पाक्षिक्याम् अप्राप्तौ हेतुमाह, साधनान्तरतयेति। सत्तानिश्चयरूपब्रह्मसाक्षात्कारस्य दृष्टफलतया तत् स्वरूपे वेदान्तविचारवत् भाषाप्रबन्धादेरपि अन्वयव्यतिरेकाभ्यामेव साधनत्वं बुद्धिस्थं भासते पूर्वोक्तरीत्या वस्तुतः साधनत्वाभावात् सम्भावनया इत्युक्तम् ॥ १३ ॥

अपरोक्षज्ञानार्थत्वेनैव श्रवणे नियमविधिः द्रष्टव्य इति फलकीर्त्तनात् तादर्थ्यं च तस्य कारणभूतमनः सहकारितयैव न साक्षात् शब्दात् अपरोक्षज्ञानानङ्गीकारात्। न च तस्य तेन रूपेण तादर्थ्यं न प्राप्तमित्यपूर्वविधित्वप्रसङ्गः श्रावणेषु षड्जादिषु समारोपितपरस्पराविवेकनिवृत्त्यर्थं गान्धर्वशास्त्रश्रवणसहकृतश्रोत्रेण

---

तु पूर्वमत इव शाब्दसाक्षात्कारकारणशब्दसहकारितयेति पूर्वमतादस्य मतस्य विशेषः सूचितो भवति। श्रवणे तु पूर्वमतादविशेषमाह श्रवणं तु इति। तादर्थ्येनैवेति। निर्विचिकित्सशाब्दपरोक्षज्ञानार्थत्वेन एवेत्यर्थः॥ २०॥

मतान्तरमाह, अपरोक्षज्ञानेति। ननु तर्करूपविचारात्मकस्य श्रवणस्य स्वतः साक्षात्कारफलत्वायोगात् तदनुग्राह्यं प्रमाणं वक्तव्यं तच्च किमित्यपेक्षायामाह तादर्थ्यं चेति। साक्षात्कारार्थत्वं चेत्यर्थः। तस्येति वेदान्तश्रवणस्य इत्यर्थः। कारणभूतेति। ब्रह्मसाक्षात्कारकारणभूतेत्यर्थः। ननु ब्रह्मसाक्षात्कारकरणशब्दसहकारितया इति एवकारार्थः। न साक्षादिति। वेदान्तश्रवणस्य साक्षात् स्वातन्त्र्येण साक्षात्कारजनकत्वं नास्ति तस्य तर्करूपतया स्वतः प्रमाणत्वाभावादिति भावः। मनः सहकारितया एव इत्येवकारार्थे हेतुमाह शब्देति। तस्येति वेदान्तश्रवणस्य इत्यर्थः। तेन रूपेणेति। साक्षात्कारकरणं मनः सहकारित्वरूपेण इत्यर्थः। साक्षात्कारकरणमनःसहकारित्वेन प्राप्त्यभावेऽपि तत्करणेन्द्रियसहकारित्वेन प्राप्तिरस्तीत्याह

परस्परासङ्कीर्णतया तद्याथात्म्यापरोक्षदर्शनेन प्रकाशमाने वस्तुनि आरोपिताऽविवेकनिवृत्त्यर्थं शास्त्रसद्भावे तच्छ्रवणं तत्साक्षात्कारजनकेन्द्रिय-सहकारिभावेन उपयुज्यते इत्यस्य क्लृप्तत्वादित्येके ॥ २१ ॥

---

श्रावणेषु इति। श्रोत्रजन्यप्रत्यक्षविषयेषु इत्यर्थः। षड्जादिषु इति षड्जादयो ध्वनिविशेषाः तेषु गान्धर्वशास्त्रश्रवणरहितस्य परस्पराविवेकः समारोपितो वर्त्तते। परस्पराविवेको नाम परस्परं तदात्म्यरूपः परस्परधर्मवत्तारूपश्चेति बोध्यम्। गान्धर्व-शास्त्रविचारवतस्तु तद्विचारसहकृतश्रोत्रेन्द्रियेण एव षड्जादयः परस्परं विविक्ततया अनुभूयन्ते। एवं मनसा अन्तरिन्द्रियेण अनु-भूयमानेषु चिदात्मनः प्राणशरीरादिषु परस्परं तादात्म्यादिरूपा-विवेकः प्राणिनामनुभवसिद्धोऽत्रापि यदि आरोपनिवर्त्तकं शास्त्र-मस्ति तदा तत्सहकृतमन्तरिन्द्रियमेव बुद्ध्यादि विविक्तमात्मानं ब्रह्मस्वरूपतया वेदान्तैः प्रतीयमानं साक्षात्कारयेदिति विचारवान् पुरुषः षड्जादिस्वरसाक्षात्कारस्थले कार्य्यकारण-भावं कल्पयति इत्याह प्रकाशमाने इति। तच्छ्रवणं शास्त्रश्रवणम्। तत्साक्षात्कारीति। प्रकाशमानवस्तुसाक्षात्कारीत्यर्थः। उप-युज्यते विविक्ततया वस्तु साक्षात्कारहेतुर्भवति इत्यर्थः। इत्यस्येति। इति उक्तप्रकारेण अस्य साक्षात्कारकरणभूतेन्द्रिय-सहकारित्वस्य वेदान्तश्रवणे विधिं विनैव प्राप्तत्वात् न अपूर्व-विधित्वप्रसङ्ग इत्यर्थः। उक्तेषु पक्षेषु शाब्दाद्यपरोक्षोद्देशेन वा शाब्दपरोक्षोद्देशेन वा श्रवणविधिरिति स्थितम्॥ २१ ॥

वेदान्तवाक्यानां अद्वितीये ब्रह्मणि तात्पर्य्य-निर्णयानुकूलन्याय-विचारात्मक-चेतोवृत्ति-विशेषरूपस्य श्रवणस्य न ब्रह्मणि परोक्षमपरोक्षं वा ज्ञानं फलं तस्य शब्दादिप्रमाणफलत्वात्। न चोक्तरूप-विचाराऽवधारिततात्पर्य्यविशिष्टशाब्द-ज्ञानमेव श्रवणमस्तु तस्य ब्रह्मज्ञानं फलं युज्यते इति वाच्यम्? ज्ञाने विध्यनुपपत्तेः। श्रवण-विधेर्विचारकर्त्तव्यता-विधायकजिज्ञासासूत्रमूल-त्वोपगमाच्चोहापोहात्मक मानसक्रियारूपवि-चारस्यैव श्रवणत्वौचित्यात्। न च विचारस्यैव तात्पर्य्यनिर्णयद्वारा तज्जन्यतात्पर्य्यभ्रमादिपुरुषा-पराधरूपप्रतिबन्धविगमद्वारा वा ब्रह्मज्ञानं फल-

---

इदानीं प्रतिबन्धनिरासोद्देशेन एव तद्विधिरिति मतान्तर-माह, वेदान्तवाक्यानामिति। प्रमेयासम्भावना निवृत्त्यनुकू-लन्यायविचारात्मकमननव्यावृत्तये तात्पर्य्यनिर्णयानुकूलेत्युक्तं, तन्निर्णयानुकूलन्यायश्चोपक्रमादय इति बोध्यम्। चेतोवृत्ति-विशेषपदेन यत्नसाध्यक्रियारूपावृत्तिर्विवक्षिता, न तु तद-साध्या ज्ञानरूपा वृत्तिर्विवक्षिता ज्ञानस्य विध्ययोग्यतया वक्ष्य-माणत्वात्। ब्रह्मणीति विषयसप्तमी। तस्येति ज्ञानस्येत्यर्थः। आदिपदं प्रत्यक्षादिसंग्रहार्थं ज्ञानोद्देशेन श्रवणं विधीयते इति तमाभिमतं श्रवणशब्दार्थमनूद्य निराकरोति न चोक्तरूपेति।

मस्तु इति वाच्यम् ? तात्पर्य्यज्ञानस्य शाब्दज्ञाने कारणत्वानुपगमात् कार्य्ये क्वचिदपि प्रतिबन्धकाभावस्य कारणत्वाऽनुपगमाच्च तयो र्द्वारत्वानुपपत्तेः। ब्रह्मज्ञानस्य विचाररूपातिरिक्तकारणजन्यत्वेन तत्प्रामाण्यस्य परतस्त्वापत्तेश्च। तस्मात् तात्पर्य्यनिर्णयद्वारा पुरुषापराधनिरासार्थत्वेनैव विचाररूपे श्रवणे नियमविधिः। द्रष्टव्यः इति तु दर्शनार्हत्वेन स्तुतिमात्रं न श्रवणफलकीर्त्तनमिति संक्षेपशारीरकानुसारिणः॥२२॥

---

ब्रह्मजिज्ञासासूत्रस्य साधनचतुष्टयसम्पन्नेन ब्रह्मज्ञानाय वेदान्तविचारः कर्त्तव्य इत्यर्थः। सौत्रजिज्ञासापदस्य विचारलक्षकत्वात् तस्य च सूत्रस्य श्रोतव्यवाक्यं मूलं ततश्च श्रोतव्यवाक्ये यदित्याह तदा श्रोतव्य इत्यस्य श्रवणरूपज्ञानकर्त्तव्यतार्थः स्यात् तथा च जिज्ञासासूत्रश्रोतव्यवाक्ययोः मूलमूलिभावो न स्यात् एकार्थत्वाभावादित्याह, श्रवणविधेरिति। ऊहः न्यायाभासेभ्यो निष्कृष्य न्यायानामुपादानम्। न्यायाभासनिराकरणमपीहः। ननु सदेव सौम्येत्यादि तत्सत्यं स आत्मा तत् त्वमसीत्येतदन्तं वाक्यजातम् अद्वितीयं वस्तु परम् अद्वितीयवस्तुप्रतिपादकोपक्रमोपसंहारवत्त्वादित्येवम् आत्मकस्य विचारस्य अनुमितिरूपं तात्पर्य्यनिर्धारणं साक्षात् फलं तद्द्वारा तात्पर्य्यभ्रमादि रूपप्रतिबन्धकनिवृत्तिर्विचारस्य फलं, तन्निवृत्तौ च वाक्यमप्रतिबद्धं सत् अद्वितीयब्रह्मबोधं जनयति। एवं श्रुत्यन्तरेषु

अपि इति वस्तुगतिः तथा च श्रवणस्य साक्षाद्ब्रह्मज्ञान-फलकत्वाभावेऽपि परम्परया तत्फलकत्वं स्यात् इति शङ्कते न च विचारस्यैव इति। अप्यर्थ एवकारः तथा च यथा ज्ञानं शब्दप्रमाणफलं तथा तद्विचारस्यापि फलमस्तु शब्दप्रमाणफले ज्ञाने विचारस्यापि तात्पर्य्यनिर्णयद्वारा तदधीनप्रतिबन्ध-निरासद्वारा वा हेतुत्वसम्भवादित्यर्थः। तज्जन्यत्वं विगम-विशेषणभ्रमादिरेव पुरुषापराधः तात्पर्य्यज्ञानस्य द्वारत्वाभावे हेतुमाह, तात्पर्य्यज्ञानस्येति। प्रतिबन्धनिरासोपजननेन अन्यथा सिद्धत्वादिति भावः। तात्पर्य्यज्ञानस्य शाब्दबोधं प्रति हेतुत्वाभावे विचारस्य तात्पर्य्यनिर्णयसाध्यप्रतिबन्ध-निवृत्तिद्वारा शाब्दबोधहेतुत्वं दूरापास्तमिति मत्वा प्रति-बन्धकाभावस्य अहेतुत्वे हेतुमाह, कार्य्ये क्वचिदपि इति॥ सत्यामपि सामग्र्यां प्रतिबन्धवशात् कार्य्यं न जातमिति लोक-व्यवहारविरोधात् प्रतिबन्धकाभावस्य सामग्र्यामन्तर्भावो नाङ्गी-क्रियते, किन्तु अप्रतिबाधासामग्रीकार्य्यहेतुरिति स्वीकृत्य सामग्र्यामवच्छेदकतया दण्डत्वादिवदन्यथासिद्धिरेव स्वीक्रि-यते इति भावः। तात्पर्य्यानुमितिहेतुविचारात्मकानुमानस्य शब्दप्रमितिहेतुत्वे दूषणमाह ब्रह्मज्ञानस्येति। अतिरिक्तेति शब्दप्रमाणातिरिक्तेत्यर्थः। परतस्त्वापत्तेरिति। प्रामाण्याश्रय-ज्ञानस्य अतिरिक्तकारणजन्यत्वरूपप्रामाण्यस्य उत्पत्तौ परतस्त्वं स्यात् इत्यर्थः। ततश्च अपसिद्धान्त इति भावः। यदि श्रवणस्य न ब्रह्मज्ञानं फलं तर्हि किमुद्देशेन तद्विधिः? अत आह, तस्मा-दिति। ब्रह्मज्ञानफलकत्वासम्भवादित्यर्थः। ननु तर्हि कथं द्रष्टव्य इति श्रवणफलकीर्त्तनं तत्राह द्रष्टव्य इति। तु इति स्तुतिमात्रमिति आम्नन इति शेषः। स्तुतिश्च तच्छ्रवणादौ प्रवृत्त्यर्थेति भावः॥ २२॥

ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्य चिकित्सा-ज्ञानार्थं चरकसुश्रुतादिग्रन्थश्रवणे प्रवृत्तस्येव मध्ये मध्ये व्यापारान्तरेऽपि प्रवृत्तिः प्रसज्यत इति तन्निवृत्तिफलकः श्रोतव्य इति परिसंख्या-विधिः। ब्रह्मसंस्थोऽमृतत्वमेतीति छान्दोग्ये-

---

परिसंख्याविधिपक्षमाह, ब्रह्मज्ञानार्थमिति। ननु वाचस्पतिमते वक्ष्यमाणरीत्या वेदान्तश्रवणस्य नित्यप्राप्तिं सिद्धां कृत्वा परिसंख्याविधिपक्षप्रवृत्तिर्वाच्या तथा च सति ज्ञानमुद्दिश्य श्रवणाद्यनुतिष्ठतः कथं व्यापारान्तरं प्रसज्येत यतस्तन्निवृत्तिफलकः परिसंख्याविधिः सम्भवेत् इत्याशङ्क्य ब्रह्मज्ञानसाधनत्वेन व्यापारान्तराप्रसक्तावपि भेदवासनावशात् व्यापारान्तरं सम्भवतीति दृष्टान्तमाह, चिकित्सेति। चिकित्सा औषधं तज्ज्ञानस्य वैद्यकग्रन्थैकसाध्यत्वेन तज्ज्ञानाय चरकसुश्रुतादिसंज्ञकग्रन्थश्रवणे प्रवृत्तस्य तादात्म्येन व्यापारान्तराप्रसक्तावपि यथा विषयवासनावशादेव तत्प्रसक्तिः तद्वदित्यर्थः। ननु सुश्रुतादिग्रन्थश्रवणे प्रवृत्तस्य व्यापारान्तरसत्त्वेऽपि यथा चिकित्साज्ञानं निष्प्रत्यूहमुत्पद्यते तथा प्रत्यहं वेदान्तश्रवणमनुतिष्ठतो मध्ये मध्ये लौकिकवैदिकव्यापारसत्त्वेऽपि ब्रह्मज्ञानोदयसम्भवात् निष्फलः परिसंख्याविधिरित्याशङ्क्य श्रवणविध्यर्थवत्त्वाय निरन्तरमनुष्ठितश्रवणस्यैव ज्ञानसाधनत्वं न कदाचित् कस्य इति विधेरनैष्फल्यमिति परिहारमभिप्रेत्य यथोक्तार्थे श्रुतिस्मृतिवाक्यानि उदाहरति. ब्रह्मसंस्थ इति। न विद्यतेऽन्यो व्यापारो यस्य पुरुषस्य स तथा तस्य भावस्तत्त्वं तस्य इत्यर्थः। ब्रह्मविषयकश्रवणादिव्यापारात् शमदमाद्युप-

ऽनन्यव्यापारत्वस्य मुक्त्युपायत्वाऽवधारणात्। संपूर्वस्य तिष्ठतेः समाप्तिवाचितया ब्रह्मसंस्थाशब्दिताया ब्रह्मणि समाप्तेरनन्यव्यापारत्वरूपत्वात्। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथेत्याथर्वणे कण्ठत एव व्यापारान्तरप्रतिषेधाच्च। आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तयेत्यादिस्मृतेश्च। न च ब्रह्मज्ञानानुपयोगिनो व्यापारान्तरस्य श्रवणेन सह कस्मिन् साध्ये समुच्चित्य प्राप्त्यभावान्न तन्निवृत्त्यर्थः परिसंख्याविधिर्युज्यत इति वाच्यम्। सहकार्य्यन्तरविधिरित्यादि सूत्रे यस्मात् पक्षे भेददर्शनप्राबल्यात् न प्राप्नोति तस्मात् नियमविधिरिति तद्भाष्ये च

---

बृंहितात् अन्यव्यापारशून्यत्वस्य इति यावत्। तथा च संन्यासाधिकरणभाष्यं शमदमाद्युपबृंहितं ब्रह्मनिष्ठत्वं तस्य स्वधर्मस्तदतिक्रमे च तस्य प्रत्यवाय इति अवधारणं निश्चयः ब्रह्मसंस्थपदेन अयमर्थः कथं लभ्यते इत्यत आह संपूर्वस्येति। न च ब्रह्मणि समाप्तिर्नाम विदेहकैवल्यरूपो लय एव अस्तु इति वाच्यम्? तथा सति पुनरमृतत्वमेतीति भागवैयर्थ्यापत्तेरतोऽमृतत्वप्राप्तिं प्रति ब्रह्मसंस्थता उपायत्वेन विधीयते इति वक्तव्यम्। अतो ब्रह्मणि समाप्तेः अतथाव्यापारत्वे पर्य्यवसानं भाष्ये कृतं तथा च अनन्यथाव्यापारत्वस्य मुक्त्युपायत्वबोधकवाक्येन अर्थात् मुमुक्षोर्व्यापारान्तरनिवृत्तिः क्रियते इति भावः। साक्षान्नि-

कृतश्रवणस्य शाब्दज्ञानमात्रात् कृतकृत्यतां मन्वानस्य अविद्यानिवर्त्तकसाक्षात्कारोपयोगिनिदिध्यासने प्रवृत्तिर्न स्यादिति अतत्साधनपक्षप्राप्तिमात्रेण निदिध्यासने नियमविधेरभ्युपगततया तन्न्यायेनासाधनस्य समुच्चित्य प्राप्तावपि तन्निवृत्तिफलकस्य परिसंख्याविधेः सम्भवादिति ।

नियमः परिसंख्या वा विध्यर्थोऽत्र भवेद्यतः
अनात्माऽदर्शनेनैव परात्मानमुपास्महे ॥२३॥

इति वार्त्तिकवचनानुसारिणः केचिदाहुः ॥

---

वृत्तिबोधकवाक्यमुदाहरति तमेव एकमिति । यस्मिन् आधारे द्यावापृथिव्यादिसमस्तं जगत् अध्यस्तं तमेव आधारमेकरूपमात्मानं जानथ हे मुमुक्षवः ! ज्ञानसाधनत्वेन च अनात्मप्रतिपादकशब्दोच्चारणादिर्न कर्त्तव्य इत्याह श्रुतिः अन्या वाचो विमुञ्चथेति । नियमविधिवादी शङ्कते । न च ब्रह्मज्ञानानुपयोगिन इति । प्रतिबन्द्या समाधत्ते सहकार्य्यन्तरेति । न प्राप्नोति मौनमिति शेषः । उदाहृतसूत्रभाष्ययोर्नियमविधिवादिसम्मतं तात्पर्य्यं परिसंख्याविधिवादी दर्शयति, कृतश्रवणस्येति । मन्वानस्य इत्यनन्तरं व्यापारान्तरेऽपि प्रवर्त्तमानस्येति शेषः । सूत्रे भाष्ये च अतत्साधनपक्षप्राप्तिमात्रेण नियमविधेरभ्युपगततयेति सम्बन्धः । वार्त्तिके अत्र इत्यस्य श्रोतव्यवाक्ये इत्यर्थः । अत्र नियमो विध्यर्थो भवेत् इति एकः सम्बन्धः यदि नित्यप्राप्तत्वात् नियमविधिर्न सम्भवति तथा परिसंख्या वा विध्यर्थो भवेत् इति सम्बन्धः परिसंख्याया विध्यर्थत्वे हेतुर्यत इत्यादिः परमात्मोपासने अन्यव्यापाररहिता वयं मुमुक्षवो यतः प्रवृत्ता इत्यर्थः ॥ २३ ॥

आत्मा श्रोतव्य इति मननादिवदात्मविष-यकत्वेन निबध्यमानं श्रवणमागमाचार्य्योपदेश-जमात्मज्ञानमेव न तु तात्पर्य्यविचाररूपं न तत्र कोऽपि विधिः। अत एव समन्वयसूत्रे आत्म-

---

श्रवणादीनां विधेयत्वपक्षं मतभेदेन दर्शयित्वा तेषां विध्यभावपक्षमाह, आत्मा श्रोतव्य इत्यादिना निबध्यमान-मिति। यथा आत्मविषयकत्वेन उच्यमानं मननं निदिध्यासनं च ज्ञानरूपं तथा श्रवणमपि ज्ञानरूपमेव इत्यर्थः। न तु इति। विचारस्यानुष्ठेयक्रियारूपस्य साक्षादात्मविषयत्वानुप-पत्तेरिति भावः। ननु मननादिवदिति दृष्टान्तोऽनुपपन्नः मनननिदिध्यासनयोर्ज्ञानत्वाभावात्, मननं हि युक्त्यालोचन-रूपो व्यापारः। ध्यै चिन्तायामित्यनुशासनानुरोधेन निदिध्यासनं ध्यानक्रिया न ज्ञानम् अतः कथं मननादिवदिति मनननिदि-ध्यासनयोर्ज्ञानत्वं सिद्धतया निर्दिश्यते इति चेत्? उच्यते, आत्मा ब्रह्मस्वभावः चिद्रूपत्वात् ब्रह्मवद्बुद्ध्यादिः कल्पितः दृश्यत्वात् शुक्तिरजतादिवदित्याद्यनुमितेरेव मननत्वोपगमात् तदुक्तं चतुर्थमैत्रेयीब्राह्मणवार्त्तिके, "आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते। वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते। पदार्थ-विषयस्तर्कस्तथैवानुमिति र्भवेत्" इति। श्रुतार्थदार्ढ्याय तर्क-रूपं मननं विधीयते सोऽपि तर्कः श्रुत्यविरुद्ध एव मननत्वेन विधीयते, तच्च मननं तत्त्वम्पदार्थविषयकमेव न तु वाक्यार्थ-विषयकं, तस्य वाक्यैकमेयत्वात्तथा शब्दः समुच्चयार्थः। यथा मननात्मकतर्कस्य वेदाविरोधित्वं तथा अनुमितिरूपत्वं

च इत्यर्थः। अतएव न्यायतन्त्रेऽपि मननस्य अनुमितिरूपत्व-मिष्यते निदिध्यासनमपि वार्त्तिककारमते ज्ञानमेव, तथाहि बृह-दारण्यके चतुर्थाध्याय-षष्ठाध्यायगतयोर्मैत्रेयीब्राह्मणयोः आम्ना-यते "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति अनन्तरं चतुर्थे, "मैत्रेयि! आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन" इति। षष्ठे तु, "मैत्रेयि! आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात" इति। तत्र उभयत्र आक्षेपवार्त्तिक अनुवादे यथो-क्तानां प्रक्रान्ते दर्शनादिषु विज्ञानेन इत्यथ कथं निदिध्यासनम् उच्यते इति। अथ आत्मा द्रष्टव्य इत्यादिना उक्तानामनुवादे प्रक्रान्ते सति दर्शनादिषु मध्ये श्रुतं निदिध्यासनं विज्ञानेनेति पदेन कथमुच्यते अनूद्यते दर्शनादीनां समानपदैरेव अनुवाद-दर्शनेन निदिध्यासनस्यापि तद्वत् निदिध्यासनेन इत्यनुवादः स्यात् न तु विज्ञानपदेन इत्यर्थः। तस्य समाधानवार्त्तिकं ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेन इति भण्यते निदिध्यासनशब्देन ध्यानमाशङ्क्यते यत इति। निदिध्यासनशब्दस्य ध्यानवाचि-त्वात् श्रवणमनननानन्तरम् अनुभवाङ्गत्वेन ध्यानं निदिध्यासि-तव्य इत्यनेन विधीयते इति यतः पूर्ववादिना शङ्क्यते अतस्तदा-शङ्कानिवृत्त्यर्थमनुवादावसरे स्थित्वा पूर्ववाक्ये निदिध्यासनं विज्ञानरूपं विवक्षितं न तु ध्यानम्। अतो नात्र ध्यानविधि-शङ्कावकाश इत्याशयवती श्रुतिर्विज्ञानपदेन निदिध्यासनमनु-वदति इति वार्त्तिकार्थः। ध्यानस्य अनुभवाङ्गत्वे को दोषः यतस्तदाशङ्का श्रुत्या निरस्यत इत्यत आह, तदनन्तरं वार्त्तिकाद्धं विज्ञानोत्पत्तिहेतुत्वं ध्यानादेः प्रागवादिषमिति ध्यानस्य तन्नियोगस्य वा विज्ञानोत्पत्तिहेतुत्वं प्रति यद्दूषणं वक्तव्यं तत् प्रागेव सम्बन्धादौ उक्तवान् अस्मीत्यर्थः। अन्यत्रापि उक्तं तत्त्वप-दार्थगोचरश्रवणमननाभ्याम् असकृदभ्यस्ताभ्यां तत्त्वम्पदलक्ष्यार्थ-

निर्णये सति वाक्यार्थज्ञानस्यैव अवसरप्राप्तत्वेन ध्यानविधेरनवकाशात्। न च ताभ्यां प्रमाणप्रमेयासम्भावनानिवृत्तावपि विपरीतप्रत्ययेन प्रतिबन्धात् न वाक्यार्थबोधोत्पत्तिः इति वाच्यम् ? श्रवणमननयोरेव असकृदभ्यासमहिम्ना विपरीतप्रत्ययस्यापि निवृत्तिसम्भवात् वाक्यार्थबोधनिवर्त्त्यस्य विपरीतप्रत्ययस्य तदप्रतिबन्धकत्वाच्च लोके विपर्य्ययस्य स्वविरोधिदर्शनोत्पत्तिप्रतिबन्धकत्वादर्शनादिति। ननु यदि निदिध्यासनं न ध्यानं किं तर्हि तत् इत्यत आह वार्त्तिकम्, "अपरायतबोधोऽत्र निदिध्यासनमुच्यते। ध्यानस्यैव पुरुषप्रयत्नानपेक्षत्वमपरायतत्वं यावत् यथोक्तविज्ञानमाविर्भवति भास्वरं श्रवणादिक्रिया तावत् कर्त्तव्येति प्रयत्नतः" मननमादिपदार्थः श्रुत्वा मत्वा तु तं साक्षादात्मानं प्रतिपद्यते। अथ श्रवणमननपरिपाकजनिततत्त्वम्पदलक्ष्यार्थनिर्णयानन्तरमेव वाक्येन ब्रह्मात्मज्ञानं साक्षादपरोक्षतया प्रतिपद्यते अनुभवतीत्यर्थः। वाक्यार्थज्ञानवतः कृतकृत्यतामाह, "अनन्यायतविज्ञाने श्रवणादेरुपायतः जाते नापेक्षते किञ्चित्प्रतीचोऽनुभवात्परम्"। इति वृत्तिज्ञाने जाते सति तेन प्रतीचो ब्रह्मत्वस्फुरणादनन्तरं न किञ्चिदपेक्षते इत्यर्थः। एवं वार्त्तिककारमते निदिध्यासनस्य ज्ञानत्वाभ्युपगमात् न मननादिवदिति दृष्टान्तासिद्धिः। न च वार्त्तिककारमते निदिध्यासितव्य इत्यस्य द्रष्टव्य इत्यनेन पौनरुक्त्यं स्यादिति वाच्यम् ? दर्शनोद्देशेन श्रवणमननविधानानन्तरं पुनः फलकीर्त्तनस्य तदुपसंहारपरत्वोपपत्तेः, अथवा द्रष्टव्य इति विचारप्रयोजकापातदर्शनानुवादः। निदिध्यासितव्य इति तु विचारफलसाक्षात्कारानुवाद इति पौनरुक्त्यपरिहारसम्भवात्। श्रवणादौ विध्यभावे भाष्यसम्मतिमाह, अतएवेति। श्रवणमनननिदिध्यासनानां दर्शनवज्ज्ञानरूपत्वेन क्रियारूपत्वेऽपि वक्ष्यमाण-

ज्ञानविधिनिराकरणानन्तरं भाष्यं किमर्थानि तर्हि आत्मा वा अरे द्रष्टव्य इत्यादीनि वचनानि विधिच्छायानि स्वाभाविकप्रवृत्तिविषय-

---

विधया नित्यप्राप्तत्वेन च विध्ययोग्यत्वादेव इत्यर्थः। किमर्थानीति। व्यर्थानि स्युरिति यावत्। आदिपदं श्रोतव्य इत्यादेः संग्रहार्थं विधिच्छायानीति अध्येतव्य इति प्रसिद्धविधितुल्यानि इत्यर्थः। अत्र तव्यप्रत्ययैर्दर्शनश्रवणादिगता प्रसंशा लच्यते। तथाच यो हि मुमुक्षुरात्मदर्शनश्रवणादीनि एव मुक्तिसाधनानि इति ज्ञात्वापि सन्यासब्रह्मचर्य्यादिसहितश्रवणाद्यनुष्ठानक्लेशमनुसन्धिन्त्य न तत्र सर्वोत्साहेन प्रवर्त्तते किन्तु यथा प्राप्तानि एव वर्णाश्रमानुरूपाणि कर्माणि उपासनानि च अनुष्ठानात् तत्रापि निर्वृतिं न लभते तैरात्यन्तिकपुरुषार्थालाभानुसन्धानेन तं प्रति आत्मदर्शनश्रवणादिप्रशंसार्थं प्रवर्त्तते आत्मा वा इत्यादिवाक्यं तस्य सर्वोत्साहेन श्रवणादावेव प्रवृत्तिर्भवति इत्याशयेन अतो न विधिप्रत्ययानां वैयर्थ्यमिति भाष्यकारः परिहरति स्वाभाविकेति। आदिपदेन यो हि बहिर्मुखः प्रवर्त्तते पुरुषः इष्टं मे भूयादनिष्टं मे माभूदिति। न च तत्र आत्यन्तिकं पुरुषार्थं लभते तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकात् कार्य्यकारणसङ्घातप्रवृत्तिगोचरात् विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्त्तयन्ति। आत्मा वा अरे द्रष्टव्य इत्यादीनि इत्यन्तं भाष्यं संगृह्यते स्वाभाविकत्वं विषयविशेषणं संग्रहभाष्यं विवृणोति। यो हि इति। प्रवर्त्तत इति नानाविधकर्मोपासनानि अनुतिष्ठति इत्यर्थः। इष्टं मे भूयादनिष्टं मे माभूदिति अनेन दुःखसामान्यास्पृष्टसुखकामना ब्रह्मानन्दरूपा आत्यन्तिकपुरुषार्थगोचरा

विमुखीकरणार्थानीति ब्रूम इत्यादि। यदि च वेदान्ततात्पर्य्यविचाररूपं श्रवणं तदा तस्य तात्पर्य्यनिर्णयद्वारा वेदान्ततात्पर्य्यभ्रमसंशयरूप-

---

इह विवक्षिता अतएवाह, न च तत्र आत्यन्तिकं पुरुषार्थं लभत इति वाह्यसाधनं तत्र शब्दार्थः स्वाभाविकादिति स्वभावः अविद्यातत्कार्य्यभूतादित्यर्थः। सङ्घातस्य प्रवृत्तिः कर्मोपासनयोरनुष्ठानं तद्गोचरात् द्रष्टव्यदेवतामन्त्रादिरूपात् इत्यर्थः। प्रत्यगात्मनि विषये स्रोतः चित्तस्य प्रावण्यं यस्य स प्रत्यगात्मस्रोतस्तस्य भावस्तत्ता तयेत्यर्थः। तं वाह्यसाधनात् विमुखीकृत्य श्रवणादिष्वेव प्रवर्त्तयन्ति इत्यर्थः। एवं श्रवणादेर्ज्ञानरूपत्वात् न तत्र कोऽपि विधिरित्युक्तम् इदानीं श्रवणादेः क्रियारूपत्वमुपेत्यापि न तत्र कोऽपि विधिरित्याह यदि चेति। तस्य क्रियारूपत्वं च वार्त्तिककारैरेवोक्तं "श्रवणादिक्रिया तावत् कर्त्तव्येह प्रयत्नतः" इति आदिपदेन मननस्य संग्रहो न ध्यानस्य वार्त्तिककारमते श्रवणमननानन्तरं ध्यानानुष्ठानाभावस्य उक्तत्वात्। न च ध्यानस्य अननुष्ठेयत्वे ओमित्येवं ध्यायथ आत्मानं विद्यामेतां योगविधिं च कृत्स्नमित्यादिबहुवाक्यविरोध इति वाच्यम्? तेषां सांख्ययोगाभिपन्नमिति श्रुतिगतयोगपदोदितमार्गान्तरं प्रतिपादकतायाः तृतीयपरिच्छेदे ध्यानदीपोक्तप्रकारेण वक्ष्यमाणत्वात्। न च तत्कारणमिति श्रुतिगतसांख्यपदोदितविचारमार्गेऽपि ध्यानान्तर्भावः पूर्वमुक्त इति वाच्यम्? निदिध्यासनवदस्य ध्यानार्थकत्वमताभिप्रायेण तदन्तर्भावस्य उक्तत्वात् ध्यानस्य सांख्यमार्गात् वहिर्भाव एव भाष्यकाराणामपि सम्मतः तथा च एतेन "योगः

प्रत्युक्तः" इत्यधिकरणभाष्यं तत्कारणं सांख्ययोगाभिपन्नमित्यत्र वैदिकमेव ज्ञानं ध्यानं च सांख्ययोगशब्दाभ्यामभिलप्येत इति ज्ञानपदं ज्ञानाभ्यासपरवैदिकं वेदोक्तम् एतेन वेदविरोधादिना योगशास्त्रं निराकृतमिति सूत्रार्थः। सांख्यमार्गे ध्यानाभावमभिप्रेत्यैव सर्वज्ञात्ममुनिभिरपि निदिध्यासनपदस्य ज्ञानार्थकत्वमुक्तं श्रवणमननबुद्ध्योर्जातयोः यत्फलं तन्निपुणमतिभिः उच्चैः उच्यते दर्शनाय अनुभवविहीनाय एवमेवेति बुद्धिः श्रुतमननसमाप्तौ तन्निदिध्यासनं हीति। अस्य श्लोकस्य आश्रमश्रीचरणानां व्याख्यानमिदं निदिध्यासने पक्षान्तरमाह, श्रवणेति। श्रवणमननबुद्ध्योर्जातयोः यत्फलेन दर्शनाय निपुणमतिभिरुच्चैः उच्यत इति सम्बन्धः। एतदेव विशदयति अनुभवविहीनेति। श्रुतश्रवणं दीर्घकालादरनैरन्तर्य्यानुष्ठानेन श्रवणमननपरिपाके सतीत्यर्थः। अनुभवविहीना साक्षात्काररहिता अविद्यानिवर्त्तकवृत्तिसाक्षात्कारभिन्नेति यावत्। या एवमेवेति बुद्धिः अहं चिदात्मा ब्रह्मस्वभाव एव ब्रह्म च चिदेकरसप्रत्यगात्मस्वभावमेव इति तत्त्वम्पदलक्ष्यनिर्णयात्मिका बुद्धिस्तदेव निदिध्यासनं नाम न ध्यानम् अस्मिन् पक्षे श्रवणमननयोरेव अनुष्ठेयं निदिध्यासनं तु न अनुष्ठेयं दीर्घकालमनुष्ठितश्रवणमननफलरूपा बुद्धिर्यदा भवति तदा एव साक्षात्कारोत्पत्तेः। पूर्वपक्षे तु निदिध्यासनमपि पृथगनुष्ठेयमिति भेद इति सांख्यमार्गे ध्यानाभावमभिप्रेत्यैव यावज्ज्ञानोदयं विचारस्य एव कर्त्तव्यत्वम्। ध्यानदीपे विद्यारण्यगुरुभिरपि उक्तं "विचार्य्याप्यपरोक्षेण ब्रह्मात्मानं न वेत्ति चेत्। अपरोक्षावसानत्वात् भूयो भूयो विचारयेत्। विचारयन्नामरणं नैवात्मानं लभेत चेत्। जन्मान्तरे लभेतैव प्रतिबन्धक्षये सति।" इति एवम् आनन्दपञ्चकेऽपि आत्मानन्दावसाने सांख्य-

प्रतिबन्धकनिरास एव फलं न प्रतिबन्धकान्तर-निरासो ब्रह्मावगमो वा। तत् फलकत्वं च

---

मार्गस्य ध्यानरहितस्यापि ध्यानेन सर्वांशेऽपि तुल्य-फलत्वं बहुधा प्रपञ्चितमिति संक्षेपः। एवकारव्यवच्छेद्यमाह, नेति। वाकारो न जातु कर्षणार्थः विचारस्य प्रतिबन्धनिरास-द्वारा ब्रह्मावगमोपयोगसम्भवेऽपि न साक्षात्फलकत्वं ज्ञानस्य प्रमाणफलत्वादित्युक्तत्वादिति भावः। ननु उक्तप्रतिबन्ध-निरासद्वारा विचारस्याविद्यानिवर्त्तकसाक्षात्कारोपयोगित्व-प्राप्तावपि तादृशसाक्षात्कारप्रतिबन्धकपापनिवृत्तिद्वारा साक्षात्-कारसाधनत्वस्य मानान्तरादप्राप्तत्वात् श्रोतव्य इत्यत्र श्रवणस्य पापनिवृत्तिद्वारा विद्यासाधनत्वमुपदिश्यते। न च विद्या प्रति-बन्धकपापनिवृत्तेर्यज्ञादिनैव सिद्धत्वाद्विधिवैयर्थ्यमिति वाच्यम् ? प्रतिबन्धकपापानामानन्त्येन केषाञ्चित् यज्ञानुष्ठानेन केषाञ्चित् श्रवणानुष्ठानेन निवृत्तिरिति विभागकल्पनोपपत्तेः। तथा च प्राप्तं पुनरपूर्वविधित्वमेवं च सहकार्य्यन्तरविधिरित्यधिकरण-भाष्ये पाण्डित्यशब्दितश्रवणे अपूर्वत्वोक्तिश्च संगच्छत इति शङ्कां वारयति न प्रतिबन्धकान्तरनिरास इति। तात्पर्य्यभ्रम-संशयरूपप्रतिबन्धकापेक्षया अन्यत् पापरूपं प्रतिबन्धकं प्रति-बन्धकान्तरं तन्निरासो न श्रवणफलम् अतो न तद्द्वारा ज्ञानाय श्रवणं विधेयमिति अर्थः। अयं भावः श्रोतव्य इत्यस्य अपूर्वविधित्वमयुक्तं तस्यावृत्त्यधिकरणे निरस्तत्वात् विव-रणाद्युक्तरीत्या वेदान्तश्रवणस्य अन्वयव्यतिरेकप्रमाणसिद्धतात्-पर्य्यभ्रमादिलक्षणप्रतिबन्धनिवृत्तिरूपदृष्टफलकत्वमुपजीव्य श्र-वणेन एव ज्ञानं प्रतिबन्धनिवृत्तियोग्यतां सम्पादयेदिति नियम-

तस्य लोकत एव प्राप्तं साधनान्तरं च कि- ञ्चिद्विकल्पा समुच्चित्य वा न प्राप्तमिति न तत्र विधित्रयस्य अपि अवकाशः। विचारविध्यभावेऽपि विज्ञानार्थतया विधीयमानं गुरूपसदनं दृष्ट- द्वारसम्भवे अदृष्टकल्पनाऽयोगाद् गुरुमुखाधीन- वेदान्तविचारद्वारैव विज्ञानार्थे पर्य्यवस्यतीति। अत एव स्वप्रयत्नसाध्यविचारव्यावृत्तिः। अध्य-

---

विधित्वसम्भवे स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानि इति ब्रूम इत्यादिभाष्यानुसारेण ब्रह्मप्रतिपत्तिसाधनश्रवणादिस्तुति- द्वारा तत्र प्रवृत्तिविशेषकारणत्वमात्रेण ब्रह्मप्रकरणनिवेश- सम्भवे वा अपूर्वविधित्वायोगात् भाष्यकारीयापूर्वत्वोक्तेः पाक्षिकप्राप्त्यभिप्रायकत्वसम्भवाच्चेति। तत्फलकत्वं चेति भ्रमादिरूपप्रतिबन्धनिरासफलकत्वं चेत्यर्थः। ननु प्राप्तत्वे नियमविधित्वादिसम्भवात् कथं विधित्रयाभाव इत्यत आह, साधनान्तरं चेति। ननु गुर्वधीनविचारेण सह गुरुरहित- विचारस्य विकल्पेन प्राप्तिरस्ति इत्यत आह, विचारविध्य- भावेऽपीति। अतएवेति उपगमनविधित एव इत्यर्थः। व्यावृत्ति- रित्यनन्तरं लभ्यत इति श्रोतव्यवाक्ये गुर्वधीनविचार- नियमविधिरनर्थक इति शेषः। न च उपगमनविधेर्विचार- विध्यङ्गतया तदभावे उपगमनविधेरात्मलाभ एव नास्तीत्युक्त- मिति वाच्यम्? गुरूपसदनस्य ब्रह्मज्ञानं प्रति द्वारापेक्षाया। लोकसिद्धस्य गुर्वधीनविचारस्य द्वारत्वेन स्वीकारोपपत्तौ श्रोत- व्यविध्यपेक्षाभावेन तच्छेषत्वासिद्धेः विचारवदुपगमनस्य अपि

ध्ययनविध्यभावे तु उपगमनं विधीयमानमक्षरावाप्त्य-र्थत्वेन अविधीयमानत्वान्न तदर्थं गुरुमुखोच्चार-णानूच्चारणमध्ययनं द्वारीकरोतीति लिखित-पाठादिव्यावृत्त्यसिद्धेः सफलोऽध्ययननियम-विधिः। न च तात्पर्य्यादिभ्रमनिरासाय वेदा-न्तविचारार्थिनः कदाचिद् द्वैतशास्त्रेऽपि प्रवृत्तिः स्यात् तत्रापि तदभिमतयोजनया वेदान्तविचा-रसत्त्वादित्यद्वैतात्मपरवेदान्त-विचारनियमविधि-रर्थवानिति वाच्यम्? स्वयमेव तात्पर्य्यभ्रम-हेतोस्तस्य तन्निरासकत्वाभावेन साधनान्तर-प्राप्त्यभावात्। तन्निरासकत्वभ्रमेण तत्रापि कस्यचित् प्रवृत्तिः स्यात् इति एतावता श्रोतव्य

---

विद्याङ्गत्वोपपत्तेश्चेति भावः। पूर्वोक्तातिप्रसङ्गं परिहरति अध्ययनविध्यभावे तु इति। अध्ययनविध्यभावे तु लिखित-पाठादिव्यावर्त्त्यासिद्धेः सफलोऽध्ययननियमविधिरिति सम्बन्धः। तदर्थमिति अक्षरावाप्त्यर्थमित्यर्थः। अध्ययनाङ्गोपगमनस्य विद्यार्थोपगमनापेक्षया विशेषार्थकस्तु शब्दः तमेवाह उपगमन-मित्यादिना। अध्ययनस्य अक्षरावाप्तिफलकत्वं विवरणादौ साधितमिति भावः। व्यावर्त्त्यान्तरं दूषयति न च तात्पर्य्या-दिति। ननु वस्तुतस्तन्निरासकत्वाभावेऽपि भिन्नात्मज्ञानं मुक्ति-साधनमिति भ्रमद्वारा तद्भ्रमात् तत्र प्रवृत्तिः सम्भवतीति उक्त-मिति न इत्याह। तन्निरासकत्वभ्रमेण इति। इह जन्मनि

इति नियमविधेरभ्युपगम इत्यपि न। ईश्वरानुग्रह-फलाद्वैतश्रद्धारहितस्य श्रोतव्यवाक्येऽपि पराभि-मतयोजनया सद्वितीयात्मविचारविधिपरत्वभ्रम-सम्भवेन भ्रमप्रयुक्ताया अन्यत्र प्रवृत्तेर्विधिशतेन अपि अपरिहार्य्यत्वात् ॥२४॥

---

जन्मान्तरे वा यज्ञाद्यनुष्ठानजनितदृढविविदिषावतः साधन-चतुष्टयसम्पन्नस्य श्रवणविधौ अधिकार इति अविवादम्। यज्ञादि-जनितादृष्टं च निष्प्रपञ्चाद्वितीयब्रह्मसाक्षात्कारस्य साङ्गाध्य-यनलब्धैर्वेदान्तैर्मुक्तिसाधनत्वनिश्चयं सम्पाद्य तादृशब्रह्मसाक्षा-त्कारे दृढेच्छां च विविदिषाशब्दितामुत्पाद्य तद्द्वारा अद्वितीया-त्मसाक्षात्कारसाधनभूताद्वितीयात्मश्रवणादौ एव मुमुक्षुं प्रवर्त्त-यति न तु जीवभिन्नात्मज्ञानस्य मुक्तिसाधनत्वभ्रमापादनद्वारा भिन्नात्मज्ञानतत्साधनविचारादौ इच्छाप्रवृत्त्यादिकमुत्पाद-यति तदिच्छादेर्भिन्नात्मविचारद्वारा यज्ञादिफलभूतनिष्प्रपञ्च-ब्रह्मसाक्षात्कारहेतुत्वाभावात्। तथा च स्मृतिरीश्वरानुग्रहादेव पुंसामद्वैतवासनेति यज्ञादिसम्पादितादीश्वरानुग्रहादेव पुंसाम-द्वैतब्रह्मज्ञानेच्छारूपा तद्वासना भवतीति तदर्थः। तथा च यथोक्तभ्रमवतोऽद्वैतब्रह्मतत्त्वसाक्षात्कारादौ इच्छाश्रद्धादिशून्यस्य श्रवणविधौ अनधिकारात् न तं प्रति नियमविधिरर्थवानित्याह ईश्वरानुग्रहेति। पराभिमतेति। श्रुतौ आत्मशब्दस्तावत् जीव-पर एव न परमात्मपरः। "आत्मनस्तु कामाय सर्वं वै प्रियं भवति" इति पूर्ववाक्ये जीवस्य प्रकृतत्वात्। न चेदं सर्वं यदयमात्मेति वाक्यशेषे सर्वात्मकस्य परमात्मनः प्रतिपादनात् श्रोतव्यवाक्यस्था-त्मपदमद्वितीयात्मपरमिति वाच्यम् ? तत्रापि तत् प्रति-

न च व्यापारान्तरानिवृत्त्यर्था परिसंख्येति युक्तम्। असंन्यासिनो व्यापारान्तरनिवृत्तेरशक्यत्वात्। सन्यासिनस्तन्निवृत्ते र्ब्रह्मसंस्थया सह संन्यासविधायकेन ब्रह्मसंस्थो ऽमृतत्वमेतीति श्रुत्यन्तरेण सिद्धतया संन्यासविधायकश्रुत्यन्तरमपेक्ष्य श्रोतव्यवाक्येन तस्य व्यापारान्तरनिवृत्त्युपदेशस्य व्यर्थत्वात्। न च विचारविध्यसम्भवेऽपि विचारविषयवेदान्तनियमविधिः सम्भवति भाषाप्रबन्धादिव्यावर्त्त्य सत्त्वादिति शङ्क्यम्। सन्निधानादेव वेदान्तनियमस्य लब्धत्वेन विधिविषय-

---

पादनासिद्धेः। न हि प्रपञ्चपरमात्मनोः अभेदः सम्भवति चेतनाचेतनयोरैक्यस्य विरुद्धत्वात् श्रुतेरभेदध्यानविधिपरत्वोपपत्तेश्च इत्यादियोजना पराभिमता द्रष्टव्या। अन्यत्रेति। भिन्नात्मविचारे इत्यर्थः ॥२४॥

परिसंख्याविधिं दूषयति। न चेति। श्रवणविधिना किं गृहस्थादेर्व्यापारान्तरनिवृत्तिः उपदिश्यते? किंवा सन्यासविधिसिद्धस्य सन्न्यासिनः? इति विकल्पं मनसि निधाय क्रमेण दूषयति असन्न्यासिन इति। अशक्यत्वादिति विध्यन्तरविरोधापत्तिरशक्यत्वे हेतुः, तन्निवृत्तेः सिद्धतया उपदेशस्य व्यर्थत्वादिति सम्बन्धः। "ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुत्यन्तरस्य ब्रह्मसंस्थताधर्मकसन्न्यासाश्रमविधायकत्वं परामर्शं जैमिनिः इत्यधिकरणभाष्ये स्फुटयति इति भावः। विचारविषयत्वेन वेदान्तनियमविधिरिति पक्षं दूषयति न च विचारेति। सन्निधानादेवेति। अधीत-

त्वायोगात्। स्वाध्यायो ऽध्येतव्य इत्यर्थावबोधनार्थनियमविधिबलादेव अध्ययनगृहीतवेदोत्पादितं वेदार्थज्ञानं फलपर्य्यवसायि न कारणान्तरोत्पादितमित्यस्यार्थस्य लब्धत्वेन वेदार्थे ब्रह्मणि मोक्षाय ज्ञातव्ये भाषाप्रबन्धादीनामप्राप्तेः। न च सहकार्यन्तरविधिरित्यधिकरणे बाल्यपाण्डित्यमौनशब्दितेषु श्रवणमनननिदिध्यासनेषु विधिरभ्युपगत इति वाच्यम्। विचारे विचार्य्य-

---

साङ्गस्वाध्यायस्य वेदान्तैः आपात-प्रतिपन्न-ब्रह्मात्मजिज्ञासोः जिज्ञासानिवर्त्तकनिर्णयाय कर्त्तव्यत्वेन विचारे प्राप्ते सति विचारविषयमन्वेषमाणस्य वेदान्तानां बुद्धिस्थत्वात् वेदान्ता एव मया विचारणीया इति बुद्धिरुत्पद्यते तथा च विधिं विनैव वेदान्तनियमस्य लब्धत्वेन विधिना तन्नियमनं व्यर्थमित्यर्थः। विधिं विनैव वेदान्तनियमलाभे हेत्वन्तरमाह स्वाध्याय इति। अर्थावबोधेति मीमांसकमतमाश्रित्य उक्तम् अक्षरावाप्तिफलकोऽध्ययनविधिरिति सिद्धान्तेऽपि येषां वाक्यानामध्ययनावाप्तानामर्थज्ञानद्वारा पुरुषार्थोपयोगः सम्भवति तेषां वाक्यानामर्थज्ञान-मध्ययनलब्धैर्वाक्यैः एव उत्पादितं फलपर्य्यवसायि न तदतिरिक्तभाष्यप्रबन्धादिजनितम् इति;रीत्या अध्ययनविधिफलाक्षरावाप्तेः पुरुषार्थपर्य्यवसानकल्पनान्नभाषाप्रबन्धादिप्रसक्तिरित्यर्थः। इतिहासपुराणमादिपदार्थः। श्रवणादीनामविधेयत्वे सूत्रभाष्यविरोधं शङ्कते न चेति। अभ्युपगत इति सूत्रभाष्यकाराभ्यामिति शेषः। विरोधं परिहर्त्तुं प्रथमं

तात्पर्य्यनिर्णयहेतुत्वस्य वस्तुसिद्धानुकूलयुक्त्यनुसन्धानरूपे मनने तत्प्रत्ययाभ्यासरूपे निदिध्यासने च वस्त्ववगमवैशद्यहेतुत्वस्य च लोकसिद्धत्वेन तेषु विध्यनपेक्षणात्। विधिच्छायार्थवादस्य इव प्रशंसाद्वारा प्रवृत्त्यतिशयकरत्वमात्रेण तत्र

---

श्रवणादीनां विधियोग्यक्रियारूपत्वेऽपि नित्यप्राप्तत्वात् न विधेयत्वमित्याह विचारे इति। तत्प्रत्ययेत्यत्र तत्पदं वस्तुपरम् अवगमस्य वैशद्यं प्रतिबन्धराहित्यं सूत्रभाष्ययोर्विधित्वव्यवहारो गौणः मुख्यासम्भवस्य दर्शितत्वादिति विरोधं परिहरति विधिच्छायार्थवादस्य इवेति। विष्णुरुपांशु यष्टव्य इत्यादेरिव इत्यर्थः। तथा च उपांशु याजमन्तरा यजतीत्याम्नाय पुनराम्नायते विष्णुरुपांशु यष्टव्यः प्रजापतिरुपांशु यष्टव्यः अग्नीषोमौ उपांशु यष्टव्यौ इति अत्रान्तरा वाक्यमाग्नेयाऽग्नीषोमीय-पुरोडाशयोः अन्तराल-काल-विशिष्टयागविधायकं विष्ण्वादि वाक्यत्रयं तु मन्त्रवर्णप्राप्तवैकल्पिकदेवतानुवादेन अन्तरा वाक्यविहितयागस्तावकमर्थवादमात्रमिति व्यवस्थापितं पूर्वतन्त्रे तदत्र दृष्टान्तत्वेन उदाहृतमिति द्रष्टव्यम्। यत्तु तत्कारणं सांख्ययोगाभिपन्नमिति श्रुतौ योगपदोपात्तस्य व्यावर्त्त्यस्य सम्भवाद्विचारसमर्थाधिकारिणं प्रति तद्व्यावृत्तिफलको नियमविधिः सम्भवतीति तन्न, विचारसमर्थस्य अधिकारिणः कालान्तरे स्वोत्प्रेक्षितानुपपत्तिवशेन अन्योत्प्रेक्षितानुपपत्तिवशेन वा पुनस्तत्त्वसंशये सति अवधारणात्मकं वेदान्तार्थज्ञानं न सम्भवतीति योग्यतावशेन तं प्रति विधिं विना विचारस्यैव नित्यतया प्राप्तत्वात्। यत्तु सगुणब्रह्मोपासनं व्याव-

त्वेमुक्तं तत्र, श्रवणविध्यधिकारिणः सर्वतो निस्पृहस्य ब्रह्मलोकप्राप्तिद्वारा मुक्तिसाधनसगुणोपासने पक्षेऽपि प्रवृत्तेरसम्भवेन तस्य व्यावर्त्यत्वासम्भवात्, सगुणोपासनस्यापि श्रवणादिद्वारैव विद्यासाधनत्वेन नखविदलनादेः अवघाततुल्यकत्वत्वात्सगुणोपासनस्य श्रवणादिना सह विकल्पेन प्राप्त्यभावाच्च। न तद्व्यावृत्तिफलको नियमविधिः सम्भवति, न च सगुणोपासनया श्रवणादिकं विनैव सगुणसाक्षात्कारवत् निर्गुणसाक्षात्कारोदयः सम्भवतीति वाच्यम्? प्रमाणप्रमेयासम्भावनादिप्रतिबन्धनिवृत्तिद्वारा श्रवणादेः सत्त्वानिश्चयरूपब्रह्मज्ञानोपायत्वग्राहकतया पूर्वोक्तप्रमाणानुरोधेन श्रवणादेः नित्यवदनुवादलिङ्गेन च सगुणोपासनया क्रमेण परममुक्तिप्रतिपादकशास्त्रस्यापि श्रवणादिद्वारकज्ञानोत्पत्त्यविरोधित्वकल्पनात् श्रवणादिकं विना सगुणोपासनमहिम्नैव तत्त्वज्ञानोदयोपगमे देवताधिकरणविरोधाच्च तदधिकरणे हि देवतादीनां शरीराद्यभावात् सगुणब्रह्मोपासनेषु निर्गुणब्रह्मविद्यासाधनश्रवणादिषु च नास्ति सामर्थ्यमतो न तेषु अधिकार इति पूर्वपक्षयित्वा मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् तेषामपि शरीरादिसद्भावादेकरूपाधिकार इति सिद्धान्तितम्। तत्रेदं पूर्वपक्षप्रयोजनमुक्तं देवानां श्रवणाद्यधिकाराभावे क्रममुक्तिफलकब्रह्मोपासनया प्राप्तदेवभावस्यापि श्रवणाद्यसम्भवेन विद्योदयासम्भवात् पुनरावृत्त्यापत्तौ क्रममुक्तिकामस्य सगुणोपासनेषु प्रवृत्त्यभाव इति सिद्धान्ते तु देवानां श्रवणाद्यधिकारसत्त्वादुक्तप्रवृत्तिसिद्धिरिति प्रयोजनं दर्शितम्, इदं च प्रयोजनं देवताधिकरणावसानभाष्ये संग्रहेण दर्शितं तथा च भाष्यम्। ततश्चार्थित्वादिसम्भवादुपपन्नो देवादीनामपि ब्रह्मविद्यायाम् अधिकारः क्रममुक्तिदर्शनान्यपि एवमेवोपपद्यन्ते इति।

एवमेवेत्यस्य देवादीनां श्रवणाद्यधिकारे सत्येव इत्यर्थः। तेषां श्रवणाद्यधिकारे यानि श्रौतलिङ्गानि पूर्वमुपन्यस्तानि तत् यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणाम् एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवासेत्येवमादीनि तानि यथा उपपद्यन्ते तथेत्यपि शब्दार्थः। ननु सगुणब्रह्मोपासकानामपि सर्वेषां श्रवणादिनैव ज्ञानोदय इति नियमो नास्ति सगुणोपासकस्यापि हिरण्यगर्भस्य बृहदारण्यकभाष्ये पुरुषविधब्राह्मणव्याख्यानावसरे श्रवणादीनां प्रणिपातादीनां चाभावेऽपि ज्ञानजन्मप्रतिपादनादिति चेत्? न, हिरण्यगर्भस्यापि वामदेववत् जन्मान्तरीयश्रवणादिनैव ज्ञानजन्मसम्भवात्। तत्रैव भाष्ये श्रवणमनननिदिध्यासनानां साक्षात् ज्ञेयविषयत्वादिति वाक्ये साक्षात्पदेन श्रवणादेः ज्ञेयब्रह्मव्यञ्जकस्य प्रणिपाताद्यपेक्षाया आवश्यकत्वसूचनेन जन्मान्तरीयश्रवणादिकल्पनस्य तद्भाष्यवाक्याभिप्रेतत्वे अवगम्यमाने सति तत् पूर्वभाष्ये श्रवणादिकं विना कार्य्यकरणशुद्ध्यादिमात्रेण ज्ञानजन्मप्रतिपादनस्य अभ्युपगमवादत्वोपपत्तेः हिरण्यगर्भस्य वामदेववत् जन्मान्तरीये ज्ञानसाधने कल्पनीये सति क्लृप्तश्रवणादिकल्पनस्यैव न्याय्यत्वाच्च। न च हिरण्यगर्भस्य पूर्वजन्मनि सगुणोपासननिष्ठत्वेन निर्गुणविचारो न सम्भवतीति वाच्यम्? हिरण्यगर्भस्य पूर्वकल्पे जन्मभेदेन सगुणनिर्गुणोपासनयोः सम्भवात् न हि एकस्मिन् जन्मनि कृतात् सगुणोपासनामात्रादेव हिरण्यगर्भपदप्राप्तिरस्ति तथा सति सगुणोपासकानां सर्वेषामेव साक्षात् हिरण्यगर्भत्वप्रसङ्गात्। किन्तु हिरण्यगर्भस्य ब्रह्मलोकस्वामित्वं सरस्वतीभर्तृत्वं जन्मप्रभृतितत्त्वसाक्षात्कारसम्पन्नत्वं सर्वज्ञत्वं सकलभौतिकजगत्सृष्ट्यादिसामर्थ्यं भक्तानां त्रैलोक्यैश्वर्य्यप्रदानसामर्थ्यं कार्य्यविशेषेषु

शिवविष्ण्वादिप्रवर्त्तकत्वं ललाटात् रुद्रप्रादुर्भावहेतुत्वं महाविष्णु-नाभिकमलजातत्वाद्यैश्वर्य्यं च श्रुत्यादिभ्यो निश्चित्य आगामि-कल्पे यथोक्तहिरण्यगर्भत्वाय तत्साधनानि सगुणनिर्गुणोपासनानि तपोविशेषरूपाणि च बहुषु जन्मसु ध्रुवप्रह्लादविश्वामित्रा-गस्त्यभृग्वादिवदनुष्ठितवतो महापुरुषस्य कस्यचिदेव निर-तिशयेश्वरप्रसादात् हिरण्यगर्भत्वं सम्पद्यते इति हिरण्यगर्भस्य अपि जन्मान्तरीयश्रवणकल्पनं वामदेवस्येव न अनुपपन्नम्। हिरण्यगर्भस्य पूर्वजन्मनि अनुष्ठितश्रवणादेः हिरण्यगर्भपदप्राप्ति-कामनया प्रतिबद्धत्वेन तदा तत्त्वसाक्षात्कारानुत्पादकत्वोपपत्तेः। तदुक्तं वृद्धैः, "ब्रह्मलोकाभिवाञ्छायां सम्यक्सत्यां निरुध्य तां विचारयेत् य आत्मानं ननु साक्षात्करोत्ययम्"। इति। न च ज्ञानोत्पत्तिस्थले सर्वत्र श्रवणादिनियमो नास्ति योगमार्गे प्रवृत्तस्य श्रवणाद्यभावेऽपि तत्त्वसाक्षात्कारोदयस्वीकारादिति वाच्यम्? ओमित्यात्मानं युञ्जीत ओमित्येवं ध्यायथ आत्मा-नमित्यादिध्यानविधिबलेन तत्कारणं सांख्ययोगाभिपन्नं "विद्या-मेतां योगविधिं च कृत्स्नम्।" इत्यादिश्रौतलिङ्गसहकृतेन विचारासमर्थस्य योगमार्गे अधिकार इति तृतीयपरिच्छेदे वक्ष्यमाणतया विचारसमर्थस्य विचारं विना ज्ञानोत्पत्त्यनभ्युप-गमात्। एवं च यद्यत्साधनमदृष्टद्वारा तत्त्वज्ञानसाधनत्वेन शास्त्र-सिद्धं तत्सर्वं सगुणोपासनवत् दृष्टसामग्रीभूतसांख्यमार्गेण तदशक्तौ योगमार्गेण वा तत्त्वज्ञानसाधनमिति कल्प्यते न तु अदृष्टमात्रात् ज्ञानलाभः कल्पयितुं युक्तः, अन्यथा जीवनादृष्ट-मात्रादेव स्तन्यपानादिप्रवृत्तिकल्पनापत्त्या तत्रापि इष्टसाधन-तास्मरणं जन्मान्तरीयसंस्कारहेतुकं सर्वसम्प्रतिपन्नं न कल्पनीयं स्यात् कृप्तदृष्टकारणं विना कार्य्योत्पत्त्ययोगस्य उभयत्र तुल्य-त्वात्। अतएव पञ्चदश्यां, तत्त्वज्ञानं प्रति मार्गद्वयनियम उक्तः।

विधित्वव्यवहारात्। एवं च श्रवणविध्यभावात् कर्मकाण्डविचारवद् ब्रह्मकाण्डविचारोऽपि अध्ययनविधिमूल इत्याचार्य्यवाचस्पतिपक्षानुसारिणः ॥२५॥

इति विधिवादः।

---

सांख्ययोगौ प्रकृत्य इति मार्गौ विचार्य्याथ जगाद परमेश्वर इति। संग्रहकर्त्ताऽपि तृतीयपरिच्छेदे सांख्ययोगशब्दितमार्गद्वयमेव विद्यावाप्त्युपायत्वेन वक्ष्यति। एवं श्रवणमननादिसाधनानुष्ठानप्रवणस्य विद्यावाप्तिरित्यस्मिन्नर्थे सर्वसम्प्रतिपन्ने स्थिते भारतीतीर्थाः ध्यानदीपे, विद्यावाप्तौ उपायान्तरमप्याहुरिति ग्रन्थेन तदयं निष्कर्षः, विद्याधिकारिणो विचारसमर्थस्य प्रतिषेधाभावे वेदान्तश्रवणमनुष्ठेयं सति तु प्रतिषेध इतिहासपुराणभाषाप्रबन्धादिश्रवणमनुष्ठेयम्। विद्याधिकारिणो विचारासमर्थस्य तु त्रैवर्णिकस्य योगशब्दितनिर्गुणोपासनमनुष्ठेयं मार्गद्वयसम्भवे च तत्सम्भवयोग्यजन्मप्राप्त्या तदन्यतरानुष्ठानद्वारा ज्ञानलाभ इति तथा च श्रवणाधिकारिणः श्रवणस्य नित्यप्राप्तत्वात् तत्तुल्यकक्षतया साधनान्तरस्य कस्यचिद्विकल्प्य समुच्चित्य वाप्राप्तभावात् न विध्यवकाश इति सिद्धम्। एवं ब्रह्मसाक्षात्कारं प्रति श्रवणादेर्नित्यप्राप्तत्वात् विधिं विनैव श्रवणाद्यनुष्ठानं सिध्यतीति प्रतिपादितम्। इदानीं विचारानुष्ठापकविध्यपेक्षायामपि यथा कर्मकाण्डश्रवणं कर्मवाक्यविचारः कर्त्तव्य इति पृथक् विध्यभावेऽपि अध्ययनविधिबलादेव सिध्यति एवं वेदान्तश्रवणमपि तद्बलादेव सिध्यतीति न श्रोतव्यवाक्ये पृथग्विचारविध्यपेक्षास्ति इत्याशयेन उपसंहरति एवं चेति। लोकत एव श्रवणादेः प्राप्तत्वे सति

अथ कारणत्ववादः।

[ ब्रह्मलक्षणे जगज्जन्मस्थितिभङ्गेषु एकैकस्य ब्रह्मलक्षणत्वं कौमुदीमते। ]

**विचार्यस्य च ब्रह्मणो जगज्जन्मस्थितिलय-कारणत्वं लक्षणमुक्तं "यतो वा इमानि भूतानि**

---

श्रवणविध्यपेक्षाभावादित्यन्तरार्थः श्रोतव्यवाक्यार्थविचारेण प्रथमसूत्रार्थः संगृहीतः॥२५॥

क्रमप्राप्तं द्वितीयसूत्रार्थं संगृह्णाति विचार्यस्य चेति। चकारोऽवधारणार्थः स च श्रुत्येत्यनेन सम्बध्यते। श्रुत्यैव लक्षणमुक्तं न तु व्याघ्रादिलक्षणवत् पुरुषोत्प्रेक्षितमित्यर्थः। "येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तत् ब्रह्म" इति वाक्यशेष आदिपदार्थः। श्रुतौ यत इति यच्छब्देन ब्रह्मवल्ल्यां निरूपितं, सत्यज्ञानानन्दानन्तात्मकं ब्रह्म परिगृह्यते सर्वनाम्नः प्रकृतःप्रधानपरामर्शित्वस्वाभाव्यात् ततश्च यत् श्रुतिसामर्थ्यादेव ब्रह्मणः सच्चिदानन्दस्वरूपात्मकं स्वरूपलक्षणं लभ्यते पञ्चमी च प्रकृतित्वं हेतुत्वसामान्यं वा वक्ति हेतुत्वसामान्यं च प्रकृति-कर्त्रुभय-साधारणमित्यविशेषात् अभिन्ननिमित्तोपादनत्व-रूपं लक्षणं लभ्यते इदं शब्देन प्रत्यक्षाद्युपस्थितं सर्वमुच्यते। भूतशब्दश्च पृथिव्यादिमहाभूतेषु प्राणिषु च रूढः प्रकृते च विनिगमनाविरहेण रूढ्योरनुग्रहात् भवन्तीति व्युत्पत्त्या कार्यमात्रं भूतशब्देन उच्यते जीवन्ति स्थितिं लभन्ते प्रयन्ति लीयमानानि सन्ति यदभिसंविशन्ति येन तादात्म्यं गच्छन्तीति यावत्। तत्कारणं ब्रह्म तत् विजिज्ञासस्व विशेषेण सच्चिदानन्दैकरसपूर्णप्रत्यग्रूपेण ज्ञातुं साक्षात्कर्त्तुम् इच्छस्व इच्छामात्रेण उक्तसाक्षात्काराला भात् सन् प्रत्ययेन विचारो

ज्ञायन्ते" इत्यादिश्रुत्या। जगज्जन्मस्थितिलयेषु एकैक-कारणत्वमपि अनन्यगामित्वात् लक्षणं भवितुमर्हतीति चेत् सत्यं लक्षणत्रयमेवेदं पर-

---

लक्ष्यते उक्तलक्षणमुखेन ब्रह्म विचारय इत्यर्थः। अत्र "यतो भूतानि जायन्ते तद्ब्रह्म येन जीवन्ति तद्ब्रह्म यदभिसंविशन्ति तद्ब्रह्म" इति श्रुतिपाठे सति जगज्जन्मकारणत्वं तत् स्थिति-कारणत्वं तल्लयकारणत्वं च प्रत्येकमेव श्रुत्या ब्रह्मलक्षणमुक्तं स्यात्, न तु तथा पाठोऽस्ति अतो जन्मादित्रितयकारणत्वं श्रुत्या लक्षणमुक्तमिति प्रतिभाति तदाचिर्पात जगज्जन्म-स्थितिलयेषु इति निर्धारणार्था सप्तमी यतो भूतानि जायन्ते इत्युपक्रम्य तद्ब्रह्मेति श्रुत्या लक्ष्ये ब्रह्मणि कारणत्वप्रतिपाद-नात् न असम्भवः। तद्ब्रह्मेति एकवचनेन लक्ष्यब्रह्मव्यक्तेरैक-त्वावगमात् न अव्याप्तरवकाश इति दोषद्वयाभावसिद्धं कृत्वा अतिव्याप्तिरपि नास्तीत्याह अनन्यगामित्वादिति। ब्रह्मान्य-गामित्वाभावादित्यर्थः। ननु प्रधानेऽतिव्याप्तिस्तस्याः सांख्यै-रुपादानत्वाभ्युपगमेन उपादानतया जगज्जन्महेतुत्वस्य आधार-तया स्थितिहेतुत्वस्य लयाधारतया लयहेतुत्वस्य च तत्रापि सत्वादिति चेत्? न, तत्तत्कर्त्तृत्वस्यापि लक्षणे विशेषणत्वेन विव-क्षिततया जड़े प्रधाने तदयोगात्। न च तत्तत्कर्त्तृत्वमेव प्रत्येकं लक्षणमस्तु किं तदुपादानत्वरूपविशेषणेनेति वाच्यम्? अदृष्ट-द्वारा जगज्जन्मादिकर्त्तरि जीवे अतिव्याप्तिवारकत्वात् परि-च्छिन्नजीवस्य तदुपादानत्वायोगात्। न च साक्षाज्जगज्जन्म-कर्त्तृत्वं नियन्तृतया जगत्स्थितिहेतुत्वं संजिहीर्षया जगत्-संहर्तृत्वं च लक्षणमिति विवक्षायां जीवे अतिव्याप्त्यभावादुपा-

स्परनिरपेक्षम्। अतएव "अत्ता चराचरग्रहणात्" [व्या० सू० १ अ० २ पा ९ सू०] इत्यादि अधिकरणेषु सर्वसंहर्त्तृत्वादिकं प्रत्येकं ब्रह्मलिङ्गतया उपन्यस्तमिति कौमुदीकारः ॥२६॥

अन्ये तु जन्मकारणत्वस्य स्थितिकारणत्वस्य च निमित्तकारणसाधारण्यात् उपादानत्वप्रत्या-

---

दानत्वरूपं विशेष्यं व्यर्थमेव इति वाच्यम्? तर्हि उपादानत्वमपि पृथगेवं लक्षणमस्तु मायायाः ब्रह्मोपादानतामात्रघटकत्वेन पृथगुपादानत्वालाभात् प्रधानादिकारणान्तरस्य च अप्रमाणकत्वेन अतिव्याप्तिरभावादिति भावः। प्रत्येकं लक्षणत्वसम्भवमङ्गीकरोति सत्यमिति। तर्हि श्रुत्या त्रितयकारणत्वं कथं लक्षणमुक्तमिति आशङ्क्य श्रुतेरपि प्रत्येकलक्षण एव तात्पर्य्यं मेलनस्य प्रयोजनाभावादिति आशयेनाह लक्षणत्रयमेव इदमिति। इदं जगत्कारणत्वं जन्मादीनां मध्ये एकैकनिरूपितं परस्परनिरपेक्षं सल्लक्षणत्रयमेव श्रुत्यभिमतं न तु त्रितयनिरूपितकारणत्वरूपमेकं लक्षणमित्यर्थः। त्रयपदमनेकपरं न तु त्रित्वनियमपरं ततोऽपि आधिक्यस्य शङ्कावसरे दर्शितत्वादिति बोध्यम्, जगत्संहर्तृत्वादेः प्रत्येकं ब्रह्मलक्षणत्वे सूत्रकारादिसम्मतिमाह, अतएवेति। अत्र आदिपदेन अन्तर्याम्यधिकरणजगद्वाचित्वाधिकरणयोः संग्रहः। अयमर्थः कठवल्ल्यां पठ्यते यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनं मृत्युर्यस्योपसेचनं क इत्थावेद यत्र स इति अत्र ब्रह्मक्षत्रयोः प्रयुक्त ओदनशब्दः तावत् न मुख्यः किन्तु गौणः लोके ओदनशब्दमुख्यार्थस्य अद-

नीयत्वप्रसिद्धेः अदनीयत्वेन गुणेन तयोः ओदनशब्दः प्रवर्त्तते तथा च यस्य ब्रह्मक्षत्रे ओदनवददनीये इत्युक्तौ यच्छब्दार्थस्य अत्तृत्वं प्रतीयते अनेन एव अभिप्रायेण उक्तं सूत्रे अत्ता इति। ओदनपदवाच्यार्थस्य अदनीयत्वं द्विविधमस्ति भुजिक्रियाकर्मत्वात्मकभोज्यत्वरूपम् एकं, विनाश्यत्वरूपम् अपरं, परन्तु भोज्यत्वगुणः प्रसिद्धः न तु विनाश्यत्वगुणः गौणप्रयोगे च प्रसिद्धगुण एव गृह्यते यथाग्निर्माणवक इत्यत्र अग्निगतशुचित्वादिगुण एव उपादीयते प्रसिद्धत्वात् न तु तद्गतोऽपि विनाश्यत्वादिगुणः एवं प्रकृतेऽपि लोकप्रसिद्धिबलात् भोज्यत्वगुण एव ओदनशब्दात् प्रतीयते अस्ति च ब्रह्मक्षत्रयोरपि स्त्रीपिण्डरूपयोर्भोज्यत्वं पुमांसं प्रति ब्रह्मक्षत्रयोश्च भोज्यत्वप्रतीतौ सत्यां तत्प्रतिसम्बन्धिनि यच्छब्दार्थे पूर्वं प्रतीतमत्तृत्वं भोक्तृत्वरूपं जीवलिङ्गं पर्य्यवस्यति यदा तु ओदनपदस्य मृत्यूपसेचनपदसन्निधानात् ब्रह्मक्षत्रयोर्विनाश्यत्वगुणः स्वीक्रियते न तु भोज्यत्वगुणः स्त्रीपिण्डरूपब्रह्मक्षत्रकर्म्मकभुजिक्रियायां मृत्योरुपसेचनत्वासम्भवेन मृत्युः यस्य उपसेचनमित्यंशस्यानन्वयप्रसङ्गात् ब्रह्मक्षत्रयोर्विनाशने तु मृत्योः सहायत्वरूपम् उपसेचनत्वम् अस्तीति न तदनन्वयप्रसक्तिः तदा तत्प्रतिसम्बन्धिनि यच्छब्दार्थे पूर्वं प्रतीतम् अत्तृत्वं संहर्त्तृत्वरूपं पर्य्यवस्यति विनाश्यत्वगुणग्रहणपक्षे तु अयं विशेषो लभ्यते लोके हि दध्यादिरूपम् उपसेचनं स्वमिश्रितान्नादिनाशे साधनं दृष्टमिति मृत्यौ उपसेचनपदप्रयोगबलात् समृत्युकस्य चराचरात्मकस्य जगतो विनाशनं प्रतीयते, तदनुसारात् ब्रह्मक्षत्रपदयोरजहल्लक्षणया कृत्स्नजगत्परत्वं च प्रतीयते, तत्प्रतिसम्बन्धिन्यपि यच्छब्दार्थे कृत्स्नजगत्संहर्त्तृत्वरूपं ब्रह्मलिङ्गं भाति एवं स्थिते प्रथममदनीयत्वगुणयोगात् प्रतीतोऽत्ता किं जीवः? उत परः;

मात्मा ? इति संशयः। तत्र पूर्वपक्षः जीव एवेति लोकप्रसिद्धानुसारेण अत्तृत्वस्य भोक्तृत्वरूपताप्रतीतेर्न परमात्मा अनश्नन् इति वचनेन तस्य भोक्तृत्वनिषेधादिति सिद्धान्तस्तु अत्ता परमात्मा कुतः चराचरग्रहणात्। मृत्यूपसेचनपदानुरोधेन पूर्वोक्तरीत्या अत्तृत्वस्य चराचरात्मकसकलजगत्संहर्तृत्वरूपत्वप्रतीतेः न च परमात्मनोऽन्यस्य जगत्संहर्तृत्वं सम्भवति। न च लोकप्रसिद्धिबलादत्तृत्वं भोक्तृत्वरूपं भाति इत्युक्तमिति वाच्यम् ? तत्प्रसिद्ध्यपेक्षया वाक्यशेषाधीनविनाश्यत्वगुणप्रसिद्धेः शीघ्रतरत्वेन बलवत्त्वादतः अत्ता पर एवेति निर्णयः। स संहर्त्ता परमेश्वरो यत्र निर्विशेषे भेदकल्पनया वर्त्तते तन्निर्विशेषं परमात्मानं मिथ्या इत्थं को वेद न कोऽपीति तस्य दुर्विज्ञेयत्वम् उदाहृतम् अत्र चतुर्थपादेन विवक्षितमिति बोध्यम्। अन्तर्याम्यधिदैवादिषु तद्धर्म्मव्यपदेशात् य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरोऽयमयतीत्युपक्रम्य यः पृथिव्यां तिष्ठन्नित्यादिना काश्चित् पर्य्यायानुक्त्वा इत्यधिदैवतमित्युपसंहृत्य पुनः यः सर्वेषु भूतेषु तिष्ठन् यः सर्वेषु लोकेषु यः सर्वेषु देवेषु यः सर्वेषु यज्ञेषु इत्यादयः केचन पर्य्यायाः का एव माध्यन्दिनपाठभेदेनाम्नाताः। तत्र अधिदैवादिषु देवभूतलोकवेदयज्ञादिषु श्रुतोऽन्तर्यामी परमात्मा कुतः तद्धर्म्मव्यपदेशात् तद्धर्म्मस्य परमात्मधर्म्मस्य विशेषेण सर्वस्थितिकर्त्तृत्वरूपसर्वनियन्तृत्वस्य येन जातानि जीवन्ति इति श्रुतिसिद्धस्य वाक्योपक्रमे य इमं च लोकमित्यादिना व्यपदेशात् न जीवादिरन्तर्यामी तस्य उक्तधर्मासम्भवादिति सूत्रार्थः। जगद्वाचित्वात् कौषीतकीब्राह्मणे बालाक्यजातशत्रुसंवादे बालाकिं ब्राह्मणं प्रति अजातशत्रोर्वचनं श्रूयते यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य वै तत्कर्म्म स वै वेदितव्यः पुरुष इति अत्र वेदितव्य-

त्वेन श्रुतः पुरुषः जीवः परो वेति संशये जीव इति पूर्वपक्षः पुरुषपदस्य जीवे रूढ़त्वात् पुण्यो वै पुण्येन कर्म्मणा भवति कर्म्मैव तदूचतुरित्यादौ वेदे लोके च पुण्यकर्मायं यतः सुखी वर्त्तते इत्यादौ कर्म्मपदस्य धर्मादौ प्रयोगदर्शनेन तत्र रूढ़त्वाच्च ऊचतुः आर्त्तभागयाज्ञवल्क्यावित्यर्थः कर्म्मसम्बन्धी पुरुषो जीव एव न परमात्मा तस्य धर्माद्यभावात्र च एतेषां पुरुषाणां कर्त्तेति वाक्येन वेदितव्यपुरुषस्य प्रकृतादित्यचन्द्रादिपुरुष-कर्त्तृत्वमुच्यमानं जीवे कथं सम्भवतीति वाच्यम्? भोगोपकरण-भूतान् आदित्यादिपुरुषान् प्रतिभोक्तृजीवस्यादृष्टद्वारा कर्त्तृ-त्वोपपत्तेः अतएव यस्य वै तत्कर्मेति वाक्यं सफलमदृष्टद्वारा प्रकृतपुरुषकर्त्तृत्वोपपादकत्वादित्येवं प्राप्ते सिद्धान्तः कर्मशब्दस्य न धर्मादौ रूढ़िः चलनात्मकं कर्मेति प्रसिध्यनुरोधेन परि-स्पन्दे तस्य रूढ़त्वात् कथं तर्हि धर्मादौ तत्प्रयोगनिर्वाहः विहितप्रतिषिद्धरूपदेहादिपरिस्पन्दजन्ये धर्मादौ लक्षणया प्रयोगोपपत्तेः न च देवताध्यानादिरूपमनोमात्रव्यापारजन्ये धर्मादौ परिस्पन्दजन्यत्वाभावेन लक्षणयाप्रयोगा योगे सति परिस्पन्द इव धर्मादावपि रूढ़िः अपरिहार्य्येति वाच्यम्? तर्हि प्रकृते विनिगमनाविरहेण रूढ्योरनुन्मेषे सति क्रियत इति कर्म्म इति व्युत्पत्त्या कर्मपदं कार्य्यमात्रमाह, एतत्पदमपि प्रत्यक्षा-द्युपस्थितवस्तुमात्रमाह, प्रकृतस्य तत्परामर्शयोग्यस्य कस्यचित् अभावात्। तथा च एतत् कृत्स्नं जगत् यस्य कर्म कार्य्यमि-त्यर्थः। लाभेन वेदितव्यपुरुषस्य अशेषजगदुत्पत्तिकर्त्तृत्वं सिध्यति तच्च ब्रह्मलिङ्गम् आदित्यादिपुरुषकर्त्तृत्वमपि न मुख्यं जीवस्य सम्भवति, एतेषां पुरुषाणां कर्त्ता इत्यत्र मुख्य-कर्त्तग्रहणसम्भवे गौणकर्त्तृग्रहणायोगात् न च अशेषजग-त्कर्त्तृत्वोक्तौ तत एव आदित्यादिकर्त्तृत्वस्यापि लाभात् पृथक्

तदुक्तिः व्यर्था इति वाच्यम्? मन्त्रार्थवादादिषु आदित्य-चन्द्रादिपुरुषाणां महामहिमसंकीर्त्तनेन तेषु सञ्जातपरब्रह्म-त्वभ्रान्तिनिवर्त्तकत्वेन पृथगुक्तिसाफल्यात् पुरुषपदस्यापि न जीवे रूढ़िः पूरणात् पुरुष इति क्लृप्तयोगेन एव कृत्स्न-जगद्व्यापिनि ब्रह्मणि इव कृत्स्नशरीरव्यापिनि जीवेऽपि प्रयोगोपपत्त्या तत्र रूढ़ेः अकल्पनात् तत्कल्पनेऽपि योगवत् रूढ़ेरपि जीवब्रह्मसाधारणचेतनमात्रे कल्पनोपपत्तेश्च न पुरुषश्रुतिजीवपक्षपातिनी श्रुतिपाठे क्वचित् पुरुषपदास्रव-णाच्च तथा च अयं सूत्रार्थः, वेदितव्य पुरुषः परमात्मा कृत्स्नजगत्कर्त्तृत्वात्, न च हेत्वसिद्धिः कर्मपदस्य जगद्वाचित्वात् तस्मात् वेदितव्यः पुरुषः परमात्मेति सिद्धम् एवञ्च सर्वसंहर्त्तृ-त्वादिकमित्यत्र आदिपदेन अन्तर्याम्यधिकरणोक्तं सर्व-नियन्तृत्वरूपसर्वस्थितिकर्त्तृत्वं जगद्वाचित्वाधिकरणोक्तं सर्व-जगदुपत्तिकर्त्तृत्वं च गृह्यते। ननु यत इत्यादिश्रुत्या जीव-व्यावृत्तेश्वरस्य तत्पदवाच्यस्य ब्रह्मणो लक्षणमुक्तमिति तात्पर्य्य-वर्णनमयुक्तं तद्विजिज्ञासस्व तद्ब्रह्मेति वाक्यशेषानुसारेण श्रुतेः वाक्यार्थभूताद्वितीयजिज्ञास्यब्रह्मलक्षणप्रतिपादिकत्वस्यैव अवगमात् इत्याशङ्क्य श्रुतेस्तथाभूतब्रह्मलक्षणपरत्वमुपगच्छतां मतमाह, अन्येत्विति। चेतनाचेतनात्मककृत्स्नभूतोपादन-त्वप्रतिपत्तिर्हि ब्रह्मणोऽद्वितीयत्वबोधहेतुः। न च चेतनानां नित्यत्वात् कथं तदुपादानत्वं ब्रह्मण इति वाच्यम्? तेषां स्वरूपेण नित्यत्वेऽपि शरीरद्वयविशिष्टतया कार्य्यत्वोपगमात् न चैवमपि ब्रह्मापेक्षयाद्वितीयस्य तत्कार्य्यस्य विद्यमानत्वात् कथं तदुपादानत्वमद्वितीयत्वप्रत्यायकमिति वाच्यम्? कार्य्यस्य हि उपादानमेव वास्तवं स्वरूपे न तु तदतिरिक्तं वास्तवं स्वरूपमस्ति नामरूपात्मकं जगद्रूपन्तु मिथ्याभूतमित्यारम्भणा-

अनेन च प्रपञ्चस्य ब्रह्मणि लयो दर्शितः। अस्तु ब्रह्म जगदुपादानं तज्जन्मनि घटजन्मनि कुलाल-वत् तत्स्थितौ राज्यस्थेम्नि राजवत् च उपादानात् अन्यदेव निमित्तं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव जगज्जन्मजीवननियामकत्वमुक्तम्। तथा

---

व्यधिकरणेषु व्यवस्थापितत्वात् अतः सर्वोपादानत्वात् सर्वस्य वास्तवं स्वरूपं ब्रह्मैवेति बोधनद्वारा ब्रह्मणो वास्तवाद्वितीयत्व-बोधहेतुर्भवति अद्वितीयब्रह्मबोधश्च मुक्तिप्रयोजनकब्रह्माद्वि-तीयत्वबोधहेतुभूतोपादानत्वप्रत्यायनार्थं यत् प्रयन्त्यभिसंविश-न्तीति श्रुतिभागेन ब्रह्मणि सर्वभूतलयो दर्शित इत्याह उपा-दानत्वेति। ननु घटाद्युपादाने मृदादौ घटादिलयाधारत्वव-ज्जन्मादिकारणत्वस्यापि सत्त्वेन तद्बलादप्युपादानत्वप्रत्ययः स्यात् इति न इत्याह जन्मकारणत्वस्येति। निमित्तं कुलालचक्रदण्डादि तर्हि श्रुतौ जन्मादिकारणत्वप्रतिपादनं व्यर्थं लयमात्रप्रति-पादनादेवेष्टसिद्धेरिति नेत्याह अस्त्विति। घटजन्मनि उपा-दानमृदतिरिक्तकुलाल इव जगज्जन्मनि अपि उपादानब्रह्मा-पेक्षया अन्यत्कर्तृरूपं निमित्तं भविष्यतीति भ्रमव्यवच्छेदाय तस्यैव ब्रह्मण एव श्रुतौ जगज्जननकर्तृत्वमुक्तं तथा राज्य-स्थेम्नि पालनरूपे पालनीयप्रजाद्युपादानातिरिक्तराजवज्जगतः स्थितौ जगदुपादानब्रह्मापेक्षया अन्यनिमित्तं नियन्तृतया स्थितिहेतुभूतं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव ब्रह्मणो जगज्जीवननियामकत्वं श्रुत्या उक्तमित्यर्थः। तथा च इति जगज्जननजीवननियामकत्वाभ्यां जगदुपादानब्रह्मण एव तन्निमित्तत्वप्रतीतौ सिद्धायामित्यर्थः। इदं श्रुत्युक्तलक्षणमेकं

चैकमेवेदं लक्षणमभिन्ननिमित्तोपादानतया अद्वितीयं ब्रह्म उपलक्षयति इत्याहुः ॥२७॥

[ब्रह्मणः विवर्त्तरूपोपादानत्वम् ।]

ब्रह्मणश्च उपादानत्वम् अद्वितीयकूटस्थचैतन्यरूपस्य न परमाणूनाम् इव आरम्भकत्वरूपं न वा

---

सदेवाभिन्ननिमित्तोपादानत्वे पर्य्यवस्यदद्वितीयं ब्रह्म लक्षयति ब्रह्मव्यतिरिक्तवस्त्वस्तित्वशङ्कानिराकरणद्वारेण ज्ञापयति न तु प्रत्येकलक्षणं सदित्यर्थः। निमित्तं तदुपादानं चेति। निमित्तोपादानम् अभिन्नं च तन्निमित्तोपादानं चेति पुनः कर्मधारयः आद्यकर्मधारयादेव निमित्तोपादानयोः अभेदे सिद्धेऽपि पुनरभिन्नपदं कर्मधारयावगताभेदः ऐक्ये लक्षणा एव न नीलोत्पलादौ गुणगुणिनोरिव तादात्म्यरूप इति ज्ञापनार्थमिति बोध्यम्। ननु यत इति पञ्चमीश्रुत्या सर्वभूतलयाधारत्वलिङ्गेन च निश्चितं ब्रह्मण उपादानत्वं प्रधानस्येव परिणामित्वरूपं वा परमाणूनामिव आरम्भकत्वरूपं वा रज्ज्वादेरारोपितसर्पाद्युपादानस्येव जगद्रूपविवर्त्ताधिष्ठानत्वरूपं वा वाच्यम्? तत्र नाद्यः ब्रह्मणः कूटस्थत्वात्परिणामवादे हि परिणामपरिणामिनोः वास्तवाभेदस्वीकारेण ब्रह्मणः परिणामत्वे परिणामजन्मादयोऽपि ब्रह्मणि प्रसज्येरन् तथा च जन्ममरणादेर्विकारशून्यत्वलक्षणं श्रुतिसिद्धकूटस्थत्वं तस्य भज्येत ततश्च कूटस्थत्वात् तस्य परिणामित्वं न सम्भवति न द्वितीयः अद्वितीयत्वात् ब्रह्मणः ॥२७॥

ब्रह्मणः सद्वितीयत्वे हि परिमाणद्वयसंयोगवदसमवायिकारणलाभसम्भवादारम्भकत्वं भवेदित्याशयेनाह ब्रह्मणश्चेति,

प्रकृतेरिव परिणामित्वरूपं किं तु अविद्यया वियदादिप्रपञ्चरूपेण विवर्त्तमानत्वलक्षणम्। वस्तुनः तत्समसत्ताकोऽन्यथाभावः परिणामः

---

तृतीयप्रकारः। परिशिष्यत इत्याह किन्तु इत्यादिना। ननु ब्रह्मतद्विवर्त्तप्रपञ्चयोरभेदः सिद्धान्ते उपेयते आरम्भवादे तु आरभ्यमारम्भकादत्यन्तभिन्नमुपेयते इति आरभ्यविवर्त्तयोर्भेदः स्पष्टः सिद्धान्त इव परिणामवादेऽपि सांख्याद्यभिमते परिणामपरिणामिनोरभेदाभ्युपगमात् विवर्त्तपरिणामयोर्भेदः कथमवगन्तव्य इत्याशङ्क्य लक्षणभेदादित्याह वस्तुन इति। वस्तुन उपादानत्वाभिमतस्य अन्यथा पूर्वरूपापेक्षया रूपान्तरेण भावः भवनम् अवस्थानम् अन्यथाभावः अवस्थाविशेष इति यावत् तत्समसत्ताकः तेन वस्तुना समासत्ता यस्य अन्यथाभावस्य स तथा तथा च उपादानत्वाभिमतवस्तुसत्तासमानसत्ताकत्वे सति तदवस्थाविशेषरूपत्वं तत्परिणामत्वमिति परिणामलक्षणं पर्य्यवस्यति तत्र विवर्त्तवारणाय सत्यन्तं घटस्य तन्तुपरिणामत्ववारणाय विशेष्यं विवर्त्तलक्षणमाह, तदिति। वस्तुनस्तदसमसत्ताकः अन्यथाभावो विवर्त्त इति सम्बन्धः। उपादानत्वाभिमतवस्तुसत्ताविषमसत्ताकत्वे सति तदवस्थाविशेषरूपत्वं तद्विवर्त्तत्वमिति विवर्त्तलक्षणम् उपादानत्वाभिमतस्रग्वस्तुसत्ताविषमसत्ताकत्वं चैतन्यस्य अपि अस्तीति तस्य स्रग्वस्तु विवर्त्तत्ववारणाय विशेष्यं परिणामवारणाय सत्यन्तं ब्रह्मचैतन्यस्य पारमार्थिकी सत्ता घटादिप्रपञ्चस्य व्यवहारिकी सत्ता शुक्तिरजतादेः प्रतिभासकी सत्ता इति त्रैविध्याङ्गीकारमते लक्षणभेद उक्तः ब्रह्मणि घटादौ शुक्ति-

तदसमसत्ताको विवर्त्त इति वा कारणसलक्षणोऽन्यथाभावः परिणामः तद्विलक्षणो विवर्त्त इति वा कारणाऽभिन्नं कार्य्यं परिणामः तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्य्यं विवर्त्त इति वा विवर्त्तपरिणामयोर्विवेकः ॥२८॥

---

रजतादौ च सर्वत्र ब्रह्मस्वरूपभूता एकैव सत्ता न तदतिरिक्तेति मतसाधारण्येन लक्षणान्तरमाह,कारणसलक्षण इति। उपादानत्वाभिमतवस्तु सलक्षणत्वे सति तदवस्थाविशेषत्वं तत्परिणामत्वमिति परिणामलक्षणम्। अत्र सालक्षण्यं जड़त्वरूपं बोध्यं,परिणामपरिणामिनोर्जड़त्वनियमान्न क्वापि अव्याप्तिशङ्का मृद्वस्तुनो घटपरिणामत्ववारणाय विशेष्यं प्रपञ्चस्य संवित्परिणामत्ववारणाय सत्यन्तं विवर्त्तलक्षणमाह, तदिति। उपादानत्वाभिमतवस्तुविलक्षणत्वे सति तदवस्थाविशेषत्वं तद्विवर्त्तत्वमिति विवर्त्तलक्षणमत्र चित्वजडत्वरूपं वैलक्षण्यं विवक्षितं वियदादिप्रपञ्चवत् शुक्तिरजतादेरपि तत्तदवच्छिन्नचैतन्य एव अध्यासाङ्गीकारात् जड़मात्रे चैतन्यविवर्त्ते तद्विलक्षणत्वमस्तीति लक्षणसङ्गतिः उपादानत्वाभिमतजड़विलक्षणे चैतन्ये जड़विवर्त्तत्ववारणाय विशेष्यं मृत्परिणामे घटादौ मृद्विवर्त्तत्ववारणाय सत्यन्तं प्रकारान्तरेण विवर्त्तपरिणामयोर्लक्षणमाह, कारणाऽभिन्नमिति। कारणत्वाभिमतवस्त्वभिन्नत्वे सति तत्कार्य्यत्वं तत्परिणामत्वं वियदादौ ब्रह्मकार्य्यत्वमस्ति तत्परिणामत्वं तु नास्तीति तद्वारणाय सत्यन्तं ब्रह्मप्रपञ्चयोः आरोपितभेदसत्त्वेऽपि लक्षणे विवक्षितस्य धर्मिद्वयसमानस्वभावाभेदस्य अभावान्नातिव्याप्तिः परिणामवादे मृदोऽपि

घटाद्यभिन्नत्वमस्तीति तस्याः घटादिपरिणामत्ववारणाय विशेष्यं तदभेदमिति वस्तुतस्तु तदभेदं विनैव इत्यर्थः। व्यतिरेको भेदः अस्मिन् लक्षणे कार्य्यत्वमविवक्षितम् अनाद्यविद्यादेरपि विवर्त्तत्वाङ्गीकारात् यद्वा कार्य्यस्यैव विवर्त्तस्येदं लक्षणं तथा च उपादानत्वाभिमतवस्तुनः सकाशाद्वस्तुतो भेदाभेदाभ्यां दुर्निरूपत्वे सति कार्य्यत्वं कार्य्यरूपविवर्त्तलक्षणमत्र अविद्यां प्रति उपादानत्वाभिमतचैतन्याद्वस्तुतो भेदाभेदाभ्यां निरूपयितुमशक्यायामविद्यायामतिव्याप्तिवारणाय विशेष्यम् आरम्भवादे उपादानादभेदेन दुर्निरूपकार्य्ये अतिव्याप्तिवारणाय भेदेत्युक्तं परिणामवादे उपादानात् भेदेन दुर्निरूपकार्य्ये अतिव्याप्तिवारणाय अभेदेत्युक्तं सिद्धान्ते कार्य्यकारणयोर्भेदोपगमादसम्भववारणाय वस्तुत इत्युक्तं कार्य्यकारणयोर्वस्तुतो भेदाभेदौ कथं दुर्निरूपाविति उच्यते तत्र तयोर्भेदस्तावत् दुर्निरूपः निम्नोन्नतादियुक्तमृद्वस्तुव्यतिरेकेण घटाद्यनुपलम्भात् संयोगविशेषयुक्तं तन्तु अतिरेकेण पटानुपलम्भाच्च मृद्घटः तन्तवः पटः सुवर्णं कुण्डलमित्यादिसामानाधिकरण्याच्च न हि वस्तुतो भिन्नयोः सामानाधिकरण्यप्रत्ययः सम्भवति किञ्च कारणव्यापारात् पूर्वं मृदादौ घटादेः सत्त्वमभ्युपगन्तव्यं तदसत्त्वे शशशृङ्गादिवदुत्पत्त्यनुपपत्तेः उत्पत्तिक्षणात् पूर्वमसत्कार्य्यस्य उत्पत्तिक्रियां प्रति कर्त्तृत्वानुपपत्तेश्च पूर्वसिद्धस्य एव कर्तृत्वदर्शनात् उत्पत्तिक्षणे उपादानेन सह कार्य्यस्य सम्बन्धानुपपत्तेश्च पूर्वक्षणे कार्य्यस्य असत्त्वात् पूर्वसिद्धयोरेव हि पश्चात् सम्बन्धसम्भवः अन्यथा शशशृङ्गादेरपि कारणसम्बन्धस्य दुर्वारत्वात् कारणव्यापारात् पूर्वं कार्य्यस्य तुच्छवैलक्षण्याङ्गीकारे तद्वदेव पश्चादात्मलाभासम्भवस्य दुर्वारत्वाच्च सिद्धे च प्राक्कार्य्यस्य सत्त्वे प्रक्काले कार्य्यकारणयोर्भेदे मानाभावादभेद-

सिद्धो पश्चादपि तयोरभेद एव स्वीकर्त्तव्य इति कार्य्यकारणा-भेदवादिनः सांख्यादयः तद्भेदवादिनस्तार्किकादयस्तु वदन्ति कार्य्यकारणयोरभेदो न सम्भवति तद्भावविरोधात् न हि तस्यैव तत्कार्य्यत्वं तत्कारणत्वं च सम्भवति अर्थक्रियाभेदा-भावप्रसङ्गाच्च न हि जलाहरणाद्यर्थक्रिया मृद्वस्तुनः सम्भवति घटोत्पत्तेः प्रागपि तत्प्रसङ्गात् नापि मृदः अर्थक्रिया घटस्य सम्भवति मृद्घटस्यापि घटोत्पादकत्वप्रसङ्गात् कार्य्यस्य, कारणव्यापारात् पूर्वं सत्त्वे च कारकव्यापारवैयर्थ्यप्रसङ्गात् तदा मृद्वदेवोपलम्भप्रसङ्गात् च तदुक्तं पञ्चदश्यां।

"स घटो न मृदो भिन्नो वियोगे सत्यनीक्षणात्।
नाप्यभिन्नः पुरा पिण्डदशायामनवेक्षणात्॥"

इति वियोगे सति मृदः सकाशात् बुध्या विवेचने क्रियमाण इत्यर्थः। एवं कार्य्यकारणयोर्भेदवादिभिः अभेदवादिभिश्च दर्शितैः परस्परं प्रति चेभुमशक्यैर्न्यायैः कार्य्यस्य कारणात् भेदाभेदाभ्यां प्रागुत्पत्तेः सत्त्वासत्त्वाभ्यां च दुर्निरूपत्वात् तस्य अनृतत्वं सिद्धं कारणं तु कार्य्योत्पत्तेः पूर्वकाले कार्य्यकाले कार्य्यनाशकाले च अनुवर्त्तमानं कार्य्यात् भेदेन सत्त्वेन च निरूपयितुं शक्यत्वात् सत्यमेव कार्य्यापेक्षया एवं मृदादेरवान्तरकारणस्य तत्तत्कार्य्यापेक्षया सत्यत्वे सिद्धेऽपि परमार्थसत्यत्वं न उपेयते श्रुत्या ब्रह्मव्यतिरिक्तस्य सर्वस्यैव बाधितत्वात् ब्रह्मणस्तु परमार्थसत्यत्वं सर्वात्मना बाधशून्यत्वात् अभ्युपगम्यते अतएव जगत्कारणस्य सत्यत्वे मृदादिसत्यत्वं जगतो मिथ्यात्वे च मृदादिकार्य्यस्य घटादेरनृतत्वं च दृष्टान्त-त्वेन श्रुत्या उपादीयते तदुक्तं पञ्चदश्याम्।

"एवं मायामयत्वेन विकारस्यानृतात्मताम्।
विकाराधारमृद्वस्तुसत्यत्वं चाब्रवीच्छ्रुतिः॥"

[ब्रह्मणः कारणत्वविचारे सङ्क्षेपशारीरकमते शुद्धस्य उपादानम्।]

**अथ शुद्धं ब्रह्मोपादानमिष्यते ईश्वररूपं जीवरूपं वा। अत्र संक्षेपशारीरकानुसारिणः**

---

इति श्लोके विकारानृतत्वादौ पूर्वोक्तन्यायकलापः एवं शब्दार्थः दृष्टान्तत्वेन इति शेषः। उक्तञ्च भामतीनिबन्धने "तदनेन प्रमाणेन विकारजातस्य अनिर्वाच्यतया सिद्धमनृतत्वं कारणस्य निर्वाच्यतया सिद्धं सत्यत्वं च मृत्तिकेत्येव सत्यम्" इत्यादिना प्रबन्धेन दृष्टान्ततया अनुवदति श्रुतिरिति "वाचारम्भणं विकारो नामधेयं मृत्तिका इत्येव सत्यम्" इति श्रुतिरित्यर्थः। विकारो घटादिर्वाचा घटशब्द एव आदिरस्तीत्यादिशब्देन आरभ्यते व्यवह्रियत इति आरम्भणवाचा व्यवह्रियते एव न च वस्तुतोऽस्ति विकारस्तस्य दुर्निरूपत्वादिति भावः। कथं तर्हि मृद्वस्तुनः सकाशात् घटादिर्जात इति कार्य्यकारणयोर्भेदव्यवहार इत्यत आह, नामधेयं भेदव्यवहारो नाममात्रम् अर्थशून्यः यथा राहोः शिरः पुरुषस्य चैतन्यमिति व्याहारः विकारवद्भेदोऽपि अनिर्वचनीय इति भावः। किं तर्हि सत्यं तत्राह, मृत्तिकेति। अनेन मृत्तिकात्वेन रूपेण घटशरावादिविकारेषु प्रतीयमानं कारणरूपं वस्तु सत्यं विकारसत्यत्वमेवकारेण व्यवच्छिद्यते तत्सिद्धं दुर्वचत्वं कारणात् भेदाभेदाभ्यां कार्य्यस्येति पृच्छति।

अथेति। ननु वाक्यार्थभूतशुद्धब्रह्मण एव श्रुतौ लक्षणमुक्तं तद्विजिज्ञासस्वेति वाक्यशेषे लक्षणीयस्य ब्रह्मणो जिज्ञास्यत्वाभिधानात् तथाच निश्चितेऽर्थे प्रश्नानुपपत्तिरिति चेन्न यथा शुद्धस्य जिज्ञास्यत्वमेवं तत्त्वम्पदार्थभूतयोः जीवेश्वरयोरपि शुद्धब्रह्मप्रतिपत्तिहेतुत्वेन जिज्ञास्य-

केचिदाहुः। शुद्धमेवोपादानं जन्मादिसूत्र-तद्भाष्ययोः उपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वोक्तेः।

---

त्वमस्ति तथा तयोरपि वक्ष्यमाणरीत्या भिन्ननिमित्तोपादानत्वं च सम्भवतीति जिज्ञास्यत्वकारणत्वयोः साधारणत्वेन प्रश्नोपपत्तेरिति भावः जीव ईशो विशुद्धाचित्तथा जीवेशयोर्भिदा अविद्यातच्चितोः योगः षडस्माकमनादय इति सम्प्रदायविद्वचने चैतन्यत्रैविध्यस्य एव प्रसिद्धत्वात् तदनुसारेण च त्रेधा प्रश्नः सामान्यज्ञानस्य विशेषभुबुत्साहेतुत्वात् ब्रह्मणः सामान्यरूपेण उपादानत्वज्ञानानन्तर्य्यमथ शब्दार्थः प्रश्नो वा तदर्थः ईश्वररूपं जीवरूपं वा ब्रह्म नोपादानमिति वाक्यार्थः जन्मात् यस्य यत इति सूत्रं जन्म आदिरस्येति बहुव्रीहिः जन्मस्थितिभङ्गम् अन्यपदार्थः जन्मादीति नपुंसकैकवचनेन अन्यपदार्थे समाहारद्वन्द्वसूचनादन्यपदार्थभूतजन्मस्थितिभङ्गेषु इतरेतरयोगद्वन्द्वाश्रवणे तु जन्मात् यस्य इति सूत्रापत्तेः जन्मन आदित्वं च जायमानपदार्थेषु स्थितिभङ्गावपेक्ष्य दृष्टमिति सूत्रे जन्मनः प्राथम्यरूपादित्वनिर्देशः अस्येति सर्वनाम्ना सूत्रकर्त्तुः बुद्धिस्थसकलप्रपञ्चनिर्देशः षष्ठ्या च जगतो जन्मादेश्च सम्बन्धनिर्देशः यत इति कारणनिर्देशः सूत्रे तत्पदाध्याहारः पूर्वसूत्रात् ब्रह्मपदानुषङ्गः तथाच यतः कारणादस्य जगतः जन्मादि तद्ब्रह्मेति सूत्रार्थः ज्ञेयं ब्रह्मेति वाक्यार्थभूतशुद्धब्रह्मण एव प्राधान्येन लक्षणीयत्वात् तथैव जन्मादिसूत्रे लक्षणमुच्यते। अथातो ब्रह्मजिज्ञासेति पूर्वसूत्रे शास्त्रविषयसमर्थकेन ब्रह्मपदेन शुद्धब्रह्मण एव उपात्तत्वेन तस्यैव लक्षणाकाङ्क्षणाच्चेति भावः। ननु आत्मन आकाशः सम्भूतः सोऽकामयत

तथा च आत्मन आकाशः सम्भूतः इत्यादिकारणवाक्येषु शबलवाचिनामात्मादिशब्दानां शुद्धे लक्षणैव इति ॥ २९ ॥

विवरणानुसारिणस्तु यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायत इत्यादिश्रुतेः सर्वज्ञत्वादिविशिष्टं मायाशबलमीश्वररूपमेव ब्रह्मोपादानम्।

---

यः सर्वज्ञः स सर्वविदित्यादिकारणवाक्येषु ईश्वररूपब्रह्मणः कारणत्वमुच्यते न शुद्धस्य तस्य कामयितृत्वसर्वज्ञानकर्तृत्वाद्यनुपपत्तेरतस्तद्वाक्यगतात्मपदतत्पदसर्वज्ञादिपदानां शबलवाचित्वात् न कारणवाक्येभ्यः शुद्धस्य उपादानत्वसिद्धिरिति नेत्याह तथा चेति। जन्मादिसूत्रतद्भाष्ययोः स्वारस्येन शुद्धस्य उपादानत्वावगमे सति इत्यर्थः। लक्षणैव स्वीक्रियते अतः कारणवाक्येभ्यः शुद्धस्य कारणत्वावगतिर्युक्तेति भावः ॥२९॥

अथ शुद्धं ब्रह्म उपादानम् इत्यादिप्रश्ने द्वितीयपक्षमादाय प्रतिवचनमुत्थापयति विवरणेति। यस्य प्रकृतस्य भूतयोनेः पूर्वमन्त्रोक्तं तपः ज्ञानमयस्वरूपज्ञानविकारः मायावृत्तिप्रतिबिम्बरूपमिति यावत् तस्मात् सर्वज्ञात् भूतयोनेः सकाशादेतत् सन्निहितम् अपरकालीनं कार्य्यरूपमिति यावद्ब्रह्माहिरण्यगर्भाख्यं जायत इति श्रुतेरीश्वररूपमेव ब्रह्म उपादानमिति सम्बन्धः। न शुद्धं जीवरूपं वा इति एवकारार्थः सर्वज्ञत्वादि इत्यादिपदेन सर्वविक्त्वकामयितृत्वसर्वेश्वरत्वादीनि गृह्यन्ते मायोपाधिनिरूपितबिम्बत्वविशिष्टसर्वज्ञत्वादिगुणयुक्तं च यत् ईश्वररूपं ब्रह्म-

अत एव भाष्येऽन्तस्तद्धर्मोपदेशात् सर्वत्र प्रसिद्धो-पदेशादित्याद्यधिकरणेषु सैव रुक् तत्साम तदु-क्थं तद्यजुस्तद् ब्रह्म सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस इत्यादिश्रुत्युक्तं सर्वोपादानत्वप्रयुक्तं सर्वा-त्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गमित्युपवर्णितम्। जीवेश्वरानुस्यूतचैतन्यमात्रस्य सर्वोपादानत्वे तु न तज्जीवव्यावृत्तमीश्वरलिङ्गं स्यात्।

---

चैतन्यं तदेव उपादानम् इत्यर्थः। अथ शुद्धं ब्रह्मोपादानम् इष्यत इति प्रश्नस्य प्रतिवचनावसरे ईश्वररूपमेव ब्रह्मोपादानम् इति एतावति वक्तव्ये तस्य मायाशबलत्वविशेषणमीश्वरोऽपि शुद्धचैतन्यमेव इति भ्रान्तिनिरासार्थं तस्य सर्वज्ञत्वाद्यनेक-विशेषणोपादानं च ईश्वररूपब्रह्मणः उपादानत्वे यः सर्वज्ञ इत्यादिकारणवाक्यानां सर्वेषाम् ऐकमत्यप्रदर्शनार्थमिति मन्तव्यम्।

जीवशुद्धब्रह्मव्यावृत्तेश्वररूपब्रह्मण उपादानत्वे भाष्य-सम्मतिमाह अतएवेति। ईश्वररूपब्रह्मण एव उपादान-त्वाभ्युपगमादेव इत्यर्थः। इत्यादिश्रुत्युक्तं सर्वात्मकत्वम् ईश्वर-लिङ्गमित्युपवर्णितं भाष्ये इति सम्बन्धः। यस्य सर्वोपादा-नत्वं तस्य सर्वात्मकत्वमुपादानोपादेययोस्तादात्म्यान्नान्यस्य इति अविवादम्। यदि प्रतिबिम्बत्वविशिष्टचैतन्यरूपे जीवे बिम्बत्वविशिष्टचैतन्यरूप ईश्वरे च विशेष्यतया अनुस्यूतशुद्धचै-तन्यरूपब्रह्मणः सर्वोपादानत्वमिष्यते तदा तस्यैव सर्वात्मकत्वं स्यात् न ईश्वरस्य इति सर्वात्मकस्य भाष्ये जीवव्यावृत्तेश्वरलिङ्ग-

त्वोपन्यासो न स्यात् न च विशेष्यभूतशुद्धब्रह्मगतं सर्वात्मकत्वं विश्वत्वविशिष्टचैतन्यरूपेश्वरलिङ्गतया भाष्ये वर्णितमिति वाच्यम् तथा सति तस्य जीवव्यावृत्तत्वं न स्यात् विशेष्यधर्मस्य सर्वात्मकत्वस्य ईश्वरधर्मत्ववत् जीवधर्मत्वस्यापि सत्त्वादित्याशयेनाह जीवेश्वरानुस्यूतेति। छान्दोग्ये श्रूयते परासोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्व एव सुवर्ण इत्युपक्रम्य तस्य ऋक्‌च सामच गेष्णौ इत्युक्त्वा उत्तरत्र परासोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्मेति च उक्त्वा तद्य इमे वीणायां गायन्ति एनं ते गायन्तीति तस्यार्थः। आदित्ये अन्तर्यः पुरुषः शास्त्रतो दृश्यते एष हिरण्मयः ज्योतिर्मयः स्वतःप्रकाशचैतन्यस्वरूप इत्यर्थः। तस्य उपासनार्थं शरीरमाह हिरण्यश्मश्रुरित्यादिना हिरण्यसुवर्णशब्दौ ज्योतिःपरौ प्रणखो नखाग्रम् गेष्णु अभिव्याप्तौ तस्य हिरण्मयपुरुषस्य ऋक्सामनोर्येष्णौ परिमलोक्तरीत्या स्तुतिसाधनीभूते इत्यर्थः। इदम् ऋक्सामयजुष्ट्वं समस्तऋक्सामस्तुत्यत्वरूपं हिरण्मयपुरुषविशेषणं तस्य वेदे ऋक्सामस्तुत्यतया प्रसिद्धेन्द्राद्यात्मकत्वमादाय पर्य्यवस्यति हिरण्मयपुरुषस्य इन्द्रादिभ्यः सकाशाद्भिन्नत्वे तु तद्विशेषणं न सिध्यति अन्यस्तुतेरन्यविषयकत्वायोगात् तस्यैव पुरुषस्य आदित्यस्थानवत् उपासनार्थं स्थानान्तरमाह य एषोऽन्तरक्षिणीति सैव ऋक् इत्यादौ विषयापेक्षया लिङ्गव्यत्यासः स एव ऋक् स पुरुषः साम स उक्थं सः यजुः सः ब्रह्मवेदः ब्रह्मपदं ऋगाद्यतिरिक्तवेदपरं तथा च गेष्णुवाक्येन सर्वदेवात्मकत्वमुक्तं सैव ऋगितिवाक्येन सर्ववेदात्मकत्वमुक्तं तथा ये इमे प्रसिद्धा गायकाः वीणायां लौकिकपुरुषं गायन्ति तेऽपि एनं पुरुषं गायन्तीति उक्त्वा इन्द्राद्यात्मकत्ववत् लौकिकपुरुषात्मकत्वमपि

सिध्यति तथा च सर्वदेवात्मकत्वसर्ववेदात्मकत्वसर्वलौकिक-पुरुषात्मकत्वानि मिलित्वा सर्वात्मकत्वे पर्यवस्यन्ति तिर्यगात्मकत्वस्यापि उक्तप्रायत्वात् एवं स्थिते संशयः आदित्ये अक्षिणि चान्तः श्रूयमाणो हि हिरण्मयः पुरुषः मण्डलाभिमानिदेवताविशेषो वा नित्यसिद्धः परमेश्वरो वेति तत्र देवताविशेष एव हिरण्मयः पुरुषस्तस्य संसारित्वेन हिरण्यश्मश्रुत्वादिरूपसत्त्वोपपत्तेः सर्वात्मकत्वस्यापि उपासनार्थं तत्र आरोपोपपत्तेश्च न परमेश्वरः तस्य शरीरासम्भवादिति प्राप्तम् एवं प्राप्ते ब्रूमः अन्तस्तद्धर्मोपदेशादिति। आदित्यादावन्तरवस्थितो हिरण्मयपुरुषो नित्यसिद्धपरमेश्वर एव कुतस्तद्धर्मस्य सर्वात्मकत्वस्य सैव ऋक् तत्सामेत्यादौ उपदेशात् सर्वात्मकत्वं हि ईश्वरस्यैव धर्मः तस्य सर्वोपादानत्वेन सर्वात्मकत्वोपपत्तेः। न च मुख्यसम्भवे सति आरोपकल्पना न्याय्या परमेश्वरस्यापि साधकानुग्रहार्थम् इच्छावशात् मायागतशुद्धसत्त्वांशपरिणामरूपशरीरसम्भवादुमासहायं परमेश्वरं प्रभुमित्यादिश्रुतिषु जन्मकर्म च मे दिव्यमित्यादिस्मृतिषु च प्रसिद्धत्वाच्चेति निर्णयः सर्वं खलु इदं ब्रह्मेति प्रकृत्य स क्रतुं कुर्वीतेति वाक्येन क्रतुशब्दवाच्यम् उपासनं विधाय उपास्याकाङ्क्षायां पठ्यते मनोमयः प्राणशरीरः भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय इति। अयमर्थः मनोमयः मनःप्रधानः प्राणः शरीरमस्येति प्राणशरीरः भाश्चैतन्यं रूपमस्येति भारूपः सत्याः अप्रतिहताः सङ्कल्पाः सृष्ट्यादिगोचरा अस्य आकाशवदात्माव्यापकत्वनिर्लेपत्वसूक्ष्मत्वादियुक्तं स्वरूपमस्य सर्वाणि कर्माणि क्रियन्त इति व्युत्पत्त्या कार्य्याणि अस्य यद्वा भूतगुणगन्धरसादिसन्निधानात् कर्मपदं परिस्पन्दपरं सर्वे परिस्पन्दा अस्य इत्यर्थः।

संक्षेपशारीरके शबलोपादानत्वनिराकरणमपि

सर्वे कामा इच्छारूपा अस्य सुखविशेषरूपा वा सर्वे गन्धाः पुण्यरूपाः अस्य पुण्योगन्धः पृथिव्यां चेति स्मृतेः सर्वे रसाः अस्य इदं दृश्यं सर्वम् अभि आभिमुख्येन तादात्म्येन आत्तः व्याप्तः वागेव वाकः वाकी अस्यास्तीति वाकी अवाकी वागिन्द्रियशून्य इति यावत् वाक् ग्रहणं मुख्यप्राणस्य च उपलक्षणं क्रियाशक्तिमत्त्वाविशेषात् आदरः कामः स अस्य नास्ति इति अनादरः आदरनिषेधेन तत् परिणामि मनो निषिद्धं भवति मनोनिषेधेन च ज्ञानेन्द्रियाणां निषेधः सिद्धो भवति ज्ञानशक्तिमत्त्वाविशेषात् अत्र परिस्पन्देच्छागन्धरसवत्त्वं तदाश्रयैः वायुमनःपृथिवीजलैर्भूतविशेषैस्तादात्म्यं विना न सम्भवतीति सर्वकर्मत्वादिवचनेन अविशेषेण सर्वतादात्म्यप्रतिपादकं सर्वमिदमभ्यात इति वचनेन च मनोमयत्वादि गुणकस्य सर्वात्मकत्वं प्रतीयते तच्च ब्रह्मण एव उपपद्यते तस्य सर्वोपादानत्वेन सर्वात्मकत्वोपपत्तेः न जीवो मनोमयत्वादिगुणकस्तस्य सार्वात्म्यासम्भवात् न च मनोमयत्वप्राणशरीरत्वयोर्जीवधर्मयोः ब्रह्मणि असम्भव इति वाच्यं भूततादात्म्येन गन्धादि-मत्त्ववज्जीव-तादात्म्येन मनोमयत्वाद्युपपत्तेरिति सूत्रार्थस्तु मनोमयत्वादिगुणकं ब्रह्मैव उपास्यत्वेनेह निर्दिश्यते कुतः सर्वत्र वेदान्तेषु प्रसिद्धस्य ब्रह्मणः सर्वं खलु इदं ब्रह्मेति पूर्ववाक्ये स्वशब्देन एव उपदेशात् अस्मिन्नपि वाक्ये प्राणशरीरमस्य इत्यादि विग्रहवाक्येषु प्रकृतब्रह्माकर्षकसर्वनामश्रुतीनां सत्वाच्च ब्रह्मैव सगुणमुपास्यमत्रेति सिद्धम्। सर्वोपादानत्वेति। शुद्धब्रह्मवज्जीवस्य सर्वोपादानत्वोपगमेऽपि सर्वात्मकत्वं जीवव्यावृत्तम् ईश्वरलिङ्गं न स्यादिति तु शब्दार्थः।

मायाविशिष्टोपादानत्वनिराकरणाभिप्रायं न तु निष्कृष्टेश्वररूपचैतन्योपादानत्वनिराकरणपरम्।

तत्रैव प्रथमाध्यायान्ते जगदुपादानत्वस्य तत्-पदार्थवृत्तित्वोक्तेः। एवं च ईश्वरगतमपि

---

ननु संक्षेपशारीरके मायाशबलस्य उपादानत्वं निरस्तमिति तद्विरोध इत्यत आह संक्षेपशारीरके इति। मायाया अपि विम्बभूतेश्वरविशेषणतया उपादानत्वाश्रयकोटौ निवेश एव तत्र दूषितः न तु विम्बत्वविशिष्टचैतन्यरूपेश्वरस्य तन्निरस्तमिति न तद्विरोध इत्यर्थः। ननु शबलस्य उपादानत्वं निराकृत्य जगदुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वसमर्थनपरस्य संक्षेप-शारीरकग्रन्थस्य कथमेवमभिप्रायः कल्पयितुं शक्यते स्वरसतः स्वस्वविम्ब-प्रतिविम्बानुगत-शुद्ध-ब्रह्मोपादानत्वप्रतिपादन-पर-त्वावगमादिति न इत्याह तत्रैव इति। संक्षेपशारीरक एव इत्यर्थः। न च तत्पदार्थवृत्तित्वं तत्पदलक्ष्यार्थवृत्तित्वं विवक्षितं लक्ष्यार्थशुद्धं ब्रह्मेति न संक्षेपशारीरकग्रन्थस्य पूर्वापरविरोधः। न वा तेन विम्बभूतेश्वरस्य उपादानत्वलाभ इति वाच्यं? लक्ष्या-र्थत्वस्य वाक्यार्थसाधारणतया तत्पदार्थवृत्तित्वविशेषणं वैय-र्थ्यापत्तेस्तत्पदार्थवृत्तित्वं तत्पदवाच्यार्थवृत्तित्वमेव वक्तव्यमिति तदविरोधाय सर्वज्ञत्वादिगुणकस्य ईश्वरस्य जगत्कारणत्व प्रति-पादकबहुश्रुत्यविरोधाय च शबलोपादानत्वनिराकरणं माया-विशिष्टोपादानत्वनिराकरणरूपमेव वक्तव्यमिति न संक्षेपशा-रीरकविरोध इति भावः। तर्हि जन्मादिसूत्रतद्भाष्ययोर्ज्ञेयब्रह्म-

कारणत्वं तदनुगतमखण्डचैतन्यं शाखाचन्द्र-मसमिव तटस्थतया उपलक्षयितुं शक्नोतीति तस्य ज्ञेयब्रह्मलक्षणत्वोक्तिरिति मन्यन्ते ॥३०॥

---

लक्षणत्वोक्तिविरोध इति न इत्याह एवञ्चेति। अभिन्ननिमित्तो-पादानत्वरूपलक्षणस्य अन्तस्तद्धर्मोद्यधिकरणभाष्यपर्यालोच-नया विश्वभूतेश्वर एव गतत्वे सिद्धे सति इत्यर्थः। अपि शब्दः चैतन्यमिति अनेन सम्बध्यते कारणत्वमित्यनन्तरं ईश्वरमितर-व्यावृत्ततया बोधयत्सदिति शेषः। तदनुगतमिति विश्वत्वविशिष्ट-चैतन्यरूपेश्वरानुगतमित्यर्थः अखण्डचैतन्यमिति विशेष्यभूत-शुद्धचैतन्यमित्यर्थः तटस्थत्वञ्च लक्ष्यस्वरूपवहिर्भूतत्वं वा लक्ष्या-वृत्तित्वं वा उपलक्षणत्वं वा बोध्यं क्व चन्द्र इति प्रश्ने शाखा-यामिति उत्तरं भवति तत्र यथा शाखादिगन्तरगतनक्षत्रव्यावृत्तं चन्द्रमुपलक्षयति तथा ईश्वरगतं कारणत्वम् ईश्वरमितरव्या-वृत्ततया बोधयत् सत् तटस्थतया ईश्वरानुगतमखण्डचैतन्य-मपि इतरव्यावृत्ततया उपलक्षयितुं शक्नोत्येव इत्यर्थः। ईश्वर-गतेनाभिन्ननिमित्तोपादानत्वेन विश्वत्वविशिष्टचैतन्यरूपे-श्वरस्य जगदुपादानत्वसम्भवशून्याज्जीवात् तत्कर्तृत्वसम्भव-रहितात् प्रधानादेश्च सकाशाद्व्यावृत्तौ गम्यमानायां सत्यां विशेष्यभूतज्ञेयब्रह्मणोऽपि प्रधानादिव्यावृत्तिर्गम्यत इति अभि-प्रेत्य तस्य ज्ञेयब्रह्मलक्षणत्वं जन्मादिसूत्रतद्भाष्ययोः संक्षेप-शारीरके च उक्तमितिभावः। एवं तटस्थलक्षणेन प्रधानादि-व्यावृत्तत्वेन अवगतं ब्रह्म कीदृक्स्वरूपमिति विशेषजिज्ञासायां सत्यां सत्यज्ञानानन्दात्मकं ब्रह्मेतिस्वरूपलक्षणं प्रवर्त्तते अनेन

एव अभिप्रायेण भाष्यकारैरुक्तं तस्य च निर्णयवाक्यमानन्दा-देव खल्विमानि भूतानि जायन्ते इति यतो वा इत्यादि-वाक्येन यस्मात्कारणात् इमानि जायन्ते इत्युक्तं तद्वस्तुतः सत्यज्ञानानन्तस्वरूपानन्दादेव नान्यस्मात् कारणादित्येतत् हि प्रसिद्धं पूर्ववत्स्यामिति श्रुत्यर्थः। अनेन स्वरूपलक्षणेन बिम्ब-भूतेश्वरानुगतं तत्पदलक्ष्यं वस्तुतो वाक्यार्थभूतं ज्ञेयं ब्रह्म विशेषतो निर्धारितं भवति इयञ्च स्वरूपलक्षणविवक्षामूले अखण्डपदेन सूचिता जगत्प्रकृतिभूतमायाप्रतिबिम्ब ईश्वरः माया च ईश्वराश्रिता न च प्रतिबिम्बत्वस्य मायाकल्पित-त्वात् तद्विशिष्टचैतन्याश्रितत्वं मायाया न सम्भवति प्रति-बिम्बत्वकल्पनात् प्रागेव तस्याः चेतनाश्रितत्वस्य वक्तव्यत्वादिति वाच्यं मायात्वप्रतिबिम्बत्वस्याप्यनादित्वेन तस्यास्तद्विशिष्ट-चैतन्याश्रितत्वोपपत्तेः वस्तुतो निर्विशेषचैतन्ये अनादि-कालमारभ्य कल्पितप्रतिबिम्बत्वस्थितेरनिर्वचनीयमायाधीनत्व-मात्रेण प्रतिबिम्बत्वस्य तत्कल्पितत्वं न तु प्रतिबिम्बत्वस्य विय-दादेरिव मायापरिणामित्वमुपेयते तथा सति प्रतिबिम्ब-भूतेश्वरस्य सादित्वप्रसङ्गात् न च माया अनादिकालमारभ्य चैतन्ये प्रतिबिम्बत्वस्य तत्कल्पितत्वं घटयति तद्विशिष्टमेव चैतन्यमाश्रयत इति कथं सम्भावयितुं शक्यमिति वाच्यं ? मायाया अघटितघटनापटीयस्त्वात् न च शुद्धचैतन्याश्रितैव माया तत्र प्रतिबिम्बभावं घटयतीति कुतो नाश्रीयते इति वाच्यं मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरमिति श्रुति-विरोधात्। मायिनमिति पदेन मायाया ईश्वराश्रितत्वप्रतीतेः जीवास्त्वविद्याप्रतिबिम्बाः जीवेशावाभासेन करोतीति श्रुतेः प्रकृता मूलप्रकृतिः जीवेशौ प्रतिबिम्बरूपौ करोति इत्यर्थः। न हि उपाधिभेदं विना प्रतिबिम्बभेदः सम्भवति न च एकस्मिन्नपि

वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्र ईश्वर उपादानम्। अन्तःकरणादिकं तु ईश्वराश्रितमायापरिणाममहाभूतोपसृष्टजीवाविद्याकृतभूतसूक्ष्मकार्य्यमिति तत्र उभयोः

---

दर्पणे अनेकप्रतिविम्बदर्शनात् प्रतिविम्बभेद उपाधिभेदव्याप्तो न भवतीति वाच्यम्? एकस्मिन् दर्पणे विम्बभेदेन प्रतिविम्बभेदेऽपि सूर्य्यादिविम्बैक्यस्थले उपाधिभेदं विना प्रतिविम्बभेदादर्शनात् विम्बभूतचैतन्यस्य च एकत्वात् तस्मात् ईश्वरोपाधिमायापेक्षाभिन्ना एव जीवोपाधिभूता अविद्याः स्वीकर्त्तव्याः। न च मूलप्रकृतिं प्रकृत्य प्रवृत्तायां जीवेशावभासेन करोति माया च अविद्या च स्वमेव भवतीति श्रुतौ जीवेशरूपप्रतिविम्बाधारयोर्मायाविद्ययोः स्वमेव इत्यनेन प्रकृतमूलप्रकृत्यात्मकत्वप्रतिपादनं मायाविद्ययोर्भेदपक्षे विरुध्यत इति वाच्यम्? मायाया वियदादिप्रकृतित्ववत् अविद्याया अपि लिङ्गशरीरादिप्रकृतित्वस्य वक्ष्यमाणत्वेन मायाविद्ये प्रकृतित्वेन एकीकृत्य स्वयमेव इति एकप्रकृत्यात्मकत्वप्रतिपादनस्य अविरोधात् अविद्या च इत्येकवचनस्यापि जात्यभिप्रायत्वोपपत्तेः। तत्तन्नानात्वविरोधोऽपि विम्बैक्यस्थले उपाधिभेदं विना प्रतिविम्बभेदासम्भवस्य दर्शितत्वात् प्रतिविम्बजीवानां च नानात्वात् अदृश्यत्वाधिकरणभाष्येऽप्यव्याकृतमीश्वराश्रयं तस्यैव उपाधिभूतमिति मायाया ईश्वरोपाधित्वतदाश्रयत्वयोरुक्तत्वात् तथा आनुमानिकाधिकरणभाष्ये मुक्तानां च न पुनरुत्पत्तिः तस्या अविद्याया जीवशक्तेर्विद्यया दाहादित्यत्र जीवनानात्वस्य तदुपाधिभूताविद्यानानात्वस्य च स्पष्टमभिहितत्वात् भामती

उपादानत्वम्। अतएव एवमेव अस्य परिद्रष्टु-रिमाः षोड़शकलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्तीति श्रुतौ कलाशब्दवाच्यानां प्राणमनः-प्रभृतीनां विदुषो विदेहकैवल्यसमये अविद्यानि-वृत्त्या अविद्याकार्य्यांशाभिप्रायेण विद्यया उच्छेदो दर्शितः। गताः कलाः पञ्चदशप्रतिष्ठा इति श्रुत्यन्तरे।

---

निबन्धने तद्भाष्यस्य जीवोपाधिभूताविद्यैक्यनिराकरणपरतयैव व्याख्यातत्वाच्च आभास एव चेति सूत्रतद्भाष्ययोर्जीवानां प्रति-बिम्बत्वरूपतायाः स्पष्टमभिहितत्वाच्च ॥ ३० ॥

तथा च मायाविद्याभेदः श्रुत्यादिसम्मत इति यें मन्यन्ते तेषां मतमुपन्यस्यति व यदादिप्रपञ्च इत्यादिना। पूर्वमते ईश्वररूपं ब्रह्मोपादानमित्युक्तं तत्सत्यमेव परन्तु क्वचिज्जगति जीवस्यापि उपादानत्वमभ्युपगन्तव्यमिति अभि-प्रायेण अस्य मतस्य प्रवृत्तिर्बोध्या ईश्वराश्रितमायापरिणाम इतिमायां तु प्रकृतिं विद्यादिति श्रुतेरिति भावः। तत्रेति विय-दादावीश्वर एव उपादानम् इत्यर्थः। अन्तःकरणादौ तु शब्द-सूचितं विशेषं दर्शयति ईश्वरेति। भूतैरुपष्टम्भकलक्षणैः संसृष्टत्वं तच्च जीवाविद्याकृतानां भूतसूक्ष्माणां विशेषणं भूतानां सूक्ष्मत्वं परिच्छिन्नत्वम् अतएवेति अन्तःकरणादौ जीवा-विद्यापरिणामसूक्ष्मभूतानां तदुपष्टम्भकतया मायापरिणाम-महाभूतानां च उपादानतया प्रविष्टत्वादेव इत्यर्थः। यथा गङ्गाद्या नद्यः समुद्रं प्राप्यास्तं गच्छन्ति एवमेवास्य विदुषः

तदनिवर्त्त्यं मायाकार्य्यमहाभूतपरिणाम-रूपोपष्टम्भकांशाभिप्रायेण तेषां स्वस्वप्रकृतिषु लयो दर्शितः। इति मायाविद्याभेदवादिनः॥ ३१॥

---

परितः सर्वात्मानं पूर्णं पश्यतः कलाः लिङ्गशरीरैकदेशभूताः पुरुषायणाः पुरुषः चिदात्मा अयनमधिष्ठानं यासां ताः पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छन्ति पुरुषे लीयन्ते इत्यर्थः। दर्शित इति पुरुष शेषः। प्रतिष्ठाइति द्वितीयाबहुवचनं मायापरिणामात्मकमहाभूतानीति द्वितीयाबहुवचनार्थः पञ्चदशकलाः प्रतिष्ठाः प्रतिगता तासु लीना इति यावत्।

तदनिवर्त्त्येति। ईश्वरोपाधिभूतमायाया जीवगतविद्यानिवर्त्त्यत्वाभावादिति भावः। यदि कलानां जीवाविद्यामात्रपरिणामत्वं तदा तासामशेषतः पुरुष एव लयः स्यात् तथा च तासां भूतेषु लयप्रतिपादकवचनं निर्विषयं स्यादतो मायाकार्य्यमहाभूतानामपि लिङ्गशरीरोपादानत्वं वाच्यमिति तत्र उभयोरुपादानत्वे श्रुतिद्वयव्यवस्थासिद्धिरेव फलमित्यर्थः। न च मायायाः तत्त्वज्ञाननिवर्त्त्यत्वाभावे मिथ्यात्वसिद्धिर्न स्यादितिवाच्यं ब्रह्मणि सर्वदृश्यनिषेधश्रुतिबलात् दृश्यत्वादिलिङ्गैश्च तन्मिथ्यात्वसिद्धेः। न च मायायाः विद्यया निवृत्त्यभावे निवर्त्तकान्तराभावात् सर्वमुक्तावपि तदनुवृत्तिप्रसङ्ग इति वाच्यम्? महाप्रलयकाले सर्वप्राणिभोगप्रदकर्मणां युगपदुपरमे सति ईश्वरसङ्कल्पमात्रादेव सर्वप्रपञ्चलयवत् सर्वमुक्तिकाले इतः परं सकार्य्यायाः मायायाः प्रयोजनं नास्तीति अनुसन्धानवत ईश्वरस्य सत्यसङ्कल्पस्य मायास्वकार्य्यैः सह मयि वस्तुतास्वदेकरसे निःशेषं

यथा वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्र ईश्वर उपादानं तथा अन्तःकरणादिजीवाश्रिताऽविद्यामात्रपरिणाम इति तत्र जीव एव उपादानम्। न च अन्तःकरणादौ मायाकार्य्यमहाभूतानामपि अननुप्रवेशे उदाहृतश्रुतिद्वयव्यवस्थानुपपत्तिः। कलानां विद्यया उच्छेदश्रुतिस्तत्त्वविद्दृष्टिविषया गताः कला इति

---

अयं यातु इत्येवंरूपादेव मायापरिणामलक्षणसङ्कल्पात्तत्क्षयोपपत्तेः श्रुतिस्मृतिपुराणादिषु तत्त्वज्ञानात् मायानिवृत्तिप्रतिपादकग्रन्थजातमविद्यानिवृत्त्यभिप्रायं यद्वा तत्त्वज्ञानमात्रमविद्याया इव मायाया निवर्त्तनयोग्यमपि नानाप्राणिकर्मप्रतिबन्धान्न तस्याः निवर्त्तकं चरममुच्यमानस्यैव तु तत्त्वं ज्ञानं प्रतिबन्धकाभावात् तन्निवर्त्तकमित्यादिकल्पनीयमिति संक्षेपः॥२१

अन्तःकरणादौ उभयोरुपादानत्वमसिद्धं श्रुतिद्वयव्यवस्थायाः भाष्यकारैरेव अन्यथा प्रतिपादितत्वादिति मतान्तरं दर्शयति यथा वियदादीति। तत्त्वविदो दृष्टिस्तत्त्वसाक्षात्कारः अत्र दृष्टिपदेन तत्फलभूतः कलाक्षयो विवक्षितः तद्विषया पुरुषे कला प्रलयश्रुतिरित्यर्थः। भूतेषु कलाप्रलयवचनं तु कलानामपि मायापरिणाममहाभूतकार्य्यत्वभ्रमवतां भ्रान्तिसिद्धार्थानुवादकमिति भावः। चूर्णीभावपर्य्यन्तो पदनाशो यथा भूमौ दृश्यते तद्वत् मन्यन्त इत्यक्षरार्थः प्रतीति विषयेति प्रतीतिस्तु भ्रान्तिरूपा तद्विषयविषयकेत्यर्थः स्पष्टत्वादिति तानि परे तथा ह्याह्येति तदधिकरणसूत्रं तानि नमः आदीनि

श्रुतिस्तु म्रियमाणे तत्त्वविदि समीववर्त्तिनः पुरुषा नश्यद्दृष्टवत्तदीयशरीरादीनामपि भूम्यादिषु लयं मन्यन्त इति तटस्थपुरुषप्रतीतिविषयेति व्यवस्थायाः कलालयाधिकरणभाष्ये [ ४अ० २पा० १५सू०] स्पष्टत्वात् इति मायाविद्याभेदवादिषु एकदेशिनः ॥३२॥

तदभेदवादिष्वपि केचित् यद्यपि वियदादिप्रपञ्चस्य ईश्वर उपादानं तथापि अन्तःकरणादीनां जीवतादात्म्यप्रतीतेर्जीव एवोपादानम्। अत एवाध्यासभाष्ये अन्तःकरणादीनां जीवे एवाध्यासो दर्शितः। विवरणे च प्रतिकर्मव्यवस्थायां

---

परे पुरुषे निरवशेषं लीयन्ते तथा हि श्रुतिराह एवमेव अस्येत्याद्या श्रुतिर्निरवशेषं लयमाह हीतिसूत्रार्थः। अन्तःकरणादीनां मायाकार्य्यत्वाभाव-ईश्वरस्य अन्तःकरणाद्युपादानत्वप्रतिपादकश्रुतिविरोध इति दोषं सूचयति एकदेशिन इति। मायैव अविद्या सा च ईश्वरस्यैव उपाधिर्जीवानां तु प्रतिविम्बरूपाणाम् अन्तःकरणान्येव उपाधय, इति मायाविद्ययोरभेदवादिनोऽपि केचित् ॥ ३२ ॥

अन्तःकरणादौ जीवस्यैव उपादानत्वं तद्भेदवादिन एव वदन्तीत्याह तदभेदादिषु अपि इति। अपिशब्दः क्वचिदंशे पूर्वमतसाम्यार्थकः तच्च साम्यं तथापि इत्यादिना स्पष्टं भविष्यति। ननु वियदादिप्रपञ्चेऽपि जीव एव उपादानं किं न

ब्रह्मचैतन्यस्य उपादानतया घटादिसङ्गित्वं जीवस्य तदसङ्गित्वेऽपि अन्तःकरणादिसङ्गित्वं च वर्णितम् इत्याहुः ॥३२॥

---

स्यादित्यत आह यद्यपि इति। ईश्वराश्रितमायापरिणामत्वात् ईश्वर एव वियदादौ उपादानं न जीव इत्यर्थः। ननु माया-विद्ययोरभेदोपगमे अविद्यापरिणामान्तःकरणादीनामपि ईश्वराश्रितमायापरिणामत्वाविशेषात् ईश्वर एव अन्तःकर-णादौ अपि उपादानमिति वक्तुमुचितमिति न इत्याह तथापि इत्यादिना। जीव इति अहं कर्त्ता अहं प्राणिमि अहं काणः अहं मूकः अहं स्थूल इत्यादिप्रकारेण अन्तःकरणादीनां शरीरान्तानां जीवतादात्म्यं प्रतीयते तच्च तेषां जीवे अध्यस्तत्वं विना न सम्भवतीति जीवस्यैव तदधिष्ठानत्वरूपमुपादानत्वं न च ईश्वरस्य इत्यर्थः। प्रतिकर्मव्यवस्थेति ब्रह्मणः स्वरूपचैतन्येन सर्वदा सर्वभासकत्वरूपे सर्वज्ञत्वे उक्ते तर्हि जीवस्य अपि स्वरूपचैतन्येनैव सर्वदा सर्वद्रष्टृत्वमिति दोषप्रसक्तौ जीवं प्रति विषयव्यवस्थाप्रतिपादकग्रन्थ इत्यर्थः। ब्रह्मेति बिम्बचैतन्य-रूपब्रह्मणा सर्वोपादानतया घटादितादात्म्यरूपः संसर्गः क्लृप्त इत्यर्थः। अविद्याया व्यापकत्वेन तत्प्रतिबिम्बरूपजीवस्य व्यापकत्वेऽपि न घटादिभिस्तस्य तादात्म्यमुपादानत्वाभावात् अन्तःकरणादिभिस्तु जीवस्य तादात्म्यलक्षणः संसर्गोऽस्तीति प्रतिपादितं विवरणे इत्यर्थः। अनेन जीवस्य अन्तःकरणादौ उपादानत्वमुक्तं भवति अन्यथा घटादिभिरिव अन्तःकरणा-दिभिः अपि उक्तसंसर्गित्वं जीवस्य न स्यात् उपादानत्वाभावाविशे-षादिति भावः। अत्र अन्तःकरणादिपरिणाम्युपादानभूताया अविद्याया ईश्वराश्रितमायया सह अभेदाङ्गीकारे ईश्वरस्यैव

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी॥

इत्यादिश्रुतेः कृत्स्नस्य व्यावहारिकप्रपञ्चस्य ब्रह्मैव उपादानं जीवस्तु प्रातिभासिकस्य स्वप्नप्रपञ्चस्य च। कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा [२अ० १पा० २६सू०] इत्यधिकरणे ब्रह्मणो जगदुपादानत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरेकेण ब्रह्माऽभावो वा एकदेशेन परिणामे निरवयवत्वश्रुतिविरोधो वा प्रसज्यत इति पूर्वपक्षे आत्मनि चैवं विचित्राश्च हि [२अ० १पा० २८सू०] इति सूत्रेण विवर्त्तवा-

---

अन्तःकरणादौ उपादानत्वं वक्तुमुचितं यदि जीवतादात्म्यप्रतिपत्त्यादिभिः उक्तहेतुभिर्जीवस्यैव अन्तःकरणादौ उपादानत्वं वक्तव्यं तदा अन्तःकरणादिपरिणामिभूताविद्यायाः जीवाश्रितत्वमीश्वराश्रितमायायाः सकाशात् भिन्नत्वं च वक्तव्यं कार्य्यात्मना परिणामता न प्रकृत्याश्रयत्वातिरिक्तस्य चैतन्यगतोपादानत्वस्य अभावात् अतो मायाविद्ययोरभेदाङ्गीकारो जीवस्यैव अन्तःकरणादौ उपादानत्वाङ्गीकारश्च परस्परविरुद्ध इति अन्तरसङ्गभेदवादिषु अपि इति अपिशब्देन सूचितः॥ ३३॥

ईश्वरस्य अन्तःकरणादौ अपि उपादानत्वमुपेत्यापि तस्य कार्य्यमात्रे उपादानत्वं नास्तीति विशेषं वक्तुं मतान्तरमवतारयति एतस्मादिति। प्रकृतात् ईश्वरादित्यर्थः।

दाभिप्रायेण स्वप्नद्रष्टरि जीवात्मनि स्वरूपानुप-मर्दनेन अनेकाकारस्वप्नप्रपञ्चसृष्टिवत् ब्रह्मणि वियदादिसृष्टिरुपपद्यत इति सिद्धान्तितत्वादित्यन्ये। जीव एव स्वप्नद्रष्टवत् स्वस्मिन् ईश्वरादिसर्वकल्पकत्वेन सर्वकारणमित्यपि केचित् ॥३४॥

---

प्रकृतित्वं पञ्चम्यर्थः तु शब्दोऽवधारणार्थः स्वप्रपञ्चस्य इति अनन्तरम् उपादानमित्यनुषङ्गः। किं कृत्स्नं ब्रह्म जगदाकारेण परिणमते एकदेशेन वा ? नाद्य इत्याह तस्येति। यथा दध्याकारेण परिणतस्य क्षीरस्य पूर्वरूपात् प्रच्युतिः एवं ब्रह्मणोऽपि स्वरूपात् प्रच्युतिः स्यादित्यर्थः। ब्रह्मण एकदेशः परिणमते इति द्वितीयकल्पं दूषयति एकदेशेन इति। पूर्वपक्ष इति उभयथापि ब्रह्मणः उपादानत्वं न सम्भवतीति पूर्वपक्षे प्राप्ते सति इत्यर्थः। यदि ब्रह्मणः उपादानत्वं क्षीरपृथिव्यादिवत् परिणामित्वरूपम् अभ्युपगम्येत तदा कृत्स्नप्रसक्त्यादिदोषः प्रसज्येत न तु तथाभ्युपगम्यते किन्तु रज्ज्वादेः सर्पाद्युपादानत्ववत् विवर्त्तोपादानत्वं ब्रह्मणः उपपत्तेः अतो नोक्तदोषावकाश इति सिद्धान्तं प्रति आत्मनि चेति। एकश्चकारो यथा शब्दसमानार्थः द्वितीयोऽवधारणार्थः हि शब्दो हेत्वर्थः ततश्च यथा आत्मनि जीवे स्वस्वप्नद्रष्टरि विचित्राः रथादिसृष्टयो जीवचैतन्यस्वरूपोपमर्दं विनैव भवन्ति स्वप्नावस्थानिवृत्त्यनन्तरमपि बुद्ध्यादिसाक्षितया जीवचैतन्यस्य यथापूर्वमवस्थानात् एवं ब्रह्मणि तत्स्वरूपप्रच्युतिं विनैव विचित्राः वियदादिसृष्टयः सम्भवन्ति सृष्टिस्थितिसंहारेषु सच्चिदानन्दरूपेण ब्रह्मानुवृत्तेः श्रुतिसिद्धत्वादिति सूत्रार्थः।

[अथ मायाकारणत्व विचारः]

**अथ मायां तु प्रकृतिं विद्यादित्यादिश्रुतेर्माया-जाड्यस्य घटादिषु अनुगमाच्च माया जगदुपादानं प्रतीयते कथं ब्रह्मोपादानम् ॥३५॥**

---

अथ शुद्धं ब्रह्मोपादानम् इत्यादिप्रश्ने तृतीयं पक्षमादाय प्रतिवचनमवतारयति जीव इति। परिपूर्णः चिदात्मा अविद्यया अवच्छेदप्रतिबिम्बभावौ विनापि प्राप्तजीवभावः सन् आत्मानमेव सर्वेश्वरं कल्पयति प्राप्तेश्वरभावात् स्वस्मादेव गगनादिसृष्टिं कल्पयति स्वस्य स्वकल्पितादीश्वराद्भेदं तन्नियम्यत्वं च कल्पयति तथा क्रमेण मनुष्यादिभावं कल्पयति यथा वियदादिप्रपञ्चो व्यावहारिकसत्यः स्वप्नप्रपञ्च प्रातिभासिक इति। पक्षे स्वप्नद्रष्टा जीव एव देवतिर्य्यङ्मनुष्यादिभावेन तन्नियन्तृपरमेश्वररूपेण ततो भिन्नत्वादिरूपेण वा आत्मानं कल्पयति तद्वत् तथा च स्वस्मिन्नेव सर्वप्रपञ्चकल्पकत्वात् जीवभावापन्नं ब्रह्म सर्वोपादानमिति दृष्टिसृष्टिवादिन आहुरित्यर्थः।जीवभावापन्नब्रह्मणः सर्वोपादानत्वमिति अस्मिन् पक्षे जीवादधिकस्य ईश्वरस्य अभावात् ईश्वरस्य सर्वजीवनियन्तृत्वप्रतिपादकश्रुतिस्मृतिन्यायसूत्रभाष्यादिविरोधो बन्धमोक्षव्यवस्थानुपपत्तिश्चेति दोषं सूचयति इत्यपि केचिदिति ॥३४॥

तथा च जीवे अतिव्याप्त्यभावात् ईश्वररूपमेव ब्रह्म सर्वोपादानमिति स्थितम् इदानीं ब्रह्मलक्षणस्य उपादानत्वस्य असम्भवमाशङ्कते अथेति। श्रुतौ तुशब्दो मायायाः प्रकृतित्वमवधारयति यथा मृदादिगतश्लक्ष्णत्वादेर्घटादौ अनुगमात् घटादौ मृदादेः उपादानत्वं तथा मायागतजाड्यस्य जगति अनु-

अत्राहुः पदार्थतत्त्वनिर्णयकाराः। ब्रह्म माया चेत्युभयमुपादानमित्युभयश्रुत्युपपत्तिः। सत्ताजाड्यरूपोभयधर्मानुगत्युपपत्तिश्च। तत्र ब्रह्म विवर्त्तमानतया उपादानमविद्या परिणाममानतया। न च विवर्त्ताधिष्ठाने पारिभाषिकमुपादानत्वं स्वात्मनि कार्य्यजनिहेतुत्वस्य उपादानलक्षणस्य तत्रापि अविशेषादिति ॥३६॥

---

गमात् तस्याः तदुपादानत्वमिति युक्तिमप्याह माया जाड्यस्य इति। कथमिति ? ननु ब्रह्मण उपादानत्वं बहुश्रुत्युदाहरणेन पूर्वं दर्शितं, सत्यं दर्शितं तत्तु न सम्भवति निरवयवस्य तस्य मृदादेरिव परिणाम्युपादानत्वासम्भवात्। न च विवर्त्तोपादानत्वं निरवयवस्यापि सम्भवति गगनादौ नैल्याध्यासोपदर्शनात् इति वाच्यम् ? परिणामिषु इव विवर्त्ताधिष्ठानेषु लोके उपादानत्वप्रसिध्यभावेन तत्र उपादानत्वाभ्युपत्तेरपि आगमस्य परिभाषामात्रत्वादित्याक्षेपाभिप्रायः ॥ ३५ ॥

उपादानत्वघटितब्रह्मलक्षणस्य असम्भवं निराचष्टे अत्र आहुरित्यादिना सत्तेति। न च बाधायोग्यस्वरूपभूतायाः तस्याः ब्रह्मस्वरूपत्वात् सत्तायास्तद्धर्मत्वोक्तिरयुक्ता इति वाच्यम् ? राहोः शिर इतिवत् भेदकल्पनया तद्धर्मव्यवहारोपपत्तेः इति भावः। ननु उपादानद्वयं व्यर्थमिति न इत्याह तत्रेति। यद्वा निरवयवस्य ब्रह्मण उपादानत्वमनुपपन्नमिति न इत्याह तत्रेति। मायाब्रह्मणो मध्ये इत्यर्थः। आक्षेपाभिप्रायमनूद्य निराचष्टे नचेति। मृदादिषु प्रसिद्धस्य उपा-

केचित्तु उक्तामेव प्रक्रियामभ्युपगम्य विवर्त्त-परिणामोपादानद्वयसाधारणमन्यल्लक्षणमाहुः। स्वाभिन्नकार्य्यजनकत्वम् उपादानत्वम्। अस्ति च प्रपञ्चस्य सद्रूपेण ब्रह्मणा विवर्त्तमानेन जडेन अज्ञानेन परिणामिना च अभेदः सन् घटः जडो घट इति सामानाधिकरण्यानु-

---

दानलक्षणस्य विवर्त्ताधिष्ठानेषु अपि सत्त्वात् तेषु उपादान-त्वाभ्युपगमस्य परिभाषामात्रत्वं नास्ति इत्यर्थः। स्वात्मनीति। अत्र स्वशब्द उपादानत्वाभिमतवस्तुपरः। तथाच कार्य्याधारत्वे सति कार्य्यजनितहेतुत्वमुपादानत्वं निमित्तकारणवारणाय सत्यन्तं भूतलादेरपि कार्य्याधारत्वात् तद्वारणाय विशेष्यम्। तत्रापि इति विवर्त्ताधिष्ठानेऽपि इत्यर्थः॥ ३६॥

उक्तामेवेति प्रपञ्चे उभयोः अपि मायाब्रह्मणोरुपादानत्वं तत्र च परिणामितया मायाया उपादानत्वम् अधिष्ठानतया च ब्रह्मण उपादानत्वम् उभयोः उपादानत्वे श्रुतिन्याययोः उपपत्तिश्चेति एतामित्यर्थः। स्वाभिन्नेति। स्वशब्देन घटा-द्युपादानमृदादिजगत्परिणाम्युपादानभूतम् अज्ञानं जग-द्विवर्त्तोपादानभूतं ब्रह्म च गृह्यते। तत्र घटादेः मृदादेः सकाशादभेदः स्फुटः मृदेव घट इति अनुभवात् अज्ञाने ब्रह्मणि च कार्य्याभेदमनुभवेन दर्शयति अस्ति चेति। ननु मृद्घट इतिवत् ब्रह्मघट इत्यनुभवो नास्ति तथा अज्ञानं घट इत्याद्यनुभवोऽपि नास्ति अतः प्रपञ्चस्य अज्ञानेन ब्रह्मणा च कथमभेदोऽस्ति इति शङ्कानिरासाय ब्रह्मणः सद्रूपत्वं विशेषणं दत्तम् अज्ञानस्य जडत्वं तथा च ब्रह्माज्ञानाभ्यां सह ब्रह्मत्वा-

भवात्। न च तदनन्यत्वमारम्भणशब्दादिभ्यः [व्या० सू० अ० २ पा० १ सू० १४] इति सूत्रे अनन्यत्वं व्यतिरेकेण अभावः न खलु अनन्यत्वमिति अभेदं ब्रूमः किन्तु भेदं व्यासेधाम इति भाष्यभामतीनिबन्धाभ्यां प्रपञ्चस्य ब्रह्माभेदनिषेधात् अभेदाभ्युपगमे अपसिद्धान्त इति वाच्यम्। तयोर्ब्रह्मरूपधर्मिसमानसत्ताकाऽभेदनिषेधे तात्पर्य्येणेदं रजतयोरिव प्रातीतिकाऽभेदाभ्युपगमेऽपि विरोधाभावादिति ॥३७॥

---

ज्ञानत्वाकारेण अभेदानुभवाभावेऽपि सत्त्वजड़त्वरूपेण ताभ्यां सह प्रपञ्चस्य अभेदानुभवोऽस्तीत्याह सन् इत्यादिना। ननु घटोत्पत्तेः पूर्वं तत्कारणद्रव्यस्य सत्त्वानुभवात् सत्त्वस्य कारणधर्मत्वे सिद्धे सति सद्घट इति प्रत्यक्षानुभवः कार्य्यकारणद्रव्ययोः अभेदावगाहीति युक्तं सत्त्वजड़त्वयोस्तु कारणधर्मत्वे किं मानं येन सन् घटः जड़ो घटः इत्यनुभवबलेन सद्रूपजड़रूपाभ्यां ब्रह्माज्ञानाभ्यां प्रपञ्चस्य अभेदः सिध्येदिति चेत्? उच्यते। ब्रह्मणः सद्रूपत्वं सदेव इत्यादिश्रुतिसिद्धं तदेतत् जड़ं मोहात्मकमिति स्मृत्या अज्ञानस्य जड़त्वं सिद्धं तथा च घटादौ मृद्द्रव्याभेदात् सत्त्वानुभववत् सद्रूपत्वादिरूपकारणद्रव्याभेदादेव प्रपञ्चे सत्त्वजड़त्वानुभवोपपत्तौ पृथक् सत्त्वादिधर्मो नोपेयते तथा च सन् घटो जड़ो घट इत्याद्यनुभवोऽपि कार्य्यकारणद्रव्याभेदावगाही इति भावः। न च जड़रूपाज्ञानस्य प्रपञ्चाभेदसिद्धौ अपि मायायाः किमायातम् इति वाच्यम्? तयोरभेदाभ्युपगमात् इति भावः। कार्य्यकारणयोरभेदाभ्युपगमे अपसिद्धान्तं शङ्कते

न च इति। तयोः कार्य्यकारणयोरनन्यत्वमुपगन्तव्यं कुत आरम्भणशब्दादिभ्यो वाचारम्भणश्रुतिः आरम्भणशब्दार्थः आत्मैवं इदं सर्वमित्यादिसर्वात्मप्रतिपादकश्रुतिः न इह नानास्ति किंच न इत्यादिनिषेधश्रुतिश्च आदिशब्दार्थः। वाचारम्भणश्रुतिः विवर्त्तलक्षणकथनावसरे व्याख्याता कार्य्यस्य कारणात् तत्त्वान्तरत्वे जगत्कारणस्य ब्रह्मणः सर्वात्मकत्वश्रुतिरनुपपन्ना स्यात्। तथा ब्रह्मोपादानकस्य जगतः सत्यत्वे ब्रह्मणि जगन्निषेधो न स्यादतः कारणीभूतब्रह्मानन्यत्वं प्रपञ्चस्य अभ्युपगन्तव्यमिति भावः। ननु सौत्रानन्यत्वपदेन कार्य्यकारणयोरैक्यं प्रतीयते तदनुपपन्नं कार्य्यकारणभावविरोधात् चिज्जड़योः ब्रह्मप्रपञ्चयोरैक्यायोगाच्च इति शङ्कां निराकर्त्तुं सौत्रानन्यत्वपदं व्याचष्टे भाष्यकारः। अनन्यत्वं व्यतिरेकेण अभाव इति। न च कारणव्यतिरेकेण कार्य्यस्य अभावे कथं कार्य्यकारणभाव इति वाच्यम्? कारणसत्त्वव्यतिरेकेण कार्य्यसत्त्वाभावस्य विवक्षिततया कार्य्यस्वरूपापलापाशङ्कानवकाशात् सौत्रानन्यत्वपदतात्पर्य्यप्रदर्शकं भामतीनिबन्धनवाक्यमुदाहरति न खल्विति। अनन्यत्वमिति पदेन कार्य्यकारणयोरभेदं न ब्रूमः चेतनाचेतनयोरभेदानुपपत्तिस्तन्निषेधहेतुः खलु शब्देन द्योत्यते। तर्हि कारणब्रह्मविज्ञानात् सर्वविज्ञानं श्रुतिसिद्धं न भवेत् अभेदानभ्युपगमात् इति शङ्कते किन्त्विति। परिहरति भेदमिति। कार्य्यकारणयोः सत्त्वभेदं व्यासेधाम इत्यर्थः। तथाच कारणब्रह्मस्वरूपभूतं सत्त्वमेव कार्य्यस्य वास्तवं स्वरूपमिति तस्मिन् विदिते तद्व्यतिरिक्तं सर्वं तत्त्वतो विदितं भवतीति न एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधः। न च ब्रह्मस्वरूपज्ञानेन सर्वप्रपञ्चस्य वास्तवस्वरूपे विदितेऽपि तत्तदसाधारणरूपज्ञानासम्भवात् प्रतिज्ञाविरोधस्तदवस्थ एव इति वाच्यम्? आत्मनि

विदिते सर्वं विदितं भवतीत्यादिप्रतिज्ञावाक्येषु सर्वपदस्य सर्वतत्त्वपरत्वेन तत्तदसाधारणरूपेण सर्वज्ञानस्य अविवक्षितत्वात्। न च तथा कल्पनायां किं विनिगमकमिति वाच्यं ? सर्वप्रपञ्चतत्त्वज्ञानमात्रेण अद्वितीयब्रह्मज्ञानस्य मुक्तिसाधनस्य लाभेन तत्तदसाधारणरूपज्ञाननैष्फल्यस्यैव विनिगमकत्वात् कारणे ब्रह्मणि विदितेऽपि सर्वप्रपञ्चगततत्तदसाधारणरूपज्ञानस्य असम्भवेन सर्वविज्ञानश्रुतेः तत्परत्वे प्रामाण्याभावप्रसङ्गाच्च भेददर्शनस्य अनर्थहेतुतया श्रुतिषु तत्र तत्र निन्दितत्वाच्च प्रतिज्ञाश्रुतेः न नानारूपज्ञानतात्पर्यं तदुक्तं पञ्चदश्याम्।

अद्वैतेऽभिमुखीकर्त्तुमेवात्रैकस्य बोधतः।
सर्वबोधः श्रुतो नैव नानात्वस्य विवक्षया॥

इति। अस्यार्थः अत्र वेदान्तेषु एकस्य ब्रह्मणो बोधेन सर्वस्य प्रपञ्चस्य बोधः अद्वैते ब्रह्मणि मुमुक्षुम् अभिमुखीकर्त्तुमेव मुमुक्षोः अद्वितीयब्रह्मबोधार्थम् एव श्रुत इत्यर्थः। अद्वितीयब्रह्मबोधश्च सर्वस्य ब्रह्मैव वास्तवं स्वरूपमिति ज्ञानमात्रात् सिध्यतीति भावः। ननु ब्रह्मणि विदिते सर्वं विदितं भवति इति श्रुतौ स्वरसतः प्रतीयमानं तत्र असाधारणरूपेण सर्वज्ञानमेव श्रुत्यर्थः। किं न स्यादिति न इत्याह नैवेति। नानात्वबोधविवक्षया सर्वबोधो नैव श्रुत इति योजनाप्रयोजनाभावात् बाधितत्वात् निन्दितत्वात् चेति। तयोरिति भाष्यभामतीनिबन्धनयोरित्यर्थः। न च प्रपञ्च ब्रह्मणोः वास्तवाभेदनिषेधे सति वास्तवभेदः स्यादिति वाच्यं ? भेदस्य वास्तवत्वं हि धर्मिप्रतियोगिनोः वास्तवत्वापेक्षं तत्र ब्रह्मणो वास्तवत्वेऽपि प्रपञ्चस्य आरम्भणशब्दादिभ्यो मिथ्यात्वावगमेन तयोर्भेदस्य सत्यत्वायोगादिति भावः। प्रातीतिकेति। यथा इदं रजतमिति भ्रान्तिसिद्धं रजतेदमर्थयोरभिन्नत्वं

संक्षेपशारीरककृतस्तु ब्रह्मैव उपादानं कूटस्थस्य स्वतः कारणत्वानुपपत्तेर्मायाद्वारा कारणम्। अकारणमपि कार्य्येऽनुगच्छति मृद इव तद्गत-श्लक्ष्णत्वादेरपि घटे अनुगमदर्शनादित्याहुः ॥२८॥

---

तथा सन् घट इत्यादिभ्रान्तिसिद्धाभेदोपगमे सिद्धान्तविरोधाभावादिति भावः। मायान्तु प्रकृतिं विद्यादिति श्रुत्या अवधारणार्थकतुशब्दवत्या मायाया एव उपादानत्वावगमेन ब्रह्मण उपादानत्वाभावात् उपादानत्वघटितब्रह्मलक्षणस्य असम्भवशङ्कायां सत्यां मायाब्रह्मणोरुभयोरपि प्रकृतित्वमखिलश्रुतियुक्त्योरविशेषात् मायान्त्विति श्रुतौ तु शब्दो न अवधारणार्थः किन्तु सद्रूपब्रह्मापेक्षया मायाया वैलक्षण्यद्योतनार्थः तच्च वैलक्षण्यं परिणामित्वरूपं प्रकृतित्वं मायाया इति आशयवतां पदार्थतत्त्वनिर्णयकारादीनां मतभेदेन लक्षणासम्भवशङ्का परिहृता ॥२७॥

इदानीं ब्रह्मैव उपादानं न माया अतो न लक्षणासम्भवशङ्कावकाश इति मन्यमानानां मतद्वयमाह संक्षेपशारीरककृतस्तु इत्यादिना। तर्हि व्यर्था मायेति न इत्याह कूटस्थस्येति। यदि मायां विनैव ब्रह्मोपादानं स्यात् तदा ब्रह्मणः स्वतः परिणामित्वमेव स्यात् तथा च परिणामवादिभिः परिणामपरिणामिनोः वास्तवाभेदाभ्युपगमात् परिणामस्य जन्मादिविकारैः ब्रह्मापि विकारवदेव स्यात् न च इष्टापत्तिरत्र वक्तुं शक्यते न जायत इत्यादिबहुश्रुतिषु ब्रह्मणो जन्मादिविकाररहित्यरूपकूटस्थत्वप्रतिपादनविरोधात् अतो मायाद्वारा ब्रह्मणः कारणत्वं वक्तव्यमिति न व्यर्था माया इत्यर्थः। यथा मृदस्तु न उपादानत्वेऽपि तद्गतश्लक्ष्णत्वादिसंस्कारोद्धारकारणं न हि असंकृतस्य

वाचस्पतिमिश्रास्तु जीवाश्रितामायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण

---

मृद्वस्तुनः घटाद्युपादानत्वं घटते तथा कूटस्थचैतन्यरूपे ब्रह्मणि समारोपिता माया तत्र जगत्प्रकृतित्वं घटयन्ती सहकारिकारणमुपेयत इति भावः। न च मायाया उपादानत्वाभावे मायां तु प्रकृतिं विद्यादिति श्रुतिविरोध इति वाच्यम्? ब्रह्मगतप्रकृतित्वनिर्वाहकतामात्रेण तस्यां प्रकृतित्वश्रुत्युपपत्तेः मायायां प्रकृतित्वनिर्वाहकत्वमात्रं न स्वतः प्रकृतित्वमस्तीत्याशयेन एव तस्यां शक्तित्वव्यवहारः श्रुतौ दृश्यते पराऽस्य शक्तिर्विविधैव श्रूयत इति। न हि मृदादिपदार्थगतशक्तेः किञ्चित्कार्य्यं प्रति उपादानत्वं प्रसिद्धं लोके अतएव विनिगमकाभावात् मायाब्रह्मणोरुभयोरपि उपादानत्वमिति निरस्तम्। मायायाः ब्रह्मशक्तित्वेन स्वत उपादानत्वासम्भवात् न च तस्याः प्रकृतित्वानुपगमे जगतः परिणामि उपादानं न स्यात् ब्रह्मणः परिणामितायाः कूटस्थत्वविरोधेन असकृत्प्रत्युक्तत्वादिति वाच्यम्? वाचस्पतिमत इव प्रपञ्चस्य चिदध्यस्तमायाविषयीकृतब्रह्मविवर्त्तत्वमात्राङ्गीकारोपपत्तेः। न च संक्षेपशारीरकग्रन्थे तत्र तत्र मायायाः परिणामित्वव्यवहारविरोध इति वाच्यम्? तथा व्यवहारस्य मतान्तराभिप्रायत्वोपपत्तेः। ननु जड़भूतमायाप्रकृतिकत्वाभावे प्रपञ्चस्य जाड्यं न स्यादिति न इत्याह अकारणमपि इति। अनुपादानमपि इत्यर्थः। जगति अनुगतं जाड्यं न कारणगुणः किन्तु जगत एव स्वाभाविकमतः तत्सिद्धये मायाया उपादानत्वम्॥२८

कार्य्यानुगतद्वारकारणत्वं वा न कल्पनीयमित्याशयेनाह वाचस्पतिमिश्रास्त्विति जीवाश्रितेति। ननु अक्षरब्राह्मणे

विवर्त्तमानतया उपादानमिति माया सहकारि-
मात्रं न कार्य्यानुगतं द्वारकारणमित्याहुः

---

आकाशशब्दिताया मायाया अक्षरशब्दितनित्यचैतन्याश्रितत्वस्य प्रतिपादितत्वात् कथं तस्याः जीवाश्रितत्वमुपेयते मायिनं तु महेश्वरमिति श्रुतिविरोधाच्च अत्र मायिनमित्यनेन महेश्वरशब्दितब्रह्माश्रितत्वप्रतिपादनात्। किं च जीवस्य मायाश्रयत्वे तस्यैव जगदुपादानत्वं स्यात् प्रपञ्चस्य मायापरिणामत्वात् प्रपञ्चपरिणामि मायाश्रयत्वं हि ब्रह्मणः प्रपञ्चोपादानत्वं जीवस्य मायाश्रयत्वे तु तस्यैव जगदुपादानत्वं स्यात् न ब्रह्मणः किं च जीवाश्रितमायाविषयीकृतं ब्रह्मेति मते ब्रह्मण उपाध्यनङ्गीकारेण नियन्तृत्वजगत्कर्त्तृत्वादेरभावप्रसङ्गश्च इति चेत्? उच्यते जीवाश्रितेति पदेन जीवत्वविशिष्टचैतन्याश्रितत्वं विवक्षितं न भवति किन्तु अक्षरब्राह्मणानुरोधेन चैतन्याश्रितत्वमेव जीवत्वं तु मायापदवेदनीयाविद्यायाः चैतन्ये वृत्तौ अवच्छेदकमिति जीवाश्रितमायेति उच्यते न च जीवत्वस्य अपि चैतन्ये वृत्तौ मायैव अवच्छेदिका वाच्येति परस्पराश्रयप्रसङ्ग इति वाच्यम्। द्रव्यत्वगुणाश्रयत्वयोरिव परस्परस्थितिप्रयोजकतया परस्परापेक्षत्वलक्षणपरस्पराश्रयत्वस्य अदोषत्वात् परस्पराश्रयो हि उत्पत्तौ ज्ञप्तौ वा दोषो भवेत् स च प्रकृते नास्ति अविद्याजीवत्वयोरनादित्वात् नित्यसाक्षिभास्यत्वाच्च न च जीवत्वस्य अविद्यास्थितिं प्रति तु नियामकत्वकल्पनं व्यर्थमिति वाच्यम्? ब्रह्मणि तस्याः स्थितिनिवारकत्वात् निरवद्यं निरञ्जनमिति श्रुत्या ब्रह्मणो निर्दोषत्वावगमेन तस्य अविद्यारूपदोषाश्रयत्वानुपपत्तेर्न च वस्तुतो निर्दोषत्वपरा सा श्रुतिरिति वाच्यम्? तथा सङ्कोचे मानाभावात् ईश्वररूप-

सिद्धान्तमुक्तावलीकृतस्तु मायाशक्तिरेव उपा-
दानं न ब्रह्म तदेतत् ब्रह्म अपूर्वमनपरमवाह्यं न

---

ब्रह्मवज्जीवस्य अपि वस्तुतो निर्दोषत्वाच्च न च मायिनं तु महे-
श्वरमिति श्रुतिविरोधः गृही धनी देवदत्त इत्यादौ देवदत्तस्य
गृहाद्याश्रयत्वाभावेऽपि प्रत्ययस्य स्वस्वाभिभावलक्षणसम्बन्धा-
न्तरबोधकत्ववत् महेश्वरशब्दितब्रह्मणो मायाश्रयत्वाभावेऽपि
मायाब्रह्मणोर्विषयविषयीभावलक्षणसम्बन्धान्तरबोधकतया मा-
यिनमिति श्रुत्युपपत्तेः प्रपञ्चस्य जीवाश्रितमायाविषयीकृत-
ब्रह्मविवर्त्तत्वमात्राभ्युपगमात् न जीवस्य जगदुपादानत्वप्रसङ्गः
ब्रह्मण उपाध्यभावेऽपि सर्वनियन्तृत्वादिजीवाविद्याविषयी-
कृतब्रह्मविवर्त्ततया ब्रह्मधर्मत्वेन एव कल्पते न जीवाविद्या
परिणामतया जीवधर्मत्वेन अनुभवविरोधात् ब्रह्मणि च सर्व-
नियन्तृत्वसर्वकर्त्तृत्वसर्वज्ञत्वादिप्रतिपादकशास्त्रस्य कल्पकस्य
सत्त्वाच्च तस्मात् सिद्धं जीवाश्रितमायाविषयीकृतं ब्रह्म प्रपञ्चा-
कारेण विवर्त्तमानतया उपादानमिति उक्तं च आरम्भणाधिक-
रणभाष्ये मूलकारणमेव अन्त्यात् कार्य्यात् तेन तेन कार्य्याकारेण
नटवत् सर्वव्यवहारास्पदत्वं प्रतिपद्यत इति अन्त्यात् कार्य्यादिति
अन्त्यकार्य्यपर्य्यन्तमित्यर्थः। नटो हि द्रष्टृभिरविज्ञातनिजरूप
एव तत्तदभिनयासत्यरूपतां प्रतिपद्यते एवं जीवैरविज्ञाततत्त्वं
सद्ब्रह्मासत्यवियदादिप्रपञ्चाकारतां तद्द्वारा व्यवहारविषयतां
च प्रतिपद्यते इति भाष्यार्थः। अत्र नटदृष्टान्तोक्त्या वाचस्पति-
मतं भाष्याभिमतं निश्चीयते तदुक्तं कल्पतरौ।

अज्ञातनटवत् ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवाज्ञानं जगद्बीजं जगौ वाचस्पतिस्तथेति ॥

तस्य कार्य्यं करणं च विद्यते इत्यादिश्रुतेः। जग-दुपादानमायाधिष्ठानत्वेन तु उपचारादुपादानं तादृशमेव उपादानत्वं लक्षणे विवक्षितमित्याहुः॥३८

[ अथ जीवेश्वरस्वरूपनिरूपणम् ]

अथ क ईश्वरः को वा जीवः? अत्र उक्तं प्रकटार्थविवरणे अनादिरनिर्वाच्या भूतप्रकृतिः चिन्मात्रसम्बन्धिनी माया तस्यां चित्प्रतिबिम्ब ईश्वरः। तस्या एव परिच्छिन्नाऽनन्तप्रदेशेषु आवरणविक्षेपशक्तिमदविद्याभिधानेषु चित्प्रति-बिम्बो जीव इति॥३९॥

---

इदानीं मायाया एव मायां तु प्रकृतिं विद्यादिति श्रुतिस्वारस्यानुरोधेन मुख्यमुपादानत्वमिति स्वीकृत्यापि ब्रह्मलक्षणासम्भवं परिहरति सिद्धान्तमुक्तावलीकृतस्त्विति। तत्प्रकृतम् एतत् बुध्यादिसाक्षिरूपं पूर्वं कारणं न विद्यते यस्य तदपूर्वम् अपरं कार्य्यं न विद्यते यस्य तदनपरं तस्य ब्रह्मणः करणं च जगत्सृष्टिसाधनं च इत्यर्थः। इत्यादिश्रुतेर्न ब्रह्मोपादानमित्यर्थः। तर्हि ब्रह्मणो जगदुपादानत्वप्रतिपा-दकश्रुतिसूत्रभाष्यादिविरोध इत्यत आह जगदिति। तुशब्दो-ऽवधारणे तादृशमेव इति जगदुपादानमायाधिष्ठानत्वमेव इत्यर्थः॥३८॥

पूर्वत्र ईश्वरस्य जगदुपादानत्वमुक्तं जीवाश्रित-मायेत्यादौ जीवोऽपि व्यवहारतः इदानीं तयोः स्वरूपं निरूपयितुं प्रश्नमवतारयति अथेति। मायां तु प्रकृतिमिति

श्रुतौ या भूतप्रकृतित्वेन माया प्रसिद्धा तस्यां चैतन्यप्रति-
बिम्ब ईश्वरः। ननु मायिनं तु महेश्वरमिति वाक्यशेषे
मायाया ईश्वराश्रितत्वप्रतिपादनात् ईश्वरस्य मायाप्रतिबिम्बत्वं
न सम्भवति उपाधेः प्रतिबिम्बाश्रितत्वादर्शनादिति शङ्कां
निराचष्टे चिन्मात्रसम्बन्धिनीति। चिन्मात्राश्रितेत्यर्थः। मात्रपदेन
बिम्बत्वादेर्व्यवच्छेदः। वाक्यशेषेऽपि महेश्वरपदं चिन्मात्र-
लक्षकम् इति भावः। सांख्याभिमतप्रकृतेरिव मायायाः
सत्यत्वं वारयति अनिर्वाच्येति। माया तावद् ब्रह्मचैतन्यात् न
वस्तुतो भिन्ना ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वप्रतिपादक-
श्रुतिविरोधेन वस्तुतः तस्यास्ततो भेदासम्भवात् नापि अभिन्ना
चैतन्यजड़योरैक्यायोगात् नापि चैतन्याद्भिन्नाभिन्ना एकत्र
भिन्नत्वाभिन्नत्वयोर्विरोधेन असम्भवात् एवं न तावत् माया सती
अद्वैतश्रुतिविरोधादेव नापि असती भूतप्रकृतित्वानुपपत्तेः
नापि सदसती सत्त्वासत्त्वयोरेकत्र विरोधात् एवं न तावत् माया
सावयवा तस्याः सादित्वप्रसङ्गेन तत्प्रतिबिम्बभूतेश्वरस्य अपि
सादित्वप्रसङ्गात् मायायाः सादित्वे तत्प्रकृतित्वेन मायान्तरापे-
क्षायामनवस्थाप्रसङ्गाच्च नापि निरवयवाप्रकृतित्वाभावप्रसङ्गात्
सावयवपदार्थानामेव लोके प्रकृतित्वदर्शनात् नापि उभयरूपा
सावयवत्वनिरवयवत्वयोरेकत्र विरोधात् तस्मात् सर्वप्रकारेण
निर्वक्तुमशक्यतया माया अनिर्वाच्या इत्यर्थः। तस्याः परिच्छिन्ना-
नन्तप्रदेशेषु चैतन्यप्रतिबिम्बो जीवः न साक्षात् तस्यामेव चित्प्रति-
बिम्बो जीव इति एवकारार्थः। प्रदेशानां परिच्छिन्नत्वविशेषणं
तत्प्रतिबिम्बरूपजीवानां परिच्छिन्नत्वलाभार्थम्। तथा च भाष्ये
तत्र तत्र जीवानां परिच्छिन्नत्वनिरूपणं सङ्गच्छते तथा हि
सर्वत्र प्रसिद्धोपदेशात् [ व्या० सू० अ० १ पा० २ सू० १ ] इति अधिकरणे
शारीरपदव्याख्यानरूपं भाष्यशरीर इति शरीरे भव इत्यर्थः।

तत्त्वविवेके तु त्रिगुणात्मिकाया मूलप्रकृतेर्जीवेशावभासेन करोति माया च अविद्या च स्वयमेव भवति इतिश्रुतिसिद्धौ द्वौ रूपभेदौ

---

ननु ईश्वरोऽपि शरीरे भवति सत्यं शरीरे भवति न तु शरीर एव भवति आकाशवत् सर्वगतश्च नित्य इति व्यापित्वश्रवणात् जीवस्तु शरीर एव भवति तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावादिति। तथा द्युभ्वाद्यधिकरणगतं [प्रथमाध्यायस्य तृतीयपादस्य प्रथमसूत्रम्] भाष्यं न च उपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्वं सम्यक् सम्भवतीति प्राणभृतो जीवस्य द्युभ्वादिशब्दितजगदायतनत्वं मुख्यं न सम्भवति अविभुत्वादिति भाष्यार्थः पटस्य आरम्भकतन्तव इव मायाया न प्रदेशाः सन्ति तस्या अनादित्वात् किन्तु मायायां विक्षेपावरणशक्तीनाम् आनन्त्याद्विक्षेपावरणशक्तिमद्भागा एव प्रदेशा विवक्षिता इत्याशयेन आह आवरणविक्षेपशक्तिमदिति ब्रह्मचैतन्यावरणानुकूला शक्तिः आवरणशक्तिः आवरणं च ब्रह्म नास्ति न प्रकाशते इति व्यवहारयोग्यत्वं विक्षेपपदेन तत्तज्जीवसाधारणदुःखादिकं विवक्षितं तदनुकूलशक्तिर्विक्षेपशक्तिरित्यर्थः। ननु मायाप्रदेशानां जीवोपाधित्ववर्णनमनुपपन्नम् आनुमानिकाधिकरणभाष्यादौ [प्रथमाध्यायस्य चतुर्थपादस्य प्रथमसूत्रम्] अविद्याजीवोपाधित्वव्यवहारविरोधप्रसङ्गात् अत आह अविद्याभिधानेषु इति। मायाप्रदेशानामेव भाष्यगताविद्यापदाभिलप्यत्वात् न तद्विरोध इति भावः॥३९॥

एकस्यामेव मूलप्रकृतौ प्रदेशप्रदेशिभावेन अनिर्वचनीयं भेदं कल्पयित्वा जीवेश्वरयोः प्रतिबिम्बरूपत्वमुक्तमिदानीं तस्यामेव प्रकारान्तरेण रूपभेदं कल्पयित्वा तदुपपादयति।

रजस्तमोऽनभिभूतशुद्धसत्त्वप्रधाना माया तदभिभूतमलिनसत्त्वा अविद्येति मायाविद्याभेदं परिकल्प्य मायाप्रतिबिम्ब ईश्वरोऽविद्याप्रतिबिम्बो जीव इति उक्तम्। एकैव मूलप्रकृतिर्विक्षेपप्राधान्येन मायाशब्दिता ईश्वरोपाधिः आवरणप्राधान्येन अविद्याऽज्ञानशब्दिता जीवोपाधिः। अत एव तस्या जीवेश्वरसाधारणचिन्मात्रसम्बन्धित्वेऽपि जीवस्यैव अज्ञोऽस्मि इति अज्ञानसम्बन्धानुभवो न ईश्वरस्य इति जीवेश्वरविभागः क्वचिदुपपादितः॥४०॥

---

तत्त्वविवेके तु इति। भेदकल्पनावलक्षण्यद्योतनार्थः तु शब्दः। रूपभेदौ इति स्त इति शेषः। रजस्तमोऽनभिभूतत्वमेव सत्त्वस्य शुद्धत्वं शुद्धसत्त्वप्रधाना प्रकृतिर्माया मलिनसत्त्वप्रधाना प्रकृतिरविद्या इत्यर्थः। रजस्तमोऽभिभूतत्वमेव सत्त्वस्य मलिनत्वं सत्त्वशुद्ध्यशुद्धिभ्यां मायात्वाविद्यात्वाख्यौ श्रुत्युक्तरूपभेदौ निरूप्य विक्षेपावरणशक्तिभेदेन श्रुत्युक्तरूपभेदावेव निरूपयति एकैवेति। अतएवेति जीवस्यावरणशक्तिमदुपाधिमत्त्वादेव इत्यर्थः। तस्या इति जीवेश्वरोपाधिभूतायाः प्रकृतेः प्रतिबिम्बरूपजीवेश्वरसाधारणबिम्बचैतन्याश्रितत्वेऽपि इत्यर्थः। न ईश्वरस्य इति। अत्रापि अतएवेति अस्यानुषङ्गः आवरणशक्तेरीश्वरोपाधिकोटौ अननुप्रवेशादेव इति तदर्थः। तथा च जीवेश्वरौ प्रति प्रकृतेः साधारणत्वादेकस्य सर्वज्ञत्व-

संक्षेपशारीरके तु कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुतिमनुसृत्य अविद्यायां चित्प्रतिबिम्ब ईश्वरः अन्तःकरणे चित्प्रतिबिम्बो जीवः। न च अन्तःकरणरूपेण द्रव्येण घटेन आकाशस्येव चैतन्यस्य अवच्छेदसम्भवात्तदवच्छिन्नमेव चैतन्यं जीवोऽस्त्विति वाच्यम्। इह परत्र च जीवभावेन अवच्छेद्यचैतन्यप्रदेशस्य भेदेन कृतहानाऽकृताभ्यागमप्रसङ्गात्। प्रतिबिम्बस्तु उपाधेर्गतागतयोरवच्छेदकगतागतयोरवच्छेद्यवत् न भिद्यते इति प्रतिबिम्बपक्षे न अयं दोष इत्युक्तम् ॥४१॥

---

मपरस्य अज्ञत्वमिति यद्वैलक्षण्यं श्रुत्यनुभवसिद्धं तत्कथं सम्भवतीति शङ्काया अनवकाश इति भावः ॥४०॥

मतान्तरमाह संक्षेपेति। श्रुतौ कारणपदमविद्यापरं कार्य्यपदमन्तःकरणपरमिति मत्वा आह, अविद्यायाम् इत्यादिना। ननु जीवेशावभासेन करोति माया च अविद्या च स्वयमेव भवतीति श्रुतिविरोधः तस्यां श्रुतौ जीवस्य कारणोपाधिकत्वप्रतीतेरिति चेत्? उच्यते जीवेशावभासेन करोतीति पूर्वभागेन हि जीवेश्वरयोरुभयोरपि प्रतिबिम्बभावः प्रतीयते न च बिम्बैक्यस्थले उपाधिभेदं विना प्रतिबिम्बभेदः सम्भवति सूर्य्यादिप्रतिबिम्बस्थले उपाधिभेदं विना प्रतिबिम्बभेदादर्शनात् तथा च उदाहृतश्रुतौ प्रतिबिम्बरूपयोः जीवेशयोः यथाक्रमं मायाविद्यापदाभ्यामुपाधी समर्प्येते

मायापदं च अत्र मायाकार्य्यन्तःकरणपरं न च एवं मूलप्रकृतिं प्रकृत्यप्रवृत्तायां जीवेशौ इति श्रुतौ माया च अविद्या च स्वयमेव भवतीति वाक्येन मायाविद्ययोरुभयोरपि मूलप्रकृत्यभेदोपपादनविरोध इति वाच्यम्? मूलप्रकृत्यविद्ययोरिव मायाशब्दितान्तःकरणमूलप्रकृत्योः मुख्याभेदाभावेऽपि प्रकृतिविकारभावप्रयुक्ताभेदसत्त्वेन तावता माया च अविद्या च स्वयमेव भवतीति वाक्यशेषोपपत्तेरिति भावः। ननु अविद्यावच्छिन्नचैतन्यमेव ईश्वरोऽस्तु तथान्तःकरणावच्छिन्नचैतन्यमेव जीवोऽस्तु अविद्यान्तःकरणाधिष्ठानचैतन्ययोस्तदवच्छिन्नत्वस्य क्लृप्तत्वात्तदतिरिक्तप्रतिविम्बकल्पनायां गौरवात् च इत्याशयेन शङ्कते न चेति। ननु प्रतिविम्बचैतन्यमिति एवकारार्थः जीवग्रहणमीश्वरस्य अपि उपलक्षणं जीवेश्वरयोः प्रतिविम्बतायाः श्रुतिसिद्धत्वात् न कल्पनागौरवदोषोऽस्ति इत्यभिप्रेत्य जीवस्य अवच्छिन्नत्वपक्षे दोषमाह, इहेति। अस्मिन् लोके ब्राह्मणादिशरीरगतान्तःकरणावच्छिन्नचैतन्यप्रदेशस्य कर्मकर्तृत्वात् लोकान्तरे देवादिशरीरगतान्तःकरणावच्छिन्नचैतन्यप्रदेशस्य च अकर्तुर्भोक्तृत्वात् कृतहानादिप्रसङ्गः। येन कर्म कृतं न तस्य भोगः। येन कर्म न कृतं तस्याकृतकर्मफलाभ्यागम इत्यर्थः। न च ब्राह्मणादिशरीरगतस्य एव अन्तःकरणस्य लोकान्तरे गमनाभ्युपगमात् तदवच्छिन्नचैतन्यप्रदेशस्य एव तत्रापि गमनमस्त्विति वाच्यम्? घटस्य देशान्तरगमनेऽपि तदवच्छिन्नाकाशप्रदेशस्य गमनादर्शनादिति भावः। प्रतिविम्बस्यावच्छेद्यचैतन्यापेक्षया वैलक्षण्यद्योतनार्थः तु शब्दः। गतागतयोरिति गमनागमनयोः सतोरपि अवच्छेद्यप्रदेशवन्न भिद्यते इत्यर्थः। सूर्य्यादिप्रतिविम्बवति जलपूर्णघटादौ देशान्तरनीयमानेऽपि प्रतिविम्बभेदादर्शनादिति भावः॥४१॥

एवमुक्तेषु एतेषु जीवेश्वरयोः प्रतिबिम्बविशेषत्वपक्षेषु यद्विम्बस्थानीयं ब्रह्म तन्मुक्तप्राप्यं शुद्धचैतन्यम्। चित्रदीपे जीव ईशो विशुद्धा चिदिति त्रैविध्यप्रक्रियां विहाय यथा घटावच्छिन्नाऽऽकाशो घटाकाशः तदाश्रिते जले प्रतिबिम्बितः साभ्रनक्षत्रो जलाकाशः अनवच्छिन्ना

---

ननु चन्द्रादिप्रतिबिम्बवतां जलपात्राणां मध्ये एकस्य नाशे तद्गततया प्रतीतस्य प्रतिबिम्बस्य बिम्बेन एकीभावः प्रत्यक्षेणानुभूयते न तथा प्रतिबिम्बान्तरेण एवं प्रतिबिम्बरूपजीवस्य अपि विदेहकैवल्यसमये बिम्बभूतशुद्धब्रह्मभाव एव स्यात् न तु प्रतिबिम्बेश्वरभावापत्तिरिष्टविरोधादित्याशङ्कामिष्टापत्त्या परिहरति एवमुक्तेषु इति।

बिम्बस्थानीयमिति लोके प्रसिद्धचन्द्रादिरूपबिम्बस्थानीयमित्यर्थः। ननु बिम्बत्वविशिष्टं चैतन्यं कथं शुद्धमिति चेत्? न शुद्धपदेन सर्वज्ञत्वकर्तृत्वादिधर्मराहित्यस्य विवक्षितत्वादिति चित्रदीपे चित्त्रैविध्यप्रक्रियां विहाय चैतन्यस्य चातुर्विध्यं परिकल्प्य जीवेश्वरविभागो दर्शित इति सम्बन्धः। तथा च चित्रदीपवचनं कूटस्थो ब्रह्मजीवेशौ इत्येवं चिच्चतुर्विधघटाकाशमहाकाशौ जलाकाशाभ्रखे यथेति एतत् श्लोकोपात्तदृष्टान्तभागं संगृह्णाति यथेत्यादिना। तदाश्रित इति घटान्तःस्थाकाशाश्रित इत्यर्थः। अभ्रनक्षत्रसाहित्यविशेषणम् आकाशस्य जले प्रतिबिम्बाभावशङ्कानिरासनार्थम् इत्थं च तन्निरासप्रकारो विवक्षितः यदा जले अभ्रनक्षत्राणां प्रतिबिम्बोऽनु-

महाकाशः महाकाशमध्यवर्त्तिनि मेघमण्डले वृष्टिलक्षणकार्य्यानुमेयेषु जलरूपतदवयवेषु तुषाराकारेषु प्रतिबिम्बितो मेघाकाश इति वस्तुत एकस्य आकाशस्य चातुर्विध्यं तथा स्थूलसूक्ष्मदेहद्वयस्य अधिष्ठानतया वर्त्तमानं तदवच्छिन्नं चैतन्यं कूटवन्निर्विकारत्वेन स्थितं कूटस्थं तत्र

---

भूयते तदा तैः सह आकाशप्रतिबिम्बोऽपि अनुभूयत एव इति न आकाशप्रतिबिम्बाभावशङ्कावकाश इति अनवच्छिन्न इति घटानवच्छिन्न इत्यर्थः। मेघमण्डले ये जलरूपाः तदवयवास्तेषु प्रतिबिम्बित इति सम्बन्धः तच्छब्दो मेघमण्डलपरः मेघमण्डले जलानि सन्ति चेत् कुतो नोपलभ्यन्ते इत्याशङ्का न कार्य्या तेषां तुषारवत् सूक्ष्मरूपत्वादित्याशयेन आह तुषारेति। तत्र जलसत्त्वे मानमाह वृष्टिलक्षणेति श्लोकोपात्तदार्ष्टान्तिकभागं गृह्णाति तथेति। सूक्ष्मेति घ्राणरसनचक्षुःश्रोत्रत्वगाख्यानि पञ्च ज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि प्राणापानादयः पञ्चवायवः मनो बुद्धिश्चेति अन्तःकरणं द्विविधमाहृत्य सप्तदशकं लिङ्गशरीरं दार्ष्टान्तिके घटस्थानीयं सूक्ष्मदेहशब्दार्थः देहद्वयावच्छिन्नं चैतन्यं घटाकाशस्थानीयं कूटस्थशब्दार्थः चैतन्यस्य देहद्वयावच्छिन्नत्वे हेतुरधिष्ठानतया वर्त्तमानत्वं काष्ठविशेषलग्नायःपिण्डविशेषः कूटशब्दार्थः तद्वत् अचलतया तिष्ठतीति कूटस्थः तत्र कूटस्थे कल्पितं घटगतजलस्थानीयं यदन्तःकरणं तस्मिन् प्रतिबिम्बितमित्यर्थः। कूटस्थचैतन्यातिरिक्ता-

कल्पिते अन्तःकरणे प्रतिविम्बितं चैतन्यं संसार-योगी जीवः अनवच्छिन्नं चैतन्यं ब्रह्म तदाश्रिते मायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिविम्बितं चैतन्यमीश्वर इति चैतन्यस्य चातु-र्विध्यं परिकल्प्यान्तःकरणधीवासनोपरक्ताऽज्ञा-नोपाधिभेदेन जीवेश्वरविभागो दर्शितः। अयं च अपरस्तदभिहितो विशेषः चतुर्विधेषु एषु चैत-

---

चिदाभासकल्पनायाः प्रयोजनमाह संसारेति। कूटस्थचैतन्यस्य न संसाराश्रयत्वं तस्य जन्ममरणादिलक्षणसंसाराश्रयत्वे कूटस्थत्वव्याघातादिति भावः। महाकाशस्थानीयब्रह्माश्रिते मेघमण्डलस्थानीये मायाख्यतमसि स्थिताः याः धीवासनाः तासु प्रतिविम्बितमित्यर्थः। जाग्रत्स्वप्नावस्थाद्वयगतानि स्थूलान्तःकरणानि धियां तासां सुषुप्त्यवस्थागताः सूक्ष्मावस्थाः वासना विवक्षिताः। अन्तःकरणेति। अन्तःकरणं च धीवासनो-परक्ताज्ञानं च ते एवोपाधी तयोर्भेदेन इत्यर्थः। धीवासनाना-मानन्त्यात् तासु प्रतिविम्बचैतन्यरूपेश्वरस्य नानात्वशङ्का-व्यावृत्त्यर्थं वासनोपरक्ताज्ञानोपाधिकत्वमुक्तं पूर्वमतेषु विम्बप्रति-विम्बयोर्भेदमात्रं कल्पितं स्वतस्तयोरभेद एव इति इममर्थं सिद्धं कृत्वा अस्मिन् मते ततो विशेषमाह अयं चेति। अस्मिन् मते पूर्वं चिच्चातुर्विध्यलक्षण एको विशेषः उक्तः तदपेक्षया अपरः अन्यः प्रतिविम्बमिथ्यात्वरूपो विशेषस्तदभिहितः तत्र चित्रदीपे अभिहित इत्यर्थः। अपरं विशेषमेव दर्शयति चतुर्विधेष्विति। अहमिति प्रकाशमानो जीवः शुक्तौ

न्येषु जीवोऽहमिति प्रकाशमानः कूटस्थे अविद्या-तिरोहिताऽसङ्गानन्दरूपविशेषांशे शुक्तौ रूप्यवत् अध्यस्तः। अत एवेदन्त्वरजतत्वयोरिव अधिष्ठा-नसामान्यांशाध्यस्तविशेषांशरूपयोः स्वयन्त्वाऽ-हन्त्वयोः सह प्रकाशः स्वयमहं करोमि इत्यादौ। अहन्त्वं तु अध्यस्तविशेषांशरूपं पुरुषान्तरस्य पुरु-षान्तरे अहमिति व्यवहाराभावेन व्यावृत्तत्वात्। स्वयन्त्वं च अन्यत्वप्रतियोग्यधिष्ठानसामान्यांशरूपं

---

रूप्यवदध्यस्त इति सम्बन्धः। ननु इदन्त्वेन सामान्य-रूपेण ज्ञाते शुक्तित्वादिविशेषरूपेण अज्ञाते शुक्त्यादौ रूप्या-द्यध्यासो दृष्टः इह तु तथा सामान्यरूपेण ज्ञातं विशेषरूपेण च अज्ञातं किञ्चिदधिष्ठानं न उपलभ्यते इत्याशङ्काह, कूटस्थे इति। ननु अविद्यया कूटस्थस्य असङ्गत्वानन्दत्वपूर्णत्वादि-विशेषांशस्य आवृततया शुक्तित्वादिवदप्रतीतावपि शुक्तेरिद-न्त्वनेव कूटस्थस्य केनचित् सामान्येन रूपेण प्रकाशो न दृश्यते किञ्च इदं रजतमित्यत्र अधिष्ठानसामान्यांशस्य आरोप्यविशे-षांशस्य च सह प्रकाशो दृश्यते प्रकृते तु अहमर्थरूपो विशेष एव अहमिति प्रकाशते न तु सामान्यांशः कश्चिदतो अह-मर्थस्य रूप्यवदध्यस्तत्वकल्पनं न युक्तमित्याशङ्काह, अत-एवेति। अहमर्थस्य कूटस्थेऽध्यस्तत्वकल्पनादेव इत्यर्थः। स्वय-न्त्वाहन्त्वयोरिति कूटस्थस्य हि स्वयन्त्वं सामान्यरूपं न कूट-स्थत्वं तस्य शास्त्रैकगम्यत्वात् स्वयन्त्वं च कूटस्थस्य अहङ्कारा-रोपकाले तेन सह प्रकाशते तत्पूर्वकालेऽपि स्वयन्त्वस्य

स्वयं देवोदत्तो गच्छतीति पुरुषान्तरेऽपि व्यवहारेण अनुवृत्तत्वात्। एवं परस्पराध्यासादेव कूटस्थजीवयोरविवेको लौकिकानाम्।

---

भानमविरुद्धं तस्य नित्यचैतन्यात्मककूटस्थस्वरूपत्वाभ्युपगमात् स्वयं त्वकूटस्थचैतन्ययो राहोः शिरः पुरुषस्य चैतन्यमितिवत् भेदकल्पनया धर्म्मधर्म्मिभावोपपत्तेश्च अतः कूटस्थस्य स्वयन्त्वेन सामान्यरूपेण सदा प्रकाशसत्त्वात् अहमर्थरूपचिदाभासाध्यासाधिष्ठानत्वमविरुद्धमिति भावः। अहमर्थस्य रूप्यवद्विशेषरूपत्वं दर्शयति अहन्त्वं होति। अहमर्थं इत्यर्थः। अध्यस्तविशेषांशरूपमिति शुक्त्यादौ अध्यस्तो यो विशेषांशो रूप्यादिस्तद्रूपं तत् सदृशमित्यर्थः। सादृश्यं च व्यावृत्तत्वं व्यावृत्तत्वात् इति व्यावृत्तत्वावगमादित्यर्थः। तेन हेतुसाध्ययोरभेदः व्यावृत्तत्वावगमे हेतुर्व्यवहाराभावः स्वयन्त्वस्य इदन्त्ववत् सामान्यरूपत्वं दर्शयति स्वयन्त्वं चेति। स्वयमन्य इति लोकव्यवहारे स्वयन्त्वमन्यत्वं प्रतिद्वन्द्वितया प्रसिद्धमिति दर्शयितुम् अन्यत्वप्रतियोगीति स्वयन्त्वस्य विशेषणमिति बोध्यम्। ननु स्वयमहमिति प्रकाशमानयोः कूटस्थजीवयोः शुक्तिरजतयोरिव भेदसत्त्वे सर्वेषां कुतो भेदो नोपलभ्यते तत्र आह एवमिति। अहमर्थजीवस्य शुक्तौ रूप्यवत् कूटस्थाध्यस्तत्वे सतीत्यर्थः। परस्परेति तयोरभेदाध्यासादेव अविवेकः विवेकाभावो भेदानुभवाभावः इत्यर्थः। ननु इदं रजतमिति भ्रमस्थले शुक्तिरियमिति विशेषदर्शनेन इदं रजतमिति प्रतीतयोः सामान्यविशेषपदार्थयोः शुक्तित्वरजतत्वरूपविरुद्धधर्मवत्त्वनिश्चयात् तयोर्भेद उपेयते इह तु जीवकूटस्थयोः कथं भेदोऽवगन्तव्यः तदभावे

विवेकस्तु तयोर्बृहदारण्यके प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येव अनुविनश्यतीति जीवाभिप्रायेण मायोपाधिविनाशानुविनाशप्रतिपादनेनाऽविनाशी वा अरेऽयमात्मेति कूटस्थाभि-

---

हि स्वयमहमिति सामान्यविशेषभावेन प्रकाशमानयोः तयोः सत्यरजतस्थले रजतेदमर्थयोरिव वस्तुत ऐक्यापत्त्या अहमर्थरूपजीवस्य स्वयं शब्दार्थभूतकूटस्थे कल्पितत्वासिद्धेरित्याशङ्क्य श्रुत्या तयोर्भेदं दर्शयति विवेकस्त्विति। तु शब्दः शङ्काव्यावृत्यर्थः विवेको भेदानुभवः एतेभ्यः सन्निहितेभ्यः देहादिसङ्घातरूपेण परिणतेभ्यः उपाधिरूपेभ्यो भूतेभ्यः समुत्थाय साम्येन उत्थाय उपाधिरूपबुध्याद्युत्पत्त्या उत्पत्तिं प्राप्येत्यर्थः। तानि उपाधिभूतानि बुध्यादीनि तत्त्वज्ञानेन विनश्यन्ति तदा तानि अनुविनश्यतीति श्रुत्या औपाधिकस्य आत्मनो विनाशित्वं प्रतिपाद्यते तच्च अन्तःकरणप्रतिविम्बरूपस्य उपाध्यायत्तस्य जीवस्य मिथ्यात्वे सति सम्भवति औपाधिकजीवस्य सत्यत्वे तु तस्य विनाशित्वप्रतिपादकवचनं न सङ्गच्छते तथा अयं प्रज्ञानघन आत्मा अरे मैत्रेयि! अविनाशी वा अविनाश्येव न तु उपाधिनाशात् नश्यतीति कूटस्थचैतन्यस्य श्रुत्या नाशाभावः प्रतिपाद्यते एतदुक्तं भवति अयमात्मा प्रज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थायेत्यादिश्रुत्या चिदेकरस आत्मैव उपाध्युत्पत्तिमनूत्पद्यते तन्नाशमनुनश्यतीति उपाध्युत्पत्तिविनाशव्यतिरेकेण उत्पत्तिविनाशौ चिदात्मनः प्रतिपाद्येते अनुविनश्यतीति अनुशब्दप्रयोगात् न च तस्य स्वतो विनाशादिमत्त्वं सम्भवति अविनाशी वा अरेऽयमात्मेतिवाक्येन विज्ञानघनात्मनो

प्रायेणाऽविनाशप्रतिपादनेन च स्पष्टः अहमर्थस्य जीवस्य विनाशित्वे कथमविनाशिब्रह्माऽभेदः।

---

विनाशाभावप्रतिपादनविरोधात् अतः चिदात्मन उत्पत्तिविनाशवता प्रतिबिम्बचैतन्यरूपजीवेन तादात्म्यमादाय विनाशादिवचनमुपपादनीयं ततश्च भ्रमस्थलीय रजतेदमर्थयोरिव अत्रापि विनाशित्वाविनाशित्वरूपविरुद्धधर्म्मवत्त्वनिश्चयादेव जीवकूटस्थयोर्भेदः स्पष्टं भासते इति ततः प्राक् कूटस्थचैतन्ये जीवरूपाहमर्थस्याध्याससिद्धिरिति उदाहृतश्रुत्या प्रतिबिम्बजीवस्य विनाशित्वोपगमे श्रुत्यन्तरविरोधमाशङ्कते अहमर्थेति। अभेद इत्यनन्तरमहं ब्रह्मास्मीति वाक्येन प्रतिपाद्यत इति शेषः। विनाश्यविनाशिनोरभेदायोगादिति भावः। परिहरति नेदमिति। सोऽयमित्यादिसमानाधिकरणवाक्यस्य यथा अभेदो वाक्यार्थो दृश्यते तथा अयं स्थाणुः पुरुष इत्यादिसमानाधिकरणवाक्यस्य बाधारूपो वाक्यार्थो दृश्यते यः स्थाणुः स पुरुष इत्यत्र हि पुरुषे आरोपितस्य प्रातिभासिकस्य स्थाणोः व्यावहारिकपुरुषेण सह अभेदो न वाक्यार्थः बाधितत्वात् किन्तु स्थाणुत्वारोपाधिष्ठानभूते पुरुषे वस्तुतः स्थाणुतादात्म्याभावरूपाबाधावाक्यार्थः। तथाच यः स्थाणुः स पुरुष इति वाक्येन वस्तुतः स्थाणुतादात्म्याभाववानयं पुरुष इति बोधो जायते तेन च बोधेन पुरुषे स्थाणुत्वारोपः सविषयो निवर्त्तते एवम् अहंब्रह्मास्मीति वाक्येन अहमर्थभूतजीवतादात्म्यशून्यब्रह्मैव अस्मीति ज्ञानं जायते तेन ज्ञानेन अहं ज्ञाता कर्त्ता सुखी दुःखीत्यारोपः कर्त्तृत्वादिधर्म्मविशिष्टाहमर्थेन स्वविषयेण सह निःशेषं निवर्त्तते आरोपिताहमर्थनिवृत्तौ च सत्यां

नेदमभेदे सामानाधिकरण्यं किं तु बाधायां यथा
यः स्थाणुरेष पुमानिति पुरुषत्वबोधेन स्थाणुत्व-
बुद्धिर्निवर्त्त्यते एवमहं ब्रह्मास्मीति कूटस्थब्रह्म-
रूपत्वबोधेनाध्यस्ताहमर्थरूपत्वं निवर्त्त्यते। योऽयं
स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ब्रह्मा-

---

जीवस्य यद्वास्तवं रूपं कूटस्थचैतन्यात्मकं तत् पूर्णब्रह्मरूपेण
अवतिष्ठते इति न श्रुत्यन्तरविरोध इति भावः। अक्षरार्थस्तु इदं
ब्रह्माहं पदयोः समानविभक्तिमत्त्वरूपं सामानाधिकरण्यम-
भेदरूपेऽर्थेन अभ्युपगम्यते येन अभेदासम्भवो दोषः स्यात्। ननु
पदाभेदो न वाक्यार्थः कः तर्हि स इति शङ्कते किन्त्विति।
बाधा अत्र वाक्यार्थो विवक्षित इत्याह, बाधायामिति। पुरु-
षत्वपदेन कल्पितस्थाणुतादात्म्याभाववत्त्वं विवक्षितं बाधायां
वाक्यार्थत्वस्वीकारात् अहं ब्रह्मास्मीत्यत्रेति पदानन्तरं वाक्य-
जन्येनेति शेषः। अत्र वाक्यार्थज्ञानस्य अहंब्रह्मास्मीत्याकार-
त्वाभावात् कूटस्थब्रह्मरूपत्वपदेनापि वस्तुतः अहमर्थतादा-
त्म्याभाववत् कूटस्थब्रह्मरूपत्वं विवक्षितं बाधाया एव वाक्या-
र्थबोधविषयत्वाभ्युपगमात् दृष्टान्तदार्ष्टान्तिकयोरधिष्ठानस्य
आरोपितार्थाभाववत्त्वमारोपितात्यन्ताभावस्य अधिष्ठानाति-
रिक्तत्वमिति मतमाश्रित्यास्माभिरुक्तमिति ध्येयम्। अध्यस्ताह-
मर्थरूपत्वमिति अध्यस्तो योऽहमर्थस्तद्रूपत्वं तादात्म्यं निव-
र्त्तत इति बोधफलमुक्तम्। महावाक्यस्य बाधार्थकत्वं न
स्वकपोलकल्पितं किन्तु सुरेश्वराचार्य्यैरुक्तमित्याह,योऽयमिति।
मन्दान्धकारे यः स्थाणुः गृहीतः एषोऽयं पुमानित्याप्तवाक्य-

स्मीति धियाऽशेषा ह्यहं बुद्धिर्निवर्त्यंत इति नैष्कर्म्यसिद्धिवचनात्। यदि च विवरणाद्युक्तरीत्येदमभेदे सामानाधिकरण्यं तदा जीववाचिनोऽहंशब्दस्य लक्षणया कूटस्थपरत्वमस्तु तस्य सबाध्यस्य ब्रह्माभेदयोग्यत्वात्। यस्तु मेघाकाशतुल्यो धीवासनाप्रतिबिम्ब ईश्वर उक्तः सोऽयं सुषुप्तस्थाने एकीभूतः प्रज्ञानघन एवान-

---

जन्यया पुन्धिया वस्तुतो नायं स्थाणुः किन्तु पुमानिति धिया स्थाणुरयमिति धीरारोपितस्थाणुतादात्म्येन सह यथा निवर्त्तते एवम् अहंब्रह्मास्मीति वाक्यजन्यया धिया अहमर्थभूतजीवतादात्म्यशून्यं ब्रह्मैव अस्मीत्याकारया अहंबुद्धिरहं करोमि अहं भुञ्जे इत्यादिबुद्धिरशेषा आरोपिताहमर्थसहिता निवर्त्यते महावाक्यार्थज्ञानादशेषानर्थनिवृत्तिर्विदुषामनुभवसिद्धेति द्योतनार्थो हि शब्दः। ननु सामानाधिकरण्यवाक्येषु अभेदरूपवाक्यार्थस्य मुख्यतया औत्सर्गिकत्वात् विवरणादिषु प्रकृते अभेदरूपवाक्यार्थस्यैव स्वीकाराच्च भगवत्पादैरपि वाक्यवृत्तौ तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोरिति श्लोकेन महावाक्येषु तत्त्वम्पदार्थयोस्तादात्म्यशब्दिताभेदस्यैव वाक्यार्थतया स्वीकाराच्च वार्त्तिककारवचनस्य बाधाया अपि प्रकृते वाक्यार्थतां वक्तुं शक्यते इति प्रौढ़िमाश्रित्य प्रवृत्त्युपपत्तेश्च तस्मात् अहंब्रह्मास्मीत्यत्र अभेदो वाक्यार्थ इति स्थिते विनाशिजीवस्य अविनाशिब्रह्माभेदो न सम्भवतीति चोद्यं तदवस्थमेव इति अस्वरसादाह, यदि चेति। कूटस्थो ब्रह्मजीवेशौ इत्येवंवित्

न्दमयो ह्यानन्दभुगिति माण्डूक्यश्रुतिसिद्धसौ-
षुप्तानन्दमयस्तत्रैव तदनन्तरमेष सर्वेश्वर एष

---

चतुर्विधेति श्लोकसंगृहीतानां कूटस्थब्रह्मजीवेश्वराणां चतुर्णां मध्ये ब्रह्मचैतन्यं तावत् सत्यज्ञानादिवाक्येषु प्रसिद्धमिति तत्र वाक्यं प्रमाणत्वेन उदाहृतं कूटस्थचैतन्येऽविनाशी वा इति वाक्यं प्रमाणत्वेन दर्शितम् उपाध्युत्पत्तिविनाशानुविधा-य्युत्पत्तिविनाशवचनम् अन्तःकरणगतचैतन्यप्रतिविम्बरूपे जीवे प्रमाणमुक्तम्। परिशेषात् पूर्वोक्तेश्वरे प्रमाणं वक्तव्यं तदा यस्त्विति तु शब्दोऽवधारणे य ईश्वर उक्तः सोऽयं श्रुत्युक्तानन्द-मय एव नान्य इत्यर्थः। सुषुप्तं स्थानमस्येति सुषुप्तस्थानं जागरणे हि विज्ञानशब्दितान्तःकरणे तादात्म्याध्यासात् विज्ञानमयत्वमनोमयत्वकर्त्तृत्वादीनि रूपाणि सन्ति तथा देहे स्थूलोऽहमित्याद्यभेदाध्यासात् स्थूलत्वकृशत्वब्राह्मणत्वा-दीनि रूपाणि सन्ति तथा चक्षुरादिषु काणोऽहं मूकोऽह-मित्यादिरूपाध्यासात् काणत्वादीनि रूपाणि सन्ति एवम् आकाशादिषु पदार्थेषु अध्याससिद्धानि आकाशमयो वायुमय इत्यादिश्रुतिसंगृहीतानि अनन्तरूपाणि जीवस्य सन्ति सुषुप्ते तु बुद्ध्याद्युपाधिलयेन सर्वप्रकारभ्रान्तिलयात् भ्रान्ति-सिद्धानि सर्वाण्यपि रूपाणि लीयन्ते इत्यभिप्रेत्य एकीभूत इत्युक्तं तदुक्तं विज्ञानमयमुख्यैर्यो रूपैर्युक्तः पुराधुना स लयेन एकतां प्राप्तो बहुतण्डुलपिष्टवदिति पुरा सुप्तात् पूर्वकाले लयेन रूपाणां लयेन इत्यर्थः। प्रज्ञानं चैतन्यं तच्च जाग्रदादौ वृत्तिभेदेन भेदरूपं शैथिल्यं प्राप्य स्थितं सुप्ते वृत्तीनां विलयात् पुनरैक्यं प्राप्तमित्यभिप्रेत्य प्रज्ञानघनत्वमुक्तम् आनन्दोऽत्र विम्बभूतब्रह्मा-नन्दो विवक्षितः तस्य प्रतिविम्बभूतो जीव आनन्दमयः स

सर्वज्ञ एषोऽन्तर्यामी एष योनिः सर्वस्य प्रभ-
वाप्ययौ हि भूतानामिति श्रुतेः। सर्ववस्तु-
विषयसकलप्राणिधीवासनोपाधिकस्य तस्य सर्व-

---

च स्वरूपभूतमानन्दं सुषुप्तिकाले अविद्यावृत्तिभिर्भुंङ्क्ते
इत्यानन्दभुगिति श्रुत्यर्थः। ननु जाग्रत्स्वप्नयोः स्थूलावस्था-
न्तःकरणप्रतिबिम्बरूपो जीवो विज्ञानमयः स्थूलावस्थान्तः-
करणस्य विज्ञानशब्दवाच्यत्वात् स्वापकाले सूक्ष्मरूपेण विलो-
नावस्थान्तःकरणोपाधिकः सन् आनन्दमय इति उच्यते तथा
च आनन्दमयस्य जीवत्वात् ईश्वरत्वमसिद्धमित्याशङ्क्य सौषुप्ता-
नन्दमयस्यैव ईश्वरत्वं वाक्यशेषो दर्शयतीत्याह तत्रैव इति।
माण्डूक्यश्रुतावेव इत्यर्थः। सर्वेश्वरत्वं सर्वजगदुत्पत्तिकर्तृत्वं
योनिरुपादानम् आनन्दमयस्य सर्वोपादानत्वे हेतुमाह
प्रभवेति। हि यस्मात् भूतानां प्रभवाप्ययौ जन्मलयौ सुषुप्तानन्द-
मयात् भवतस्तस्मादेष सर्वस्य योनिरित्यर्थः। आनन्दमयस्य
श्रुत्युक्तसर्वज्ञत्वे युक्तिमपि आह सर्ववस्त्विति। एकैका धीः
किञ्चित् किञ्चित् विषयीकरोति इति सर्वाभिर्मिलित्वा सर्वं
जगत् विषयीक्रियते एवं च सर्वबुद्धीनां सर्वविषयकत्वे सिद्धे
सति सर्वबुद्धिसूक्ष्मावस्थारूपाणां सर्वबुद्धिवासनानामपि सर्व-
विषयकत्वं सिध्यति तथा च सर्वप्राणिबुद्धिवासनोपाधिकस्य
आनन्दमयस्य सर्वज्ञत्वसिद्धिरित्यर्थः। ननु धीवासनोपरक्ता-
ज्ञानोपाधिक ईश्वर इति यदुक्तं तत्र किं प्रतिबिम्बेश्वरस्य
अज्ञानमेव उपाधिः ? किंवा वासनोपरक्ताज्ञानम् ? अथवा सर्वाः
धीवासनाः? उत प्रत्येकं वासना? नाद्यः, धीवासनासु प्रतिबिम्बितं
चैतन्यमीश्वर इत्युक्तिविरोधात् अज्ञानमात्रस्य ईश्वरोपाधित्वे

ज्ञत्वं तत एव सर्वकर्तृत्वोपपत्तेश्च। न च अस्मद्बुद्धिवासनोपहितस्य कस्य चित्सार्वज्ञ्यं नानुभूयत इति वाच्यम्। वासनानां परोक्षत्वेन तदुपहितस्यापि परोक्षत्वादिति ॥ ४२ ॥

ब्रह्मानन्दे तु सुषुप्तिसंयोगान्माण्डूक्योक्त आनन्दमयो जीव इत्युक्तम्। तथा हि जाग्रदा-

---

धीवासनानुसरणवैफल्याच्च। न च अज्ञानोपाधिकस्यैव ईश्वरस्य सर्वज्ञत्वलाभार्थं सर्वविषयकधीवासनानुसरणमिति वाच्यम्? अज्ञानगतसत्त्वांशपरिणामरूपाभिः सर्वविषयकवृत्तिभिरेव सर्वज्ञत्वोपपादनसम्भवेन तदर्थं धीवासनानामनपेक्षणात्, अत एव न द्वितीयः अज्ञानमात्रस्य तदुपाधित्वसम्भवात् युगपत् सर्वप्राणिनां सुषुप्त्यसम्भवेन सर्वबुद्धिवासनानां यौगपद्यासम्भवाच्च न तासाम् अज्ञानविशेषणतया ईश्वरोपाधित्वसम्भवः तासां यौगपद्यासम्भवादेव न तृतीयोऽपि कल्पः सङ्गच्छते। सर्वासु धीवासनासु व्यासक्ततया एकस्य ईश्वररूपप्रतिविम्बस्य असम्भवाच्च लोके व्यासज्य वृत्तिप्रतिविम्बादर्शनात् तस्मात् चतुर्थः कल्पः परिशिष्यते तत्र अनुभवविरोधमाशङ्कते न च अस्मदिति। अस्माकं प्राणिनामेकैकबुद्धिवासनोपहितस्य आनन्दमयस्य कस्यापि स्वापकालेऽहं सर्वज्ञ इत्यनुभवो नास्ति इत्यर्थः। वासनानामिति जाग्रदादौ स्थूलावस्थान्तःकरणानामिव सुप्तौ वासनात्मकान्तःकरणानां साक्षिप्रत्यक्षयोग्यत्वाभावेन तदुपाधिकानन्दमयानामपि नाहं मनुभवयोग्यत्वमित्यर्थः ॥४२॥

माण्डूक्यश्रुत्युक्तानन्दमयस्य सकलधीवासनोपाधिकस्य उक्तरीत्या एकस्य असम्भवात् प्रत्येकमेव धीवासनोपाधिक आनन्दमयो

दिषु भोगप्रदस्य कर्मणः क्षये निद्रारूपेण विलीनमन्तःकरणं पुनर्भोगप्रदकर्मवशात् प्रबोधे घनीभवति तदुपाधिको जीवो विज्ञानमय इत्युच्यते। स एव पूर्वं सुषुप्तिसमये विलीनावस्थोपाधिकः सन्नानन्दमय इति उच्यते स एव माण्डूक्ये सुषुप्तिस्थान एकीभूत इत्यादिना दर्शित इति। एवं सति तस्य सर्वेश्वरत्वादिवचनं कथं संगच्छताम्। इत्थं सन्ति अधिदैवतमध्यात्मं च परमात्मनः सविशेषाणि त्रीणि रूपाणि। तत्राधिदैवतं त्रीणि

---

वाच्यः स च जीव एव इत्याह ब्रह्मानन्दे तु इति। चित्रदीपे श्रीविद्यारण्यगुरुभिः ईश्वरत्वेन उक्तानन्दमयस्य तैरेव ब्रह्मानन्दाख्यग्रन्थे जीवत्वोक्तिरूपविशेषार्थकस्तु शब्दः। सुषुप्तिसंयोगादिति उपलक्षणं वासनोपाधिकस्य ईश्वरत्वे जाग्रदादौ ईश्वराभावप्रसङ्गात् एकैकवासनोपाधिकस्य नानात्वेन ईश्वरनानात्वप्रसङ्गात् सकलवासनोपाधिकस्य कस्यचित् असम्भवाच्च इत्यपि द्रष्टव्यं तत्र उक्तप्रकारं दर्शयति तथाहि इति। जाग्रदादिषु भोगप्रदं यत्कर्म तस्य क्षये सति इत्यर्थः। आदिपदं स्वप्नपरं बहुवचनं तु जाग्रत्स्वप्नव्यक्तिभेदापेक्षं निद्रारूपेण इति सुषुप्तिरूपेण इत्यर्थः। तदुक्तं पञ्चीकरणे बुद्धेः कारणात्मना अवस्थानं सुषुप्तिरिति। आनन्दमयस्य जीवत्वे तस्य ईश्वरत्वप्रतिपादकवाक्यशेषविरोधं शङ्कते एवं सतीति। सौषुप्तजीवरूपानन्दमयस्य वस्तुत ईश्वरत्वाभावेऽपि ईश्वराभेदविवक्षया तस्य ईश्वरत्व-

शुद्धचैतन्यं चेति चत्वारि रूपाणि चित्रपटदृष्टान्तेन चित्रदीपे समर्थितानि। यथा स्वतः शुभ्रः पटो धौतः अन्नलिप्तो घटित इति मष्यादिविकारयुक्तो लाञ्छितो वर्णपूरितो रञ्जित इति अवस्थाचतुष्टयमेकस्यैव चित्रपटस्य तथा परमात्मा

---

वचनं सङ्गच्छते इति परिहरति इत्थमित्यादिना। माण्डूक्यश्रुतौ जीवेश्वरयोरभेदविवक्षां दर्शयितुं पीठिकां करोति सन्तीति। परमात्मन आधिदैवतं सविशेषाणि त्रीणि रूपाणि सन्ति तथा परमात्मनोऽध्यात्मं च सविशेषाणि त्रीणि रूपाणि सन्तीति सम्बन्धः। परमात्मन इत्यस्य निर्विशेषचैतन्यस्य इत्यर्थः। अधिदैवतमित्यस्य देवतात्मकानि इत्यर्थः। अध्यात्ममित्यस्य च जीवात्मकानि इत्यर्थः। अधिदैवतमध्यात्ममिति च पदद्वयमव्ययम् उक्तं प्रपञ्चयति तत्रेति। अध्यात्माधिदैवतरूपाणां मध्य इत्यर्थः। जीवस्य त्रीणि सविशेषरूपाणि तुर्यपादात्मकं निर्विशेषरूपं च माण्डूक्यश्रुतौ कण्ठतो दर्शितानि ईश्वरस्य तु निर्विशेषसविशेषरूपाणि तच्छ्रुत्यभिप्रेतान्यपि श्रुत्या कण्ठतो न उक्तानि तानि तु श्रुतितात्पर्याभिज्ञैः श्रीविद्यारण्यगुरुभिश्चित्रदीपे सदृष्टान्तं निरूपितानि इत्याह चित्रपटेति। तत्र अयं दृष्टान्तसंग्राहकः श्लोकः।

शुभ्रोऽत्र धौतः स्यात् घट्टितोऽत्र विलेपनात्।
मष्याकारैर्लाञ्छितः स्यात् रञ्जितो वर्णपूरणात्॥

इति एतत् श्लोकसंगृहीतं दृष्टान्तं विवृणोति यथेति। स्वतश्चिदन्तर्यामी तु मायावी सूक्ष्मसृष्टितः सूत्रात्मा स्थूलसृष्ट्यैष विराडित्युच्यते पर इति श्लोकसंगृहीतं दार्ष्टान्तिकं

मायातत्कार्य्योपाधिरहितः शुद्धः मायोपहित ईश्वरः अपञ्चीकृतभूतकार्य्यसमष्टिसूक्ष्मशरीरोपहितः हिरण्यगर्भः। पञ्चीकृतभूतकार्य्यसमष्टिस्थूलशरीरोपहितो विराट् पुरुष इति अवस्थाचतुष्टयमेकस्यैव परमात्मनः। अस्मिंश्च चित्रपटस्थानीये परमात्मनि चित्रस्थानीयः स्थावरजङ्गमात्मको निखिलः प्रपञ्चः। यथा चित्रगतमनुष्याणां चित्राधारवस्त्रसदृशा वस्त्राभासा लिख्यन्ते तथा परमात्माध्यस्तदेहिनामधिष्ठानचैतन्यसदृशा-

---

दर्शयति तथेति। श्लोके परः स्वतश्चिदिति सम्बन्धः अमुमंशं विवृणोति परमात्मेति। श्लोके तुशब्दोऽवधारणे तथा च पर एव मायावी सन् अन्तर्यामीत्युच्यते इति सम्बन्धः। अमुमंशमाह मायोपहित ईश्वर इति। श्लोके पर एव सूक्ष्मसृष्टितः सूत्रात्मेति सम्बन्धः। अपञ्चीकृतेति। अपञ्चीकृतानां भूतानां यत्कार्य्यं व्यापकं सूक्ष्मशरीरं तदुपहित इत्यर्थः। न च सूत्रात्मनो हिरण्यगर्भशब्दितस्य श्रुतिस्मृत्योर्जीवत्वप्रसिद्धेः कथं तस्य ईश्वररूपत्वमिति वाच्यम्? जीवरूपहिरण्यगर्भस्य समष्टिसूक्ष्मशरीराभिमानविशिष्टस्य सत्यलोकस्वामिनः ईश्वरान्यत्वाभ्युपगमात् ईश्वरस्य तु समष्टिसूक्ष्मशरीराभिमानाभावेऽपि समष्टिसूक्ष्मशरीरनियन्तृतया तदुपाधिकस्य समष्टिसूक्ष्मोपाध्युपहितत्वगुणयोगेन हिरण्यगर्भसूत्रात्मपदाभ्यां निर्देशस्य इह विवक्षितत्वात् तथा च गौणमीश्वरस्य हिरण्यगर्भत्वमिति भावः।

श्चिदाभासाः कल्पान्ते ते च जीवनामानः सञ्च-रन्तीति। अध्यात्मं तु विश्वतैजसप्राज्ञभेदेन त्रीणि रूपाणि तत्र सुषुप्तौ विलीने अन्तःकरणे अज्ञान-मात्रसाक्षी प्राज्ञः। योऽयमिहानन्दमय उक्तः

---

अतएव चित्रदीपे ईश्वररूपहिरण्यगर्भापेक्षया सत्यलोकाधि-पतेर्ब्रह्मणस्तत् तत्राद्यभिहितेश्वरपरिगणनावसरे पृथगुपादानं कृतमिति मन्तव्यम् श्लोके एष एव परः स्थूलसूक्ष्माविराडित्यु-च्यत इति सम्बन्धः। अमुमंशं व्याकुर्वन् संगृह्णाति पञ्चीकृतेति।

अयमीश्वररूपो विराट् पुरुषः पुरुषसूक्तवैश्वानरविद्या वाक्यादिरूपश्रुतिसिद्धो द्रष्टव्यः सत्यलोकाधिपतेर्हिरण्यगर्भस्य पुत्ररूपो विराट्पुरुषः समष्टिस्थूलाभिमानी जीवो बृहदारण्य-कश्रुतिसिद्ध अन्य एवेत्यपि द्रष्टव्यम्। इति अवस्थेति। उक्तप्रका-रेण वस्तुत एकस्यैव रूपचतुष्टयं द्रष्टव्यमित्यर्थः। एवं प्रकृतो-पयुक्तं रूपचतुष्टयं दर्शयित्वा प्रसङ्गात् आह अस्मिन्निति। ननु कृत्स्नस्य जगतश्चित्रस्थानीयत्वे तद्वदेव सर्वमचेतनाचेतन-विभागो न स्यादिति शङ्कां दृष्टान्तेन परिहरति यथेति। वस्त्राभासा इति वर्णविशेषात्मकवस्त्राणां चित्रधारेण वस्त्रेण कृतिसाम्येऽपि शीतवातादिनिवर्त्तकत्वाभावादाभासत्वं देहि-नामिति स्थूलदेहवतामहङ्कारिणामित्यर्थः। अन्तःकरणात्म-काहङ्कारेषु चैतन्यस्य प्रतिविम्बकल्पनस्य प्रयोजनमाह ते चेति। तथा च चिदाभासयुक्ताः कार्य्यकारणसंघाताश्चेतनाः अन्ये गिरिसमुद्रादयोऽचेतना इति विभागसिद्धिरिति भावः। एवमीश्वरस्य रूपाणि दर्शितानि जीवस्य श्रुत्युक्तानि सविशेष-रूपाणि दर्शयति अध्यात्मन्त्विति। तुशब्द ईश्वरस्य सविशेष-

स्वप्ने व्यष्टिसूक्ष्मशरीराभिमानी तैजसः। जागरे व्यष्टिस्थूलशरीराभिमानी विश्वः। तत्र माण्डूक्य-श्रुतिरहमनुभवे प्रकाशमानस्यात्मनो विश्वतैजस-प्राज्ञतुरीयावस्थाभेदरूपपादचतुष्टयं सोऽयमात्मा

---

रूपाणि अपेक्ष्य जीवस्य सविशेषरूपाणां वैलक्षण्यं सूचनार्थः तदेव वैलक्षण्यं दर्शयति विश्वेति। रूपाणीति सविशेषाणीति शेषः। तत्रेति रूपत्रयमध्य इत्यर्थः। विलीने इति अन्तः-करणे विलीने सति सूक्ष्मरूपेण विलीनान्तःकरणोपाधिकः सम्पद्यते इति भावः। स्थूलान्तःकरणादिसाक्षित्वव्यवच्छेदार्थ मात्रग्रहणम्। ननु पूर्वं सौषुप्तजीव आनन्दमय इत्युक्तमिदानीं कथं स एव प्राज्ञ इत्युच्यते तत्राह योऽयमिति। इहेति माण्डूक्य-श्रुतावित्यर्थः। तत्रैव आनन्दभुगिति अनन्तरं चेतोमुखः प्राज्ञः तृतीयः पाद इति वाक्यशेषदर्शनादिति भावः। चेतांसि चित्प्रतिबिम्बोपेतानि अविद्यावृत्तिरूपाणि सुखानि स्वापका-लीनानन्दानुभवसाधनानि यस्य स चेतोमुखः। ननु सौषुप्त-जीवस्य आनन्दभुक्त्वं चेतोमुखत्वं च श्रुतमपि कथमुपपन्न-मिति चेत्? उच्यते सुषुप्तादुत्थितस्य हि सुखमस्वाप्समिति स्वापकालविशिष्टसुखस्मरणं दृश्यते तच्च तदा सुखानुभवमन्तरेण न सम्भवति अननुभूतस्य सुखस्य स्मरणायोगात्। न च सुषुप्तौ आत्मस्वरूपसुखस्य अन्तःकरणवृत्तिभिरेव अनुभवः सम्भवतीति वाच्यम्? तदा विलीनस्य अन्तःकरणस्य वृत्त्युत्पादनयोग्य-त्वाभावात्। न च मुक्तिकाल इव स्वापकालेऽपि स्वरूपचैतन्येन एव सुखानुभवसम्भवात् किम् अविद्यावृत्तिप्रतिबिम्बरूपचेतः कल्पनयेति वाच्यम्? जाग्रत्स्वप्नयोश्चैतन्यप्रतिबिम्बोपेतवृत्तिभिः

चतुष्पादित्युपक्रम्य पूर्वंपूर्वंपादप्रविलापनेन निष्प्र-पञ्चब्रह्मात्मकतुरीयपादप्रतिपत्तिसौकर्य्याय स्थूल-सूक्ष्मसूक्ष्मतरोपाधिसाम्यात् विराडादीन् विश्वा-दिषु अन्तर्भाव्य जागरितस्थानो बहिःप्रज्ञ इत्या-दिना विश्वादिपादान् न्यरूपयत्। अतः प्राज्ञ-शब्दिते आनन्दमये आव्याकृतस्य ईश्वरस्यान्तर्भावं

---

आनन्दानुभवदर्शनेन सुषुप्तावपि तथा सम्भवे परित्यागा-योगात् मुक्तिकाले च उपाधिमात्रविलयाभ्युपगमात् वृत्त्य-सम्भव इति वैषम्यसत्त्वात् सौषुप्तसुखानुभवस्य केवलनित्य-साक्षिरूपत्वे अनुभवनाशरूपसंस्काराभावप्रसङ्गेन सुखमस्वाप्स-मित्यनुसन्धानाभावापत्तेश्च तस्मात् यथोक्तार्था श्रुतिः उपपन्नैव। व्यष्टीति परिच्छिन्नेत्यर्थः। एते पादाः साक्षात् श्रुत्युक्ता इत्याह तत्रेति। उक्तरीत्या पादकल्पनोपपत्तौ सत्यामित्यर्थः। श्रुतिपाद-चतुष्टयमुपक्रम्य विश्वादिपादान् न्यरूपयदिति सम्बन्धः। पद्यते गम्यते अवगम्यते ब्रह्मात्मैक्यमेभिरिति पादा विश्वा-दयः इमां व्युत्पत्तिमभिप्रेत्य श्रौतपादकल्पनायाः प्रयोजनमाह पूर्वपूर्वेति। अयमर्थः सोऽयमात्मा चतुष्पादिति वाक्येन जीवस्य पादचतुष्टयवत्त्वमुपक्रम्य जागरितस्थानो वैश्वानरः प्रथमः पाद इत्युक्तम्। अत्र जीवपादानामेव वक्तुमुपक्रान्तत्वात् विश्वः प्रथमः पाद इति वक्तव्ये वैश्वानरशब्दितस्य विराट्पुरुषरूपे-श्वरस्य प्रथमपादत्वोक्तिः विश्वे वैश्वानरस्य अन्तर्भावं सूचयति। न च हिरण्यगर्भेश्वरौ विहाय वैश्वानरस्यैव विश्वान्तर्भावे किं नियामकं श्रुत्यभिमतमिति वाच्यम्, लोकस्य? तयोः पाधि-

र्तृत्वरूपसाम्यस्य ईश्वरहिरण्यगर्भव्यावृत्तस्य नियामकतया विवक्षितत्वात् तथा द्वितीयपादप्रतिपादकवाक्ये स्वप्नस्थान-स्तैजसः द्वितीयः पाद इत्युक्तम् अत्र सूक्ष्मोपाधिकत्वसाम्येन हिरण्यगर्भस्य तैजसे अन्तर्भावो विवक्षितः वैश्वानरः प्रथमः पाद इत्युपक्रमानुसारात् तथा तृतीयपादप्रतिपादकं सुषुप्त-स्थान एकीभूत इत्यादिवाक्यं प्रागेव उदाहृतम् अत्रापि तृतीयपादत्वेन उक्ते प्राज्ञशब्दितानन्दमये सूक्ष्मतरोपाधिकत्व-सामान्येन ईश्वरस्य अन्तर्भावो विवक्षितः। तथा च वाक्य-शेषस्य एष सर्वेश्वर इत्यादेरानन्दमयेश्वरयोरभेदविवक्षया प्रवृत्तत्वात् नानुपपत्तिस्तथा तुरीयपादप्रतिपादकमिदं वाक्यम् अदृश्यमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्य-यसारं प्रपञ्चोपशमं शिवम् अद्वैतं चतुर्थं मन्यन्ते इति। अदृश्यं चक्षु-राद्यविषयम्, अव्यवहार्य्यं प्रवृत्तिनिवृत्तिलक्षणव्यवहारागोचरम्, अग्राह्यम् कर्मेन्द्रियागोचरम्, अलक्षणम् असाधारणधर्मशून्यम्, अचिन्त्यं शुष्कतर्कागोचरम्, अव्यपदेश्यं शब्दशक्त्यगोचरम्,एका-त्मप्रत्ययसारम् एकादिपदचतुष्टयस्य कर्मधारयः स्वगतभेदशून्य-त्वमेकत्वं सर्वदेहेषु पूर्णत्वमात्मत्वं प्रत्ययत्वं चिद्रूपत्वं सारत्वमान-न्दत्वं सार आनन्द इत्यर्थः। इति आनन्दमयाधिकरणभाष्यात्। प्रपञ्चोपशमं प्रपञ्चाभावरूपं, कल्पितपदार्थाभावस्य अधिष्ठाना-नतिरेकात् यद्वा प्रपञ्चध्वंसरूपं, ज्ञानसाध्यायाः सकारणद्वैतनि-वृत्तेः अधिष्ठानात्मकताया वक्ष्यमाणत्वात्। शिवं शुद्धं सर्वदोष-रहितम्, अद्वैतं द्वैतरहितं, चतुर्थं विश्वतैजसप्राज्ञरूपपादत्र-यापेक्षया चतुःसंख्यापूरकं पादं मन्यन्ते चिन्तयन्तीति श्रुत्यर्थः। अत्र विश्वतैजसप्राज्ञलक्षणपादेषु वैश्वानरहिरण्यगर्भेश्वराणाम् अन्तर्भाववचनं तैरेतेषाम् एकत्वचिन्तनपरं तथा विश्वादिपादा-नामोंकारावयवभूतमात्राणां च एकत्वचिन्तनमत्र विवक्षितम्

तथा च श्रुतिः पादामात्रामात्राश्च पादा इति गौड़पादीय-वचनमपि।

ओङ्कारं पादशो विद्यात् पादमात्रा न संशयः।

इति। न संशय इत्यस्य अयमभिप्रायः,विश्वादिपादानां मात्राणां च यावत् संशयनिवृत्ति एकत्वं चिन्तनीयमिति मात्रास्वरूपं च श्रुत्यैव दर्शितम् अकार उकारो मकार इतीति एवं विश्वादि-पादानां वैश्वानरादीनां मात्राणां चैकत्वचिन्तनं सर्वेषाम् एतेषां निष्प्रपञ्चब्रह्मात्मकतुर्य्यपादे चिन्मात्रे प्रविलापनार्थं तत्र च अयं क्रमः विश्ववैश्वानराकाराणामेकत्वं प्रथमं संचिन्त्य पश्चात् तैजस-हिरण्यगर्भोकाराणामेकत्वं चिन्तयेत् ततः ईश्वरप्राज्ञमकारा-णामपि एकत्वं चिन्तयेत् तथा चिन्ताक्रमेणैव प्रविलापयेत् अकारादित्रयम् उकारे उकारादित्रयं मकारे मकारादित्रयं चिन्मात्रे तुर्य्यपादे प्रविलापयेत्। चिन्मात्रे प्रविलाप्य च चित्तं तत्रैव स्थापयेत्। उकारादौ प्रविलापनं नाम अकारादित्रयम् उकारव्यतिरेकेण नास्ति इत्याद्यर्थनिश्चयः। एवं प्रत्यहमुक्त-प्रकारेण समाधिं कुर्वतो ब्रह्मसाक्षात्कारो भवति ततश्च ब्रह्मप्राप्त्या कृतकृत्यतेति माण्डूक्यश्रुत्यभिप्रायः इदं सर्वं माण्डूक्यश्रुतेः संग्रहेण तात्पर्य्यकथनपरैः भाष्यकृद्भिः कृत-पञ्चीकरणस्य व्याख्यानरूपे वार्त्तिके सुरेश्वराचार्य्यैरभिहितम्।

अकारमात्रं विश्वः स्यात् उकारस्तैजसः स्मृतः।
प्राज्ञो मकार इत्येवं परिपश्येत् क्रमेण तु॥

अत्र विश्वादिषु वैश्वानरादीनामन्तर्भावं सिद्धं कृत्वा न पृथगुपादानं कृतमिति मन्तव्यं समाधिकालात् प्रागेवं विचिन्त्य अतिप्रयत्नतः स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेत्।

अकारं पुरुषं विश्वमुकारे प्रविलापयेत्।

पुरुषोऽत्र वैश्वानरः।

उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत्।

अत्र समष्टिसूक्ष्मशरीरनियन्तृतया तदुपहितः परमेश्वरः सूक्ष्मशब्दार्थः।

मकारं कारणं प्राज्ञ चिदात्मनि विलापयेत्।

अत्र अन्तर्यामि मायामात्रोपाधिकः कारणशब्दार्थः।

चिदात्माहं नित्यशुद्धबुद्धमुक्तसदद्वयः।

परमानन्दसन्दोहवासुदेवोऽहमोमिति॥

यतोऽहं चिदात्मावशेषितः अतोऽहं नित्यशुद्धबुद्धादिरूपो वासुदेव इत्यर्थः। अङ्गीकारात्मक ओङ्कार इत्यर्थः। इति शब्दस्व उत्तरश्लोकान्वयी।

ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलापयेत्।

इति। उक्तप्रकारेण केवलं चिदात्मानमवशिष्टं ज्ञात्वा विवेचकं विलापकं तच्चित्तं साक्षिणि यथोक्ते वासुदेवे विलापयेत् स्थापयेदित्यर्थः।

चिदात्मनि विलीनं चेत्तच्चित्तं नैव चालयेत्।

पूर्णबोधात्मनासीनं पूर्णाचलसमुद्रवत्॥

चिरकालं समाधिं कुर्य्यादिति वार्त्तिकार्थः।

एवं समाहितो योगी श्रद्धाभक्तिसमन्वितः।

जितेन्द्रियो जितक्रोधः पश्येदात्मानमद्वयम्।

आदिमध्यावसानेषु दुःखं सर्वमिदं यतः।

तस्मात् सर्वं परित्यज्य तत्त्वनिष्ठो भवेत् सदा॥

यतस्तत्त्वनिष्ठाव्यतिरिक्तं पुरुषार्थसाधनत्वेन लोकशास्त्रसिद्धं सर्वं कालत्रयेऽपि दुःखाविनाभूतं तस्मात् सर्वं विधिना सन्न्यस्य उक्तरीत्या तत्त्वनिष्ठां समाधिलक्षणां कुर्य्यात् इत्यर्थः। तदेवाह।

इमां विद्यां प्रयत्नेन योगी सन्ध्यासु सर्वदा।
समभ्यसेदिहामुत्र भोगानासक्तधीः सुधीः॥

इति। इमां समाधिलक्षणां विद्यां सुधीः आस्तिकतमो विरक्तो भूत्वा सन्ध्यासु उपक्रम्य सदा अभ्यसेत् इत्यर्थः।

यः पश्येत् सर्वगं शान्तमानन्दात्मानमद्वयम्।
न तेन किञ्चिदाप्तव्यं ज्ञातव्यं वाऽवशिष्यते॥
कृतकृत्यो भवेद्विद्वान् जीवन्मुक्तो भवेत् सदा।
अविद्यातिमिरातीतं सर्वाभासविवर्जितम्॥
आनन्दममलं शुद्धं मनोवाचामगोचरम्।
वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम्॥
प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते॥

आभासपदं चिदाभासपरं वाच्याः विश्वादयः वाचकाः अकारादयः प्रकृतत्वात्। हेयं दुःखं उपादेयं विषयसुखं इत्यर्थः। तथा माण्डूक्यश्रुतौ समाधिनिष्ठां विवक्षामभिप्रेत्य गौडपादीयेऽपि उक्तम्।

युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्।
प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित्।

इति संक्षेपः। ननु श्रवणादिरूपसांख्यमार्गेणैव तत्त्वप्रतिपत्तिसम्भवात् किं मुमुक्षोर्योगविधिनेत्यत आह प्रतिपत्तिसौकर्य्यायेति। यस्य मुमुक्षोः सन्न्यासिनः बुद्धिमान्द्याद्वा कौशलसत्त्वेऽपि न्यायव्युत्पादनकुशलाचार्य्याद्यभावाद्वा सांख्यमार्गो न सम्भवति तस्य अनायासेन ब्रह्मतत्त्वप्रतिपत्तिं साधनतया बुद्धिपूर्वकप्रविलापनक्रमेण समाधिविधानं माण्डूक्यादौ उक्तं माण्डूक्यतापनीयपञ्चीकरणादौ विहितं ब्रह्मोपासनं प्रकृत्य ध्यानदीपे श्रीविद्यारण्यगुरुभिरधिकारी दर्शितः।

अत्यन्तबुद्धिमान्द्याद्वा सामग्र्या वाप्यसम्भवात्।
यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम्॥ इति

विनश्चित्वा तत्र सर्वेश्वरत्वादितद्धर्मवचनमिति। इत्थमेव भगवत्पादैर्गौडपादीयविवरणे व्याख्यातम् ॥ ४३ ॥

दृग्दृश्यविवेके तु चित्रदीपव्युत्पादितं कूटस्थं जीवकोटावन्तर्भाव्य चित्त्रैविध्यप्रक्रियैवावलम्बितेति विशेषः। तत्र ह्युक्तं जलाशयतरङ्गबुद्बुदन्यायेन उपर्य्युपरि कल्पनाद् जीवस्त्रिविधः। पारमार्थिको व्यावहारिकः प्रातिभासिकश्चेति। तत्रावच्छिन्नः पारमार्थिको जीवः।

---

अव्याकृतस्येति अनभिव्यक्तजगद्वा विना अव्याकृतपदेन लक्षणया परमेश्वरः तत्र तत्र व्यवहृत इति कृत्वा तेन तन्निर्देशः कृतः। माण्डूक्यश्रुत्युक्तानन्दमयस्य ईश्वरत्ववचनं तदभेदविवक्षया इत्येतत् माण्डूक्यश्रुतिव्याख्यानरूपस्य गौड़पादीयस्य विवरणरूपे भाष्ये भाष्यकारैरेव उक्तमित्याह इत्थमेवेति ॥४३॥

श्रीविद्यारण्यगुरुभिश्चित्रदीपे स्वोक्तचिच्चातुर्विध्यं विहाय ग्रन्थान्तरे जीव ईशो विशुद्धा चिदिति वृद्धवचनसिद्धं त्रैविध्यमेव अवलम्ब्य जीवस्य त्रैविध्याख्यो विशेष उक्तः,

इत्याह दृक् दृश्यविवेकेत्विति। तुशब्दः उक्तविशेषार्थकः कूटस्थस्य जीवकोटावन्तर्भावमेव दर्शयति तत्रेति। दृक् दृश्यविवेकाख्य ग्रन्थ इत्यर्थः। हिशब्दः प्रसिद्धिद्योतकः। जलाशयतरङ्गेति। यथा समुद्रादिजलाशये तरङ्गा उपरिभावेन तिष्ठन्ति तेषु च उपरिभावेन बुद्बुदास्तिष्ठन्ति इदं प्रसिद्धमिति हि शब्दार्थः न्यायो दृष्टान्तः। एवं कूट-

तस्मिन् अवच्छेदकस्य कल्पितत्वेऽपि अवच्छेद्यस्य तस्याऽकल्पितत्वेन ब्रह्मणाऽभिन्नत्वात्। तमावृत्य स्थितायां मायायां कल्पितान्तःकरणे चिदाभासो-ऽन्तःकरणतादात्म्यापत्त्या अहमित्यभिमन्यमानो व्यावहारिकः। तस्य मायिकत्वेऽपि यावद्व्यवहार-मनुवृत्तेः। स्वप्ने तमपि आवृत्य स्थितया मायावस्था-

---

स्थस्य उपरि, व्यावहारिकान्तःकरणप्रतिबिम्बरूपो यावद्व्यव-हारमनुवर्त्तमानो व्यावहारिकजीवः कल्प्यते तस्य च उपरि-भावेन स्वप्नकाले वासनामयप्रातिभासिकरथादिवद्वासनाम-यान्तःकरणप्रतिबिम्बरूपः प्रातिभासिको जीवः कल्प्यत इत्यर्थः। तत्रेति। त्रिविधजीवमध्य इत्यर्थः। अवच्छिन्न इति देहद्वयाव-च्छिन्नकूटस्थचैतन्यरूप आत्मा पारमार्थिको जीव इत्यर्थः। अहं ब्रह्मास्मीति महावाक्येषु जीवब्रह्मणोरभेदः प्रतिपाद्यते स च पारमार्थिकजीवकल्पने सति निर्वहति अन्यथा व्यावहारि-कप्रातिभासिकजीवयोः शुक्तिरूप्यादिवत् स्वरूपतो मिथ्यात्वेन सत्यब्रह्माभेदायोगात् देहद्वयावच्छिन्नकूटस्थरूपपारमार्थिक-जीवस्य तु अवच्छेदकीभूतदेहद्वयस्य कल्पितत्वेऽपि स्वतः सत्यत्वात् सम्भवति ब्रह्माभेद इति।

पारमार्थिकजीवकल्पनायाः प्रयोजनं दर्शयति तस्मिन्निति अवच्छिन्नजीव इत्यर्थः। व्यावहारिकजीवं निरूपयति तमिति। कूटस्थमात्मानमावृत्य अविद्यायां स्थितायां कूटस्थात्मनि कल्पितं यदन्तःकरणं तत्र यश्चिदाभासः सः व्यावहारिको जीव इत्यर्थः। तदुक्तं

कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिबिम्बकः। इति।

भेदरूपया निद्रया कल्प्यते स्वाप्नदेहादावह-मभिमानी प्रातिभासिकः ।

---

अहमित्यभिमन्यमान इति अहमित्येवम् आकारका-भिमानकर्त्तेत्यर्थः । ननु अहमाकारवृत्तिरूपेण परिणममानो अन्तःकरण एव अहमभिमानवत्त्वं युक्तम् न तु चित्प्रतिवि-म्बस्य अतः आह अन्तःकरणेति । तस्य व्यावहारकत्वे युक्तिमाह तस्येति । न च व्यावहारिकजीवे मानाभाव इति वाच्यम् ? अहं कर्त्ता भोक्तेत्यादिरूपाहमनुभवस्य तत्र मानत्वात् कर्त्तृत्व-भोक्तृत्वाद्यात्मसंसाराश्रयत्वस्य अन्यत्रायोगाच्च । न च अन्तः-करणे तत्सम्भवः तस्य चिदाभासशून्यस्य चेतनधर्मत्वेन प्रसिद्धकर्त्तृत्वाद्याश्रयत्वायोगात् चिदाभासस्य तु चेतनात्म-प्रतिविम्बतया मिथ्याभूतस्यापि चेतनत्वव्यवहारयोग्यत्वेन तद्धर्माणां चेतनधर्मत्वप्रसिद्धिविरोधाभावात् पारमार्थिक-जीवस्य च संसाराश्रयत्वं न सम्भवति तस्य कूटस्थत्वादिति भावः । तमपि इति व्यवहारिकजीवमपि इत्यर्थः । व्यावहारि-कजीवो हि जाग्रद्दशायामात्मानं ब्राह्मणं देवदत्तं यज्ञदत्तपुत्रं विष्णुभक्तं मन्यते स्वाप्नजीवस्तु स्वप्नावस्थायामात्मानं क्षत्रियं विष्णुधर्मनामानं नारायणपुत्रं महादेवभक्तं मन्यते अतो जाग्रज्जीवस्य आवरणं सिद्धं प्रातिभासिकजीवकल्पकमाह निद्रयेति । ननु मायायाः सर्वकल्पकत्वाभ्युपगमात् कथं निद्रायाः कल्पकत्वमपसिद्धान्तापत्तेः इत्याशङ्क्य निद्रायास्तदव-स्थारूपत्वाभ्युपगमात् न उक्त दोष इत्याशयेनाह मायेति । न च निद्रायाः मायालक्षणाभावात् कथं तदवस्थाविशेषरूप-त्वमिति वाच्यम् ? आवरणविक्षेपशक्तिमत्त्वं हि मायालक्षणं तस्य

स्वप्नप्रपञ्चेन सह तद्द्रष्टुर्जीवस्यापि प्रबोधे निवृत्तेरिति। एवमेते प्रतिबिम्बेश्वरवादिना पञ्चभेदा दर्शिताः॥

विवरणाऽनुसारिणस्त्वाहुः।

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥

इति स्मृत्या एकस्यैव अज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपादनात् बिम्बप्रतिबिम्ब-

---

लक्षणस्य जाग्रज्जीवावरिकायां स्वाप्नजगदात्मकविक्षेपकारिण्यां च निद्रायामक्षतत्वादिति भावः। प्रातिभासिकजीवकल्पनायाः प्रयोजनमाह स्वाप्नदेहादाविति। व्यावहारिकजीवस्य आवृतत्वेन स्वप्नकाले अहमभिमानकर्तृत्वासम्भवादिति भावः।

तस्य प्रातिभासकत्वे हेतुमाह स्वप्नप्रपञ्चेनेति। प्रबोधकाले ब्राह्मणोऽहं न क्षत्रिय इत्यादिरूपेण बोधेन स्वप्नद्रष्टुः क्षत्रियादिरूपस्य वा च अनुभवादिति भावः। ईश्वरविषये उक्तवक्ष्यमाणप्रकारभेदज्ञानार्थमुपसंहरति एवमिति।

बिम्बचैतन्यमेव ईश्वरो न प्रतिबिम्बविशेष इति वक्ष्यमाणविशेषार्थकस्तु शब्दः विभेदजनकत्वं जीवेश्वरभेदस्थितिप्रयोजकत्वं विवक्षितं न तु यथाश्रुतं तद्भेदस्य अनादित्वाभ्युपगमात् आत्यन्तिकमिति स्वापप्रलयादौ अज्ञानकार्यनाशेन तत्कारणज्ञानस्य अपि नाशोऽस्ति परिणामपरिणामिनोरभेदात् स च अज्ञाननाशो न आत्यन्तिकः पुनरुत्थानात् मुक्तौ तु तत्त्वज्ञानेन स्वरूपेण

अपि नाशोऽस्ति स च आत्यन्तिकः पुनरुत्थानाभावादिति मत्वा अज्ञाननाशस्य आत्यन्तिकत्वं विशेषणं दत्तम्। यद्वा जीवन्मुक्तिकाले, अज्ञानस्य आवरणांशेन नाशेऽपि विक्षेपांशाभावादनात्यन्तिकः स नाशः विदेहमुक्तौ तु आत्यन्तिको ज्ञाननाश इति तदभिप्रायं तद्विशेषणमिति भावः। प्रतिबिम्बत्वायोगादिति। न च जीवेशौ आभासेन करोति माया च अविद्या च स्वयमेव भवतीति श्रुत्या उभयोः प्रतिबिम्बत्वप्रतिपादनविरोध इति वाच्यम्? प्रतिबिम्बत्ववत् बिम्बत्वस्य अपि कल्पिततया श्रुतिगताभासपदेन प्रतिबिम्बवत् बिम्बस्य अपि ग्रहणोपपत्तेः। ननु लोके प्रतिबिम्बत्वविशिष्टमुखे मुखाभासत्वव्यवहारात् बिम्बत्वविशिष्टमुखे तथा व्यवहाराभावादौ आभासपदं मुख्यवृत्त्या बिम्बचैतन्यं प्रतिपादयितुं न शक्नोतीति खलु प्रतिबिम्बवत् बिम्बस्य अपि विशिष्टरूपेण कल्पिततया कल्पितत्वगुणयोगेन बिम्बपरमाभासपदं वक्तव्यं तच्च न सम्भवति सकृदुच्चरितस्य आभासपदस्य मुख्यवृत्त्या प्रतिबिम्बपरत्वं गुणवृत्त्या बिम्बपरत्वमिति कल्पनस्य व्युत्पत्तिविरुद्धत्वात्। न च अजहल्लक्षणया आभासपदस्य बिम्बप्रतिबिम्बोभयपरत्वाभ्युपगमेन अयं विरोध इति वाच्यम्? उभयोरपि प्रतिबिम्बरूपलाभमादाय आभासपदस्य मुख्यार्थपरत्वसम्भवे सति लक्षणाकल्पनाया एव निर्मूलत्वादिति चेत्? उच्यते यथाश्रुतं जीवेशयोरुभयोरपि प्रतिबिम्बरूपत्वं न सम्भवति बिम्बभूतचैतन्यस्य सूर्य्यवदेकत्वेन उपाधिभेदं विना प्रतिबिम्बद्वयासम्भवात् न च माया च अविद्या च स्वयमेव भवतीति वाक्यशेषेण मायाविद्यारूपोपाधिद्वयप्रतिपादनात् न प्रतिबिम्बद्वयानुपपत्तिरिति वाच्यम्? तेन स्वयं शब्दोपात्तायाः प्रकृतमूलप्रकृतेर्मायात्वाविद्यात्वलक्षणरूपभेदप्रतिपादनेऽपि प्रतिबिम्बद्वयापेक्षितोपाधिद्वय प्रति-

भावेन जीवेश्वरयोर्विभागः नोभयोरपि प्रति-
विम्बभावेन उपाधिद्वयमन्तरेण उभयोः प्रति-
विम्बत्वायोगात्। तत्रापि प्रतिविम्बो जीवः
बिम्बस्थानीय ईश्वरः तथा सत्येव लौकिकबिम्ब-
प्रतिविम्बदृष्टान्तेन स्वातन्त्र्यमीश्वरस्य तत्पार-
तन्त्र्यं जीवस्य च युज्यते।

प्रतिविम्बगताः पश्यन्नृजुवक्रादिविक्रियाः।
पुमान् क्रीडेद्यथा ब्रह्म तथा जीवस्थविक्रियाः॥

---

पादनात् मायाविद्ययोः स्वरूपतो भेदस्य सिद्धान्तविरुद्धत्वाच्च तस्मात् यथाश्रुतासम्भवादेकस्य एव अज्ञानस्य जीवेशविभाग-प्रयोजकत्वप्रतिपादकस्मृत्यनुरोधाच्च जीवेशौ आभासेन करोति इति श्रुतौ आभासपदमजहल्लक्षणया विम्बप्रतिविम्बोभयपर-मिति विवरणानुसारिणामाशय इति। तत्रापि इति। विम्बप्रति-विम्बयोरुभयोर्मध्येऽपि इत्यर्थः। तत्र युक्तिमाह तथा सत्येवेति। विम्बचैतन्यस्यैव ईश्वरत्वाभ्युपगमे सति इत्यर्थः। स्वातन्त्र्य-मिति। एष सर्वेश्वर एष भूताधिपतिरित्यादिश्रुत्यादिश्रुतिसिद्ध-मिति शेषः। तत्पारतन्त्र्यमिति एष ह्येव साधु कर्म कारयति य आत्मानमन्तरोपगमयति ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव चेत्यादि श्रुतिस्मृतिसिद्धमिति शेषः। लौकिकदृष्टान्तमेव कल्प-तरुश्लोकोदाहरणेन दर्शयति प्रतिविम्बगता इति। यथा लोके कश्चित् पुरुषः स्वप्रतिविम्बगताः ऋजुवक्रादिविक्रियाः विम्ब-भूतस्वप्रयुक्ताः पश्यन् क्रीडति तथा ब्रह्मापि जीवस्य विक्रियाः प्राणिकर्मानुसारेण स्वप्रयुक्ताः पश्यन् क्रीडतीति योजना कल्प-

इति कल्पतरूक्तरीत्या लोकवत्तु लीला-कैवल्यमिति सूत्रमपि [ व्या॰ सू॰ अ॰ २ पा॰ १ सू॰ ३३ ] सङ्गच्छते। अज्ञानप्रतिबिम्बितस्य जीवस्य अन्तःकरणरूपो ज्ञानपरिणाम-भेदो विशेषाभिव्यक्तिस्थानं सर्वतः प्रसृतस्य

---

तरूक्तरीत्या ईश्वरस्य स्वातन्त्र्यप्रतिपत्तिः उपयोगिनो ईश्वरस्य स्वातन्त्र्यप्रतिपादकं सूत्रमपि सङ्गच्छत इत्यर्थः। सूत्रार्थस्तु ईश्वरस्य आप्तकामत्वेन प्रयोजनोद्देशाभावात् सृष्ट्यादिव्यापारेषु प्रवृत्तिर्न सम्भवतीति पूर्वपक्षव्यावृत्त्यर्थः तु शब्दः ईश्वरस्य सृष्ट्यादिप्रवृत्तिलक्षणक्रिया केवलं प्रयोजनोद्देशं विनैव लीला लोकवत् यथा लोके सार्वभौमादेः सर्वैर्मानुषैर्भोगैः सम्पन्नतमस्य प्रयोजनाभिसन्धिं विनैव क्रीड़ा दृश्यते तद्वत् किञ्च ईश्वरस्य प्रयोजनोद्देशाभावेऽपि स्वभावादेव सृष्ट्यादिप्रवृत्तिः उपपद्यते दृश्यते हि सुखोद्रेकानुभवप्रयुक्ता हासगानादिरूपा प्रयोजनोद्देशरहिता लीला प्राणिनां स्वाभाविकी न हि तत्र प्रयोजनमपि सम्भावयितुं शक्यते दुःखोद्रेके रोदनवत् सुखोद्रेके हासगानादेः प्रयोजनरहितस्य सर्वानुभवसिद्धत्वात् अतएव हसितरुदितादिषु कारणमेव पृच्छन्ति न प्रयोजनम्। उक्तं च मांण्डूक्यश्रुतौ देवस्य एष स्वभावोऽयमाप्तकामस्य का स्पृहेति एषः सृष्ट्यादिव्यावहार इत्यर्थः। किं च स्वप्नसृष्टिवत् मायामयी प्रपञ्चसृष्टिः अस्माभिः उपेयते न च तत्र प्रयोजनप्रश्नो न्याय्यः स्वप्नसृष्टौ प्रयोजनप्रश्नादर्शनादिति भावः। ननु यदि अज्ञानं जीवस्य उपाधिः तर्हि व्यर्थमन्तःकरणस्य जीवोपाधित्ववर्णनं सूत्रभाष्यादिषु तत्र आह अज्ञानेति। विशेषेति भा-

सविद्रूपप्रकाशस्य दर्पण इव अतस्तस्य तदुपाधिकत्वव्यवहारोऽपि।

नैतावताऽज्ञानोपाधिपरित्यागः अन्तःकरणोपाधिपरिच्छिन्नस्यैव चैतन्यस्य जीवत्वे योगिनः कायव्यूहाधिष्ठानत्वानुपपत्तेः। न च योगप्रभावात् योगिनोऽन्तःकरणं कायव्यूहाभिव्याप्तियोग्यं वैपुल्यं प्राप्नोतीति तदवच्छिन्नस्य कायव्यूहाधिष्ठानत्वं युज्यत इति वाच्यम्?

---

व्यक्तिस्थानमिति अविद्याप्रतिबिम्बचैतन्यरूपस्य सुषुप्तिसाधारणस्य प्रमातृत्वकर्त्तृत्वभोक्तृत्वादिविशेषरूपेण या अभिव्यक्तिः उपलब्धिस्तस्याः स्थानमुपाधिरित्यर्थः। एतदुक्तं भवति कर्त्तृत्वादिधर्माणां केवलाज्ञानपरिणामत्वाभावेन तदुपाधिमात्रात् न जीवस्य कर्त्तृत्वादिधर्मरूपविशेषलाभः किन्तु कर्त्तृत्वादिविशेषवत् अन्तःकरणतादात्म्याध्यासादेव तल्लाभ इति न तदुपाधिनिरूपणं व्यर्थमिति। अत इति अन्तःकरणस्य विशेषाभिव्यक्तिस्थानत्वाभ्युपगमादित्यर्थः। व्यवहारोऽपि इति कार्य्योपाधिरयं जीव इति श्रुतौ सूत्रभाष्यादिषु चेति शेषः।

विभेदजनके ज्ञाने नाशमात्यन्तिकं गते।<br>
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥

इति विष्णुपुराणवचने जीवस्य अज्ञानोपाधिकत्वव्यवहारवत् इति अपेरर्थः।

ननु कार्य्योपाधिरयं जीव इति श्रुतिबलात् अज्ञानोपाधिपरित्याग उचितः कार्य्योपाधिकत्वविशेषणस्य अनर-

प्रदीपवदावेशस्तथा हि दर्शयति [ व्या० सू० अ० ४ पा० ४ सू० १५ ] इति शास्त्रो-

---

णोपाधिकत्वव्यावर्त्तकत्वादिति आशङ्का स्मृतिविरोधात् न तस्य कारणोपाधिव्यावर्त्तकत्वमुपेयते इत्याशयेन आह नैतावतेति। श्रुतौ कार्य्योपाधिकत्वविशेषणमात्रेण इत्यर्थः। ननु श्रुतिविरोधे स्मृतेरेव अन्यथानयनमुचितं तन्नयन-प्रकारः च इत्थं स्मृतौ अज्ञानपदं तत्कार्य्यान्तःकरणपरं जीवो-पाध्यान्तःकरणस्य नानात्वेऽपि अज्ञान इति एकवचनं जात्यभि-प्रायं तथा च अन्तःकरणावच्छिन्न आत्मा जीवस्तदनवच्छिन्न आत्मा ईश्वर इति जीवब्रह्मविभागप्रयोजकमन्तःकरणमिति स्मृत्यर्थो भविष्यतीति इमाम् आशङ्कां निवर्त्तयितुं कार्य्योपा-पाधिमात्रस्य जीवत्वोपाधित्वं निराकरोति अन्तःकरणोपाधि-परिच्छिन्नस्यैव इति। न अज्ञानोपाधिकस्य इति एवकारार्थः। अनुपपत्तेरिति कायव्यूहाधिष्ठानत्वं हि युगपदनेकशरीर-नियन्तृत्वं तच्च योगिनो योगप्रभावात् निर्मितेषु सर्वशरीरेषु युगपदवस्थितस्य वक्तव्यम्। न च अन्तःकरणावच्छिन्नचैतन्य-रूपस्य योगिनः तत् सम्भवति तस्य परिच्छिन्नत्वात् अज्ञानस्य जीवोपाधित्वे तु तत् सम्भवति तस्य व्यापकत्वेन तदुपाधिकस्य योगिजीवस्य युगपत् सर्वशरीरेषु सन्निधानोपपत्तेः तथा च श्रुत्यपेक्षया स्मृते दुर्बलत्वेऽपि कायव्यूहाधिष्ठानत्वानुपपत्ति-सहितस्मृतेर्दुर्बलत्वात् तदनुरोधेन कार्य्योपाधिरयं जीव इति श्रुतौ कार्य्योपाधिपदं स्वरूपकथनमात्रपरं न कारणोपाधि-व्यावर्त्तकविशेषणपरमिति भावः। वैपुल्यमिति व्यापकत्व-मित्यर्थः। अधिष्ठानत्वमिति प्रेरकत्वमित्यर्थः। प्रदीपवदिति।

प्राप्त्याधिकरणभाष्यादिषु कायव्यूहे प्रतिदेह-
मन्तःकरणस्य चक्षुरादिवच्छिन्नस्यैव योगप्रभा-

---

यथा एकस्य प्रदीपस्य अनेकवर्त्तिषु आवेशः तथा योगिनो योगप्रभावात् अनेकेषु एकदा आवेशः यद्यपि प्रदीपस्य वर्त्त्याविष्टदीपानां च भेदोऽस्ति योगिनस्तु सर्वदेहेषु ऐक्यमिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमस्ति तथापि दीपत्वजात्यभेदं व्यक्तिषु आरोप्य तयोः सङ्गतिरवगन्तव्या। तथाहि दर्शयति श्रुतिरेकस्य योगिनोऽनेकधा भावं स एकधा भवति त्रिधा भवति पञ्चधा सप्तधेत्यादिका न योगिनो युगपदेकशरीरेषु अवस्थानमन्तरेण श्रुतिसिद्धानेकधाभाव उपपद्यत इति सूत्रार्थः। सृष्टेरुपवर्णनादिति। तथाच एकस्यैव अन्तःकरणस्य कायव्यूहाभिव्यक्तियोग्यवैपुल्याभ्युपगमे भाष्यादिविरोध इति भावः। अत्र यद्यपि योगिनो निजसिद्धान्तःकरणमेव योगप्रभावात् वैपुल्यं प्राप्य स्वावच्छिन्नचैतन्यरूपस्य योगिनः कायव्यूहाधिष्ठानभोगादिकं घटयति इत्येव भाष्यादीनां तात्पर्य्यं वक्तुमुचितं न तु यथाश्रुतनानान्तःकरणसर्गे आगन्तुकानेकान्तःकरणाभ्युपगमे असत्कार्य्यवादापातात् कल्पनागौरवाच्च हिरण्यगर्भादीनां योगप्रभावादेव अखण्डव्यापि-समष्ट्यन्तःकरणाभ्युपगमाच्च न हि हिरण्यगर्भादीनां पूर्वजन्मनि यजमानावस्थायां तदीयान्तःकरणानां व्यापित्वे प्रमाणमस्ति तथा सति अस्मदाद्यन्तःकरणानामपि व्यापित्वापत्तेः भाष्यादिषु अन्तःकरणसृष्टिवर्णनस्य मतान्तराभिप्रायत्वोपपत्तेश्च एवैव च योगशास्त्रेषु योगिनामनेकशरीरयोग-प्रक्रिया इति भाष्य एव मतान्तरोपदर्शनात् योगशास्त्रेषु एव

वात् सृष्टेरुपवर्णनात्। प्रतिबिम्बे बिम्बाद्भेद-मात्रस्य अध्यस्तत्वेन स्वरूपेण तस्य सत्यत्वात् न प्रतिबिम्बरूपजीवस्य मुक्त्यन्वयासम्भव इति न तदतिरेकेण मुक्त्यन्वयाय अवच्छिन्नरूपजीवान्तरं

---

च एषा प्रक्रिया इति एवकारान्वयोपपत्तेस्तथापि शास्त्रोपान्त्या-धिकरण यथाश्रुतभाष्याद्यभिप्रायेण इदं दूषणमिति मन्तव्यम्। वस्तुतस्तु अन्तःकरणावच्छिन्नचैतन्यं जीवस्तदनवच्छिन्नमीश्वर इति पक्षे अण्डान्तर्गतचैतन्यस्य सर्वात्मना तदवच्छेदादनवच्छि-न्नचैतन्यरूपेश्वरस्य अण्डात् बहिरेव सत्त्वं स्यादिति वक्ष्यमाण-दूषणे तात्पर्य्यं यदि च अनवच्छिन्नचैतन्यमीश्वर इत्यनेन निरुपाधिकं चैतन्यमीश्वर इति विवक्षितं तदा तस्य सर्वत्र सत्त्वेन अण्डाद्बहिरेव सत्त्वापत्तिदोषाभावोऽपि कारणोपाधि-रीश्वर इति श्रुतिविरोधदोषो दुर्वारस्तस्मात् कारणोपाधिक-त्वमीश्वरवज्जीवस्य अभ्युपगन्तव्यं स्मृत्यनुसारादिति स्थितम्। यस्तु चित्रदीपे प्रतिबिम्बचैतन्यरूपजीवस्य स्वरूपतो मिथ्या-त्वात् तस्य मुक्त्यन्वयायोग इति तदन्वययोग्यं कूटस्थनामकं जीवेश्वरविलक्षणं किञ्चिच्चैतन्यं परिकल्प्य चिच्चातुर्विध्यं दर्शितं यदपि च दृक्दृश्यविवेके प्रतिबिम्बमिथ्यात्वमेव आश्रित्य मुक्त्यन्वयावच्छिन्नचैतन्यस्य पारमार्थिकजीवत्वं क-ल्पितं तदुभयमपि युक्तं बिम्बप्रतिबिम्बयोर्भेदमात्रस्य कल्पित-तया स्वतस्तयोर्भेदे मानाभावादित्याशयेनाह, प्रतिबिम्बे बिम्बादिति। स्वरूपस्य कल्पितत्वव्यवच्छेदो मात्रशब्दार्थः। न तदतिरेकेण इति प्रतिबिम्बजीवातिरेकेण जीवान्तरं वा कूटस्थ-शब्दितं चैतन्यान्तरं वा न कल्पनीयमिति सम्बन्धः। एवं

वा प्रतिबिम्बजीवातिरिक्तं जीवेश्वरविलक्षणं कूटस्थशब्दितं चैतन्यान्तरं वा कल्पनीयम्। अविनाशी वा अरे अयमात्मेति श्रवणं जीवस्य

---

व्यावहारिकजीवातिरेकेण प्रातिभासिकजीवोऽपि न कल्पनीयः प्रमाणाभावात् न च व्यावहारिकजीवस्य स्वप्नकाले आवृतत्वेन तस्य तदा व्यवहर्तृत्वानुपपत्तिस्तत्कल्पने प्रमाणमिति वाच्यम्? जीवचैतन्ये आवरणाभावस्य साक्षिनिरूपणावसरे वक्ष्यमाणत्वेन जाग्रज्जीवस्यैव स्वप्नेऽपि व्यवहारकर्तृत्वोपपत्तेः योऽहं स्वप्ने श्रीकृष्णमद्राक्षं स एव इदानीं जाग्रत पुनस्तं स्मरामीति जाग्रत्स्वप्नद्रष्ट्रोरभेदप्रत्यभिज्ञानाच्च संस्कारोद्बोधाभावादिकारणवशादेव कदाचित् ब्राह्मणत्वाद्यप्रतीत्युपपत्तेश्च न च स्वप्नप्रपञ्चेन सह तद्द्रष्टुर्बाधदर्शनं प्रातिभासिकजीवकल्पने प्रमाणमिति वाच्यम्? प्रबोधकाले नाहं क्षत्रिय इत्यादिरूपबाधकप्रत्ययस्य आत्मनि आरोपितक्षत्रियत्वादिमात्रबाधकत्वेन स्वप्नद्रष्टुर्बाधकत्वाभावात् अन्यथा पूर्वोदाहृतद्रष्ट्रैक्यप्रत्यभिज्ञानविरोधात् तस्मात् प्रातिभासिकजीवकल्पनमपि प्रामाणिकं न भवतीति बोध्यम्। यदपि चित्त्रातुर्विध्यवादिभिरुक्तं तान्येव अनुविनश्यति अविनाशी वा अरेऽयमात्मेति वाक्याभ्यां प्रकृते प्रज्ञानघनात्मनि विनाशित्वाविनाशित्वरूपविरुद्धधर्मद्वयप्रतिपादनात् तदुपपत्तये विनाशिप्रतिबिम्बव्यतिरेकेण विनाशरहितकूटस्थचैतन्यं सिध्यतीति तदपि मन्दम् अविद्याप्रतिबिम्बचैतन्यरूपे जीव एव प्रतिबिम्बत्वरूपविशेषणांशनाशाभिप्रायेण विनाशवचनस्य विशेष्यचैतन्यांशाभिप्रायेण विनाशाभावप्रतिपादकवचनस्य च उपपत्तौ धर्मिभेद-

तदुपाधिनिवृत्तौ प्रतिबिम्बभावापगमेऽपि स्वरूपं न विनश्यतीत्येतत्परं न तदतिरिक्तकूटस्थनामचैतन्यान्तरपरम्। जीवोपाधिना अन्तःकरणादिना अवच्छिन्नं चैतन्यं बिम्बभूत ईश्वर एव। यो विज्ञाने तिष्ठन्नित्यादिश्रुत्या ईश्वरस्यैव जीवसन्निधानेन तदन्तर्यामिभावेन विकारान्तरावस्थानश्रवणादिति ॥४४॥

---

कल्पनस्य गौरवपराहतत्वादित्याशयेनाह, अविनाशो वेति। ननु अविद्याप्रतिबिम्बो जीवस्तद्बिम्ब ईश्वरः बिम्बप्रतिबिम्बानुगतचैतन्यं शुद्धचैतन्यमिति विवरणपक्षे देहद्वयोपादानतया तदवच्छिन्नस्य पारमार्थिकजीवनामकतया कूटस्थनामकतया च चिद्धातुर्विध्यवादिभिरङ्गीकृतस्य चैतन्यस्य कुत्रान्तर्भाव उपेयते? न तावज्जीवे शुद्धचैतन्ये वा अन्तर्भावः सम्भवति तयोरुपादानत्वाभावेन देहद्वयोपादानकूटस्थस्य तयोरन्तर्भावायोगात् नापि बिम्बभूतेश्वरे तस्य अन्तर्भावः सम्भवति ईश्वरस्य जीवतदुपाध्यन्तःकरणादिसन्निहिततया देहादिविकारेषु अवस्थाने प्रमाणाभावात् कूटस्थनामकचैतन्यस्य च कूटस्थवादिभिस्तथात्वाङ्गीकारादित्यत आह जीवोपाधिनेति। अविद्याप्रतिबिम्बरूपजीवस्य विशेषाभिव्यक्तिप्रयोजकोपाधिना इत्यर्थः। प्राणचक्षुरादिकमादिपदार्थः। ईश्वर एवेति। न शुद्धं ब्रह्म नापि प्रतिबिम्बरूपजीव इति एवकारार्थः। चेतनाचेतनात्मकनिखिलप्रपञ्चोपादानत्वप्रतिपादकश्रुतिस्मृतिसहस्रस्य बिम्बभूतेश्वरस्य देहाद्युपादानतया देहादिविकारेषु अन्तरवस्थाने प्रमाणत्वात्

अन्ये तु रूपानुपहितप्रतिबिम्बो न युक्तः सुतरां

---

कूटस्थस्य च ततो भेदे मानाभावादिति भावः। न केवलमुपादानत्वप्रतिपादकशास्त्रमेव तत्र प्रमाणं किन्तु चेतनाचेतनात्मकसकलजगन्नियन्तृत्वप्रतिपादकमन्तर्यामिब्राह्मणमपि बिम्बभूतेश्वरस्य विकारेषु अन्तरवस्थाने प्रमाणमित्याह यो विज्ञाने तिष्ठन्नित्यादिश्रुत्येति। विज्ञानात् अन्तरोऽयं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरोपगमयतीत्यादि वाक्यमादिपदेन गृह्यते। अत्र विज्ञानपदं जीवपरं बृहदारण्यके माध्यन्दिनपाठे य आत्मनि तिष्ठन्निति पर्य्यायस्थाने काण्वपाठे योविज्ञाने तिष्ठन्नितिपर्य्यायाम्नानदर्शनेन काण्वपाठे विज्ञानपदस्य आत्मपदसमानार्थकत्वावगमात् आत्मपदं च अत्र जीवपरं तस्य तत्र रूढ़त्वादात्मपदस्य जीवेश्वरसाधारणत्वेऽपि नियम्यत्वलिङ्गेन प्रकृते जीवपरत्वावश्यम्भावादिति भावः। जीवसन्निधानेन इति ईश्वरस्य जीवादिनियन्तृत्वं व्यवहितराजादेः प्रजानियन्तृत्ववत् न भवति किन्तु नियम्यजीवादिसन्निधानेनैव य आत्मनि तिष्ठति सन्निधाने प्रतीतेरित्यर्थः। अन्तर्यामि ब्राह्मणवाक्यग्रहणं स्मृतेरपि उपलक्षणं तथाच भगवद्गीता स्मृतिः।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढ़ानि मायया॥

इति। भूतानि प्राणिनः यन्त्रं शरीरं तदारूढ़त्वं तत्राहंममाभिमानवत्त्वं भ्रामयन्निति कर्मानुसारेण प्रवर्त्तयन्निवर्त्तयंश्चेत्यर्थः। ईश्वरस्य नियन्तृत्वं मायोपाधिकमेव न वास्तवमित्याशयेन मायया इति उक्तम्॥ ४४॥

एवं चैतन्यस्य प्रतिबिम्बमुपगच्छतां मतभेदेन जीवे-

नीरूपे गगनप्रतिबिम्बोदाहरणमप्ययुक्तं गगना-
भोगव्यापिनि सवितृकरमण्डले सलिले प्रति-
बिम्बिते गगनप्रतिबिम्बत्वस्य व्यवहारस्य भ्रममात्र-

---

स्वरविभागो दर्शितः इदानीं तमनभ्युपगन्तृणां मतेन जीवादिस्वरूपं दर्शयितुं चैतन्यस्य प्रतिबिम्बं निराकरोति अन्येत्विति। रूपानुपहितेति लोके रूपवत एव चन्द्रादेः प्रतिबिम्बो दृश्यते न रूपरहितस्य वायूदेरिति व्याप्तिदर्शनात् नीरूपचैतन्यस्य प्रतिबिम्बासम्भव इत्यर्थः। इतश्च चैतन्यस्य न प्रतिबिम्बसम्भव इत्याह सुतरां नीरूप इति। अविद्यान्तःकरणादौ इति शेषः। रूपवत एव द्रव्यस्य प्रतिबिम्ब इति नियमस्य वक्ष्यमाणरीत्या गगने व्यभिचारसत्त्वेऽपि रूपवत्येवोपाधौ प्रतिबिम्ब इति नियमस्य न क्वचिदपि व्यभिचार इति मत्वा सुतराम् इत्युक्तम्। ननु नीरूपगगनस्य कूपजलतड़ाकादौ प्रतिबिम्बानुभवान्नीरूपद्रव्यस्य प्रतिबिम्बाभाव इति नियमो नास्ति इत्याशङ्क्य आह गगनेति। कूपजलादौ तावदालोकप्रतिबिम्बः संप्रतिपन्नस्तस्मिन् गगनप्रतिबिम्बत्वभ्रमो लोकानामिति कल्प्यते न तु वस्तुतः तत्र गगनप्रतिबिम्बोऽस्ति उक्तनियमविरोधात् भ्रमप्रयोजकं दोषमाह गगनाभोगव्यापिनि इति। आभोगो विस्तारः गगनोपरिभागं व्याप्य वर्त्तमानस्य सवितृकिरणमण्डलादेर्जले प्रतिबिम्बदर्शनात् तदनुगतगगनस्य जले प्रतिबिम्बभ्रम इत्यर्थः। ननु यथा बहिः नीलं नभो विशालं नभः इत्यादिरूपेण गगनमनुभूयते एवं कूपतड़ाकादिजलेऽपि नीलं नभो विशालं नभ इत्यादिरूपोऽनुभवः सर्वसंप्रतिपन्नः। न च कूपजलादौ प्रतीयमानवैशाल्यादि-

मूलकत्वात्। ध्वनौ वर्णप्रतिविम्बत्ववादेऽपि ऽ

युक्तं नभो वस्तुतोऽस्ति अतः प्रतिविम्बरूपमेव तत्र दृश्यमानं नभ इति वक्तव्यम्। अतश्च कथं गगनप्रतिविम्बापलापः क्रियते न च नीरूपस्य प्रतिविम्बासम्भव इति वाच्यम्? रूपसंख्यापरिणामादेर्नीरूपस्य अपि प्रतिविम्बदर्शनात्। न च द्रव्यत्वमपि विशेषणं विवक्षितमिति वाच्यम्? सिद्धान्ते द्रव्यगुणादिपरिभाषाया अनभ्युपगमात् तदभ्युपगमेऽपि गगनप्रतिविम्बानुभवानुरोधेन रूपोपहितद्रव्यस्य प्रतिविम्बः तदुपहितत्वं च वस्तुनः स्वगतरूपेण स्वस्मिन् न आरोपितरूपेण वेति नियमकल्पनोपपत्तेश्च तथा च वह्निरारोपितनैल्यादिविशिष्टगगनस्य जलादौ प्रतिविम्बाभ्युपगमेन किञ्चिद्बाधकं न च जलादौ संप्रतिपन्नालोकप्रतिविम्बातिरिक्तगगनप्रतिविम्बाभ्युपगमे गौरवमेव बाधकमिति वाच्यम्? आलोकप्रतिविम्बे गगनप्रतिविम्बत्वभ्रमाभ्युपगमेऽपि तद्भ्रमविषयस्य आलोकप्रतिविम्बाधिकरणकस्य शुक्तिरूप्यादिवदनिर्वचनीयस्य गगनप्रतिविम्बत्वस्य अभ्युपगन्तव्यत्वेन गौरवस्य तुल्यत्वात् अनुभवानुसारिगौरवस्य अदोषत्वाच्च तस्माद्रूपवत एव द्रव्यस्य प्रतिविम्ब इति नियमस्य गगनप्रतिविम्बस्थले व्यभिचारो दुर्वार इति चेत्? सत्यं तथापि चैतन्यस्य प्रतिविम्बो न सम्भवति नीरूपान्तःकरणादेः प्रतिविम्बोपाधित्वासम्भवादिति अत्रैव तात्पर्यम्। ननु नीरूपेऽपि ध्वनौ नीरूपद्रव्यात्मकवर्णानां प्रतिविम्बोऽस्तीति वक्तव्यम्? तथा सत्येव दर्पणश्यामतायाः दर्पणगतप्रतिविम्बद्वारेण विम्बरूप इव ध्वनिगतानां तारत्वादीनां ध्वनिगतवर्णप्रतिविम्बद्वारा वर्णेषु आरोपः सम्भवति नान्यथा एवं नीरूपान्तःकरणादौ नीरूपात्मनः प्रतिविम्बसम्भव इत्याशङ्क्य दृष्टान्तं विघ-

प्रयुक्तः व्यञ्जकतया सन्निधानमात्रेण ध्वनिधर्माणा-मुदात्तादिस्वराणां वर्णेषु आरोपोपपत्तेर्ध्वनेर्वर्णप्र-तिबिम्बोपाधित्वकल्पनाया निष्प्रमाणकत्वात्। प्रतिध्वनिरपि न पूर्वशब्दप्रतिबिम्बः पञ्चीकरण-प्रक्रियया पटहपयोनिधिप्रभृतिशब्दानां क्षिति-सलिलादिशब्दत्वेन प्रतिध्वनेरेव आकाशशब्दत्वेन

---

टयति ध्वनाविति। ननु पटहाख्यवाद्यविशेषादिशब्दोत्पत्ति-काले पाषाणविशेषादिसन्निहिताकाशप्रदेशेषु प्रतिध्वनिः श्रूयते सः पूर्वशब्दप्रतिबिम्ब एव न मुख्यध्वनिस्तदुत्पत्तौ कार-णाभावात् तथा च यथा नीरूपाकाशप्रदेशेषु नीरूपध्वनेः प्रति-ध्वनिरूपः प्रतिबिम्बः तथा प्रकृते किं न स्यादिति नेत्याह प्रतिध्वनिरपि इति। न च प्रतिध्वनेरुत्पादकाभावः शङ्कनीयः ? आकाशस्यैव उपादानस्य सत्त्वात् पूर्वशब्दस्य निमित्तकारणस्य सत्त्वाच्च। न च प्रतिध्वनेः प्रतिबिम्बत्वेऽपि आकाशगुणत्वं किं न स्यादिति वाच्यम् ? बिम्बप्रतिबिम्बयोर्भेदपक्षे प्रतिध्वनिरूप-प्रतिबिम्बस्य प्रातिभासिकत्वेन व्यावहारिकगुणत्वानुपपत्ते-स्तदभेदपक्षे बिम्बभूतपृथिव्यादिशब्दापेक्षया प्रतिध्वनिरूप-प्रतिबिम्बस्य भेदाभावेन तस्याकाशगुणत्वानुपपत्तेरिति भावः। ननु वर्णरूपप्रतिशब्दस्य वर्णप्रतिबिम्बत्वमवश्यं वाच्यं न तु साक्षाद्वर्णरूपत्वं प्रतिवर्णाभिव्यक्तिस्थले वर्णव्यञ्जककण्ठताल्वा-देरभावात् तथाच यथा तत्र पर्वतगुहादिसन्निहितेषु नीरूपेषु आकाशप्रदेशेषु नीरूपाणां वर्णानां प्रतिबिम्बस्तथा प्रकृते किं

तस्य अन्यशब्दप्रतिबिम्बत्वाऽयोगात्। वर्णरूपप्रतिशब्दोऽपि न पूर्ववर्णप्रतिबिम्बः वर्णाभिव्यञ्जकध्वनिनिमित्तकप्रतिध्वनेर्मूलध्वनिवदेव वर्णाभिव्यञ्जकत्वेन उपपत्तेः। तस्मात् घटाकाशवत् अन्तःकरणावच्छिन्नं चैतन्यं जीवः तदनवच्छिन्नमीश्वरः। न चैवमखण्डान्तर्वर्तिनश्चैतन्यस्य तत्तदन्तःकरणोपाधिभिः सर्वात्मना जीवभावेन अवच्छेदात्तदवच्छेदरहितचैतन्यरूपस्य ईश्वरस्य अखण्डाद् बहिरेव सत्त्वं स्यादिति यो विज्ञाने तिष्ठन्नित्यादौ अन्तर्यामिभावेन विकारान्तरावस्थानश्रवणं विरुध्यते। प्रतिबिम्बपक्षे तु जलगत-

---

न स्यादिति नेत्याह वर्णरूपप्रतिशब्दोऽपि इति। प्रतिध्वनिर्वादिष्वपि शब्दार्थः। कण्ठताल्वादिस्थलेऽपि न कण्ठादेः वर्णव्यञ्जकत्वं किन्तु कण्ठताल्वादिषु अभिघातजन्यध्वनेस्तथा च यथा मूलध्वनिः वर्णव्यञ्जकः एवं प्रतिवर्णाभिव्यक्तिस्थले उत्पन्नः प्रतिध्वनिरेव तत्र वर्णानां व्यञ्जकः सम्भवतीति न प्रतिवर्णानां प्रतिबिम्बरूपत्वमभ्युपगन्तव्यमित्यर्थः। चैतन्यप्रतिबिम्बनिराकरणमुपसंहरति तस्मादिति। चैतन्यप्रतिबिम्बासम्भवादित्यर्थः। अन्तःकरणानवच्छिन्नचैतन्यस्य ईश्वरत्वे अन्तःकरणादिषु सर्वविकारेषु परमेश्वरस्य अन्तर्यामिभावेन अवस्थानप्रतिपादकश्रुतिविरोधं शङ्कते न च एवमिति। विरुद्धेतेति। तथाच श्रुतिविरोधपरिहाराय प्रतिबिम्बपक्ष एव स्वीकर्त्तव्य इति भावः। प्रति-

स्वाभाविकाकाशे सत्येव प्रतिविम्बाकाशदर्शनात् एकत्र द्विगुणीकृत्य वृत्तिरुपपद्यते इति वाच्यम्। यतः प्रतिविम्बपक्षेऽपि उपाधौ अनन्तर्गतस्य एव चैतन्यस्य तत्र प्रतिविम्बो वाच्यः नतु जलचन्द्र-न्यायेन कृत्स्नप्रतिविम्बः तदन्तर्गतभागस्य तत्र प्रतिविम्बाऽसम्भवात्। न हि मेघावच्छिन्नस्य आकाशस्य आलोकस्य वा जले प्रतिविम्ववत् जलान्तर्गतस्यापि तत्र प्रतिविम्वो दृश्यते। न वा मुखादीनां वहिः स्थितिसमय इव जलान्तर्निम-

---

विम्बपक्षाश्रयणेऽपि श्रुतिविरोधमाशङ्ख्याह प्रतिविम्बपक्षे तु इति। तु शब्दसूचितं विशेषमेव दर्शयति जलगतेति। द्विगुणीकृत्येति प्रतिविम्बरूपजीवभावेन तत्तदुपाध्यन्तर्यामि भावेन च इत्यर्थः। प्रतिविम्बपक्षेति अन्तर्यामिब्राह्मण-विरोधो दुष्परिहर इत्याह यत इति यत ईश्वरे अन्तर्यामि-ब्राह्मणाञ्जस्याभावः तुल्योऽतो न च वाच्यमिति सम्बन्धः। तत्रेति। अन्तःकरणादिवित्यर्थः। ननु यथा जले कृत्स्नस्य चन्द्रमण्डलस्य प्रतिविम्बस्तथा कृत्स्नस्य एव चैतन्यस्य अन्तः-करणादौ प्रतिविम्वोऽस्तु न तु उपाध्यनन्तर्गतचैतन्यभागस्य अण्डाद्वहिर्भूतस्य तथा च विम्बभूतेश्वरस्य अण्डान्तरेऽपि सत्त्वात् न अन्तर्यामिब्राह्मणविरोधतौल्यमिति न इत्याह न तु इति। असम्भवमेव दर्शयति न हि इति। आलोकस्य चेति वहिःस्थितस्य इति शेषः। जलान्तर्गतस्य अपि इति आकाशादे-

ऽजनेऽपि प्रतिविम्बोऽस्ति। अतो जलप्रतिविम्बं प्रति मेघाकाशादेरिवान्तःकरणाद्युपाधिप्रतिविम्बं प्रति तदन्तर्गतस्यैव विम्बत्वं स्यादिति विम्बभूतस्य विकारान्तरवस्थानायोगादीश्वरे अन्तर्यामिब्राह्मणाम्नायाभावस्तुल्यः। एतेन अवच्छिन्नस्य जीवत्वे कर्तृभोक्तृसमययोस्तत्र तत्र अन्तःकरणावच्छेद्यचैतन्यप्रदेशस्य भिन्नत्वात् कृतहानाकृताभ्यागम-

---

रित्यनुषङ्गः। तत्रेति जलादावित्यर्थः। उदाहरणान्तरमाह न चेति। ततः किं तत्राह अत इति। उपाध्यन्तर्गतभागस्य तत्र प्रतिविम्बासम्भवादित्यर्थः। तदन्तर्गतस्य एव इति चैतन्यस्य इति शेषः। दृष्टानुरोधित्वात् कल्पनाया इति भावः। विकारान्तरिति अण्डान्तर्गतचैतन्यभागस्य उपाध्यन्तर्गतत्वात् तद्बहिःस्थितस्य एव चैतन्यस्य विम्बत्वं वाच्यमिति विम्बभूतेश्वरोऽपि अण्डाद्बहिरेव स्यादित्यर्थः। यदि च प्रतिविम्बपक्षे ईश्वरस्य सर्वान्तर्यामित्वप्रतिपादकश्रुत्याद्यनुसारेण लोकदृष्टिमनादृत्य कृत्स्नचैतन्यप्रतिविम्बमुपेत्य अन्तर्यामिब्राह्मणाम्नायस्यमुपपाद्यते तदा अनवच्छिन्नचैतन्यमीश्वर इति पक्षेऽपि अन्तःकरणाभावावच्छिन्नचैतन्यमीश्वर इति विवक्षितम् अन्तःकरणस्य कल्पितत्वेन चैतन्ये अन्तःकरणाद्यवच्छेदेन अपि अन्तःकरणाभावस्य वास्तवस्य सत्त्वेन तदवच्छिन्नचैतन्यरूपेश्वरस्य सर्वविकारान्तरवस्थानसम्भवात् तत्प्रतिपादकब्राह्मणाम्नायस्यं तुल्यमिति समाधानं बोध्यम्। अभावस्य अपि ईश्वरोपाधित्वमुक्तं कृष्णदीपे अन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते।

उपाधिर्जीवभावस्य ब्रह्मतायाश्च नान्यथा।
यथाविधिरुपाधिः स्यात् प्रतिषेधस्तथा न किम्॥
सुवर्णलोहभेदेन शृङ्खलात्वं न भिद्यते।
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च॥
वेदान्तानां प्रवृत्तिः स्यात् द्विधेत्याचार्य्यभाषितम्॥

इति श्लोकानामयमर्थः भिद्यते तस्माद्धित्वं जीवत्वोपाधिः तद्राहित्यं ब्रह्मताया उपाधिरिति जीवेश्वरोपाधिभेद इत्यर्थः। नान्यथा न प्रकारान्तरेण जीवभावाद्युपाधिरित्यर्थः। ननु भावस्यैव उपाधित्वं न अभावस्य इत्याशङ्क्य विनिगमनामाह यथेति। भाववदभावस्य व्यावर्त्तकोपाधित्वे विशेषो नास्ति इति अत्र दृष्टान्तमाह सुवर्णेति। शृङ्खलात्वं नाम यथेष्टसञ्चारव्यावर्त्तकत्वम्। ननु भावरूपान्तःकरणादेः द्रष्टृत्वादिरूपेण जीवोपलब्धिसाधनत्वात् तस्य जीवोपाधित्वं युक्तमित्याशङ्क्य तर्हि अन्तःकरणनिषेधस्यापि ब्रह्मोपलब्धिसाधनत्वात् तस्य ब्रह्मोपाधित्वं युक्तमित्यभिप्रेत्य तत्तदुपाधिनिषेधस्य ब्रह्मोपलब्धिसाधनत्वं भाष्यकारैरुक्तमित्याह अतद्व्यावृत्तिरूपेणेति। अत्र तच्छब्देन ब्रह्म उच्यते तत् न भवति इति अतदन्तःकरणादिरूपमुपाधिजातं तस्मात्ततो व्यावृत्तिर्निषेधः। तद्रूपेण तद्बोधनद्वारेण इत्यर्थः। साक्षाद्विधिमुखेन च बुद्धेः साक्षी मनसः साक्षी सर्वस्य साक्षी पश्यन् शृण्वन् मन्वान इत्यादिप्रकारेण च प्रवृत्तिर्बोधकता ब्रह्मणि तेषां प्रामाण्यमिति तथा च उक्तरीत्या प्रतिबिम्बावच्छेदपक्षयोरुभयोरपि अन्तर्यामिब्राह्मणाञ्जस्याभावाञ्जस्ययोः तुल्यत्वे सति सुतरां नीरूप इत्यादिना चैतन्यप्रतिबिम्बासम्भवस्य दर्शितत्वात् प्रतिबिम्बपक्षं त्यक्त्वा अवच्छेदपक्ष एव आदरणीय इति भावः। एवम् अवच्छेदपक्षे दोषान्तरमपि वक्ष्यमाणदोषप्रतीत्यादिनैव

प्रसङ्ग इति निरस्तम्। प्रतिबिम्बपक्षेऽपि स्वान-न्तर्गतस्य स्वसन्निहितस्य चैतन्यप्रदेशस्य अन्तः-करणे प्रतिबिम्बस्य वक्तव्यतया तत्र तत्र अन्तः-करणस्य गमने बिम्बभेदात् प्रतिबिम्बस्यापि भेदावश्यम्भावेन दोषतौल्यात्। न च अन्तःकरण-प्रतिबिम्बो जीव इति पक्षे दोषतौल्येऽपि अवि-द्याप्रतिबिम्बो जीवस्तस्य च तत्र तत्र गत्वरमन्तः-करणं जलाशयव्यापिनो महामेघमण्डलप्रति-बिम्बस्य तदुपरि विसृत्वरस्फीतालोक इव तत्र

---

निरस्तमित्याह एतेनेति स्वानन्तर्गतस्येति प्रागुक्तयुक्तिरत्र अनुसन्धेया स्वसन्निहितस्य इति विशेषणस्य अयमभिप्रायः यदि सर्वेषु अन्तःकरणेषु तदनन्तर्गतस्य अखण्डादहिर्विद्य-मानस्यैव चैतन्यभागस्य एकस्य प्रतिबिम्बः सम्भवेत् तदा बिम्बचैतन्यप्रदेशभेदाभावात् प्रति अन्तःकरणं बिम्बचैतन्य-प्रदेशभेदेन प्रतिबिम्बभेदापादनं न सम्भवेत् न च तथा सम्भवति व्यवहितस्य प्रतिबिम्बायोगात् किन्तु तत्र तत्र अन्तः-करणे सन्निहितस्यैव चैतन्यप्रदेशस्य बिम्बत्वं वाच्यम् ? ततश्चेह परत्र च प्रतिबिम्बभेदापादनं युक्तमिति दोषतौल्यादिति कृतहानाकृताभ्यागमप्रसङ्गदोषतौल्यादित्यर्थः। अविद्यायां चित्प्रतिबिम्ब ईश्वरः अन्तःकरणे चित्प्रतिबिम्बो जीव इति पूर्वंप्रदर्शिते संक्षेपशारीरकपक्षे दोषतौल्येऽपि विवरणादिपक्षे उक्तदोषाप्रसक्तेः तस्य उपादेयत्वं स्यादिति शङ्कते न च इति। गत्वरं गमनशीलं तदुपरीति जलाशयोपरि इत्यर्थः। विसृत्व-

विशेषाभिव्यक्तिहेतुरिति पक्षे न अयं दोषः अन्तः-करणवदविद्याया गत्यभावेन प्रतिबिम्बभेदानापत्तेरिति वाच्यम्? तथैव अवच्छेदपक्षेऽपि अविद्यावच्छिन्नो जीव इति अभ्युपगमसम्भवात्। तत्रापि एकस्य जीवस्य क्वचित् प्रदेशे कर्त्तृत्वं प्रदेशान्तरे

---

रेति। यथा तत्र तत्र जलप्रदेशेषु विस्तृतरो गमनशीलो मेघ-च्छिद्रेभ्यो: निःसृतः स्फीतालोकखण्डो महामेघमण्डलप्रति-बिम्बस्य जलाशयव्यापकस्य विशेषेण स्फुरणहेतुः तथा तत्र तत्र इह परत्र च कर्त्तृत्वभोक्तृत्वादिविशेषाभिव्यक्तिहेतुरन्तःकरणमिति पक्ष इत्यर्थः। कृतहानादिदोषाभावे हेतुमाह अन्तः-करणवदिति। यदि प्रतिबिम्बवादिना अन्तःकरणप्रतिबिम्बो जीव इति पक्षमुक्तदोषतौल्येन परित्यज्य अविद्याप्रतिबिम्बो जीव इति पक्षः स्वीक्रियते तदा अवच्छेदवादिनापि अन्तःकरणावच्छिन्नो जीव इति पक्षं कृतहानादिदोषयुक्तं त्यक्त्वा उक्तदोष-रहितमविद्यावच्छिन्नो जीव इति मतमुपादीयते इत्याह तथैवेति। जीव इति उपलक्षणं चैतत् अविद्यायाः कल्पित-त्वेन वास्तवतदभावावच्छिन्नश्चिदात्मा ईश्वर इति उपगमसम्भ-वाच्च इत्यपि द्रष्टव्यम्। एवम् अविद्याप्रतिबिम्बो जीव इति पक्षे कृतहानादिदोषाभावमुपेत्य तत् साम्यम् अविद्यावच्छि-न्नस्य जीवत्वपक्षे दर्शितम् इदानीम् अन्तःकरणावच्छेदपक्षे कृतहानादिदोषाभावं समर्थयितुम् अविद्याप्रतिबिम्बो जीव इति पक्षेऽपि कृतहानादिदोषमाशङ्क्य परिहरति तत्रापि इति। अविद्याप्रतिबिम्बो जीव इति पक्षेऽपि इत्यर्थः। क्वचित्

भोक्तृत्वमित्येवं कृतहानाकृताभ्यागमदोषापनुत्तये वस्तुतो जीवैक्यस्य शरणीकरणीयत्वेन तन्न्यायात् अन्तःकरणोपाधिपक्षेऽपि वस्तुतश्चैतन्यैक्यस्य तदवच्छेदकोपाध्यैक्यस्य च तत्र अभ्युपगमेन दोषनिराकरणसम्भवाच्च ।

न च अवच्छेदपक्षे यथा स्वयं ज्योतिरात्मा

---

प्रदेशे इति। ब्राह्मणादिशरीरगतान्तःकरणावच्छिन्नप्रदेशे इत्यर्थः। प्रदेशान्तरे इति देवादिशरीरगततदवच्छिन्नप्रदेशे इत्यर्थः। वस्तुत इति। प्रदेशभेदे सत्यपि इह परत्र च अविद्याप्रतिबिम्बरूपजीवैक्यमात्रेण कृतहानादिदोषः परिहर्त्तव्यः। प्रतिबिम्बवादिनां गत्यन्तराभावादित्यर्थः। सोऽयं परिहारप्रकारो अन्तःकरणावच्छेदपक्षेऽपि समान इत्याह तन्न्यायादिति। वस्तुत इति इह परत्र च अन्तःकरणावच्छेद्यचैतन्यप्रदेशभेदेऽपि चैतन्यस्य वस्तुत एकत्वात् न कृतहानादिदोष इत्यर्थः। ननु वास्तवचैतन्यैकमात्रस्य जीवान्तरसाधारणत्वात् अन्यकृतकर्मणा अन्यस्य भोगप्रसङ्ग इत्यत आह तदवच्छेदकेति। तत्पदं चैतन्यपरं तथा च एकान्तःकरणावच्छिन्नचैतन्यमेको जीवः अन्तःकरणान्तरावच्छिन्नचैतन्यमन्यो जीव इति स्वीकारात् न उक्तातिप्रसङ्ग इति भावः। अस्मिन् अवच्छेदपक्षे प्रागुक्तरीत्या वास्तवान्तःकरणाभावावच्छिन्नचैतन्यमीश्वरः कारणोपाधिरीश्वरः इति श्रुत्यनुरोधेन अविद्यावच्छिन्नचैतन्यं वा ईश्वर इति बोध्यम्।

अस्य पक्षस्य श्रुतिसूत्राभ्यां विरोधं शङ्कते न च अव-

विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् उपाधिना क्रियते भेदरूप देवः क्षेत्रेष्वेवमजोऽयमात्मा अत एव च उपमासूर्य्यकादिवत् [ व्या० सू० अ० ३ पा० २ सू० १८] इति श्रुतिसूत्राभ्यां

---

च्छेदपक्षे इति। यथा एको विवस्वान् पात्रभेदेन भिन्ना आपो अनुगच्छन् बहुजलपात्रेषु प्रतिबिम्बितः सन्निति यावत् बहुधा भेदरूपः क्रियते औपाधिकं नानात्वं प्रतिपद्यते एवं देवः स्वप्रकाश आत्मा स्वत एकः सन् क्षेत्रेषु उपाधिषु प्रतिबिम्बितो भेदरूपः क्रियते नानात्वं लभते इति यावत्। यथा एकस्य सूर्य्यस्य बहुषु उपाधिषु प्रतिबिम्बितत्वप्रयुक्तो भेद एवम् आत्मनोऽपि क्षेत्रेषु प्रतिबिम्बितत्वप्रयुक्तमेव नानात्वम् इह विवक्षितमिति वक्तव्यम् अन्यथा दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वापत्त्या तयोः असामञ्जस्यप्रसङ्गात् तथा च अवच्छेदपक्षः श्रुतिविरुद्ध इत्यर्थः। एवम्।

एक एव च भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

रूपं रूपं प्रतिरूपो बभूव जीवेशावाभासेन करोतीत्यादिश्रुतयोऽपि चैतन्यस्य प्रतिबिम्बगमकत्वेन द्रष्टव्याः। भूतानां ब्रह्मादिस्तम्बपर्य्यन्तानामात्मा स्वरूपभूतः परः भूते भूते इति वीप्सया सर्वे प्रतिबिम्बोपाधयो गृह्यन्ते तेषु प्रतिबिम्बिततया व्यवस्थितः सन् बहुधा दृश्यते स्वतस्तु शास्त्रादेकधा दृश्यते। रूपशब्द उपाधिपरः अत्रापि वीप्सा सर्वोपाधिसंग्रहार्था प्रतिरूपः प्रतिबिम्बः पुरुषप्रतिबिम्बे पुरुषप्रतिरूपोऽयमिति प्रयोगदर्शनात् तृतीयाध्यायगतसूत्रमुदाहरन्ति अतएवेति। यत-

विरोधः अम्बुवदग्रहणात्तु न तथात्वम् [ व्या॰ सू॰ अ॰ ३ पा॰ २ सू॰ १९ ] इत्युदाहृतसूत्रानन्तरसूत्रेण यथा सूर्य्यस्य रूपवतः प्रतिविम्बोदययोग्यं ततो विप्रकृष्टदेशं रूपवज्जलं गृह्यते नैवं सर्वंगतस्यात्मनः प्रतिविम्बोदययोग्यं किंचिदस्ति ततो विप्रकृष्टमिति प्रतिविम्बाऽसम्भवमुक्त्वा वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यात् एवम् [ व्या॰ सू॰ अ॰ ३ पा॰ २ सू॰ २० ] इति तदनन्तरसूत्रेण यथा जलप्रतिविम्बितः सूर्य्यो

---

श्चिदात्मनः स्वाभाविकत्वं नानात्वं च औपाधिकं श्रुतिषु विवक्षितम् अतएव तस्य औपाधिकनानात्वे जलादिषु प्रतिविम्बितसूर्य्यादिदृष्टान्तत्वेन श्रुतिषु उपादीयते इति सूत्रार्थः। रूपं रूपमिति श्रुतौ प्रतिरूपशब्दो न प्रतिविम्बवाचकः।

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।

इत्यादौ व्यभिचारात् अतः सूर्य्यादिप्रतिविम्बदृष्टान्तस्वारस्यादेव चैतन्यप्रतिविम्बो वक्तव्यस्तं प्रतिविम्बं स्वमेव सूत्रकृदाक्षिपति अम्बुवदिति। सूत्रदृष्टान्तभागस्य अर्थमाह यथेति। प्रतिविम्बोदययोग्यत्वम् स्वच्छत्वम् उपाध्यन्तर्गतस्य न तत्र प्रतिविम्ब इत्याशयेनाह तत इति। विम्बभूतसूर्य्यापेक्षयेत्यर्थः। दार्ष्टान्तिकभागं व्याचष्टे नैवमिति। न तथात्वं चिदात्मनः प्रतिविम्बितसूर्य्यादितुल्यत्वं नास्ति कुतः अग्रहणात् अन्तःकरणादेरात्मप्रतिविम्बोदययोग्यत्वेन अग्रहणात्। न हि अन्तःकरणम् आत्मापेक्षया विप्रकृष्टदेशवत् सर्वंगतत्वादात्मनः न अपि तदुद्भूतरूपवत् अनङ्गी-

जलवृद्धौ वर्द्धते इव जलह्रासे ह्रसतीव जलचलने चलतीवेति तस्याध्यासिकं जलानुरोधिवृद्धिह्रासादिभाक्त्वं, तथा आत्मनोऽन्तःकरणादिना अवच्छेदेन उपाध्यन्तर्भावादाध्यासिकतदनुरोधिवृद्धिह्रासादिभाक्त्वमित्येवं दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः इति स्वयं सूत्रकृतैवाव-

---

कारात् चिदात्मनोऽपि सूर्य्यादिवत् विम्बत्वयोग्यत्वेन अग्रहणाच्च तस्य नीरूपद्रव्यत्वात् तस्मात् प्रतिविम्बितसूर्य्यचिदात्मनोर्दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिरिति तुशब्दार्थः । दृष्टान्तदार्ष्टान्तिकयोः प्रतिविम्बितत्वांशेन साम्याभावेऽपि न तद्भावविरोधोऽस्तीति विवक्षितांशेन साम्यस्य तत्रापि सम्भवात् न हि तयोः सर्वसाम्यं क्वचिदपि सम्भवति तथा सति दृष्टान्तदार्ष्टान्तिकभावोच्छेदप्रसङ्गादित्यभिप्रेत्य विवक्षितांशसाम्यं सूत्रकृद्दर्शयति वृद्धिह्रासेति । तदनन्तरेत्यत्र तत्पदम् अब्रवदिति सूत्रपरं सूत्रं व्याचष्टे यथेति । आध्यासिकमिति भ्रान्तिसिद्धमित्यर्थः । तथेति । चिदात्मनो बुध्याद्यवच्छिन्नतया बुध्याद्युपाधौ अन्तर्भावात् गजादिशरीरेऽन्तःकरणवृद्धौ चिदात्मा वर्द्धते इवं मशकादिशरीरेऽन्तःकरणह्रासे ह्रसते इव तच्चलने चलते इव तद्भेदे भिन्न इव च भाति तथा च श्रुतिः ध्यायतीव लेलायतीवेति बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव तस्यां चलन्त्यामात्मा चलतीव न तु वस्तुतो ध्यायति चलतीव इत्यर्थः । एवम् अध्याससिद्धमन्तःकरणानुरोधि वृध्यादिमत्त्वम् आत्मनोऽत्र विवक्षितं साम्यमित्यर्थः । तयोरिति चैतन्यस्य प्रतिविम्बितत्वगमक-

च्छेदपक्षे तयोस्तात्पर्य्यकथनात्। घटसंवृतमाकाशं नीयमाने यथा घटे घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः अंशो नानाव्यपदेशात्[व्या॰ सू॰ अ॰२ पा॰३ सू॰४३] इति श्रुतिसूत्राभ्यामवच्छेदपक्षस्यैव परिग्राह्यत्वाच्च। तस्मात् सर्वगतस्य

---

श्रुतितन्मूलकसूत्रयोः पूर्वमुदाहृतयोरित्यर्थः। अवच्छेदपक्षे न केवलं श्रुतिसूत्रविरोधाभाव एव किन्तु श्रुतिसूत्रानुग्रहोऽप्यस्तीत्याह घटसंवृतमिति। घटसंवृतं घटावच्छिन्नमाकाशं प्रसिद्धमस्ति तच्च घटे नीयमानेऽपि न नीयते यथा अयं दृष्टान्तः तद्वत् जीवो नभोपमः नभसा तुल्यः एतदुक्तं भवति जीवस्य नभोपमशब्देन घटसंवृताकाशतुल्यत्वमभिदधता अवच्छिन्नचैतन्यरूपत्वमुक्तमिति एवं प्रवेशश्रुतिरपि चिदात्मनो बुद्ध्याद्यवच्छेदकृतमेव द्रष्टृत्वादिधर्मलाभं दर्शयति न प्रतिविम्बभावकृतं तथाहि स एष इह प्रविष्ट आनखाग्रेभ्य इत्युपक्रम्य प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मन इति पुरुषविधब्राह्मणे श्रूयते अयमर्थः सः सर्ववेदान्तेषु प्रसिद्धः एषः नामरूपव्याकर्त्तृत्वेन सन्निहितः इह कार्य्यकारणसङ्घातनखाग्रमवधीकृत्य प्रविष्टः। ननु यथा देवदत्तस्य गृहे सर्पस्य वा विले प्रवेशः प्रसिद्धः न तथा आत्मनः प्रवेशः कल्पयितुं शक्यते तस्य सर्वगतत्वात् नापि जलपात्रेषु सूर्य्यादेरिव प्रतिविम्बभावलक्षणः प्रवेशः सम्भवति तस्य तैत्तरीयकादौ प्रवेशवाक्यविचारावसरे भाष्यकारैरेव निरस्तत्वादतः कीदृशः प्रवेशः प्रविष्टपदेन विवक्षित इति जिज्ञासायां यथा जले प्रति-

बिम्बभावेन प्रविष्टस्य सूर्य्यादेस्तद्धर्म्मवत्तया उपलभ्यमानत्व-मस्ति एवमात्मनः सङ्घाते अधिष्ठानतया प्राक् सिद्धस्यैव प्राणः बुध्यादिधर्म्मवत्तया उपलभ्यमानत्वमेव प्रकृते प्रविष्टपदेन विव-क्षितं न तु मुख्यप्रवेश इति मन्वाना श्रुतिः स्वयमेव प्रविष्टपदं व्याचष्टे प्राणने च इत्यादिना प्राणन् प्राणचेष्टां प्राणोपाधिद्वारा कुर्वन् प्राणस्य प्राणमित्यादिश्रुतौ द्वितीयप्राणपदवाच्यो भवति रूपं पश्यन् रूपगोचरचाक्षुषवृत्तिमन्तःकरणतादात्म्यापत्त्या कुर्वन् चक्षुषः चक्षुरित्यादिश्रुतौ द्वितीयचक्षुः शब्दवाच्यो भवति । शृण्वन् शब्दगोचरां श्रोत्रकरणिकां वृत्तिमन्तःकरण-तादात्म्यापत्त्येव कुर्वन् श्रोत्रस्य श्रोत्रमित्यादिश्रुतौ द्वितीयश्रोत्र-शब्दवाच्यो भवति मन्वानो मननरूपां चक्षुरादिनिरपेक्षां वृत्तिं कुर्वन् मनसो मन इत्यादिश्रुतौ द्वितीयमनः शब्दवाच्यो भवति चक्षुरादिव्यापारग्रहणं कार्य्यकारणसङ्घातव्यापारमात्रस्य उप-लक्षणं सङ्घातधर्म्माणां सर्व्वेषामात्मनि उपलभ्यमानत्वात् । ननु एवमपि अवच्छेदपक्षस्य द्वितीयाध्यायगतेन आभास एव चेति सूत्रेण तद्भाष्येण च विरोधो दुर्व्वारस्तयोः चैतन्यप्रति-बिम्बस्य स्पष्टमुक्तत्वात् सूत्रार्थस्तु आभास एव जीवः परमात्मनः प्रतिबिम्ब एव न निरुपाधिकः परमात्मैव जीवः नापि न्याय-मत इव परमात्मनः सकाशादत्यन्तभिन्नः तत्त्वमस्याद्यभेद-श्रुतिविरोधात् प्रतिबिम्बस्य च वस्तुतो बिम्बाभिन्नत्वेन आभा-सत्वपक्षे उक्तश्रुतिविरोध इति च शब्दार्थ इति चेत् न, उदा-हृतसूत्रतद्भाष्ययोरुक्तप्रतिबिम्बपक्षस्य भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवदिति सूत्रोक्तसिद्धान्तवन्मतान्तरत्वोपपत्तेः । न च तथा कल्पने किं विनिगमकमिति वाच्यम् ? तृतीयाध्याये स्वयं सूत्रकृतैव न्यायपूर्व्वकं कृतस्य चैतन्यप्रतिबिम्बनिरासस्य निरासकत्वादाभाससूत्रे च जीवस्य प्रतिबिम्बत्वे उपपत्त्यादेः

अनुपन्यासाच्च भोक्त्रापत्तिसूत्रस्य अयमर्थः सर्वं खल्विदं ब्रह्मेति श्रुत्या प्रपञ्चस्य ब्रह्माभेदः प्रतिपाद्यते। अहंब्रह्मास्मीति श्रुत्या अहं शब्दार्थभूतभोक्तृवर्गस्य च ब्रह्माभेदः प्रतिपद्यते तथा च श्रुतिद्वयानुसारेण भोक्तृभोग्यप्रपञ्चयोः एकब्रह्माभेदस्वीकारे भोग्यप्रपञ्चस्य भोक्त्रापत्तेर्भोक्त्रभेदापत्तेः एवं भोक्तुरपि भोग्याभेदापत्तेः एकब्रह्माभिन्नयोस्तयोः परस्परमपि अभेदावश्यम्भावात् न च इष्टापत्तिस्तथा सत्यविभागः प्रसज्येत भोक्तृभोग्ययोर्विभागबोधक प्रत्यक्षादिविरोधः प्रसज्येतेति चेत्? उच्यते श्रुतिसिद्धं भोक्तृभोग्ययोः एकब्रह्माभिन्नत्वं तयोः प्रत्यक्षादिसिद्धं परस्परविभक्तत्वं च इति उभय लोकवत् स्यात् उपपद्यते यथा लोके एकसमुद्रविकाराणां फेनबुद्बुदतरङ्गाणाम् एकसमुद्राभिन्नत्वं परिणामानां परिणाम्यभेदस्य अनुभवसिद्धत्वात् तेषामेव फेनादीनां परस्परं भिन्नत्वं चास्ति भेदस्य अनुभवसिद्धत्वात् एवम् एकब्रह्मपरिणामयोर्भोक्तृभोग्ययोः एकब्रह्माभिन्नत्वं परस्परभिन्नत्वं च उपपद्यते इति नाद्वैतश्रुतीनां प्रत्यक्षादिविरोधप्रसक्तिरित्ययं च विरोधपरिहारो न सिद्धान्तसम्मतः कूटस्थनित्यस्य ब्रह्मणः परिणामित्वानुपगमात्। किन्तु मतान्तराभिप्रायेण इति भाष्यादिषु घण्टाघोषः तथा प्रकृतेऽपि इति संक्षेपः अंश इति जीव ईश्वरांशः कुतः नानाव्यपदेशात् य आत्मानमन्तरोऽयमवतीत्यादिश्रुतिषु नियम्यनियामकभावादीनां जीवेश्वरयोः नानात्वस्य भेदस्य व्यपदेशादिति सूत्रभागस्य अक्षरार्थः। अत्र अंशत्वं जीवचैतन्यस्य घटाकाशवत् अन्तःकरणावच्छिन्नत्वरूपं विवक्षितं न तु मुख्यमंशत्वं निरवयवस्य ब्रह्मणो मुख्यांशासम्भवादिति तदधिकरणभाष्ये स्फुटमिति भावः। अवच्छेदपक्षसमर्थनमुपसंहरति तस्मादिति। प्रतिबिम्बासम्भवात् अवच्छेदपक्षे विरोधाभावात् साधकसत्त्वात् च इत्यर्थः।

चैतन्यस्य अन्तःकरणादिना अवच्छेदोऽवश्यम्भा-
वीति आवश्यकत्वादवच्छेदो जीव इति पक्षं
रोचयन्ते।

अपरे तु न प्रतिबिम्बो नाप्यवच्छेदो जीवः

---

अवच्छेद्यचैतन्यस्य प्रतिविम्बपक्षेऽपि सम्मततया उभयसम्मति-
पन्नस्य तस्यैव जीवत्वादिकल्पनं युक्तं लाघवादित्याशयेनाह,
अवच्छेदोऽवश्यम्भावीति। अवच्छेद इति अन्तःकरणा-
वच्छिन्नो जीवः जीवग्रहणमुपलक्षणम्। अविद्यावच्छिन्न
ईश्वरः कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुतेः
जीवेशौ आभासेन करोति माया च अविद्या च स्वयमेव
भवतीति श्रुतौ च आभासपदमवच्छिन्नपरं प्रतिविम्बासम्भ-
वस्योक्तत्वात्। मायापदं च प्रथमोपात्तजीवोपाधिभूतान्तःकरण-
परं कार्य्योपाधिरयं जीव इति श्रुतेः एवं मायापदोपात्तान्तः-
करणस्य मूलप्रकृत्यात्मकत्वं च प्रकृतिविकारभावप्रयुक्तं पूर्व-
मनवच्छिन्नस्य ईश्वरत्वोक्तिस्तृप्तिदीपवचनानुसारेण अभावाव-
च्छिन्नस्य ईश्वरत्वोक्तिश्च सम्भवमात्रेण न तु तात्पर्य्यतः। कार-
णोपाधिरीश्वर इति श्रुतिविरोधात्। अनवच्छिन्नस्य ईश्वर-
त्वपक्षे तस्योपाध्यभावेन सर्वज्ञानकर्त्तृत्वादेः असम्भवाच्च।
अभावस्येश्वरोपाधित्वपक्षेऽपि समानोऽयं दोषः। माया-
विद्याव्याकृतशक्त्यक्षराकाशादिशब्दितभावरूपोपाधेरिव तस्य
सर्वज्ञत्वादिप्रयोजकत्वायोगात्। अतएव वाक्यवृत्तौ
भगवत्पादैः सर्वज्ञत्वादिप्रयोजकोपाधित्वमविद्याया दर्शितम्।
मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षण इतीति भावः।
अथ क ईश्वरः कश्च जीव इति प्रश्ने प्रतिवचनत्वेन मतान्त-

किन्तु कौन्तेयस्यैव राधेयत्ववदविकृतस्य ब्रह्मण एवाविद्यया जीवभावः व्याधकुलसम्बर्द्धितराजकुमारदृष्टान्तेन ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया विमुच्यतइति बृहदारण्यकभाष्ये प्रतिपादनात्। राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्त्तते तथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यत इति वार्त्तिकोक्तेश्च।

---

रमुत्थापयति अपरे तु इति। कः तर्हि जीव इति पृच्छति किन्तु इति। दृष्टान्तपूर्वकं ब्रह्मैव जीव इत्युत्तरमाह कौन्तेयस्यैवेति। कुन्तीकुमारस्यैव न तु तत्प्रतिबिम्बादेः इत्येवकारार्थः। राधाया अपत्यं राधेयस्तस्य भावः तत्त्वं तद्वदित्यर्थः। किन्तु अविकृतस्यैव इति सम्बन्धः। अवच्छेदप्रतिबिम्बभावरहितस्यैव इत्यर्थः। तत्र भाष्यवार्त्तिकसम्मतिं हेतुत्वेन दर्शयति व्याधेत्यादिना। यथा राजकुले जातः कर्णो जन्मप्रभृति व्याधकुल एव सम्बर्द्धितस्तज्जातीयैः सहवासादिजनितभ्रान्तिलक्षणाविद्यया स्वात्मानं राधेयं मन्यते न तु स्वतः सिद्धमपि कौन्तेयत्वमनुभवति। ततश्च कौन्तेयत्वप्रयुक्ताच्छ्रेयसः सकाशात् प्रच्युतः सर्वत्र नानाविधश्चापावसानादिलक्षणं बहुविधदुःखं प्राप्तवान्। स च कदाचित् भगवता विवस्वता कर्ण! कौन्तेयोऽसि त्वं न राधेय इत्युपदेशं कुर्वता स्मारितनिजरूपः सन् तया स्मृत्या व्याधत्वराधेयत्वादेः अविद्याकृतस्य निवृत्तौ सत्यां व्याधेयत्वराधेयत्वकृतं नानाविधदुःखं त्यक्त्वा कौन्तेयत्वस्मृतिप्रयुक्तं श्रेयः प्राप्तवान्। तथा ब्रह्मापि अनादि-

एवञ्च स्वाविद्यया जीवभावमापन्नस्यैव ब्रह्मणः प्रपञ्चकल्पकत्वादीश्वरोऽपि सह सर्वज्ञत्वादिधर्मैः स्वप्नोपलब्धदेवतावज्जीवकल्पित इति भाच्यते।

---

सिद्धया स्वाविद्यया आवृतनिजरूपं सत् जीवभावं प्राप्य स्वतः सिद्धनित्यनिरतिशयानन्दस्वरूपानुभवात् प्रच्युतं भवति ततश्च संसरति। एवं संसरत् ब्रह्म कदाचित् स्वप्नदशायामिव स्वाविद्याकल्पितेन गुरुणा शास्त्रेण च उत्पादितया स्वगोचरविद्यया जीवाभावादिप्रयोजकाविद्यानिवृत्तौ मुच्यते नित्यसिद्धनिरतिशयानन्दमनुभवति स्वरूपचैतन्येनैव इति भाष्यार्थः। अज्ञस्येति। अज्ञानावृतनिजस्वरूपस्य इत्यर्थः। तत्त्वमस्यादीति। गुरूपदिष्टतत्त्वमस्यादिवाक्यजन्यज्ञानेन अज्ञाननिवृत्तौ जीवभाव आत्मनो निवर्त्तते इत्यर्थः।

एवं जीवं निरूप्य ईश्वरं निरूपयति एवञ्चेति। भाष्यवार्त्तिकपर्य्यालोचनया प्रतिविम्बभावादिरहितस्य पूर्णब्रह्मण एव जीवत्वे सिद्धे सति इत्यर्थः। ईश्वरोऽपि सर्वज्ञत्वादिधर्मैः सह जीवकल्पित इति सम्बन्धः। यथोक्तजीवस्यैव ईश्वरकल्पकत्वे हेतुमाह स्वाविद्ययेत्यादिना। अन्यस्य कल्पकस्य अभावादिति तात्पर्य्यकमवधारणम्। जीवस्येश्वरकल्पकत्वे दृष्टान्तमाह स्वप्नेति। यथा स्वप्ने स्वप्नद्रष्टा जीव एव परां देवतां सर्वज्ञत्वादिधर्मैः सहितां कल्पयति कल्पयित्वा च तामहर्निशमुपास्ते तदुपासनया च अभ्युदयनिःश्रेयसलक्षणं फलं लभते एवं जागरणेऽपि इति दृष्टान्तादेः अभिप्रायः।

[ अथ जीवैकनानात्वविचारः । ]

अथायं जीव एक उत अनेकः अनुपदोक्तपक्षावलम्बिनः केचिदाहुः। एको जीवस्तेन च एकमेव शरीरं सजीवम् अन्यानि स्वप्नदृष्टशरीराणीव निर्जीवानि तदज्ञानकल्पितं सर्वं जगत् तस्य स्वप्नदर्शनवत् यावदविद्यं सर्वो व्यवहारः। बद्धमुक्तव्यवस्थापि नास्ति जीवस्य एकत्वात्।

---

जीवेश्वरनिरूपणप्रसङ्गेन विचारान्तरमारभते अथेति अनुपदोक्तेति। ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यत इत्यादिग्रन्थोक्तेरित्यर्थः। एक इति। ब्रह्मण एकत्वात् तत्र च अवच्छेदप्रतिबिम्बभावयोरनङ्गीकाराच्च इत्यर्थः। ननु जीवैक्ये तेन एकमेव शरीरं सजीवं स्यात् न सर्वशरीराणि इति आशङ्कामिष्टापत्त्या परिहरति तेन चेति। ननु यथा एकशरीरे हिताहितप्राप्तिपरिहारार्थं स्पन्दनरूपा चेष्टा दृश्यते तथा सर्वशरीरेषु दृश्यते। तथाच कथमेकमेव शरीरं सजीवं तत्राह अन्यानीति। यथा स्वप्नदशायां स्वप्नद्रष्टुः शरीरमेकमेव सजीवं स्वप्नदृष्टादृष्टानि अन्यानि शरीराणि तु चेष्टाविशेषवत्तया दृश्यमानान्यपि सजीवानि न सम्भवन्ति तथा जागरणेऽपि इति द्रष्टव्यम्। ननु स्वाप्नस्य जगतः कल्पिका तावत् निद्रा अन्वयव्यतिरेकसिद्धा यथा वर्त्तते न तथा जाग्रत्प्रपञ्चस्य कल्पकमन्वयव्यतिरेकसिद्धं किञ्चिदस्तीति जगत् सत्यमेव स्यात् न इत्याह तदज्ञानेति। जीवाज्ञानेत्यर्थः। अज्ञानस्य जगत्कल्पकत्वं शास्त्रसिद्धमिति भावः। ननु सर्वव्यवहारस्य स्वप्न-

शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितम्। अत्र च सम्भावितसकलशङ्कापङ्कक्षालनं स्वप्नदृष्टान्तसलिलधारया एव कर्त्तव्यमिति।

अन्ये तु अस्मिन्नेकशरीरैकजीववादे मनःप्रत्ययमलभमाना अधिकन्तु भेदनिर्देशात् [ व्या० सू०

---

व्यवहारवत् कल्पितत्वे तद्वदेव सहसा व्यवहारलोपः प्रसज्येत तथा च विद्यानर्थक्यमिति न इत्याह तस्येति। जीवस्य इत्यर्थः। यावन्निद्राक्षयं स्वप्नव्यवहारानुवृत्तिवत् विद्यया यावत् अविद्यानिवृत्तिसर्वव्यवहारानुवृत्तिर्युज्यते इति न विद्यावैफल्यमविद्यानिवृत्त्यर्थम् अपेक्षितत्वादिति भावः। ननु जीवैकत्वमते एको जीवो बद्धः अन्यो जीवो मुक्त इति व्यवस्था शुकादिमुक्तिप्रतिपादकशास्त्रसिद्धा न स्यादिति आशङ्क्य इष्टापत्तिरित्याह बद्धेति।

शुकेति यथा स्वप्नादुत्थितः स्वप्नभ्रान्तिसिद्धां पुरुषान्तरमुक्तिं परं प्रतिबोधयति तथा जीवभ्रान्तिसिद्धां शुकादिमुक्तिं तं प्रत्येव बोधयति श्रवणादिषु प्रवृत्त्युपयोगितयेति भावः। ननु जीवैक्यमते विद्योपदेष्टुरन्यस्य अभावात् विद्योदयो न स्यात्। जीवेश्वरविभागाभावेन जीवस्येश्वरोपासनादिव्यवहारश्च न स्यादिति आशङ्क्याह अत्र चेति। यथा स्वप्नदशायां स्वप्नदृक् कश्चित् गुरुमीश्वरञ्च कल्पयित्वा तावुपास्ते ताभ्याञ्च विद्यादिकं लभते तद्वदिति भावः।

एकजीववाद एव मतान्तरमाह अन्ये तु इति एकशरीरेति।

अ० २ पा० १ सू० २२] लोकवत्तु लीलाकैवल्यम् [व्या० सू० अ० २ पा० १ सू० ३३] इत्यादिसूत्रैर्जीवाधिक ईश्वर एव जगतः स्रष्टा न जीवस्तस्याप्तकामत्वेन प्रयोजनाभावेऽपि केवलं लीलयैव जगतः सृष्टिरित्यादिप्रतिपादयद्भिर्विरोधञ्च मन्यमाना हिरण्यगर्भ एको ब्रह्मप्रतिबिम्बो मुख्यो जीवः अन्ये तु तत्प्रतिबिम्बभूताश्चित्रलिखितमनुष्यदेहार्पितपटाभासकल्पा जीवाभासाः संसारादिभाज इति सविशेषा अनेकशरीरैकजीववादमातिष्ठन्ते।

एकमेव शरीरं सजीवं यस्मिन् एकजीववादे स तथोक्तः। मनःप्रत्ययमिति। मनसो विश्वासं प्रामाणिकत्वनिश्चयमित्यर्थः। एकमेव शरीरं सजीवं शरीरान्तराणि निर्जीवानीत्यत्र विनिगमकाभावात् न च जीवैक्यं विनिगमकमिति वाच्यम्? एकोऽपि जीवः कस्मिन् शरीरे वर्त्तत इत्यत्र विनिगमकस्य वक्तुमशक्यत्वादिति भावः। अधिकन्तु इति। जीवाभिन्न ईश्वरे वेदान्तानां प्रथमाध्यायनिरूपितः समन्वयो न घटते तथा सति ईश्वरगतजगत्स्रष्टृत्वादे र्जीवधर्मत्वप्रसङ्गात्। तथा च अनुभवविरोध इति पूर्वपक्षनिरासार्थस्तुशब्दः। अधिकं जीवादुपाधितो भिन्नं ब्रह्म जगत्स्रष्टृत्वसर्वज्ञत्वादिगुणकमभ्युपगम्यते। अतो न ब्रह्मधर्माणां जीवे प्रसक्तिः औपाधिकभेदस्य अपि धर्मव्यवस्थापकतया लोकसिद्धत्वात् कल्पितभेदाङ्गीकारे हेतुमाह भेदनिर्देशादिति। य आत्मनि तिष्ठन् न आत्मानमन्तरोपगमयतीत्यादौ नियम्यनिया-

अपरे तु हिरण्यगर्भस्य प्रतिकल्पं भेदेन कस्य हिरण्यगर्भस्य मुख्यं जीवत्वमित्यत्र निया-

---

मकभावादिना भेदनिर्देशादिति सूत्रार्थः। लोकवदिति सूत्रं पूर्वमेव व्याख्यातम्। अत्रादिपदेन अनुपपत्तेस्तु न शारीर इत्यादिसूत्रं गृह्यते। मनोमयत्वादिगुणको न शारीरः तस्मिन् सर्वकर्मत्वादीनामनुपपत्तेरेव इति सूत्रार्थः। विरोधञ्चेति। मनः प्रत्ययमलभमानाः विरोधं च मन्यमाना इति च शब्दार्थः। जीवातिरिक्ते ईश्वराभाववादेऽस्मिन् जगत्सृष्ट्यादिसमर्थस्य व्यावहारिकभेदवत ईश्वरस्याखिलजगत्स्रष्टृत्वसर्वात्मकत्वादि-गुणप्रतिपादकैः सूत्रैर्विरोधमित्यर्थः। ब्रह्मप्रतिबिम्ब इति। अनेन बिम्बभूतं ब्रह्म जीवादधिकमीश्वररूपमस्मिन् मतेऽस्ति अतो न उदाहृतसूत्रविरोध इति सूचितं तदिति। ब्रह्मप्रतिबिम्ब-भूतहिरण्यगर्भस्य भौतिकजगत्स्रष्टृतया कारणोपाधिकतया च मुख्यजीवस्य प्रतिबिम्बभूता अन्ये जीवाः जीवाभासाः तद्वत् सृष्ट्यादिसामर्थ्याभावादित्यर्थः। कल्पा इति तुल्या इत्यर्थः। संसा-रादिभाज इति। अनेन यथा हिरण्यगर्भशरीरं मुख्यजीवेन सजीवं तथा इतराण्यपि शरीराणि जीवाभासैः सजीवानि इति पूर्वमताद्विशेषः सूचितः। अत्र आदिपदं मुक्तेः संग्रहार्थम्। जीवाभासानां मुक्तिश्च स्वबिम्बभूतहिरण्यगर्भप्राप्तिः क्रमेण च शुद्धब्रह्मप्राप्तिरिति मन्तव्यम्। सविशेषेति। सविशेषाणि सजी-वानि अनेकशरीराणि यस्मिन् एकजीववादे स तथा आति-ष्ठन्ते अङ्गीकुर्वन्तीत्यर्थः।

अत्र अपि अस्वरसं वदन्नेकजीववादमेवाह अपरे तु इति। एक एवेति। अविद्यायां ब्रह्मप्रतिबिम्बरूपो जीवस्तावदेक

मकं नास्तीति मन्यमाना एक एव जीवोऽविशेषेण सर्वं शरीरमधितिष्ठति।

न च एवं शरीरावयवभेद इव शरीरभेदेऽपि परस्परसुखाद्यनुसन्धानप्रसङ्गः। जन्मान्तरीयसुखाद्यनुसन्धानादर्शनेन शरीरभेदस्य तदननुसन्धानप्रयोजकत्वक्लृप्तेः।

---

अविद्याया एकत्वात् स एव च सर्वं शरीरं स्वभोगाद्यर्थमधितिष्ठति न तु अविद्यायां ब्रह्मप्रतिबिम्बो हिरण्यगर्भशरीरमधितिष्ठति। अन्यानि तु शरीराणि तत्प्रतिबिम्बा जीवाभासा अधितिष्ठन्ति कुतः इतरजीवानां तत्प्रतिबिम्बत्वे मानाभावादित्येवकारार्थः। अविशेषेणेति मुख्या मुख्यविभागं विनेत्यर्थः। जीवभेदे हि सति कश्चित् मुख्यो जीवः कश्चिच्चामुख्यो जीवाभास इति विभागः सम्भवेत्, न तु एतदस्ति तस्यैकत्वाभ्युपगमादिति भावः। ननु देवदत्तस्य शिरःपाणिपादानधितिष्ठत एकस्य यथा शिरसि मे वेदना पादे मे सुखमित्याद्यनुसन्धानं दृश्यते एवमेकस्यैव जीवस्य सर्वशरीराधिष्ठातृत्वे मम देवदत्तशरीरे सुखं यज्ञदत्तनामकशरीरे दुःखमित्यादिरूपेण सर्वस्य सर्वत्र अनुसन्धानप्रसङ्ग इति शङ्कते।

न च एवमिति। शरीरभेदस्य अननुसन्धानप्रयोजकत्वाभ्युपगमात् न उक्तातिप्रसङ्गः। न च तत्र मानाभावः शङ्कनीयः जीवस्य अतीतशरीरेषु वर्त्तमानशरीरे च एकत्वेऽपि जन्मान्तरीयसुखाद्यनुसन्धानादर्शनेन तद्भेदस्य तत्प्रयोजकतायाः सम्प्रतिपन्नत्वादिति परिहरति जन्मान्तरीयेति।

योगिनस्तु कायव्यूहसुखाद्यनुसन्धानं व्यव-स्थितार्थग्रहणवद्योगप्रभावनिबन्धनमिति न तदु-दाहरणमित्यविशेषानेकशरीरैकजीववादं रोच-यन्ते।

इतरे तु अत्रापि बद्धमुक्तव्यवस्था स्वभावस्य तुल्यत्वेन तद् यो यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादिश्रुतेः प्रदिषेधादिति चेत् न शारी-रादिति [ व्या० सू० अ० ४ पा० २ सू० १२ ] अधिकरणे बद्धमुक्तत्वप्रतिपादकभाष्यस्य च नास्व-स्यमिति अपरितुष्यन्तोऽन्तःकरणादीनां जीवो-

---

ननु योगिनो देहभेदे सत्यपि अनुसन्धानदर्शनात् व्यभिचार इत्यत आह योगिनस्तु इति। अस्मदादिवैलक्ष-ण्यार्थकस्तुशब्दः तद्दर्शयति कायेति। न हि अस्मदादीनां व्यवहितार्थसाक्षात्कारोऽस्ति तत्प्रयोजकादृष्टविशेषाभावात्। तथा च शरीरभेदमात्रं न तत्प्रयोजकं किन्तु अदृष्ट-विशेषसहकृतशरीरभेदो न तु सन्धानप्रयोजक इति न योग्यानुसन्धानस्थले व्यभिचार इति भावः। योगपदं योग-जादृष्टपरम्। अविशेषेति। अविशेषेण अधिष्ठितानि अनेक-शरीराणि यस्मिन् एकजीववादे सः तथा इत्यर्थः।

अनेकजीववादमुत्थापयति इतरेतु इति। अत्रापि इति अव्यवस्थितमतेऽपि इत्यर्थः। यदि एकजीववादे व्यवस्था न सिध्यति ततः को दोष इत्याशङ्क्य श्रुतिस्मृतिभाष्याभ्याम-

पाधित्वाभ्युपगमेन अनेकजीववादमाश्रित्य बद्ध-मुक्तव्यवस्थां प्रतिपद्यन्ते ।

---

नाञ्जस्यदोष इत्याह तद्यो य इति। देवानां मध्ये यो देवः तद्-ब्रह्म प्रत्यबुध्यत साक्षात्कृतवान् स एव तत् ब्रह्माभवत् नान्यो ब्रह्मबोधरहित इति विदुषो मुक्तत्वमविदुषो बद्धत्वञ्च प्रति-पादयन्त्या श्रुत्या बन्धमुक्तिव्यवस्था दर्शिता। आदिपदेन अजा-मेकामिति श्रुति र्बन्धमुक्तिव्यवस्थाप्रतिपादकत्वेन भाष्यकारा-दिभिरङ्गीकृता गृह्यते। श्रुतिग्रहणं यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम इत्यादिस्मृतीनामुपलक्षणम् । प्रतिषेधादिति । इदं पूर्वपक्षसूत्रं बृहदारण्यके काण्वशाखायां "न तस्य प्राणा उत्क्रामन्ति" इति वाक्येन परब्रह्मतत्त्वविदः प्राणोत्क्रान्तिप्र-तिषेधात् तस्य गत्युत्क्रान्ती नस्तः उत्क्रान्तिपूर्वकत्वात् गतेरिति चेत् ? इति सिद्धान्तिशङ्काभागार्थः पूर्वपक्षी तां दूषयति न शा-रीरादिति। बृहदारण्यक एव माध्यन्दिनशाखायां समानप्रक-रणे ब्रह्मविदः शारीरं प्रकृत्य न तस्मात् प्राणा उत्क्रामन्तीति वाक्यं पठ्यते। अत्र तच्छब्देन प्रकृतः शारीरो गृह्यते न शरीरम् तस्य शरीरापेक्षया प्रधानत्वात्। तथाच न तस्मादिति वाक्येन शारीरात् जीवात् प्राणानामुत्क्रमणं निषिध्यते न शरीरा-दतः शरीरादुत्क्रमणं विदुषोऽपि अस्तीति तस्यापि गत्युत्-क्रान्ती स्त एव न तस्य प्राणा इति का एव वाक्यस्यापि तस्य विदुषः प्राणाः शारीरान्न उत्क्रामन्ति किन्तु तेन सहैव ब्रह्म-लोकं गच्छन्तीति अर्थो बोध्यः। नाञ्जस्यमिति। आञ्जस्याभावः उपपन्नत्वाभाव इत्यर्थः। अन्तःकरणादीनामिति। न च नाना-जीववादेऽपि ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते इत्यर्थन बृहदारण्यकभाष्ये प्रतिपादिते न विरोधस्तुल्य इति

तेषु केचिदेवमाहुः। यद्यपि शुद्धब्रह्माश्रयविषयमेकमेव अज्ञानं तन्नाश एव च मोक्षस्तथापि जीवन्मुक्तावज्ञानलेशानुवृत्त्यभ्युपगमेन अज्ञानस्य सांशत्वात् तदेव क्वचिदुपाधौ ब्रह्मावगमोत्पत्तौ अंशेन निवर्त्तते उपाध्यन्तरेषु यथापूर्वम् अंशान्तरैरनुवर्त्तत इति।

---

वाच्यम्। तन्नाष्यप्रतिपादनस्य ब्रह्मैव स्वाविद्यया नानान्तःकरणरूपेण परिणतया नानाजीवभावं प्राप्य संसरति स्वविद्यया क्रमेण मुच्यते इत्यभिप्रायकत्वोपपत्तेः। श्रुतिस्मृत्युपोद्बलितशुकादिमुक्तिप्रतिपादकभाष्यस्य ब्रह्मैव स्वाविद्यया संसरतीति भाष्यमात्रस्वारस्यमनुसृत्य अन्यथानयनायोगात्। न च उदाहृतश्रुतिस्मृतिभाष्याणां ब्रह्मात्मैकत्वपरत्वेन नानाजीववादे तात्पर्य्याभावात्। तेभ्यो जीवनानात्वं न सिध्यतीति वाच्यम्। एकजीववादेऽपि तात्पर्य्याभावस्य तुल्यत्वात्। न च जीवत्वोपाधिभूताया अविद्याया एकत्वात् जीवैक्यसिद्धिरिति वाच्यम्? उदाहृतश्रुतिस्मृतिभाष्यानुरोधेन अविद्यानानात्वाभ्युपगमसम्भवात् तदेकत्वश्रुत्यादीनां जात्यभिप्रायकत्वोपपत्तेः। अविद्यायाः एकत्वेऽपि कार्य्योपाधिरयं जीव इति श्रुत्यनुसारेण अन्तःकरणानामेव जीवत्वोपाधित्वोपगमसम्भवाच्चेति भावः।

नानाजीववादे मतभेदेन बन्धमुक्तिव्यवस्थामुपपादयितुमारभते तेषु इति। नानाजीववादिषु मध्ये इत्यर्थः। केचिदिति। ननु नानाजीववादेऽपि जीवस्य अन्तःकरणोपाधिकत्वपक्षे मूलाज्ञानस्य एकत्वेन शुकादितत्त्वज्ञानेनैव तस्य निवृत्तत्वात्। इदानीं

संसारानुपलब्धिप्रसङ्ग इत्याशयेन शङ्कते यद्यपीति। शुद्धब्रह्मा-श्रयेति। जीवेश्वरयोः विशिष्टरूपयोः अज्ञानाश्रयत्वं न सम्भवति तयोः कल्पितत्वात्। तथा शुद्धस्यैव आवृतत्वरूपं विषयत्वं न तु ईश्वरस्यापि। तस्य जीवान्तरवदौपाधिकभेदादेव अनुपलब्धि-सिद्धौ जीवान् प्रति ईश्वरस्य अज्ञानावृतत्वरूपविषयत्वकल्पनस्य व्यर्थत्वादिति भावः। एकमेवेति। अजामेकां मायां तु प्रकृतिं विद्यात् विभेदजनके ज्ञान इति श्रुतिस्मृतिषु एकवचनश्रवणेन लाघवेन च तस्यैकत्वावगमादिति भावः। तन्नाश एव चेति। भूयश्चान्ते विश्वमायाया निवृत्तिः अज्ञाने नाश-मात्यन्तिकं गत इत्यादिश्रुतिस्मृतिषु सर्वानर्थमूलाज्ञाननिवृत्ते-र्मोक्षत्वावगमादिति भावः। एकस्य तत्त्वज्ञानेन कृत्स्नाज्ञाननाशो नाङ्गीक्रियते येन व्यवस्था न स्यात् किन्तु तस्य तस्य ज्ञानेन तत्त-दन्तःकरणादिपरिणामिनो मूलाज्ञानांशस्यैव नाश उपेयते न च तस्य सांशत्वे मानाभाव इति वाच्यम्? जीवन्मुक्तौ आवरणशक्तिमदंशस्य नाशेऽपि विक्षेपशक्तिमदज्ञानांशस्य ज्ञानादनिवृत्तस्य यावद्विदेहकैवल्यमनुवृत्त्युपगमेन तस्य सांश-त्वावगमात्। तथा च अज्ञानस्य अनिर्वचनीयस्य अनिर्वचनी-यानामेव भागरूपांशानामनन्तानां सम्भवात्। तानादाय बन्ध-मुक्तिव्यवस्था सूपपादेति परिहरति तथापि इत्यादिना। अज्ञान-सत्त्वं बन्धः तन्नाशो मोक्ष इति मतमुक्तम्।

इदानीं चैतन्यस्य अज्ञानसम्बन्धो बन्धस्तदसम्बन्धो मोक्षः न तु तन्निवृत्तिरसम्बन्धमात्रेण एव बन्धनिवृत्ति-सिद्धेः ज्ञानादज्ञाननिवृत्तिप्रतिपादकशास्त्रस्यापि तदसम्बन्ध एव तात्पर्योपपत्तेः। अन्यथा मूलाज्ञानस्य विरोधिज्ञानोदये सति तूलपिण्डस्य विरोध्यग्निसंसर्ग इव अवशेषासम्भवेन बन्धमुक्तिव्यवस्थाशास्त्रस्य जीवन्मुक्तिशास्त्रस्य च निरालम्ब-

अन्ये तु यथा न्यायैकदेशिमते भूतले घटा-त्यन्ताभावस्य वृत्तौ घटसंयोगाभावो नियामक इति अनेकेषु प्रदेशेषु तद्वत्सु संसृज्य वर्त्तमानो घटात्यन्ताभावः क्वचित् प्रदेशे घटसंयोगोत्पत्त्या तदभावनिवृत्तौ न संसृज्यते एवमज्ञानस्य चैतन्ये वृत्तौ मनो नियामकमिति तदुपाधिना चैतन्य-प्रदेशेषु संसृज्य वर्त्तमानमज्ञानं क्वचिद् ब्रह्म-

---

त्वप्रसङ्गादिति मन्यमानानां मतमाह अन्ये तु इति। प्रथमं प्रक्रतोपयोगिदृष्टान्तमाह यथेति। भूतले घटो न इत्य-नुभवसिद्धो घटाभावः त्रैकालिकत्वाभ्युपगमात्। घटा-नयनानन्तरं तदधिकरणेऽपि भूतले वर्त्तते एव। तथाच घटवति अपि भूतले घटो नास्तीति प्रतीतिः प्रमा स्यादिति दोषप्रसक्तौ तत्परिहाराय नैयायिकाः कल्पयन्ति। घटाधिकरणे तदत्यन्ताभावस्य सम्बन्धाभावेन तत्र तत् प्रतीतेः भ्रान्तित्वोप-पत्तेः। न च घटसंयोगोत्पत्तेः पूर्वं भूतले सम्बन्धवतस्तस्य घटसंयोगकाले कथमवृत्तिरूपसम्बन्धाभाव इति वाच्यम्? प्रतीत्यनुसारेण भूतलादौ घटात्यन्ताभाववृत्तौ घटसंयोगस्य प्रागभावप्रध्वंसाभावयोरन्यतराभावो नियामक इति कल्पनेन घटसंयोगाधिकरणभूतले घटाभावस्य असम्बन्धोपपत्तेरिति तदेतत् मतं दृष्टान्तीकरोति न्यायैकदेशिमत इति। तद्वत्सु इति घटसंयोगाभाववत्सु इत्यर्थः। तदुपाधिनेति। मन एवोपा-धिस्तेन इत्यर्थः। क्वचिदिति। चैतन्यप्रदेश इत्यर्थः। ब्रह्मदर्शनो-त्पत्त्या मनसो निवृत्तौ इति सम्बन्धः। ब्रह्मदर्शनं मनसो

दर्शनोत्पत्त्या भिद्यते हृदयग्रन्थिरिति श्रुत्युक्त-रीत्या मनसि निवृत्तौ न संसृज्यते अन्यत्र यथा-पूर्वमवतिष्ठते अज्ञानसंसर्गासंसर्गाविव च बन्ध-मोक्षौ इत्याहुः ।

अपरे तु न अज्ञानं शुद्धचैतन्याश्रयं किन्तु जीवाश्रयं ब्रह्मविषयं तच्च अन्तःकरणप्रतिबिम्ब-

---

निवर्त्तकमित्यत्र मानमाह भिद्यते इति । हृदयग्रन्थिरित्यत्र हृदयपदमन्तःकरणपरं तच्च अन्तःकरणं चिदात्मनि अध्यस्ततया तत्तादात्म्यापन्नं सद् ग्रन्थिरिव ग्रन्थिः स च ब्रह्मदर्शने जाते ब्रह्मण्येव विलीयत इति श्रुत्यर्थः । अन्यत्रेति । चैतन्य-प्रदेशान्तरेषु इत्यर्थः ।

न अज्ञानमिति । चैतन्यस्य वेदान्तशास्त्रप्रतिपाद्यस्य न अज्ञानाश्रयत्वं तस्य वेदान्तवेद्यं वस्तु न जानामीति अज्ञानविषयत्वेनैव अनुभवादिति भावः । जीवाश्रयमिति । न जानामीति अज्ञानाश्रयत्वेन जीवस्यैव अनुभवात् न च अज्ञानस्य स्वकार्य्यान्तःकरणविशिष्टचैतन्यरूपजीवा-श्रितत्वमनुपपन्नमिति वाच्यम् । अन्तःकरणे यत्प्रतिबिम्बभूतं चैतन्यं तस्यैव जीवत्वाभ्युपगमेन विशिष्टजीवत्वानुपगमात् न च अन्तःकरणस्य सादितया तद्गतप्रतिबिम्बस्यापि सादित्वात् कथं तस्य अनाद्यज्ञानाश्रयत्वमिति वाच्यम् ? अन्तःकरणस्य स्वापादौ लयश्रवणेन जाग्रदादौ जन्मश्रवणेन च सादित्वाव-गमेऽपि तस्य स्थूलसूक्ष्मरूपेण अनादितया पुंस्त्वादिवत्तस्य

रूपेषु सर्वेषु जीवेषु व्यक्तिषु जातिवत् प्रत्येक-पर्य्यवसायितया वर्त्तमानमुत्पन्नविद्यं कं चित् त्यजति नष्टां व्यक्तिमिव जातिः स एव मोक्षः। अन्यं यथापूर्वमाश्रयतीति व्यवस्थेत्याहुः।

---

सत्ताभिव्यक्तियोगादिति सूत्रे अवस्थापितत्वाद्यथा पुंस्त्वस्त्री-त्वादेः शुक्रशोणितस्तनादिरूपस्य वाल्यादौ अनभिव्यक्तस्य यौवने प्रादुर्भावः तथा अस्य अन्तःकरणस्य स्वापादौ अनभिव्यक्ततया सत एव स्थूलावस्थाप्राप्तिरूपायाः अभिव्यक्तेर्युक्तत्वात् असतः शश-विषाणादेरुत्पत्त्यदर्शनादिति सूत्रार्थः। अविद्यायाः अनादि-चैतन्यप्रतिविम्बाश्रितत्वस्य मायाविद्याभेदवादनिरूपणावसरे समर्थितत्वात् प्रत्येकेति द्वित्वबहुत्वादिवदज्ञानस्य सर्वजीव-व्यक्तिषु व्यासज्यवृत्तित्वे सर्वेषां प्रत्येकमहमज्ञ इति प्रत्यक्षं न स्यात् व्यासज्यवृत्तिधर्मप्रत्यक्षस्य यावदाश्रयप्रत्यक्षसापेक्ष-त्वेन एकैकस्य जीवस्य सर्वजीवप्रत्यक्षाभावादित्यर्थः। वस्तु-तस्तु अज्ञानस्य व्यासज्यवृत्तित्वेऽपि तत् प्रत्यक्षस्य नित्यसाक्षि-रूपतया यावदाश्रयप्रत्यक्षानपेक्षणात् उक्तनियमस्य जन्य-प्रत्यक्षविषयत्वादिति मन्तव्यम्। कञ्चिदिति। उत्पन्नया विद्यया मनसो निवृत्तौ तन्निरूपितप्रतिम्बभावस्य अपि निवृत्ततया तद्विशिष्टचैतन्यरूपव्यक्तिनाशादिति भावः। तथाच श्रुतिः जहात्येनां भुक्तभोगामजोऽन्य इति। एनाम् अजाशब्दितामविद्यां जीवेन भुक्ता भोगाः यस्याः सा भुक्तभोगा भुज्यत इति व्युत्पत्त्या भोगशब्दितानां विषयाणाम् अविद्यापरिणामत्वादिति भावः। अजो जन्मरहितः अन्यः उत्पन्नविद्यो जीव इति श्रुत्यर्थः। स एवेति त्याग एवेत्यर्थः। अन्यमिति अज्ञमिति भावः। तथाच

इतरे तु प्रतिजीवमविद्याभेदमभ्युपगम्यैव तदनुवृत्तिनिवृत्तिभ्यां बद्धमुक्तव्यवस्थां समर्थयन्ते। अस्मिन् पक्षे कस्य अविद्यया प्रपञ्चः कृतो-ऽस्त्विति चेत् विनिगमकाभावात् सर्वाऽविद्या-

---

श्रुतिः। "अजो ह्येको जुषमाणोऽनुशेते" इति। एकः पुनरजो विवेकरहितः कार्यकारणसङ्घातरूपेण परिणतामविद्यां जुषमाणः सेवमानः। तत्र अहंममाभिमानवान् सन् अनुशेते तामनुसृत्य शेते वर्तते न जहातीति यावत्। अत्र अज्ञानं कश्चित् जहाति अन्यस्तामाश्रित्यैव तिष्ठतीति उक्त्यापि अज्ञानसम्बन्धा-सम्बन्धौ एव बन्धमोक्षौ इत्युक्तं भवति।

तदुक्तेरर्थान्तरासम्भवात् अज्ञानसम्बन्धतदभावौ बन्धमोक्षौ इति मतद्वयमपि तस्य ज्ञाननाश्यत्वप्रतिपादकश्रुतिस्मृतिभाष्यादिस्वारस्यविरुद्धं मत्वा तदविरुद्धं मतमाह इतरे त्विति। अभ्युपगम्यैव इति अविद्याभेदानुपगमे तत्सम्बन्धनाशरूपयोः बन्धमोक्षयोः उपपादयितुम् अशक्यत्वात्। न च तस्या एकत्वेऽपि अंशवत्त्वकल्पनया तन्नाशरूपो मोक्षः प्रागुपपादित इति वाच्यम्? विरोधिविद्योदये तदवस्थानायोगस्य अपि उक्तत्वात्। न च जीवन्मुक्तौ तल्लेशानुवृत्त्यभ्युपगमविरोध इति वाच्यम्? अविद्यानाशेऽपि तत्संस्कारस्य यावत् प्रारब्धक्षयमनुवर्तमानस्य अविद्यालेशत्वेन विवक्षितताया: सदृष्टान्तवक्ष्यमाणत्वादिति भावः।

एवं नानाजीववादे बन्धमोक्षव्यवस्थां बहुप्रकारामुपपाद्य तदुपपादनोपयोगितया प्रसक्तमविद्यानानात्व-

कृतोऽनेकतन्त्वारब्धपटतुल्यः। एकस्य मुक्तौ तदविद्यानाशे एकतन्तुनाशे पटस्येव तत्साधारणप्रपञ्चस्य नाशः। तदैव विद्यमानतन्त्वन्तरैः पटान्तरस्येव इतराविद्याभिः सकलेतरसाधारणप्रपञ्चान्तरस्य उत्पादनमित्येके।

तत्तदज्ञानकृतप्रातिभासिकरजतवत् न्यायमते तत्तदपेक्षाबुद्धिजन्यद्वित्ववच्च तत्तदविद्याकृतो वियदादिप्रपञ्चः प्रतिपुरुषं भिन्नः। शुक्तिरजते

---

मुपजीव्याक्षेपमवतारयति अस्मिन् पक्षे इति। अविद्यानानात्वपक्षे इत्यर्थः। कस्य इति। किमेकस्य जीवस्य अविद्यया प्रपञ्चारम्भः ? उत सर्वेषाम् अविद्याभिः ? न आद्यः, विनिगमनाविरहात्। न द्वितीयः, एकाविद्यानाशे सर्वप्रपञ्चनाशापत्त्या मुक्तेतरजीवानां प्रपञ्चानुपलब्धिप्रसङ्गात् इति आक्षेपाभिप्रायः। द्वितीयपक्षं परिगृह्य तत्रोक्तानुपपत्तिं परिहरति विनिगमकाभावादित्यादिना सर्वाविद्याकृत इति। सर्वेषां जीवानां सर्वाविद्यापरिणाम इत्यर्थः। यद्वा सर्वाविद्याविषयीकृतब्रह्मविवर्त्तः प्रपञ्च इत्यर्थः। प्रथमव्याख्याने दृष्टान्तमाह अनेकतन्त्वारब्धेति। सकलेतरेति। सकलाः समस्ताः मुक्तजीवापेक्षया ये इतरे तेषां साधारणप्रपञ्चान्तरस्य इत्यर्थः।

प्रपञ्चस्य सर्वाविद्याकार्य्यत्वेऽपि तद्भेदात् प्रपञ्चस्यापि प्रतिपुरुषं भेद एवेति मतं सदृष्टान्तमाह तत्तदिति। ननु यत्र एकदा बहूनां शुक्तौ रजतभ्रमो भवति, तत्र प्रतिपुरुषम् अज्ञानभेदेन तत्कृतरजतभेदोऽत्र दृष्टान्तत्वेन वक्तव्यः, स च न

त्वया यद् दृष्टं रजतं तदेव मयापीतिवत् ऐक्य-भ्रममात्रम् इत्यन्ये।

जीवाश्रितात् अविद्यानिवहात् भिन्ना मायैव ईश्वराश्रिता प्रपञ्चकारणं जीवानामविद्यास्तु

---

सम्भवति तत्रापि तावत् पुरुषाणामज्ञानैः एकस्य एव रजतस्य उत्पत्तिसम्भवादिति चेत्? न, तत्र दैवयोगात् एकस्य पुरुषस्य प्रथमं शुक्तित्वविशेषदर्शने सति न इदं रजतमिति बाधकप्रत्यक्षेण सोपादानस्य रजतस्य नाशेऽपि तदितरेषां रजतभ्रमानुवृत्त्या रजतभेदस्य आवश्यकतया दृष्टान्तसिद्धेरिति भावः। न्यायमत इति। सिद्धान्ते तु एकत्ववत् द्वित्वादिकमपि यावत् द्रव्यभाव्येव न तु तत्तदपेक्षाबुद्धिजन्यम् अनन्तद्वित्वादेः तदुत्पत्त्यादीनां च कल्पने गौरवादपेक्षाबुद्धेर्व्यञ्जकत्वाभ्युपगमात् न सदा तत्प्रत्यक्षापत्तिरिति स्वीकारादिति भावः। ननु तर्हि यथा तत्तद्रजतं तस्य तस्यैव प्रत्यक्षं न अन्यस्य तथा तत्तदविद्याकल्पितः प्रपञ्चोऽपि तस्य तस्यैव प्रत्यक्षः स्यात् नान्यस्य तथाच यः प्रपञ्चः त्वया अनुभूयते स एव मयापि अनुभूयते इति प्रत्यभिज्ञानं प्रत्यक्षं न स्यादिति शङ्कां दृष्टान्तेन परिहरति शुक्तिरजते इति। उपलक्षणमेतत् यौ द्वौ रामलक्ष्मणौ त्वया दृष्टौ तावेव मया दृष्टौ इति प्रत्यभिज्ञानं न्यायमते द्वित्वभेदेऽपि दृश्यते तद्वदिति बोध्यम्। वियदादिप्रपञ्चो न जीवाविद्यापरिणामः किन्तु जीवाश्रिताविद्यासङ्घाद्भिन्ना माया सर्वजीवान् प्रति साधारणा वियदादिप्रपञ्चपरिणाम्युपादानमुपेयते। अतो वियदादिप्रपञ्चस्यैकत्वात्।

तदेकत्वप्रतीतिर्न भ्रममात्रमिति मतं दर्शयति जीवा-

आवरणमात्रे प्रातिभासिकशुक्तिरजतादिविक्षेपे ऽपि च उपयुज्यन्त इति अपरे।

---

श्रितादिति। मायाया अविद्याभ्यो भिन्नत्वे ईश्वराश्रितत्वे च प्रमाणादिकं प्रागेव दर्शितमिति नात्र तदुच्यते। अविद्यानां प्रपञ्चोपादानत्वाभावे वैयर्थ्यमाशङ्क्याह जीवानामिति। उक्तशङ्कानिरासार्थः तुशब्दः यत्किञ्चित्कार्य्यं प्रति उपादानत्वाभावो मात्रशब्दार्थः। न च नाहं प्रकाशः सर्वस्य योगमायासमावृत इति भगवद्वचने अहं परमात्मा सर्वस्य प्राणिजातस्य प्रकाशः पूर्णानन्दादिरूपेण स्वस्वरूपो न भवामि। मम सर्वज्ञत्वसर्वेश्वरत्वसर्वात्मकत्वादिधर्मजातं घटयन्त्या मायया आवृतत्वादित्यर्थके ईश्वराश्रितमायाया एव ब्रह्मावरकत्वप्रतिपादनात् तद्विरोध इति वाच्यम्। ब्रह्म तत्त्वतो न जानामीत्यावरकस्य जीवाश्रितत्वानुभवानुसारेण जीवाश्रिताविद्याया एव तदावरकत्वे वक्तव्ये सति भगवद्वचनगतमायापदस्य जीवचैतन्ये संसारघटकाविद्यालक्षकत्वोपपत्तेरिति भावः। अविद्याया आवरण इव प्रातिभासिकविक्षेपेऽपि परिणाम्युपादानत्वस्वीकारान्न वैयर्थ्यशङ्कावकाश इत्याशयेनाह प्रातिभासिकेति। ननु जीवाश्रिताविद्यानां जीवचैतन्याध्यस्तप्रातिभासिकस्वप्नप्रपञ्चोपादानतया तत्र उपयोगसम्भवेऽपि शुक्तिरजताद्युपादानत्वं न सम्भवति शुक्त्याद्यवच्छिन्नचैतन्ये रजताद्यधिष्ठाने तासामसम्बन्धादिति चेत्? सत्यम्, आदिपदग्राह्यस्वप्न एव अत्र विवक्षित इति अदोषः। यद्वा वाचस्पतिमत इव शुक्तिरजतादेरपि जीवाविद्याविषयीकृतशुक्त्याद्यवच्छिन्नचैतन्यविवर्त्तत्वमभिप्रेत्य जीवाविद्यानां प्रातिभासिकरजतादौ उपयोगकथनोपपत्तेर्न दोषः।

[ अथ ब्रह्मणः कर्त्तृत्वस्वरूपनिरूपणम् ]

**अवसितमुपादानत्वं तत्प्रसक्तानुप्रसक्तं च। अथ कीदृशं कर्त्तृत्वं केचिदाहुः तदैक्षत सोऽकामयत तदात्मानं स्वयमकुरुतेति श्रवणात् न्यायमत इव कार्य्यानुकूलज्ञानचिकीर्षाकृतिमत्त्वरूपमिति।**

---

पूर्वमुक्ते अभिन्ननिमित्तोपादनत्वरूपे ब्रह्मलक्षणे उपादानत्वं विवर्त्ताधिष्ठानत्वरूपमिति साधितं तत्प्रसङ्गात् जीवेश्वरनिरूपणं प्राप्तं तदनुजीवैकत्वनानात्वबन्धमोक्षप्रपञ्चैकत्वनानात्वनिरूपणं प्रसक्तं तददेतत् सर्वं निरूपितम् इति निरूपयिष्यमाणार्थप्रतिपत्त्युपयोगितया उपसंहरति अवसितमिति समाप्तमित्यर्थः। उपादानत्वमिति निरूपणमित्यर्थः। लक्षणान्तर्गतं कर्त्तृत्वं निरूपयितुमाक्षिपति अथेति। उदासीनस्य ब्रह्मणः कर्त्तृत्वधर्मासम्भवादित्यर्थः। स्वतस्तदसम्भवेऽपि औपाधिकं तत् सम्भवतीति परिहरति केचिदाहुरित्यादिना। यद्वा जगदुपादानस्य ब्रह्मणो न तत्कर्त्तृत्वं सम्भवति घटाद्युपादानस्य मृदादेः तत्कर्त्तृत्वादर्शनादिति आक्षिपति अथेति। घटेश्वरसंयोगादौ उपादानस्यैव ईश्वरस्य कर्त्तृत्वदर्शनात् ब्रह्मण एव कर्त्तृत्वप्रतिपादकश्रुतिबलाच्च तस्य तत्सम्भवतीति परिहरति केचिदाहुरित्यादिना। अथवा ब्रह्मणः कर्त्तृत्वं कीदृशमिह लक्षणे विवक्षितम् ? किं ज्ञानचिकीर्षाकृतिमत्त्वरूपं? किंवा कार्य्यानुकूलज्ञानवत्त्वरूपं? कार्य्यानुकूलस्रष्टव्यालोचनात्मकज्ञानवत्त्वरूपं वा ? नाद्यः, ब्रह्मणस्तादृशकर्त्तृत्वे मानाभावात्। न द्वितीयतृतीयौ, कार्य्यानुकूलज्ञानस्य

अन्ये तु चिकीर्षाकृतिकर्त्तृत्वनिर्वाहाय चिकीर्षाकृत्यन्तरापेक्षायामनवस्थाप्रसङ्गात् कार्य्यानुकूलज्ञानवत्त्वमेव ब्रह्मणः कर्त्तृत्वम्। न च ज्ञानेऽपि एष प्रसङ्गः तस्य ब्रह्मस्वरूपत्वेन अकार्य्यत्वात्।

---

कार्य्यत्वे तत्कर्त्तृत्वनिर्वाहाय ज्ञानान्तरापेक्षायाम् अनवस्थाप्रसङ्गात् तस्याकार्य्यत्वे च नित्यज्ञानस्वरूपस्य ब्रह्मणस्ताद्दशज्ञानवत्त्वरूपकर्त्तृत्वायोगादिति भावः। तत्र प्रथमपक्षं सप्रमाणं दर्शयति केचिदाहुरिति। श्रुतिषु तच्छब्दाः ब्रह्मपराः स्वयमित्यस्य अन्यानधिष्ठितमित्यर्थः। आत्मानं जगदात्मना अकुरुत कृतवत् इत्यर्थः। एताभिः सृष्ट्यनुकूलाज्ञानेच्छाकृतयः सम्प्रतिपाद्यन्त इति भावः। न च ज्ञानादीनामपि कार्य्यत्वात् तत्कर्त्तृत्वाय ज्ञानाद्यन्तरापेक्षायामनवस्था स्यादिति वाच्यम्? ज्ञानादित्रितयातिरिक्तकार्य्ये उक्तरूपकर्त्तृत्वस्य विवक्षितत्वात् न अनवस्थाप्रसङ्गः। ज्ञानादित्रयं प्रति तु अन्यदेव कर्त्तृत्वं भविष्यतीति अभिप्रायः।

प्रथमपक्षं दूषयन् द्वितीयपक्षं साधयति अन्ये तु इति। अनवस्थाप्रसङ्गादिति कर्त्तृत्वलक्षणा न तु गमनपरिहाराय कार्य्यमात्रं प्रतिज्ञानादित्रितयवत्त्वरूपे कर्त्तृत्वे वक्तव्ये सति अनवस्थाप्रसङ्गो भवत्येव इति भावः। ज्ञानवत्त्वमेवेति। इच्छाकृत्योरेवकारेण व्यवच्छेदः क्रियते तयोः कर्त्तृत्वलक्षणप्रवेशे च गौरवादिति भावः। न च एवमुदाहृतश्रुत्योरिच्छाकृतिप्रतिपादनं व्यर्थं स्यादिति वाच्यम्? ताभ्यां तयोः सृष्टिहेतुत्वलाभेऽपि कर्त्तृत्वनिर्वाहकतया तयोः प्रतिपादनमित्यत्र

एवं च विवरणे जीवस्य सुखादिकर्त्तृत्वोक्तिः वीक्षणमात्रसाध्यत्वाद्वियदादिवीक्षितं हिरण्यगर्भद्वारा वीक्षणाधिकप्रयत्नसाध्यत्वात् भौतिकं स्मितमिति कल्पतरूक्तिश्च संगच्छते इति वदन्ति ।

---

मानाभावादिति भावः । अकार्य्यत्वादिति । नित्यज्ञानस्वरूपस्य ब्रह्मणस्तादृशज्ञानवत्त्वम् औपाधिकभेदमादाय द्रष्टव्यम् । न च एवमपि सृष्टिकारणज्ञानस्य तदैक्षतेति श्रुत्या कादाचित्कत्वप्रतिपादनविरोध इति वाच्यम् ? ब्रह्मस्वरूपतया नित्यस्यापि ज्ञानस्य प्राण्यदृष्टपरिपाकलक्षणो यः कादाचित्कसहायः तद्विशिष्टतया कादाचित्कत्वमभिप्रेत्य तच्छ्रुत्युपपत्तेरिति भावः । कार्य्यानुकूलज्ञानवत्त्वमात्रं कर्त्तृत्वमित्यत्र गमकमाह एवञ्चेति । इच्छाकृत्योः कर्त्तृत्वलक्षणाननुप्रवेशे विवक्षिते सति इत्यर्थः । जीवस्येति । तस्य सुखदुःखाद्युत्पत्त्यनुकूलज्ञानं साक्षिरूपं यथा विद्यते तथा तदनुकूलेच्छादिकं नास्ति अननुभवादनभ्युपगमाच्च न च इदमनुपपन्नं सुखेच्छया तत्साधनानुष्ठानद्वारा सुखोत्पत्तेरनुभवसिद्धत्वादिति वाच्यम् ? सुखाद्युपादानान्तःकरणगोचरचिकीर्षाकृत्योरभावस्य अत्र विवक्षितत्वात् तथा च कार्य्यानुकूलज्ञानवत्त्वमात्रं कर्त्तृत्वमिति अङ्गीकारे सति एव विवरणोक्तिः सङ्गच्छते नान्यथेत्यर्थः । निश्वसितमस्य वेदाः वीक्षितमस्य पञ्चभूतानि स्मितमेतस्य चराचरम् अस्य सुषुप्तिर्महाप्रलय इति वाचस्पतिश्लोके महाभूतानां ब्रह्मवीक्षितत्वमुक्तं तथा भौतिकस्य चराचरस्य ब्रह्मस्मितत्वमुक्तम् । तदुभयतात्पर्य्यकथनपरे कल्पतरुग्रन्थे ब्रह्मवीक्षणमात्रसाध्यत्वं महा-

अपरे तु कार्यानुकूलस्रष्टव्यालोचनारूप-ज्ञानवत्त्वं कर्तृत्वं कार्यानुकूलज्ञानवत्त्वमात्रं शुक्तिरजतस्वाप्नभ्रमादिषु अध्यासानुकूलाधिष्ठान-ज्ञानवत्त्वेन जीवस्य कर्तृत्वप्रसङ्गात्। न च इष्टापत्तिः अथ रथान् रथयोगान् पथः सृजते स हि कर्त्तेत्यादिश्रुत्यैव जीवस्य स्वप्नप्रपञ्चकर्तृत्वोक्ते-रिति वाच्यम्? भाष्यकारैर्लाङ्गलं गवादीनुद्वह-तीतिवत् कर्तृत्वोपचारमात्रं रथादिप्रतिभान-निमित्तत्वेनेति व्याख्यातत्वादित्याहुः।

---

भूतेषु तद्वीक्षितत्वनिर्देशस्यालम्बनं दर्शितम्। तच्च ब्रह्मणो महाभूतसृष्ट्यनुकूलज्ञानवत् तदनुकूलचिकीर्षाकृत्योरपि उप-गमेन सङ्गच्छते वीक्षणातिरिक्तचिकीर्षादिव्यावर्त्तकमात्रपद-विरोधात् लोके हि मन्दहासरूपं स्मितं ज्ञानाधिकप्रयत्नसाध्यं प्रसिद्धं तथा च ब्रह्मणो भौतिकसृष्टिं प्रति यथा वीक्षणमपे-क्षितं तथा हिरण्यगर्भोत्पत्तिलक्षणव्यापारोऽप्यधिकोऽपेक्षितः चराचरसृष्टौ परब्रह्मण इव हिरण्यगर्भस्यापि कर्तृतायाः श्रुतिस्मृतिसिद्धत्वात् तथा च परब्रह्मणो भौतिकसृष्ट्यनुकूलं यद्वीक्षणं तदधिकव्यापारापेक्षितत्वं चराचरस्य ब्रह्मस्मितत्व-निर्देशालम्बनं दर्शितं तदपि महाभूतसृष्टावेव वीक्षणाधिक-प्रयत्नापेक्षायां न सम्भवति हिरण्यगर्भद्वारेत्यस्य वाक्यस्य हिरण्यगर्भोत्पत्तिमपेक्ष्य इत्यर्थः। न तु हिरण्यगर्भः साक्षात्

कर्त्ता ब्रह्म च प्रयोजककर्त्तेति यथाश्रुतार्थो ग्राह्यः द्वितीयाध्यायान्तिमाधिकरणे परमेश्वरस्य भौतिकसृष्टावपि साक्षात् कर्त्तृतायाः साधितत्वादिति भावः। वाचस्पतिश्लोकस्य ब्रह्मस्तुतिपरः ब्रह्म स्तुतिप्रशस्तं तथा हि यस्य ब्रह्मणः पुरुषनिश्वासवत् प्रयत्नं विनैव वेदाः सर्वकार्य्यभूताः यस्य च वीक्षणादेव महाभूतानि भवन्ति यस्य च हिरण्यगर्भेण सह चराचरात्मकं विश्वं मन्दहासमात्रं यस्य च महाप्रलयोऽपि सुषुप्तिप्रायः तत्प्राशस्त्ये को विस्मय इति भावः।

द्वितीये पक्षेऽपि दोषं वदन् तृतीयपक्षं समर्थयते अपरे तु इति। स्रष्टव्यालोचनेति। मयेदं स्रष्टव्यमित्याकारकमित्यर्थः। अध्यासेति अध्यासस्य अध्यस्यमानरजतादेरनुकूलं यदधिष्ठानज्ञानं तद्वत्त्वेन इत्यर्थः। न च इष्टापत्तिरिति। न च इत्यस्य वाच्यमित्यनेन सम्बन्धः। अथ इत्यस्य स्वप्नकाल इत्यर्थः। जीवस्य रथादिस्रष्टृत्वे हेतुमाह सहि कर्त्तेति। हि यस्मात् स्वाप्नरथादिहेतुकर्मकर्त्ता जीवस्तस्मादित्यर्थः। भाष्यकारैरिति। लाङ्गलं गवादीनुद्वहतीति प्रयोगे लाङ्गलस्य गवादिस्थितिकर्त्तृत्वरूपं गवाद्युद्वोढ़त्वं मुख्यं नास्ति किन्तु लाङ्गले सति कृषिद्वारा गवादिस्थितिहेतुपलालादिलक्षणलाभोऽस्तीति कृत्वा उपचारादुच्यते गवादीनुद्वहतीति। तद्वत् स्वाप्नरथादिपदार्थोपलब्धिहेतुधर्मादिकर्त्तृत्वेन रथादिप्रतिभाननिमित्तत्वरूपेण हेतुना तस्य कर्त्तृत्वमुपचर्य्यते। सहि कर्त्तेति श्रुताविति भाष्यकारैः कर्त्तृत्वस्य औपचारिककर्त्तृत्वरूपतया उक्तत्वादित्यर्थः। एतेन विवरणे सुखादिकर्त्तृत्वोक्तिरपि उपचारमात्रपरा व्याख्याता मयेदं सुखदुःखादि स्रष्टव्यमिति आलोचनरूपज्ञानाभावेऽपि सुखादिदर्शनेन मुख्यकर्त्तृत्वासम्भवात् वीक्षणमात्रसाध्यत्वादिति कल्पतरौ स्रष्टव्यालोचनरूपवीक्षणं विवक्षितमिति न तद्विरोध इति द्रष्टव्यम्।

अनेनैव निखिलप्रपञ्चरचनाकर्त्तृभावेन अर्थसिद्धं सर्वज्ञत्वं ब्रह्मणः शास्त्रयोनित्वादिति [ व्या॰ सू॰ अ॰ १ पा॰ १ सू॰ ३ ] अधिकरणे वेदकर्त्तृत्वेनापि समर्थितम्।

[ अथ ब्रह्मणः सर्वज्ञत्वस्वरूपनिरूपणम् ]

अथ कथं ब्रह्मणः सर्वज्ञत्वं सङ्गच्छते जीववदन्तःकरणाभावेन ज्ञातृत्वस्यैव अयोगात्।

---

जन्मादिसूत्रेण निखिलजगत्कर्त्तृत्वे सति तदुपादानत्वे ब्रह्मणो लक्षणत्वेन प्रतिपादिते सति तस्य सर्वज्ञत्वमर्थात् सिध्यति।

निखिलजगत्सृष्टिस्थितिसंहारकर्त्तृत्वस्य सर्वज्ञत्वं विना असम्भवादित्याह अनेनैवेति। सर्वज्ञत्वसिद्धौ हेत्वन्तरमाह शास्त्रयोनित्वादिति। अस्य सूत्रस्यार्थमाह वेदकर्त्तृत्वेन अपि इति। ननु यथा वेदकर्त्तृत्वं भाष्यादिषु उक्तप्रकारेण सर्वज्ञत्वं साधयति तथा जन्मादिसूत्रोपात्तं सर्वकर्त्तृत्वमपि तत्साधयति। तथा च पूर्वसूत्रे अर्थसिद्धम् इह तु साध्यते इत्युक्तौ को हेतुरिति उच्यते पूर्वसूत्रं लक्षणपरं नतु सर्वज्ञत्वसाधनपरम् इदन्तु तत्साधनपरमिति तात्पर्य्यसत्त्वासत्त्वाभ्यां तथा व्यवहारः। ततश्च ब्रह्म सर्वज्ञं शास्त्रकर्त्तृत्वादिति सूत्रयोजना। ननु ब्रह्मणः सर्वज्ञत्वं यः सर्वज्ञः स सर्वविद् गुणी सर्वविद्य इत्यादिश्रुत्या कण्ठत एव प्रतिपाद्यते, कात्र साधनापेक्षेति चेत्? सत्यं श्रुत्युक्ते सर्वज्ञत्वे प्रतिपत्तिदार्ढ्यायोपपत्तिसमर्पणात्।

एवं श्रुत्युपपत्तिसिद्धं सर्वज्ञत्वं निरूपयितुमाक्षेपमवतारयति अथेति। जीवस्य हि स्वोपाध्यन्तःकरणवृत्तिज्ञानाश्रयत्वरूपं ज्ञातृत्वं प्रमाणसिद्धं ब्रह्मणस्तु अन्तःकरणाभावात् ज्ञातृत्वं

अत्र सर्ववस्तुविषयसकलप्राणिधीवासनोपरक्ता-ज्ञानोपाधिक ईश्वरः अतस्तस्य सर्वविषयवासनासाक्षितया सर्वज्ञत्वमिति भारतीतीर्थादिपक्षः प्रागेव दर्शितः।

प्रकटार्थकारास्त्वाहुः। यथा जीवस्य स्वोपाध्यन्तःकरणपरिणामाश्चैतन्यप्रतिबिम्बग्राहिण इति तद्योगात् ज्ञातृत्वम् एवं ब्रह्मणः स्वोपाधिमायापरिणामाश्चित्प्रतिबिम्बग्राहिणः सन्तीति तत्प्रतिबिम्बितैः स्फुरणैः कालत्रयवर्त्तिनोऽपि प्रपञ्चस्य अपरोक्षेण अवकलनात् सर्वज्ञत्वमिति।

---

न सम्भवति न च ब्रह्मणोऽपि अन्तःकरणमस्त्विति वाच्यम्? कार्योपाधिरयं जीव इति श्रुत्या तस्य जीवोपाधित्वेन नियतत्वात्। ज्ञातृत्वं च सर्वज्ञत्वव्यापकं ज्ञातृत्वविशेषरूपत्वात् सर्वज्ञत्वस्य। तथाच ब्रह्मणः ज्ञातृत्वस्य व्यापकस्य निवृत्त्या व्याप्यसर्वज्ञत्वनिवृत्तिरित्यर्थः। ज्ञातृत्वाभावे सर्वज्ञत्वं दूरापास्तमित्येवकारार्थः। अन्तःकरणानां जीवोपाधित्वेऽपि तद्वासनामामीश्वरोपाधित्वात् सम्भवति कथञ्चित् तस्य सर्वज्ञत्वमिति परिहरति।

अत्र सर्ववस्त्विति अत्र इत्यस्य अस्मिन्नाक्षेप इत्यर्थः। सर्वविषयवासनासाक्षितयेति स्वोपाधिभूतवासनाविषयसर्ववस्त्ववभासकतया इत्यर्थः।

अस्मिन् समाधाने प्रागुक्तमस्वरसं मनसि निधाय समाधानान्तरमाह प्रकटार्थकारास्त्विति। यथा, अन्तः-

तत्त्वशुद्धिकारास्तूक्तरीत्या ब्रह्मणो विद्यमाननिखिलप्रपञ्चसाक्षात्कारसम्भवात् तज्जनितसंस्कारवत्तया च स्मरणोपपत्तेरतीतसकलवस्त्ववभाससिद्धिः। सृष्टेः प्राक् मायायाः सृज्यमाननिखिलपदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्त्तमानत्वात् तत्साक्षितया तदुपाधिकस्य ब्रह्मणोऽपि तत्साधकत्वसिद्धेरनागतवस्तुविषयविज्ञानोपपत्तिरिति सर्वज्ञत्वं समर्थयन्ते।

---

करणं ज्ञातृत्वोपाधिस्तथा मायापि ज्ञातृत्वोपाधिर्भवत्येव। तथाच ब्रह्मणि मायोपाधिके सर्वज्ञत्वव्यापकस्य ज्ञातृत्वस्य निवृत्त्यभावात् न सर्वज्ञत्वनिवृत्तिशङ्का इत्यर्थः। स्वोपाधिमायेति मायिनमिति श्रुतेर्मायोपाधिः जगद्योनिः सर्वज्ञत्वादिलक्षण इति वाक्यवृत्तिवचनाच्च मायाया ईश्वरोपाधित्वं सिद्धमिति भावः। सर्वज्ञत्वसर्वनियन्तृत्वसर्वात्मकत्वानि लक्षणानि असाधारणधर्माः यस्य सः सर्वज्ञत्वादि लक्षण इत्यर्थः। अवकलनादिति विषयीकरणादित्यर्थः।

तत्त्वशुद्धिकारास्त्विति प्रकटार्थकाराणां मते अतीतानागतप्रपञ्चरूपविषयेऽपि ईश्वरीयमायावृत्तिप्रतिबिम्बरूपं ज्ञानमपरोक्षं तत्त्वशुद्धिकाराणां मते अतीतादिविषये जीवनामिव ईश्वरज्ञानमपि परोक्षमेव इति विशेषार्थकस्तुशब्दः। विद्यमानेति। लोके प्रत्यक्षज्ञानस्य वर्त्तमानवस्तुमात्रविषयकत्वस्वाभाव्यदर्शनेन तस्य तत्स्वभावातिलङ्घने कारणाभावात् सर्वज्ञत्वप्रतिपादकशास्त्रस्य ईश्वरीयज्ञानगतपरोक्षत्वापरोक्ष-

कौमुदीकृतस्तु वदन्ति स्वरूपज्ञानेनैव स्वसंसृष्टसर्वावभासकत्वात् सर्वज्ञत्वम्। अतीतानागतयोरपि अविद्यायां चित्रभित्तौ विमृष्टानुन्मीलितचित्रवत् संस्कारात्मना सत्त्वेन तत्संसर्गस्यापि उपपत्तेः। न तु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वं तमेव भान्तमनुभाति सर्वमिति सावधारणश्रुतिविरोधात्। सृष्टेः प्रागेकमेव अद्वितीयमित्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रलयस्य वक्तव्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्त्तरूपे ईक्षणे तत्पूर्वकमहाभूतादौ च स्रष्टृत्वाभावप्रसङ्गाच्च।

---

त्वयोरुदासीनत्वादिति भावः। तज्जनितेति विद्यमानवस्तुसाक्षात्कारजनितेत्यर्थः। अनागतवस्तुज्ञानमुपपादयति सृष्टेः प्राक् इति। स्फुरणपदं वृत्तिपरम्। विवर्त्तमानत्वं परिणममानत्वम्। तदुपाधिकस्येति मायोपाधिकस्य इत्यर्थः। कथं तदुपाधिकत्वमत आह तत्साचितयेति। तस्यां मायायां प्रतिविम्बिततया इत्यर्थः। सृष्टेः पूर्वकाले मायायास्तथा परिणामे कारणमाह जीवादृष्टेति। तत्साधकत्वसिद्धेरिति मायावृत्तिकर्त्तृत्वसिद्धेरित्यर्थः। अनागतेति। अनागतवस्तुविषयकस्य ज्ञानस्य वृत्तिप्रतिविम्बरूपस्य ब्रह्मण्युपपत्तिरित्यर्थः।

जीववद् ब्रह्मणोऽपि चैतन्यप्रतिविम्बोपेतैः वृत्तिज्ञानैः सर्वज्ञत्वं निरूपितं मतद्वयेन इदानीं स्वरूपज्ञानेनैव तन्नि-

रूपयति कौमुदीव्रतस्त्विति। ननु अतीतानागतप्रपञ्चयोः प्रलयकाले सृष्टिपूर्वकाले च सत्त्वे मानाभावात् तदा ब्रह्मणः सर्वज्ञत्वं न सिध्यति असतोस्तयोः चैतन्यसंसृष्टत्वासम्भवादिति नेत्याह। अतीतानागतयोरपि इति। अतीतप्रपञ्चस्य प्रलयकाले संस्कारात्मना सत्त्वस्य देवताधिकरणे सूत्रभाष्यकारादिभिः साधितत्वात् तथा अनागतस्यापि सृष्टिपूर्वकाले संस्कारात्मनैव सत्त्वस्य आरम्भणाधिकरणादिषु च साधितत्वात् अतीतादिवस्तुसंसृष्टब्रह्मचैतन्यस्य तदापि सर्वज्ञत्वसिद्धिरिति भावः। चित्रस्य अनुन्मीलितत्वम् अनभिव्यक्तत्वं तत्र हेतुविसृष्टत्वमविद्यैव चित्रभित्तिरिति रूपकमत्र द्रष्टव्यम्। अत्र इदं चिन्त्यम्। स्थूलप्रपञ्चस्थितिकाले संस्कारात्मसूक्ष्मप्रपञ्चो नास्ति प्रलयकालादौ च स्थूलप्रपञ्चो नास्ति तथाच ब्रह्मचैतन्यस्य सदा सर्वप्रपञ्चसंसृष्टत्वाभावात् सदा तस्य असङ्कुचितसर्वज्ञत्वं न सम्भवतीति स्वरूपज्ञानेनैव इत्यत्र इत्यस्य अवधारणस्य व्यवच्छेद्यमाह नतु वृत्तिज्ञानैरिति। श्रुतिगतस्य अवधारणस्य स्वप्रकाशात्मातिरिक्तानवभास्यमादित्यादि जगदित्यर्थः। अत्र इदं चिन्त्यं ब्रह्मचैतन्यस्य जगदवभासनार्थं मायावृत्त्यपेक्षायां यदि श्रौतमवधारणं विरुध्यते तदा जीवचैतन्यस्य घटाद्यवभासनार्थम् अन्तःकरणवृत्त्यपेक्षायामपि तद्विरुध्यत एव। यदि च अन्तःकरणवृत्तीनां जड़त्वात् तदपेक्षायामपि सर्वं जड़वस्तु चैतन्यमात्रावभास्यमिति सावधारणश्रुत्यर्थस्य न बाधस्तदा मायावृत्त्यपेक्षायामपि तुल्यं समाधानमिति। प्रलयकाले सर्वज्ञत्वाभावे को दोषस्तत्राह प्राथमिकेति। तदा सर्वज्ञभावे सति सर्गादौ तदैक्षतेति श्रुत्युक्तं भूतसृष्ट्यनुकूलमीक्षणं प्रति कर्तृत्वासम्भवेन ईक्षणपूर्वकभूतादि सर्गं प्रत्यपि ब्रह्मणः कर्तृत्वाभावप्रसङ्गादित्यर्थः। तत्रापि इदं

एवं सति ब्रह्मणः सर्वविषयज्ञानात्मकत्वमेव स्यान्न तु सर्वज्ञातृत्वरूपं सर्वज्ञत्वमिति चेत् सत्यं सर्वविषयज्ञानात्मकमेव ब्रह्म नतु सर्वज्ञानकर्तृत्वरूपं ज्ञातृत्वमस्ति ।

---

चिन्त्यम् । एवमपि सृष्टिपूर्वकाले ब्रह्मचैतन्यव्यतिरिक्तस्य मायातत्सम्बन्धादेः सत्त्वात् अद्वितीयत्वावधारणं मुख्यं न सम्भवति । यदि च मायादेरनादित्वप्रतिपादकश्रुत्यादिबलाद् व्याकृतकार्य्यात्मकद्वितीयाभावावधारणपरं तद्वचनमित्युच्येत तदा सर्वदा सर्वविषयकज्ञानकर्तृत्वरूपसर्वज्ञत्वप्रतिपादकश्रुत्यादिबलात् सर्वज्ञत्वघटकमायावृत्तिसन्ततिव्यतिरिक्तकार्य्याभावावधारणपरम् अद्वितीयत्ववचनमित्यपि कल्पनं तुल्यम् । मायावृत्तिभिः सर्वज्ञत्वसमर्थनमेव भाष्यसम्मतम् । तथा चेक्षत्यधिकरणभाष्यम् अपि च अविद्यादिमतः संसारिणः शरीराद्यपेक्षाज्ञानोत्पत्तिः स्यात् न ज्ञानप्रतिबन्धकारणरहितस्य ईश्वरस्य इति सृष्टेः पूर्वकाले ब्रह्मणः स्रष्टव्यालोचनरूपमीक्षणं न सम्भवति । वृत्तिज्ञानरूपेक्षणस्य शरीरादिकारकसाध्यताया लोकसिद्धत्वेन ब्रह्मणस्तदा शरीराद्यभावादिति सांख्यशङ्कानिरासार्थमिदं भाष्यम् । जीवस्यैव वृत्तिज्ञानोत्पत्तिः शरीरादिसाध्या ईश्वरस्य तु मायावृत्तिरूपज्ञानोत्पत्तिः शरीराद्यनपेक्षा । तथा च सृष्टेः पूर्वं प्रलयकालेऽपि तस्य मायावृत्तिरूपमीक्षणं सदा सर्वज्ञत्वञ्च सम्भवतीति समाधानभाष्याभिप्रायः । इदं भाष्यमित्थमेव व्याख्यातृभिर्नीतम् ।

भाष्ये ज्ञानप्रतिबन्धकारणमविद्यादीति मन्तव्यं ततश्च मायावृत्तिभिः सर्वज्ञत्वसमर्थनपक्षदूषणमसङ्गतमिति मन्तव्यं

अत एव वाक्यान्वयात् [ व्या० सू० अ० १ पा० ४ सू० १९ ] इति अधिकरणे विज्ञातृत्वं जीवलिङ्गमित्युक्तं भाष्यकारैः। यः सर्वज्ञ इत्यादिश्रुतिरपि दृश्यत्वावच्छिन्नरूपेणैव योजनीयेति।

---

शङ्कते एवं सतीति। स्वरूपज्ञानेनैव सर्वज्ञत्वसमर्थने सतीत्यर्थः। नतु इति स्वरूपज्ञानस्य नित्यत्वादिति भावः। न तु सर्वज्ञानकर्तृत्वरूपमिति ब्रह्मण इति शेषः। अत्र यद्यपि ज्ञातृत्वं सामान्यरूपं सर्वज्ञानकर्तृत्वन्तु विशेषरूपमिति न तयोरभेदः सम्भवति तथापि ब्रह्मणो ज्ञातृत्वं नास्तीत्यत्रैव तात्पर्य्यं न तु तयोरभेदोक्तावपीत्यविरोधः।

अतएव इति ब्रह्मणो ज्ञातृत्वाभावादेवेत्यर्थः। इत्युक्तमिति बृहदारण्यके मैत्रेयीब्राह्मणे पठ्यते। आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यात्मा वा अरे द्रष्टव्य इत्यादि। अत्र किं जीवो द्रष्टव्यत्वेनोपदिश्यते उत प्रत्यगभिन्नः परमात्मा निष्प्रपञ्चस्वभाव इति संशयः। तत्र पूर्वपक्षः पूर्ववाक्ये भोक्तुर्जीवस्य प्रक्रान्तत्वादुपसंहारेऽपि विज्ञातारमरे केन विजानीयादिति विज्ञातृत्वस्य जीवधर्मस्य कीर्त्तनाच्च जीव एव अत्र द्रष्टव्य उपदिश्यत इति। सिद्धान्तस्तु प्रत्यगभिन्नः परमात्मैव द्रष्टव्यतयोपदिश्यते। कुतः वाक्यान्वयात् तथा हि अत्र आत्मवेदनेन सर्वं विदितं भवतीति प्रतिपाद्यते। तच्च सर्वाधिष्ठानब्रह्मपरिग्रहे घटते न जीवपरिग्रहे। तथा इदं सर्वमात्मेत्यादिवाक्यान्यपि सर्वात्मके ब्रह्मण्येव तात्पर्य्येण प्रतिपादकतया अन्वितानि लक्ष्यन्ते। आत्मनस्तु कामाय सर्वं प्रियं भवतीति पूर्ववाक्ये जीवपरामर्शस्तु लोकप्रसिद्धं भोक्तारमनूद्य तस्य शुद्धब्रह्मरूपेण द्रष्टव्यत्वोपदेशार्थः। विज्ञातारमिति-

यद्यपि ब्रह्मस्वरूपचैतन्येनैव स्वसंसृष्टसर्वावभासकं तथापि तस्य स्वरूपेणाऽकार्य्यत्वेऽपि दृश्यावच्छिन्नरूपेण तु ब्रह्मकार्य्यत्वाद् यः सर्वज्ञ इति ज्ञानजननकर्त्तृत्वश्रुतेरपि न कश्चिद्विरोध इति आचार्य्यवाचस्पतिमिश्राः।

---

वाक्यन्तु जीवस्य विज्ञातृत्वरूपधर्मपरं न भवति तस्य वाक्यस्य मुक्तजीवपरत्वात् मुक्तजीवे च निरुपाधिके तस्यासम्भवात् किन्तु भूतपूर्वगत्या विज्ञातृत्वानुवादमात्रं स्वातन्त्र्येण न कस्यचिदर्थस्य साधकं तस्मान्मैत्रेयीब्राह्मणं प्रत्यगभिन्ने निर्विशेषे द्रष्टव्ये समन्वितमिति सिद्धमिति। अत्र ज्ञातृत्वब्रह्मसाधारणञ्चेज्जीवलिङ्गतया भाष्यकारैर्नोपन्यस्येत उपन्यस्तञ्च तस्मात् ज्ञातृत्वं ब्रह्मणो नास्तीति गम्यते इति भावः। ईश्वरस्य सर्वविषयकज्ञानकर्तृत्वानभ्युपगमे श्रुतिविरोधमाशङ्क्याह। यः सर्वज्ञ इति। ननु नित्यचैतन्यमात्रस्य सर्वत्र लक्ष्यतया ज्ञाधातुवाच्यत्वायोगात् विशिष्टचैतन्यस्य प्रकृत्यर्थत्वं वाच्यम्। तथा च विशिष्टस्य कार्य्यत्वसम्भवात् प्रत्ययश्रुत्यर्थकर्तृत्वस्य न विरोधः। ब्रह्मणः सर्वज्ञानकर्तृत्वप्रतिपादकश्रुतिविरोधेन ज्ञातृत्वस्य जीवलिङ्गत्वोक्तेरभ्युच्चयमात्रत्वोपपत्तेस्तदधिकरणसिद्धान्ताभिगतनिर्विशेषब्रह्मव्याहतत्वमात्रेण विज्ञातृत्वस्य पूर्वपक्षलिङ्गत्वोपन्यासोपपत्तेश्च भाष्यकारैरेव मुख्यस्य सर्वविषयकज्ञानकर्तृत्वस्य ईक्षत्यधिकरणे प्रतिपादितत्वाच्च।

प्रत्ययश्रुतेः स्वार्थपरत्वसम्भवे तत्त्यागायोगाच्चेत्यस्वरसादाह। यद्यपीत्यादिना चैतन्येनैव इति न मायावृत्तिभिरित्येवकारार्थः। तर्हि प्रत्ययार्थबाधः नेत्याह। तथापीति। तस्य

(अथ वृत्त्युपयोगनिरूपणम्)

ननु ईश्वरवज्जीवोऽपि वृत्तिमनपेक्ष्य स्वरूपचैतन्येनैव किमिति विषयान्नावभासयति। अत्र उक्तं विवरणे ब्रह्मचैतन्यं सर्वोपादानतया सर्वतादात्म्यापन्नं स्वसंसृष्टं सर्वमवभासयति न जीवचैतन्यं तस्य अविद्योपाधिकतया सर्वगतत्वेऽपि अनुपादानत्वेनासङ्गित्वात्। यथा सर्वगतं गोत्वसामान्यं स्वभावादश्वादिव्यक्तिसङ्गित्वाभावेऽपि सास्नावद्व्यक्तौ संसृज्यते एवं विषयासङ्ग्यपि जीवः स्वभावादन्तःकरणे संसृज्यते तथा च यदा अन्तःकरणपरिणामो वृत्तिरूपो नयनादिद्वारेण निर्गत्य विषयपर्य्यन्तं चक्षूरश्मिवज्झटिति दीर्घप्रभाकारेण परिणम्य विषयं व्याप्नोति तदा तमु-

---

स्वरूपचैतन्यस्य इत्यर्थः। दृश्यावच्छिन्नेति न च अनादिमायादिरूपदृश्यावच्छिन्नचैतन्यस्य कथमुक्तप्रकारेणापि कार्य्यत्वं सिध्येदिति वाच्यम्। मायादेरपि तत्तत्कार्य्यतादात्म्यापत्त्या कार्य्यत्वसिद्धौ मायाद्यवच्छिन्नस्यापि कार्य्यत्वस्य सुसम्पादत्वादिति भावः।

आक्षिपति ननु इति। नावभासयतीति। न च अत्रेष्टापत्तिर्वक्तुं शक्यते। तथा सति अविद्याप्रतिबिम्बचैतन्यरूपजीवस्य व्यापकतया स्वसंसृष्टसकलजगदवभासकत्वापत्त्या सर्वज्ञत्वप्रसङ्गात् स्वरूपचैतन्यस्य कारकानपेक्षतया चक्षु-

पारुह्य तं विषयं गोचरयति केवलाग्नेरदाह्य-स्यापि तृणादेरयःपिण्डसमारूढाग्निदाह्यत्ववत् केवलजीवचैतन्याप्रकाश्यस्यापि घटादेरन्तःकरण-

---

रादिवैयर्थ्यप्रसङ्गाच्चेति भावः। अत्र उक्तमिति अस्मिन्नाक्षेपे समाधानमुक्तमित्यर्थः। जीवचैतन्यमिति यथा जगत् ब्रह्म-संसृष्टं तथा जीवसंसृष्टं न भवति अतो न तस्य सर्वज्ञत्वप्रस-क्तिरित्यर्थः। ननु यथा जीवस्य घटादिविषयैः सम्बन्धाभावः तथान्तःकरणादिनापि सम्बन्धाभावस्तुल्यः। उपादानत्वाभावा-देव तथा च अन्तःकरणादे र्वृत्तिं विनैव जीवचैतन्यरूपसाक्षि-भास्यत्वं न स्यादित्याशङ्क्य उपादानत्वाभावेऽपि जीवचैतन्यस्य अन्तःकरणादिना तादात्म्यसम्बन्धे दृष्टान्तमाह यथा सर्वगत-मिति संसृज्यत इति अतो न अन्तःकरणादेः साक्षिभास्यत्व-विरोध इति भावः। चक्षुरादि वैयर्थ्यप्रसङ्गं परिहरति तथा च इत्यादिना। तथा च इत्यस्य जीवस्य स्वतो विषयसम्बन्धाभावे सतीत्यर्थः। अन्तःकरणपरिणामस्य सहसा विषयव्याप्तौ दृष्टान्तः चक्षूरश्मिरिवेति। तमिति परिणाममित्यर्थः। गोचरयतीति जीवचैतन्यमितिशेषः। विषयदेशे सतोऽपि जीवचैतन्यस्य स्वतो विषयावभासकत्वं नास्ति तस्यैवतु वृत्त्यारूढस्य तदस्तीत्यत्र दृष्टान्तमाह केवलाग्नेति। तत्प्रकाश्यत्वमित्यत्र तत्पदं जीवचैतन्यपरम्। ननु जीवचैतन्यस्य विषयदेशे सतोऽपि विषयैः संसर्गाभावात् न तत्प्रकाशकत्वं वृत्त्या तयोः संसर्गलाभे च तत् प्रकाशकत्वमिति किमिति परिह्रियते जीवचैतन्यस्य सर्वग-तत्वेन सत्यपि विषयसंसर्गे बिम्बभूतचैतन्यवत्तस्यावृतत्वादेव न विषयप्रकाशकत्वमिति प्रतिपादनेन अपि जीवस्य सर्वज्ञत्व-

वृत्त्युपारूढस्य तत् प्रकाश्यत्वं युक्तम्।

यद्वा अन्तःकरणोपाधित्वेन जीवः परिच्छिन्नः अतः संसर्गाभावान्न घटादिकमवभासयति वृत्तिद्वारा तत्संसृष्टविषयावच्छिन्नब्रह्मचैतन्याभेदाभिव्यक्तौ तं विषयं प्रकाशयति। अथवा जीवः सर्वगतोऽपि अविद्यावृतत्वात् स्वयमपि अप्रकाशमानतया विषयानवभासयन् विषयविशेषे वृत्त्युपरागादावरणतिरोधानेन तत्रैव अभिव्यक्तस्तमेव

---

प्रसङ्गादेः परिहारसम्भवादिति चेत् न। ब्रह्म न जानामीत्यनुभवबलात्तस्यावृतत्वेऽपि मां न जानामीत्यनुभवाभावेन जीवचैतन्यस्यावृतत्वासम्भवादिति भावः। जीवचैतन्यस्य अन्तःकरणोपाधिकतया परिच्छिन्नत्वपक्षे सर्वज्ञत्वापत्तिशङ्कैव नास्ति तस्य विषयैः सह स्वतः सम्बन्धाभावेन वृत्तिं विना तत्प्रकाशकत्वासम्भवादिति।

परिहारान्तरमाह यद्वेति। अत इति परिच्छिन्नत्वात् इत्यर्थः। तत्संसृष्टेति वृत्तिद्वारा वृत्तिमदन्तःकरणसंसृष्टं यद्विषयावच्छिन्नब्रह्मचैतन्यं तस्य अन्तःकरणोपाधिकजीवचैतन्येन सह अभेदाभिव्यक्तौ सत्यां स जीवस्तं विषयं प्रकाशयति इत्यर्थः। अविद्याप्रतिबिम्बो जीव इति प्रथमपक्षमेवाश्रित्य जीवस्योपादानत्वाभावेऽपि घटादिविषयैः सह संसर्गमभ्युपेत्य परिहारमाह अथ वेति। सर्वगतोऽपीति उपलक्षणञ्चैतत् विषयसंसृष्टोऽपीत्यपि द्रष्टव्यम् इतरथा विषयसंसर्गाभावादेव जीवस्य विषयप्रकाशकत्वाभावोपपत्तौ तस्यावृतत्व-

विषयं प्रकाशयति। एवं च चिदुपरागार्थत्वेन विषयचैतन्याभेदाभिव्यक्त्यर्थत्वेनावरणाभिभवार्थत्वेन वा वृत्तिनिर्गममपेक्ष्य तत्संसृष्टविषयमात्रावभासकत्वाज्जीवस्य किञ्चिज्ज्ञत्वमपि उपपद्यत इति।

---

कल्पनावैयर्थ्यप्रसङ्गादिति बोध्यम्। न च मां न जानामीत्यनुभवाभावात् कथं तस्यावृतत्वं सिध्येदिति वाच्यम्? अन्तःकरणोपहितजीवचैतन्यस्यैव मामित्यनुभवविषयतया व्यापकजीवचैतन्ये अन्तःकरणावच्छेदेन तदभावेऽपि विषयदेशे तस्यावृतत्वकल्पने बाधकाभावात् सर्वगतत्वेन रूपेण मानं जानामि इत्यनुभवसत्त्वात् च इति भावः। स्वयमपि इति विषयास्तावत् जड़त्वात् स्वतो न प्रकाशन्ते। जीवस्तु स्वप्रकाशतया प्रकाशमानोऽपि आवृतत्वात् अप्रकाशमान इति वक्तुमपिशब्दः यद्वापि शब्दोऽवधारणार्थः। तथाच आवृतत्वात् स्वयमेव अप्रकाशमानतया इत्यर्थः। वृत्त्युपरागात् इति विषयविशेषे वृत्त्युपरागे सति विषयदेशस्थजीवचैतन्यस्यापि वृत्त्युपरागो भवति तेन जीवचैतन्यगतस्य आवरणस्य तिरोधानं भवति तथाच जीवचैतन्ये यो वृत्त्युपरागः स आदिपदार्थः। तत्रैवेति विषयविशेष एवेत्यर्थः। तमेवेति नान्यं विषयमतो न सर्वज्ञत्वप्रसङ्ग इति भावः। इममेव भावं प्रकटयति एवं चेति। जीवचैतन्यस्य वृत्तिं विना विषयानवभासकत्वे सिद्धे सतीत्यर्थः। तत् संसृष्टेति वृत्तिसंसृष्टेत्यर्थः। किञ्चिज्ज्ञत्वमपीति अनुभवसिद्धं किञ्चिज्ज्ञत्वम् अनुभवसिद्धासर्वज्ञत्वादिति भावः। तात्पर्यं चक्षुराद्यनुविधानं चेत्यपिशब्दार्थः।

(वृत्त्या सह विषयस्य सम्बन्धनिरूपणम्।)

अथ प्रथमपक्षे सर्वगतस्य जीवस्य वृत्त्यधीनः को विषयोपरागः। वृत्त्यापि हि पूर्वसिद्धयोः निष्क्रिययोः जीवविषयचैतन्ययोस्तादात्म्यस्य संयोगस्य वा न भवत्याधानम् अत्र केचिदाहुः। विषयविषयिभावसम्बन्ध एवेति।

---

आक्षिपति अत्रेति। उक्तपक्षेषु मध्य इत्यर्थः। क इति स्वरूपलक्षणो वा तादात्म्यलक्षणो वा संयोगलक्षणो वेति किं शब्दार्थः। तत्र न तावदाद्यो वृत्त्यधीनः जीवचैतन्यस्य सर्वगतत्वेन विषयदेशगतजीवचैतन्यविषययोः स्वरूपात्मकसम्बन्धस्य वृत्तिं विनापि सिद्धत्वादित्याशयेन सर्वगतस्य इत्युक्तं द्वितीयतृतीयौ क्रमेण दूषयति वृत्त्या पीति। लोके ययोः पदार्थयोः तादात्म्यमनुभूयते तयोरादित आरभ्यैवानुभूयते न तु मध्ये आगन्तुकमित्याशयेनाह पूर्वसिद्धयोरिति। संयोगस्य अन्यतरकर्मजत्वमुभयकर्मजत्वं वा वक्तव्यम्। तदुभयं प्रकृते न सम्भवतीत्याह निष्क्रिययोरिति। न च सुवर्णादौ द्विविधकर्माभावेऽपि तेजःपार्थिवभागयोः संयोगो दृष्ट इति वाच्यम्? तथा विषयचैतन्ययोरादित आरभ्य संयोगाभ्युपगमे तस्य वृत्त्यधीनत्वप्रतिपादनविरोधादिति भावः। वृत्त्याप्याधानं न सम्भवतीति सम्बन्धः जीवचैतन्यस्यानुपादानतया निरवयवतया च विषयजीवचैतन्ययोः तादात्म्यसंयोगौ स्वतो नस्त एवं वृत्त्यापि तयोराधानं न सम्भवतीत्यपि शब्दार्थः। आधानमुत्पादनमिति बोध्यम्। विषयदेशे सन्निहितस्य जीवचैतन्यस्य वृत्त्युत्पत्तेः पूर्वं विषयविषयिभावलक्षणसम्बन्धो नाभूत् तदुत्पत्त्यन-

अन्ये तु विषयविषयिभावमात्रनियामिका वृत्तिश्चेदनिर्गताया अप्यैन्द्रियकवृत्तेस्तन्नियामकत्वं नातिप्रसङ्गावहमिति तन्निर्गमाभ्युपगमवैयर्थ्यापत्तेः स नाऽभिसंहितः किं तु विषयसन्निहितजीवचैतन्यतादात्म्यापन्नाया वृत्तेर्विषयसंयोगे तस्यापि तद्द्वारकः परम्परासम्बन्धो लभ्यत इति स एव चिदुपरागोऽभिसंहित इत्याहुः।

अपरे तु साक्षादपरोक्षचैतन्यसंसर्गिण एव सुखादेरापरोक्ष्यदर्शनादपरोक्षविषये साक्षात्

---

न्तरं स जायते तस्य अतिरिक्तस्य अनिर्वचनीयस्य सम्भवादित्याशयेनाह अत्र केचिदाहुरिति। न तु स्वरूपसम्बन्धस्य वा तादात्म्यस्य वा संयोगस्य वा वृत्त्यधीनत्वमुपेयते येन उक्तदोषः स्यादित्येवकारार्थः।

परोक्षस्थले अनुमित्यादिवृत्त्युपहितजीवचैतन्यस्यानुमेयादिविषयैः सह विषयविषयिभावलक्षणसम्बन्धस्य वृत्तिनिर्गमनं विनापि सिद्धान्ते स्वीकाराद्वृत्तिनिर्गमनमुपगच्छतां विवरणकाराणामयं सम्बन्धो नाभिप्रेत इत्याह विषयविषयिभावमात्र इति। परोक्षस्थलसाधारणविषयविषयिभाव इत्यर्थः। तन्नियामकत्वमिति विषयविषयिभावसम्बन्धः तच्छब्दार्थः वृत्तिनिर्गमनाभावेऽपि यद्विषयावृत्तिर्जीवस्य स एव तस्य प्रकाश्यो नान्य इति नियमसिद्धेर्विषयान्तरप्रकाश्यकत्वापत्तिरूपातिप्रसङ्गो, नास्तीत्यर्थः। संयोगादेरपि निरस्तत्वात् कः सम्बन्धस्तदभिमत इति पृच्छति किन्त्विति। अभिमते

संसर्ग एष्टव्यः तस्माद् वृत्तेर्विषयसंयोगे वृत्तिरूपा- वच्छेदकलाभात् तदवच्छेदेन तदुपादानस्य जीव- स्यापि संयोगजसंयोगः सम्भवति कारणाकारण- संयोगात् कार्य्याकार्य्यसंयोगवत् कार्य्याकार्य्य- संयोगात् कारणाकारणसंयोगस्यापि युक्तितौल्ये- नाभ्युपगन्तुं युक्तत्वादित्याहुः ।

---

सम्बन्धमाह विषयसन्निहितेति । विषयव्यापितया उत्पन्नां वृत्तिं प्रति विषयसन्निहितजीवचैतन्यस्याधिष्ठानतया वृत्तेस्तत् तादात्म्य बोध्यम् । तस्यापि इति विषयासन्निहितजीवचैतन्यस्यापि विषयावभासकत्वेनाभिमतस्य विषयेण सह वृत्तिविषयसंयोग- द्वारकः परम्परासम्बन्धः विषयसंयुक्तवृत्तितादात्म्यलक्षणो लभ्यत इत्यर्थः । उक्तसम्बन्धस्य वृत्तिनिर्गमनं विना असम्भवात् तन्नि- र्गमनं विवरणाचार्य्यैरुक्तमिति भावः । सुखादेरान्तरपदार्थस्या- परोक्षत्वे तत्प्रकाशकजीवचैतन्येन सह तस्य साक्षात्सम्बन्धः प्रयोजकत्वेन क्लृप्तः एवं वाह्यघटादीनामापरोक्ष्येऽपि साक्षात्- सम्बन्ध एषितव्यः अन्यथा विषयापरोक्ष्ये क्वचित् साक्षात्सम्बन्धः क्वचिच्च परम्परासम्बन्धः प्रयोजक इति द्वैरूप्यापत्तेः सम्भवति साक्षात्सम्बन्धे परम्परासम्बन्धकल्पनायोगाच्च तस्मात् नायमप्या- चार्य्याभिमतः सम्बन्धः इत्याह अपरेत्विति ।

तस्मादिति । परम्परासम्बन्धस्य अनभिमतत्वादित्यर्थः । वृत्तेरिति वृत्तेर्विषयेण संयोगे सति वृत्त्युपादानजीवचैतन्य- स्यापि विषयेण सह संयोगजसंयोगः सम्भवति एतदुक्तं भवति जीवचैतन्यस्य वृत्तिः कार्य्यम् अकार्य्यं विषयः वृत्तेर्जीवचैतन्यमुपादानकारणं तथा वृत्तेर्विषयो नोपादान-

एकदेशिनस्तु अन्तःकरणोपहितस्य विषयावभासकचैतन्यस्य विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्तिद्वारा विषयतादात्म्यसम्पादनमेव चिदुपरागोऽभिसंहितः सर्वगततया सर्वविषयसन्निहितस्यापि जीवस्य तेन रूपेण विषयावभासकत्वे तस्य साधारणतया पुरुषविशेषापरोच्यव्यवस्थित्ययोगेन तस्यान्तःकरणोपहितत्वरूपेणैव विषयावभासकत्वात्। एवं च विषयापरोच्ये आध्यासिकसम्बन्धो नियामक इति सिद्धान्तोऽपि संगच्छते। न च एवं द्वितीयपच-

---

कारणं तथाच वृत्तिविषययोर्जीवचैतन्यं प्रति कार्य्याकार्य्ययोः संयोगाज्जीवचैतन्यविषययोर्वृत्तिं प्रति कारणाकारणयोः संयोगोऽत्र संयोगजसंयोगो विवचित इति। ननु कायप्रतिकारणभूतहस्तस्य तं प्रत्येवाकारणभूततरुणा संयोगात् हस्तकार्य्यकायस्य हस्ताकार्य्यतरुणा सह संयोगो उपेयते हस्ततरुसंयोगदशायां तरौ हस्तावच्छेदेन तरुःकायसंयुक्त इत्यनुभवादित्याशङ्क्य प्रकृतेऽपि घटादौ विषये वृत्तिसंयोगदशायां घटे वृत्त्यवच्छेदेन घटः स्फुरतीति जीवचैतन्यसंसृष्टत्वानुभवादित्याशयेनाह कारणाकारणेति। युक्तितौल्येनेति उभयत्र कल्पनायामनुभवरूपाया युक्तेः तुल्यत्वेन इत्यर्थः।

ननु विषयदेशे सन्निहितस्यापि जीवचैतन्यस्य वृत्त्युपादानत्वं विवरणाचार्य्याणामभिमतं न भवति जीवस्यान्तःकरणा-

साङ्कर्यं जीवस्य सर्वंगतत्वे प्रथमः पक्षः परिच्छिन्नत्वे द्वितीय इत्येव तयोर्भेदादित्याहुः।

---

व्युपादानत्वाभावेऽपि सास्नादिमद्व्यक्तौ गोत्वसामान्यस्य इव स्वभावादेव जीवस्यान्तःकरणादौ सम्बन्ध इत्यस्यार्थस्य एवं विषयासङ्गेऽपि जीवः स्वभावादन्तःकरणेन संसृज्यत इत्यत्र प्राग्विवरणमतत्वेन प्रतिपादितत्वात् ततश्च जीवचैतन्यस्य वृत्तिं प्रति उपादानकारणत्वाभावे सति उक्तसम्बन्धो न सिध्यतीति संयोगजसंयोगोऽपि नाचार्य्यसम्मत इति अस्वरसादाह एकदेशिनस्त्विति। घटादिविषयावभासकजीवचैतन्यस्य घटादिना विषयेण सह तादात्म्यसम्बन्धसम्पादनमेव चिदुपरागत्वेनाभिमतमित्यर्थः। ननु वृत्त्यापि पूर्वसिद्धयोर्विषयजीवचैतन्ययोस्तादात्म्यस्य न सम्भवत्याधानमिति प्रागुक्तत्वात् कथं तत्सम्पादनमत आह विषयतादात्म्यापन्नेति। विम्बभूतब्रह्मचैतन्यस्य घटादिविषयोपादानतया ब्रह्मविषययोस्तादात्म्यं प्रागेव सिद्धं तथा च विषयतादात्म्यापन्नब्रह्मचैतन्येन सह विषयावभासकजीवचैतन्यस्य वृत्तिकृता भेदाभिव्यक्तौ सत्यां जीवचैतन्यस्य विषयतादात्म्यं वृत्त्यधीनतया लभ्यते अभेदाभिव्यक्तिप्रकारश्च वक्ष्यते अतो न तादात्म्यसम्पादनानुपपत्तिरिति भावः। विषयावभासकजीवचैतन्यस्य अन्तःकरणोपहितस्येति यद्विशेषणं दत्तं तस्य प्रयोजनमाह सर्वंगततयेति। तेनेति सर्वंगतत्वेन इत्यर्थः। तस्येति जीवस्य इत्यर्थः। साधारणतयेति सर्वपुरुषसाधारणतयेत्यर्थः। पुरुषपदं प्रमात्रपरम् अविद्याप्रतिविम्बो जीव इति पक्षे जीवभेदाभावाद्योगेन तस्येति जीवस्येत्यर्थः। तथाच सर्वंगतमपि जीवचैतन्यं यस्य पुरुषस्यान्तःकरणोपहितं सत् यमर्थमवभासयति सोऽर्थ-

स्तस्यैव अपरोक्षो नान्यस्येति व्यवस्थितिसिद्धये अन्तःकरणोप-हितत्वविशेषणं वाच्यमित्यर्थः। एकदेशिमते लाभमाह एव-ञ्चेति। विषयावभासकजीवचैतन्यस्य वृत्त्या विषयतादात्म्यस-म्पादनोपगमे सति इत्यर्थः। आध्यासिकेति। अध्याससिद्धतादा-त्म्यसम्बन्ध इत्यर्थः। न च एवमिति। सम्बन्धार्था वृत्तिरिति प्रथमपक्षेऽपि वृत्त्या भेदाभिव्यक्त्युपगम इत्यर्थः। साङ्कर्य्यं परि-हरति जीवस्येति। जीवस्य सर्वगतत्वमते सम्बन्धार्था वृत्तिरिति प्रथमपक्षः जीवस्यान्तःकरणोपाधिकतया परिच्छिन्नत्वमते अभेदाभिव्यक्त्यर्था वृत्तिरिति द्वितीयपक्ष इत्यर्थः। अयं भावः। प्रथमद्वितीयपक्षयोरुभयोर्वृत्तिकृता भेदाभिव्यक्तिसाम्येऽपि प्रथ-मपक्षे वृत्तिरभेदाभिव्यक्तिद्वारा विषयावभासकजीवचैतन्यस्य विषयेण सह तादात्म्यसम्बन्धसम्पादनार्था द्वितीयपक्षे तु वृत्ति-र्विषयावभासकजीवचैतन्यस्य विषयावच्छिन्नचैतन्येन अभेदाभि-व्यक्त्यर्थैवेति न पक्षयोः साङ्कर्य्यमिति यद्वा प्रथमपक्षे जीवस्य व्यापकतया विषयदेशे सदा सन्निहितस्यैव विषयावभासक-जीवचैतन्यस्य विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्त्यर्था वृत्तिः द्वितीयपक्षे तु जीवस्य परिच्छिन्नतया वृत्तिस्तस्य विषयसन्निधिं सम्पाद्य विषयाधिष्ठानं ब्रह्मचैतन्याभेदाभिव्यक्ति-मपि सम्पादयतीति तयोः पक्षयो रसाङ्कर्य्यमयं परिहारो मूले सर्वगतत्वपरिच्छिन्नत्वपदाभ्यां सूचितः पूर्वपरिहारस्तु प्रथमपक्षद्वितीयपक्षपदाभ्यां सूचितः सम्बन्धार्था वृत्तिरिति प्रथमपक्षे सम्बन्धस्योद्देश्यत्वावगमादभेदाभिव्यक्त्यर्थावृत्तिरिति द्वितीयपक्षेऽभेदाभिव्यक्तेरेव उद्देश्यत्वावगमादिति। अत्र मते विवक्षितविवेकेन वृत्तेरभेदाभिव्यक्तिरेव प्रयोजनं प्रथमद्वि-तीयपक्षयोः पर्य्यवस्यतीति तयोः साङ्कर्य्यं दुर्वारमित्यभि-प्रेत्य आदावेव एकदेशिन इत्युक्तमिति मन्तव्यम्। वस्तुतस्तु

[अभेदाभिव्यक्तिस्वरूपनिरूपणम्।]

अथ द्वितीयपक्षे केयमभेदाभिव्यक्तिः। केचिदाहुः। कुल्याद्वारा तटाककेदारसलिलयोरिव विषयान्तःकरणावच्छिन्नचैतन्ययोर्वृत्तिद्वारा एकीभावोऽभेदाभिव्यक्तिः। एवं च यद्यपि विषयावच्छिन्नं ब्रह्मचैतन्यमेव विषयप्रकाशकं तथापि

---

सम्बन्धार्था वृत्तिरिति वदतामाचार्याणामयमभिप्रायः विषयावभासकत्वेनाभिमतस्य जीवचैतन्यस्य विषयेण घटादिना सह व्यङ्ग्यव्यञ्जकतालक्षणसम्बन्धस्तत्तद्विषयसंसृष्टवृत्त्यधीनोऽत्र विवक्षितः तथाहि अन्तःकरणं स्वच्छद्रव्यत्वात् स्वत एव चैतन्याभिव्यञ्जनसमर्थं घटादिकं तु तथा न भवति अस्वच्छद्रव्यत्वात् घटादिविषयव्याप्तया तु वृत्त्या तत्र विद्यमानमस्वच्छत्वमभिभूय चैतन्याभिव्यञ्जनयोग्यता आधीयते तदुक्तं विवरणाचार्यैरेव अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यतामापादयतीति दृष्टं च अस्वच्छस्यापि स्वच्छद्रव्यसंसर्गात् प्रतिविम्बग्राहित्वयोग्यत्वं यथा कुड्यादेर्जलसंयोगकाले प्रतिविम्बग्राहित्वं घटादेः स्वसन्निहितजीवचैतन्यव्यञ्जकत्वं च तत्प्रतिविम्बग्राहित्वं चैतन्यस्यापि व्यङ्ग्यत्वं तत्र प्रतिविम्बितत्वमेव एवंविधव्यङ्ग्यव्यञ्जकतालक्षणसम्बन्धार्थमेव वृत्तेर्निर्गमनमुक्तं विवरणे तथा च वृत्त्या वहिर्निर्गततया विषयचैतन्ययोर्यथोक्तसम्बन्धे सम्पादिते सति घटादौ प्रतिविम्बितं तत्र च जीवचैतन्यं तमवभासयतीति।

द्वितीयपक्षमाक्षिपति अथेति। केयमिति अभेदाभिव्यक्त्यर्था वृत्तिरिति द्वितीयपक्षो हि जीवस्य परिच्छिन्नत्वमत इत्युक्तम्

तस्य वृत्तिद्वारैकीभावेन जीवित्वं सम्पन्नमिति जीवस्य विषयप्रकाशोपपत्तिरिति ।

---

अस्मिन् मते अन्तःकरणोपाधिकस्य जीवस्य विषयावच्छिन्नबिम्बभूतब्रह्मचैतन्यस्य च वृत्त्या भेदाभिव्यक्तिर्न सम्भवति अखण्डाकारवृत्तेरिव घटादिगोचरवृत्तेरुपाधिनिवर्त्तकत्वाभावेन भेदकोपाध्योरन्तःकरणविषययोः सतोर्जीवब्रह्माभेदाभिव्यक्तेरयोगादित्यर्थः । व्यावर्त्तकोपाध्योः सत्त्वेऽपि तयोरेकदेशस्थसम्पत्तौ तद्बलादभेदाभिव्यक्तिः सम्भवति लोके तथा दर्शनादिति परिहरति केचिदाहुरिति । केदारः शस्यनिष्पत्तिस्थानं तथा च तड़ाकस्थसलिलस्य कुल्याद्वारा केदारस्थसलिलस्य च अभेदाभिव्यक्तिः यथा लोकप्रसिद्धा तथा अन्तःकरणावच्छिन्नचैतन्यरूपजीवस्य विषयावच्छिन्नब्रह्मचैतन्यस्य च वृत्तिद्वारा भेदाभिव्यक्तिर्भवति वृत्तेर्विषयदेशस्थत्वे सति वृत्तिवृत्तिमतोरभेदेन जीवोपाध्यन्तःकरणस्यापि विषयदेशस्थत्वसिद्धिरित्यर्थः । एवञ्चेति अभेदाभिव्यक्तेः सम्भावितायामित्यर्थः । ननु जीवचैतन्यस्य विषयावभासकत्वं न सम्भवति तस्य विषयं प्रति उपादानत्वाभावेन तादात्म्यसम्बन्धाभावात् न च ब्रह्मचैतन्यमेव विषयावभासकमस्तु तस्योपादानतया साक्षादेव तादात्म्यसम्बन्धलाभादिति वाच्यम् ? तथा सति आलोकेन घटः प्रकाशित इतिवत् मया घटोऽवगत इति जीवचैतन्यस्यैव घटप्रकाशकत्वावगमविरोधादिति मत्वा पुनः प्रकृते अभेदाभिव्यक्तिप्रयोजनं वक्तुं यद्यपि इति विषयप्रकाशकमिति इति वक्तव्यं तादात्म्यसम्बन्धलाभादिति शेषः । न जीवचैतन्यमित्येवकारार्थः तथा च मयायमवगतो घट इत्यनुभवविरोध इति भावः । परिहरति तथापीति । तस्येति तादात्म्यसम्बन्धेन विषयावभासकब्रह्मचैतन्यस्य

अन्ये त्वाहुः। बिम्बस्थानीयस्य विषयावच्छिन्नस्य ब्रह्मणः प्रतिबिम्बभूतेन जीवेनैकीभावो नाभेदाभिव्यक्तिः व्यावर्त्तकोपाधौ दर्पण इव जाग्रति तयोरेकीभावायोगात्। वृत्तिकृता भेदाभिव्यक्त्या विषयावच्छिन्नस्य ब्रह्मणो जीवत्वप्राप्तौ ब्रह्मणस्तदा तद्विषयसंसर्गाभावे तद्द्रष्टृत्व सम्भवे सति तस्य

---

वृत्तिद्वारान्तःकरणोपस्थितत्वप्राप्तौ जीवेन एकीभावाज्जीवत्वं सम्पन्नमिति ब्रह्मचैतन्यस्य यद्विषयावभासकत्वं तज्जीवस्यैव इति प्राप्त्या नानुभवविरोध इत्यर्थः।

दर्पण इवेति दर्पणे प्रतिबिम्बदशायां बिम्बप्रतिबिम्बयोरभेदाभिव्यक्तिर्नास्तीति तयोस्तदानुभवात् तथा प्रकृतेऽपि विषयादिरूपभेदकोपाधौ सति सा न सम्भवतीत्यर्थः। ननु तत्त्वसाक्षात्कारेण अशेषोपाधिनिवृत्तौ याऽ इत्यभेदाभिव्यक्तिस्साऽत्रौ अत्र न विवक्षिता किन्तु क्षीरनीरयोरेकपात्रस्थयोरिव वृत्तिद्वारा अन्तःकरणविषययोः एकदेशस्थत्वप्राप्तौ तन्मात्रप्रयुक्ता तदवच्छिन्नचैतन्ययोरौपचारिकी अभेदाभिव्यक्तिर्विवक्षिता अस्यां च अभेदाभिव्यक्तौ न व्यावर्त्तकोपाधिसत्त्वप्रयुक्तो विरोधोऽस्ति दर्पणे मुखप्रतिबिम्बदशायामपि मम मुखमेव दर्पणे भातीति बिम्बप्रतिबिम्बयोरभेदाभिव्यक्तिदर्शनात्। अस्मिन् मतेऽपि इत्थमेव निर्वाहः कर्त्तव्यः न हि अन्तःकरणतद्वृत्तिप्रतिबिम्बयोरभेदाभिव्यक्तिः मुख्या सम्भवति वृत्तिवृत्तिमतोः कार्य्यकारणभावापन्नयोरैक्यायोगेन तत्प्रतिबिम्बयोरैक्यायोगात् ऐक्ये वा एवच्चेति इत्यादिना प्रमा-

सर्वज्ञत्वाभावापत्तेश्च। किं तु विषयावच्छिन्नं ब्रह्मचैतन्यं विषयसंसृष्टाया वृत्तेरग्रभागे विषयप्रकाशकं प्रतिबिम्बं समर्पयतीति तस्य प्रतिबिम्बस्य जीवेनैकीभावः। एवं च अन्तःकरणतद्वृत्तिविषयावच्छिन्नचैतन्यानां प्रमातृप्रमाणप्रमेयभावेन असङ्करोऽपि उपपद्यते।

---

त्वादीनामस्मिन् मते साङ्कर्याभावोपपादनविरोधादिति अस्वरसादाह वृत्तिकृता भेदाभिव्यक्त्येति तदा तद्विषयेति। विषयावच्छिन्नब्रह्मणो जीवत्वप्राप्तौ तस्येश्वरत्वनिवृत्तिरवश्यं वाच्या चैतन्ये एकावच्छेदेन जीवत्वेश्वरत्वयोरसम्भवात् तथा च तदा जीवत्वदशायां ब्रह्मणस्तद्विषयसंसर्गाभावेन तद्द्रष्टृत्वं न सम्भवतीत्यर्थः। तस्येत्यनन्तरं तदेत्यनुषङ्गः। ननु विषयाधिष्ठानचैतन्यस्य वृत्तिसंसर्गदशायाम् अन्तःकरणोपहितत्व प्रयुक्तजीवत्ववदविद्योपहितत्व प्रयुक्तमीश्वरत्वमपि अविरुद्धं तथा च बिम्बभूतेश्वरस्य तदापि सर्वज्ञत्वमक्षतम् अन्यथा अन्तःकरणाद्यधिष्ठानचैतन्यस्य तदुपाधिकत्वप्रयुक्तजीवत्वे सदा स्थिते सति बिम्बभूतब्रह्मणः सदा अन्तःकरणादिसंसर्गाभावेन तद्द्रष्टृत्वासम्भवे सति सर्वज्ञत्वाभावप्रसङ्गदोष इहापि मते तुल्य इत्यस्वरसं मनसि निधाय कीदृशी तर्हि त्वदभिमताभेदाभिव्यक्तिरिति पृच्छति किन्तु इति। तामाह विषयावच्छिन्नमिति अग्रभाग इति वृत्तिर्हि दयस्य अन्तःकरणमारभ्य विषयपर्यन्तमविच्छिन्नकौस्तुभमण्यादि प्रभावत् दीर्घीभावमापन्ना तिष्ठति तस्या वृत्तेर्विषयसंसृष्टो भागो-

न च वृत्त्युपहितचैतन्यस्य विषयप्रमातृत्वे तस्य विषयाधिष्ठानचैतन्यस्येव विषयेणाध्यासिकसम्बन्धाभावाद्विषयापरोक्षे आध्यासिकसम्बन्धस्तन्त्रं न स्यादिति वाच्यम्। विषयाधिष्ठानचैतन्यस्यैव विषयेणावच्छिन्नस्य वृत्तौ प्रतिविम्बिततया तदभेदेन तत् सम्बन्धसत्त्वादिति।

---

ऽयमभाग उच्यते तत्र यो ब्रह्मणः प्रतिविम्बः तस्य विषयप्रकाशकस्य जीवेन एकीभावः इह भेदाभेदाभिव्यक्तिर्विवक्षिता वृत्तिवृत्तिमतोः तादात्म्यरूपाभेदसत्त्वेन तत्प्रतिविम्बयोरभेदाभिव्यक्तिसम्भवादित्यर्थः। एवञ्चेति वृत्तिप्रतिविम्बस्य अन्तःकरणप्रतिविम्बात् वस्तुतो भिन्नस्यैव सतस्तदभेदेनाभिव्यक्तस्य विषयावभासकत्वे स्वीकृते सति इत्यर्थः। असङ्करोऽपि इति वृत्तिवृत्तिमतोः तादात्म्यात् तत् प्रतिविम्बयोरभेदाभिव्यक्तिवदसङ्करोऽपि उपपद्यत इत्यपिशब्दार्थः। मुखं दर्पणोपाधिनेव अन्तःकरणेनोपाधिना अवच्छिन्नं तत्प्रतिविम्बचैतन्यं प्रमातावृत्तिप्रतिविम्बचैतन्यं तयैवावच्छिन्नं प्रमाविषयावच्छिन्नं ब्रह्मचैतन्यं प्रमेयमिति तेषामसाङ्कर्य्यमुपपद्यते व्यावर्त्तकोपाधिसद्भावादित्यर्थः। अस्मिन् मतेऽसाङ्कर्य्यमुपपद्यते इत्युक्त्या पूर्वमते विषयावच्छिन्नब्रह्मचैतन्यस्य जीवत्वप्राप्तिस्वीकारात् प्रमातृप्रमेयचैतन्ययोरसङ्कार्य्यं नोपपद्यत इति सूचितम्। वस्तुतस्तु पूर्वमतेऽपि न साङ्कर्य्यंजीवब्रह्मभेदकोपाधिसद्भावस्य तत्प्रयुक्ततया सर्वज्ञत्वादिव्यवस्थायाश्च प्राक् दर्शितत्वादिति मन्तव्यम्।

प्रकृते न चेति। तस्येति तस्य विषयेण आध्यासि-

अपरे त्वाहुः । बिम्बभूतविषयाधिष्ठानचैतन्यमेव साक्षादाध्यासिकसम्बन्धलाभाद्विषयप्रकाशकमिति तस्यैव बिम्बत्वविशिष्टरूपेण भेदसद्भावेऽपि तदुपलक्षितचैतन्यात्मनैकीभावोऽभेदाभिव्यक्तिः । न चैवं सति जीवब्रह्मसाङ्कर्य्यं न वा ब्रह्मणः सर्वज्ञत्वविरोधः बिम्बात्मना तस्य यथापूर्वमवस्थानादिति ।

---

कसम्बन्धाभावादिति सम्बन्धः प्रमारूपस्य वृत्तिप्रतिविम्बस्य विषयोपादानत्वाभावेन तयोस्तादात्म्यासम्भवात् तथा च विषयापरोक्ष्ये आध्यासिकतादात्म्यसम्बन्धो नियामक इति सिद्धान्तविरोध इति शङ्काभिप्रायः विम्बप्रतिविम्बयोरभेदाभ्युपगमात् विम्बचैतन्यस्य विषयेण सह यस्तादात्म्यसम्बन्धः स एव प्रमारूपप्रतिविम्बस्यापि इति न अपसिद्धान्त इति परिहरति विषयाधिष्ठानेति। तदभेदेन इति प्रतिविम्बचैतन्यस्य विम्बाभेदेन इत्यर्थः ।

विम्बप्रतिविम्बयोरभेदे सत्यपि कल्पितभेदसत्त्वात् विम्बसम्बन्धस्य प्रतिविम्बसम्बन्धत्वं नास्तीत्यस्वरसं साक्षात् पदेन सूचयन् अभेदाभिव्यक्तिं प्रकारान्तरेणाह अपरे त्वाहुरिति । भेदसद्भावेऽपि इति प्रतिविम्बत्वविशिष्टचैतन्यरूपजीवेन सह इति शेषः । तदिति विम्बत्वप्रतिविम्बत्वाभ्यामुपलक्षितं शुद्धचैतन्यं तदात्मना इत्यर्थः । न च एवं सति इति उपलक्षितचैतन्यात्मना भेदाभिव्यक्त्यङ्गीकारे पूर्वोक्तं दोषद्वयं नास्तीत्यर्थः । अत्र इदं चिन्त्यम् उपलक्षितचैतन्यात्मना एकीभावो न

[ आवरणाभिभवस्वरूपनिरूपणम्। ]

अथ तृतीये पक्षे को नाम आवरणाभिभवः अज्ञाननाशश्चेत् घटज्ञानेनैव अज्ञानमूलः प्रपञ्चो निवर्त्ततेति चेत् अत्र केचिदाहुः। चैतन्यमात्रावरकस्य अज्ञानस्य विषयावच्छिन्नप्रदेशे खद्योतादिप्रकाशेन महान्धकारस्येव ज्ञानेन एकदेशेन नाशो वा कटवत् संवेष्टनं वा भीतभटवदपसरणं वा अभिभव इति।

अन्ये तु अज्ञानस्यैकदेशेन नाशे उपादानाभावात् पुनस्तत्र कन्दलनायोगेन सकृदपगते

वास्तवाभेदः तस्य वृत्त्यनपेक्षत्वात् नापि व्यावहारिकाभेदः बिम्बप्रतिबिम्बभेदस्य व्यावहारिकत्वेन तत्समसत्ताकाभेदासम्भवान्नापि प्रातिभासिकाभेदः उपाध्योरेकदेशस्थमात्रेण बिम्बप्रतिबिम्बचैतन्ययोः प्रातिभासिकाभेदसम्भवेन तदर्थं चैतन्यमात्रोपलक्षणवैयर्थ्यादिति तृतीयपक्षमाक्षिपति।

अथेति निवर्त्ततेति। अज्ञानस्य एकत्वादिति भावः। न तु निवर्त्तते अतो न अज्ञाननाशः आवरणाभिभवः। न च अन्यप्रकारः सम्भवति अनुपलम्भादिति भावः। अज्ञानैक्यमेव अवलम्ब्य परिहरति अत्र केचिदाहुरिति। चैतन्यमात्रे मात्रपदं साक्षिव्यतिरिक्तकृत्स्नचैतन्यपरं साक्षिण्यावरणाभावस्य वक्ष्यमाणत्वादिति भावः। एकदेशेन नाशो वेति तथा च तन्मूलप्रपञ्चस्य न निवृत्त्यापत्तिरिति भावः। प्रकारान्तरानुपलम्भोऽसिद्ध इत्याशयेनाह कटवदित्यादिना

समयान्तरेऽप्यावरणाभावप्रसङ्गान्निष्क्रियस्य अपसरणसंवेष्टनयोरसम्भवाच्च न यथोक्तरूपोऽभिभवः सम्भवति। अतश्चैतन्यमात्रावरकस्यापि अज्ञानस्य तत्तदाकारवृत्तिसंसृष्टावस्थविषयावच्छिन्नचैतन्यानावरकत्वस्वाभाव्यमेवाभिभवः। न च विषयावगुण्ठनपटवद् विषयचैतन्यमाश्रित्य स्थितस्य अज्ञानस्य कथं तदनावरकत्वं युज्यत इति शङ्क्यम्। अहमज्ञ इति प्रतीत्या अहमनुभवे प्रकाशमानचैतन्यमाश्रयत एव तस्य तदनावरकत्वप्रतिपत्तेरित्याहुः।

---

निरुक्तमावरणाभिभवं दूषयन् तं प्रकारान्तरेण निर्वक्ति अन्ये तु इत्यादिना। पुनस्तत्रेति। विषयावच्छिन्नचैतन्ये आवरणोत्पत्त्ययोगेन इत्यर्थः। तत्तदिति तत्तद्विषयाकारवृत्तिसंसृष्टावस्थं यद्विषयावच्छिन्नचैतन्यं तदनावारकत्वमित्यर्थः।

ननु यथा घटं व्याप्य वर्त्तमानः पटस्तमावृणोति एवं एवं विषयावच्छिन्नब्रह्मचैतन्यं व्याप्य वर्त्तमानमज्ञानमपि चैतन्यमावृणोत्येवेति तदनावारकत्वकल्पनमयुक्तमिति शङ्कते न चेति। अज्ञाने पटवैलक्षण्यस्य अनुभवसिद्धत्वान्नैतच्चोद्यमवतरतीत्याह अहमिति तस्येति अज्ञानस्य इत्यर्थः। जीवचैतन्याश्रितमपि अज्ञानं न तदावृणोति तस्य आवृतत्वे सर्वव्यवहारलोपप्रसङ्गादिति दहराधिकरणभाष्ये साधितत्वात् साक्षिचैतन्यस्य अनावृततया वक्ष्यमाणत्वाच्चेति भावः।

अपरे तु घटं न जानामीति घटज्ञानविरोधित्वेन घटज्ञाने सति घटाज्ञानं निवृत्तमिति तन्निवर्त्यत्वेन च अनुभूयमानं न मूलाज्ञानं शुद्धचैतन्यविषयस्य तज्ज्ञाननिवर्त्यस्य च तस्य तथात्वायोगात्। किन्तु घटावच्छिन्नचैतन्यविषयमूलाज्ञानस्य अवस्थाभेदरूपमज्ञानान्तरमिति तन्नाश एवाभिभवः। न च एवमेकेन ज्ञानेन तन्नाशे तत्समानविषयाणां ज्ञानान्तराणाम् आवरणाभिभावकत्वानापत्तिः। यावन्ति ज्ञानानि तावन्ति अज्ञानानीत्यभ्युपगमादित्याहुः।

---

प्रपञ्चोपादानमूलाज्ञानापेक्षया अन्यदेव विषयावच्छिन्नचैतन्यावरकमज्ञानमिति घटादिज्ञानेन तन्निवृत्तावपि न प्रपञ्चनिवृत्तिप्रसङ्गः तेन प्रपञ्चमूलाज्ञानानिवृत्तेरिति मतं दर्शयति अपरे त्विति। अज्ञानभेदे मानमाह घटमिति विरोधित्वेन इति न जानामि इति अज्ञानानुभवाभिलापकशब्दे नञो विरोध्यर्थकत्वादभिलप्यानुभवोऽपि ज्ञानविरोधिविषयक एव न च न जानामि इति अनुभवो ज्ञानप्रागभावविषयक एव न तु भावरूपाज्ञानविषयक इति वाच्यम्? प्रागभावस्यैवासम्प्रतिपत्तेरिति भावः। तथात्वायोगादिति। घटावच्छिन्न-चैतन्य-विषयकत्वतज्ज्ञान-निवर्त्यत्वयोरयोगादित्यर्थः।

किन्तु अज्ञानान्तरमिति सम्बन्धः। अवस्थाभेदरूपमिति अस्य विशेषणस्य प्रयोजनं वक्ष्यते न च एवमेकेन इत्यादि-

इमानि च अवस्थारूपाण्यज्ञानानि मूलाज्ञानवदज्ञानत्वादनादीनीति केचित्।

व्यावहारिकौ जगज्जीवौ आवृत्य स्वाप्नौ जगज्जीवौ विक्षिपन्ती निद्रा तावदावरणविक्षेपशक्तियोगात् अज्ञानावस्थाभेदरूपा तथा सुषुप्त-

---

ग्रन्थः स्पष्टार्थः। ननु अवस्थाज्ञानानि किम् अनादीनि किंवा आदिमन्ति नाद्यः मानाभावात् न द्वितीयः अज्ञानमनादीति। सिद्धान्तविरोधादिति चेदत्र केचिदाद्यं पक्षं साधयन्तीत्याह इमानि चेति। अवस्थाज्ञानानि अनादीनि अज्ञानत्वात् मूलाज्ञानवत् न च दृष्टान्तासिद्धिः देवताधिकरणे मूलाज्ञानानादित्वस्य श्रुतिन्यायाभ्यां साधितत्वादिति भावः। न च अज्ञानगतानादित्वे मूलाज्ञानत्वं प्रयोजकं न तु अज्ञानत्वमात्रमिति वाच्यम्। लाघवेन तन्मात्रस्यैव प्रयोजकत्वादिति भावः।

अवस्थाज्ञानान्यादिमन्तीति द्वितीयपक्षमन्ये साधयन्तीत्याह व्यावहारिकौ इत्यादिना। न च सिद्धान्तविरोधः अज्ञानादित्वाभ्युपगमस्य मूलाज्ञानविषयत्वादिति भावः। विमतान्यवस्थाज्ञानानि आदिमन्ति अवस्थाज्ञानत्वात् निद्रावत् सुषुप्तिवत् चेत्यनुमानमभिप्रेत्य दृष्टान्तद्वये साधनसाध्ययोर्वैकल्यं प्रथमं परिहरति। व्यावहारिकाविति इतावत्वस्थापदं मूलाज्ञाने व्यभिचारवारणार्थम्। आवृत्येति जाग्रत्कालीनौ जगज्जीवौ यादृशौ प्रसिद्धौ न तादृशावेव स्वप्नकाले उपलभ्येते अतस्तयोः यथावदनुपलम्भादावरणं वक्तव्यमिति भावः। विक्षिपन्तीति सृजन्तीत्यर्थः।

अज्ञानावस्थाभेदरूपेति। अज्ञानस्य हि आवरणविक्षेप-

वस्थापि अन्तःकरणादौ विलीने सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति परामर्शदर्शनान्मूलाज्ञानवत् सुषुप्तिकालेऽनुभूयमानाज्ञानावस्थाभेदरूपैव। तयोश्च जाग्रद्भोगप्रदकर्मोपरमे सत्येवोद्भवा-

---

श्रक्तिमत्त्वं लक्षणं तस्य स्वप्नकारणीभूतनिद्रायां सत्त्वादज्ञानत्वं तावत् सिद्धं निद्रायाः वक्ष्यमाणरीत्या सादित्वेन साक्षात् मूलाज्ञानत्वायोगात् तदवस्थाविशेषरूपत्वं सिद्धमिति प्रथमदृष्टान्तेन साधनवैकल्यमिति भावः। तथा सुषुप्तिकाले मूलाज्ञानवदनुभूयमाना सुषुप्त्यवस्थापि तथा अज्ञानावस्थाभेदरूपैवेति सम्बन्धः। ननु सुषुप्तिकाले मूलाज्ञानसुषुप्त्योरनुभवोऽसिद्धः तदा अहमज्ञः अहं स्वपिमीत्यनुभवादर्शनादिति नेत्याह सुखमहमिति परामर्शः स्मरणं तथा च उत्थितस्य दृश्यमानपरामर्शान्यथानुपपत्त्या तदा सुषुप्तिमूलाज्ञानयोरनुभवः साक्षिरूपः कल्प्यते। अहमुल्लेखे हि आत्मनि अन्तःकरणसंसर्गः प्रयोजकः तत्काले तस्य लीनत्वात् न अहमुल्लेख इत्याशयेनाह अन्तःकरणादौ विलीन इति चक्षुरादिकमादिपदार्थः सुषुप्तिस्वरूपसाधनार्थः। परामर्शकल्प्यसुषुप्त्यनुभवोपन्यासः सुषुप्तिकाले मूलाज्ञानाभावे सुषुप्तेः तदवस्थारूपत्वं न सिध्येदतः तदनुभवोपन्यासः तदा मूलाज्ञानसत्त्वसाधनार्थः। सुषुप्तेः तदवस्थारूपत्वं परिशेषादवगन्तव्यम्। सुषुप्तिकाले मूलाज्ञानादतिरिक्तानामन्तःकरणादीनां विलीनत्वेन तस्यास्तदवस्थारूपत्वासम्भवादितिसूचनार्थं च अन्तःकरणादिविलयोपन्यासः। तथा च सुषुप्तिदृष्टान्तेऽपि न साधनवैकल्यमिति भावः।

दृष्टान्तद्वयेऽपि साध्यवैकल्यं परिहरति तयोश्चेति निद्रासु-

त्मादित्वमिति तद्वदन्यदपि अज्ञानमवस्थारूपं सादीत्यन्ये ।

ननु अनादित्वपक्षे घटे प्रथममुत्पन्नेन एव ज्ञानेन सर्वतदज्ञाननाशो भवेत् विनिगमनाविरहात् तदवच्छिन्नचैतन्यावरकसर्वाज्ञाननाशे विषयप्रकाशायोगात् च अतः पाश्चात्यज्ञानानाम् आवरणानभिभावकत्वं तदवस्थमेव इति चेत् ।

---

युमयोरित्यर्थः । अन्यदपीति घटादिविषयावच्छिन्नचैतन्यावरकाज्ञानमपीत्यर्थः । अवस्थाज्ञानानां सादित्वपक्षे प्रथममुत्पन्नेन घटज्ञानेन तदुत्पत्तेः पूर्वं घटावरकत्वेन स्थिताज्ञानस्य नाशे सति पश्चादुत्पन्नमवस्थाज्ञानं पुनस्तमावृणोतीति व्यवस्था सिध्यति तेषाम् अनादित्वपक्षे तु सा न सिध्येदिति शङ्कते ननु इति। प्राथमिकघटज्ञानेन तदज्ञानानां सर्वेषां नाशोऽस्ति न वा द्वितीयं कल्पं दूषयति घट इति प्राथमिकज्ञानेन एकमेव अज्ञानं नश्यति नेतराणि इत्यत्र विनिगमकाभावात् सर्वाज्ञाननाशो वक्तव्यस्तथा च द्वितीयकल्पानुपपत्तिरित्यर्थः ।

द्वितीयकल्प एव विनिगमकाभाववद्दोषान्तरमाह तदवच्छिन्नेति । एकावरणनाशेऽपि आवरणान्तराणां सत्त्वाद्विषयप्रकाशानुपपत्तिरित्यर्थः । एवं प्रथमकल्पं परिशेषयित्वा तं दूषयति अत इति प्रथमज्ञानेन सर्वाज्ञाननाशादित्यर्थः। तदवस्थमेवेति पाश्चात्यज्ञानानामावरणाभिभावकत्वसिद्धये हि यावन्ति ज्ञानानि तावन्ति तन्निवर्त्त्यानि ज्ञानानीत्युपगम्यते तदभ्युपगमेऽपि प्रथमज्ञानेनैव सर्वाज्ञाननाशे सदोषस्तदवस्थ एवेत्यर्थः। यथा

अत्र केचिदाहुः। यथा ज्ञानप्रागभावानाम् अनेकेषां सत्त्वेऽपि एकज्ञानोदये एक एव प्रागभावो निवर्त्तते संशयादिजननशक्ततया तदावरणरूपेषु प्रागभावान्तरेषु सत्स्वपि विषयावभासस्तथैकज्ञानोदये एकमेवाज्ञानं निवर्त्तते अज्ञानान्तरेषु सत्स्वपि विषयावभास इति।

अन्ये तु आवृतस्य अपरोक्ष्यं विरुद्धम् एकज्ञानोदये च प्रागभावान्तरसत्त्वेऽपि यावत् विशेषदर्शनाभावकूटरूपम् आवरणं विशेषदर्शनात्

---

न्यायमते यावन्ति घटज्ञानानि तावन्तो घटज्ञानप्रागभावाः सन्ति तत्र प्रथमेन ज्ञानेन एक एव ज्ञानप्रागभावो निवर्त्तते अन्ये यथापूर्वं सन्त्येव तेषां सत्त्वेऽपि विषयप्रकाशश्चोपेयते तैरेवमत्रापि योजनीयमिति परिहरति।

अत्र केचिदाहुरिति। ननु दृष्टान्तो विषमः ज्ञानप्रागभावस्यानावरकत्वात् भावरूपाज्ञानस्य च विषयावरकत्वात् आवरणसत्त्वे च न विषयप्रकाशोपपत्तिरिति नेत्याह संशयादीति। विपर्य्यय आदिपदार्थः। सिद्धान्ते भावरूपाज्ञानस्यावरकत्वं हि अज्ञातत्वाभिमते वस्तुनि संशयादिजननसमर्थत्वं तच्च परमते ज्ञानप्रागभावरूपाज्ञानस्यापि समानं ततो न दृष्टान्तवैषम्यमिति भावः एकमेवेति फलबलादिति भावः।

ननु अनादित्वपक्षे इत्यादिग्रन्थेन कृताक्षेपे प्रकारान्तरेण समाधानमाह अन्ये त्विति। अस्य वदन्तीत्यनेन सम्बन्धः।

तत् नास्तीति मन्यमाना वदन्ति। यदा यदज्ञानम् आवृणोति तदा तेन ज्ञानेन तस्य एव नाशः सर्वं च सर्वदा न आवृणोति वैयर्थ्यात् किन्तु आवरकाज्ञाने वृत्त्या नाशिते तद्वृत्त्युपरमेऽज्ञानान्तरम् आवृणोति। न च एवं सति ब्रह्मावगमोत्पत्तिकालेऽनावरकत्वेन स्थितानाम् अज्ञानानां ततोऽपि अनिवृत्तिप्रसङ्गः। तेषां साक्षात् तद्विरो-

---

पूर्वपरिहारे अन्येषामभिप्रेतमस्वरसं दर्शयति आवृतस्येति। आवृतस्यापि पर्वतीयदहनादेः सिद्धान्ते परोक्षज्ञानाङ्गीकारात् अपरोक्षज्ञानमित्युक्तं यावदिति स्थाण्वादौ संशयादिविरोधिदर्शनप्रागभावमात्रं न संशयादिजननसमर्थं स्थाणुरयमिति निश्चयदशायामपि तत्समानविषयकनिश्चयान्तरप्रागभावसत्त्वेन तदा पुरुषत्वस्मृतिमतः पुनरपि संशयप्रसङ्गात् किन्तु संशयादिसमानविषयकनिश्चयानां यावन्तः प्रागभावाः तावतां समुदायः संशयादिजननसमर्थतया परमते विषयावरणत्वेन वाच्यः। एकनिश्चयकाले च यावद्विशेषदर्शनाभावकूटरूपस्य परमते आवरणत्वेन सम्मतस्य विशेषादर्शनस्य अभावान्न पुनः संशयादिप्रसङ्गः। न वा प्रथमघटादिज्ञानकाले परमते विषयप्रकाशानुपपत्तिः आवरणत्वाभिमतप्रागभावकूटाभावात् तस्मात् आवृतस्यापि विषयस्य प्रमाज्ञानसमये प्रकाशः सम्भवतीत्यत्र न अयं दृष्टान्तः सम्भवतीत्यर्थः। न च एवमिति सर्वदा सर्वेषामवस्थाज्ञानानावरकत्वाभावे सति इत्यर्थः। ततोऽपि इति ब्रह्मावगमादपि इत्यर्थः। निवृत्त्या भावप्रसङ्गे हेतुरनावरकत्वेन स्थितिः यदि ब्रह्मावगमोत्पत्तिकाले मूलाज्ञानवदवस्थाज्ञाना-

धित्वाभावेऽपि तन्निवर्त्त्यमूलाज्ञानपरतन्त्रतया अज्ञानसम्बन्धादिवत् तन्निवृत्त्युपपत्तेः। एतदर्थमेव तेषां तदवस्थाभेदरूपतया तत्पारतन्त्र्यमिष्यत इति।

---

न्यपि ब्रह्मचैतन्यं विषयप्रदेशेषु आवृत्य तिष्ठेयुः तदा ब्रह्मावगमेन तत्समानविषयकमूलाज्ञानस्येव चैतन्यावरकत्वेन स्थितानामवस्थाज्ञानानामपि निवृत्तिः स्यात्। समानविषयकत्वाविशेषात् तेषां तदनावरकत्वेन स्थितौ तु निवृत्तिर्न भवति तत्समानविषयकत्वाभावादित्यर्थः। ततश्च विदेहकैवल्येऽपि तेषामनुवृत्तिप्रसङ्गादिति भावः। एवं सत्यनिवृत्तिप्रसङ्ग इति न चेति सम्बन्धः। तत्र हेतुमाह तेषामिति। अत्र द्वितीयतृतीयतच्छब्दौ ब्रह्मावगमपरौ चतुर्थतच्छब्दो मूलाज्ञानपरः यथा ज्ञाननिवृत्तौ चैतन्याज्ञानयोः सम्बन्धो निवर्त्तते तस्य सम्बन्ध्यज्ञानपरतन्त्रत्वात् तद्वदित्यर्थः।

ननु अवस्थाज्ञानानां मूलाज्ञानपरतन्त्रत्वमसिद्धमित्याशङ्क्याह एतदर्थमेवेति।

यथा संसारस्य अज्ञाननिवृत्त्या निवृत्तिसिद्धये तन्मूलकतया संसारस्य तत्पारतन्त्र्यं कल्प्यते तद्वत् प्रकृतेऽपि इति भावः। यदुक्तम् अवस्थाभेदरूपमिति विशेषणस्य प्रयोजनं वक्ष्यत इति तदत्र दर्शितमिति मन्तव्यम्। ननु अनादित्वपक्ष इत्यादिना कृताक्षेप एव समाधानं प्रकारान्तरेण दर्शयति अपरे त्विति। अपरे तु कल्पयन्तीति सम्बन्धः। तेषामाशयं दर्शयति अज्ञानस्येति। ननु सर्वमज्ञानं स्वस्थितिकाले सर्वदा विषयमावृणोतीति नियमो नास्ति एकज्ञानकाले एकस्य अज्ञानस्य नाशः इतरेषां

अपरे तु अज्ञानस्य सविषयस्वभावत्वात् उत्सर्गतः सर्वं सर्वदा आवृणोत्येव। न च विषयोत्पत्तेः प्राक् आवरणीयाभावेन आवरकत्वं न युज्यत इति वाच्यम् १। तदापि सूक्ष्मरूपेण तत् सत्त्वादिति मन्यमानाः कल्पयन्ति यथा बहुजनसमाकुले प्रदेशे कस्यचित् शिरसि पतन्नशनिरितरान् अपसारयति यथा वा सन्निपातहरम् औषधमेकं दोषं निवर्त्तयत् दोषान्तरं दूरीकरोति एवमेकम् अज्ञानं नाशयत् ज्ञानम् अज्ञानान्तराण्यपि तिरस्करोति तिरस्कारश्च यावत् ज्ञानस्थिति तदा आवरणशक्तिप्रतिबन्ध इति।

---

तदा सत्त्वेऽपि आवरणशक्तिप्रतिबन्धरूपतिरस्कारस्य वक्ष्यमाणत्वेन एकज्ञानकाले तेषामावरकत्वाभावादित्यत आह उत्सर्गत इति।

ननु सर्वं सर्वदा आवृणोति इत्युक्तेः घटादिविषयोत्पत्तेः पूर्वकालेऽपि घटाद्यवच्छिन्नचैतन्यावरकत्वमवस्थाज्ञानानां प्रतीयते तदनुपपन्नं तदानीमवच्छेदकविषयाभावेन तदवच्छिन्नचैतन्यस्य अवस्थाज्ञानैरावरणीयस्य अभावादिति शङ्कामपनुदति। न च इत्यादिना तदा अपि इति कार्य्यमात्रस्य उत्पत्तेः पूर्वकाले नाशोत्तरकाले च अनभिव्यक्तरूपेण अवस्थानस्य श्रुतिस्मृतिन्यायैः तत्र तत्र पूर्वाचार्य्यैः साधितत्वादिति भावः। एवमिति ज्ञानं कर्त्तृ यावज्ज्ञानस्थितिरिति सर्वं सर्वदा आवृणोतीत्युत्सर्गस्य

ननु एवं सति धारावाहिकस्थले द्वितीयादिवृत्तीनाम् आवरणानभिभावकत्वे वैफल्यं स्यात् प्रथमज्ञानेन एव निवर्त्तनतिरस्काराभ्याम् आवरणमात्रस्य अभिभवादिति। अत्राहुः वृत्तितिरस्कृतमपि अज्ञानं तदुपरमे पुनरावृणोति प्रदीपतिरस्कृतं तम इव दीपोपरमे। वृत्त्युपरमसमये वृत्त्यन्तरोदये तु तिरस्कृतम् अज्ञानं तथैव अवतिष्ठते प्रदीपोपरमसमये प्रदीपान्तरोदये तम

---

ज्ञानस्थितिरपवादहेतुरिति भावः। ज्ञानमात्रमज्ञाननिवर्त्तकमिति नियममाक्षिपति।

ननु एवं सति इति एकेन ज्ञानेन एकाज्ञानस्य नाशः इतरेषां तिरस्कार इत्युपगमे सति इत्यर्थः। वैफल्यं स्यादिति अज्ञाननाशादिप्रयोजनवत्त्वं न स्यादित्यर्थः। तत्प्रयोजनस्य प्रथमज्ञानेन एव सिद्धत्वादित्याह प्रथमेति। प्रथमज्ञानसिद्धस्यापि आवरणतिरस्कारस्य द्वितीयादिज्ञानसाध्यत्वं साध्यलक्षणविशेषानुरोधेन सम्भवति अतो न द्वितीयादिज्ञानवैफल्यम् अज्ञाननाशरूपप्रयोजनाभावेऽपि. तत्तिरस्करणलक्षणफलस्य सत्त्वादिति परिहरति।

अत्राहुरिति प्रथमं एव धारारहितबुद्धिस्थले सिद्धमर्थं सदृष्टान्तं दर्शयति वृत्तितिरस्कृतमिति। घटोऽयमिति प्रत्यक्षज्ञानं हि एकमज्ञानं सर्वं तिरस्करोति तच्च तिरस्कृतमज्ञानं घटज्ञानोपरमसमये पुनः तमावृणोति यदि बुभुत्सादिवशात् प्रथमसुत्पन्नघटज्ञाननाशक्षणे घटप्रत्यक्षान्तरमुदेति

इव। तथा च यस्मिन् सति अग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके च असत्त्वं तत् तज्जन्यमिति प्रागभावपरिपालनसाधारणलक्षणानुरोधेन अनावरणस्य द्वितीयादिवृत्तिकार्य्यत्वस्यापि लाभात् न तद्वैफल्यमिति।

न्यायचन्द्रिकाकृतस्त्वाहुः। केनचित् ज्ञानेन कस्यचित् ज्ञानस्य नाश एव न तु आवरकाणामपि अज्ञानान्तराणां तिरस्कारः। तथा च धारा-

---

तदा तिरस्कृतमज्ञानं तथैवावतिष्ठत इत्यर्थः। यस्मिन् सति अग्रिमक्षणे यस्य सत्त्वं यस्मिन् सति यस्य असत्त्वं तत्तज्जन्यमिति साध्यलक्षणम् इदञ्च साधनादिसाधारणं तथा हि यस्मिन् दण्डादौ सति उत्तरक्षणे घटादिकार्य्यसत्त्वं दण्डादौ असति घटादिकार्य्यासत्त्वं ततो घटादिकं दण्डादिजन्यं तथा प्रायश्चित्ते सति उत्तरक्षणे दुःखप्रागभावस्य सत्त्वं प्रायश्चित्ते च असति दुःखस्योदयात् दुःखप्रागभावस्य असत्त्वमितिरीत्या अनादेरपि दुःखप्रागभावस्य प्रायश्चित्तपरिपाल्यतया प्रायश्चित्त-साध्यत्वमुपेयते एवं प्रकृतेऽपि साध्यत्वं दर्शयति तथा चेति द्वितीयवृत्त्युदये सति प्रथमज्ञानसिध्यस्य आवरणतिरस्कारस्य उत्तरक्षणे सत्त्वं प्रथमज्ञाननाशक्षणे द्वितीयवृत्त्युदयव्यतिरेके च उक्ततिरस्कारस्य असत्त्वमिति प्रथमज्ञानकाल एव सिध्यस्यापि तस्य द्वितीयवृत्तिजन्यतया तत्फलत्वमेवं तृतीयादिवृत्तीनामपि आवरणतिरस्कारफलकत्वं योजनीयमित्यर्थः। अनावरणस्येति आवरणतिरस्कारस्येत्यर्थः। ज्ञानमात्रमज्ञाननिवर्त्तकं न भवति

आह्निकद्वितीयादिवृत्तीनामपि एकैकाज्ञाननाशकत्वेन साफल्यम्। न च एवं ज्ञानोदयेऽपि आवरणासम्भवात् विषयानवभासप्रसङ्गः अवस्थारूपाणि अज्ञानानि तत्तत्कालकलोपलक्षितस्वरूपावरकाणि ज्ञानानि च यावत् स्वकालोपलक्षितविषयावरकाज्ञाननाशकानि तथा च किञ्चित् ज्ञानोदये तत्कालीनविषयावरकाज्ञानस्य नाशात्

---

धारावाहिद्वितीयादिज्ञाने व्यभिचारादित्यत्र प्रकारान्तरेण परिहारं ब्रूते न्यायचन्द्रिकाकृतस्त्विति।

नतु इति न च अज्ञानान्तराणां तिरस्काराभावे एकज्ञानकालेऽपि तैः अतिरस्कृतैर्विषयस्य आवृतत्वाद्विषयानवभासप्रसङ्ग इति वाच्यम्? प्रथमज्ञानोदयसमये एकमेव अज्ञानं विषयावरकम् इतरेषां तु तदा विषयावरकत्वमेव नोपेयते अतो न तत् तिरस्करणापेक्षेति भावः। एकमेव अज्ञानं विषयावरकम् इतरेषां तु तदा विषयावरकत्वमेव नोपेयते ततः किं तत्राह तथा चेति। आशयमविदुषः शङ्कामनूद्य निराकरोति न च एवम् इत्यादिना। एवं शब्दस्य प्रथमज्ञानेन आवरकाज्ञानान्तराणामतिरस्करणे सति इत्यर्थः। तत्तत्कालेति अवस्थाज्ञानानां सर्वेषां मूलाज्ञानस्येव सर्वदा विषयचैतन्यावरकत्वं नास्ति वैयर्थ्यात् किन्तु किञ्चिदज्ञानं कञ्चित्कालं विषयचैतन्यमावृणोति किञ्चिच्च कालान्तरे तदावृणोति इत्यनेन प्रकारेण कालविशेषैरुपलक्षितविषयचैतन्यावरकत्वं ज्ञानानामपि स्वस्वोदयकाले

विद्यमानानाम् अज्ञानान्तराणाम् अन्यकालीन-विषयावरकत्वाच्च न तत्कालीने विषयावभासे काचित् अनुपपत्तिः। कारीरीफले वृष्टावासन्न-समयस्येव अज्ञानविषये घटादौ तत्कालस्य उप-लक्षणतया विषयकोटावननुप्रवेशेन सूक्ष्मतत्तत्-कालभेदाविषयैः धारावाहिकद्वितीयादिज्ञानैः अज्ञानानां निवृत्तावपि न काचित् अनुपपत्ति-रिति।

---

स्वस्वविषयावरकत्वेन प्रसक्ताज्ञाननिवर्त्तकत्वमित्यर्थः। एवमाश-यमुद्घाट्य इदानीं विषयानवभासप्रसङ्गं परिहरति तथा चेति। एकज्ञानकाले अज्ञानान्तराणामनावरकत्वे सिद्धे सति इत्यर्थः। तत्कालेनेति। किञ्चिदज्ञानोदयकालीनविषयस्य आवरकत्वेन प्रसक्ताज्ञानस्य इत्यर्थः। न तदिति किञ्चिदज्ञानकालीन इत्यर्थः। ननु तैः तैः कालविशेषैर्विशिष्टस्यैव विषयस्य तत्तद-ज्ञानावरणीयत्वमित्येवं कालविशेषाणां विशेषणतया आव-रणीयकोटावनुप्रवेशं विहाय तेषां किमित्युपलक्षणत्वं स्वीक्रि-यते इत्याशङ्क्य तथा सति धारास्थले आवरकत्वेन प्रसक्ताज्ञाननि-वर्त्तकद्वितीयादिवृत्तीनामपि तत्तत्कालविशेषविशिष्टविषयकत्वं वाच्यं समानविषयकत्वं विना तन्निवर्त्तकत्वानुपपत्तेस्तच्च न सम्भवति लक्षणभेदानामप्रत्यक्षत्वात् अतस्तेषामुपलक्षणत्व-माश्रितमिति समाधानमभिप्रेत्य समयविशेषस्योपलक्षणत्वे दृष्टान्तमाह कारीरीफले वृष्टाविति। कारीरीनामकेष्टिफल-भूता वृष्टिरिष्टिसमाप्त्युत्तरक्षण एव वक्तव्या न तु कालान्तरे

केचित् तु प्रथमज्ञाननिवर्त्त्यमेव अज्ञानं स्वरूपावरकं द्वितीयादिज्ञाननिवर्त्त्यानि तु देशकालविशेषणान्तरविशिष्टविषयाणि। अत एव सत्तानिश्चयरूपेऽज्ञाननिवर्त्तके चैत्रदर्शने सकृज्जाते चैत्रं न जानामि इति स्वरूपावरणं नानुभूयते किन्तु इदानीं स कुत्रेति न जानामि इत्यादिरूपेण विशिष्टावरणमेव। विस्मरणशालिनः क्वचित् सकृद् दृष्टेऽपि न जानामीति स्वरूपावरणं

---

तदानीं पश्यतः प्रश्नसञ्जीवने कालान्तरीयदृष्टेरनुपयोगात् तथा च आसन्नसमयस्य दृष्टिविशेषणतया फलकोटिप्रवेशो नोपेयते इच्छा विनापि समविशेषसम्भवात् किन्तु समयान्तरव्यावर्त्तकतया उपलक्षणत्वमेवाश्रितमित्यर्थः।

धारावहनस्थले द्वितीयादिवृत्तीनामावरणाभिभावकत्वं न स्यादिति आक्षेप एव परिहारं त्रेधा दर्शयति केचित्तु इति। प्रथमं वस्तुगतिमाह प्रथमज्ञानेति। उक्तव्यवस्थायां प्रमाणत्वेन अनुभवं दर्शयति अतएवेति। उक्तविभागाभ्युपगमादेवेत्यर्थः। ननु उक्तविभागो न सिध्यति क्वचित् सकृत् दृष्टेऽपि वस्तुनि पूर्ववत् स्वरूपावरणानुभवादित्याशङ्क्याह विस्मरणशालिन इति। तत्र तथा अस्त्विति पुनः स्वरूपावरणानुभवस्थले द्वितीयादिज्ञाननिवर्त्त्यमपि अज्ञानस्वरूपावरकमस्त्वित्यर्थः। तथा च उक्तविभाग औत्सर्गिक इति भावः। अन्यत्रेति विस्मरणाभावस्थले इत्यर्थः। ननु अज्ञानानां विशिष्टविषयकत्वे

इष्यते चेत् तत्र तथास्तु। अन्यत्र सकृत् दृष्टे विशिष्टविषयाण्येव अज्ञानानि ज्ञानानि च। न च एवं सति धारावाहिकद्वितीयादिज्ञानानाम् अज्ञानानिवर्त्तकत्वं न स्यात् स्थूलकालविशिष्टाज्ञानस्य प्रथमज्ञानेनैव निवृत्तेः पूर्वापरज्ञानव्यावृत्तसूक्ष्मकालविशिष्टाज्ञानस्य तद्विषयैः द्वितीयादिज्ञानैः निवृत्त्ययोगादिति वाच्यम् ?।

---

तेषामनिवृत्तिप्रसङ्गः। सकृत् दृष्टे वस्तुनि द्वितीयादिज्ञानानामपि प्रथमज्ञानवत् स्वरूपमात्रविषयकत्वेन तत्समानविषयकत्वरहितानां तन्निवर्त्तकत्वानुपपत्तेरिति नेत्याह ज्ञानानि चेति। सकृत् दृष्टे विषये ज्ञानान्यपि चैत्र इदानीमत्रास्ते इत्याद्याकाराणि सन्ति विशिष्टविषयाण्येवेति स्वीकारान्नोक्तदोषः इति भावः।

ननु ज्ञानानां विशिष्टविषयकत्वं धारास्थले द्वितीयादिवृत्तिषु व्यभिचारपरिहारार्थं हि कल्प्यते तथा च तत्र ज्ञानानां किं घटिकाद्यर्धघटिकाद्यात्मकस्थूलकालविशिष्टघटादिविषयकत्वं विवक्षितं किंवा क्षणात्मकसूक्ष्मकालविशिष्टघटादिविषयकत्वं विवक्षितमिति विकल्पं मनसि निधाय उभयथापि धारास्थले द्वितीयादिवृत्तिषु व्यभिचारतादवस्थ्यमिति शङ्कते न च एवं सतीति। द्वितीयादिज्ञानानां च उत्सर्गतो विशिष्टविषयकत्वे सतीत्यर्थः। प्रथमज्ञानेनैव इति स्थूलकालविशिष्टविषयकेण इति शेषः। पूर्वापरेति धारास्थले हि ज्ञानानि क्षणस्थितिकानि ततश्च पूर्वापरज्ञानकालेभ्यो

धारावहनस्थले प्रथमोत्पन्नाया एव वृत्ते-स्तावत् कालावस्थायित्वसम्भवेन वृत्ति-भेदानभ्युपगमात् तदभ्युपगमेऽपि स्थूलकाला-वस्थायि पञ्चषवृत्तिरूपत्वसम्भवेन परस्परव्या-वृत्त-स्थूल-कालादि-विशेषण-भेद-विषयत्वोपपत्तेः प्रतिक्षणोत्पद्यमानैक-वृत्तिसन्तानरूपत्वाभ्युपगमेऽपि द्वितीयादिवृत्तीनाम् अधिगतार्थमात्रविषयतया

---

व्यावृत्ता ये सूक्ष्मकालाः क्षणात्मकास्तैर्विशिष्टस्य विषयस्यावरकं यदज्ञानं तस्य इत्यर्थः। तदविषयैरिति सूक्ष्मकालविशिष्टा-विषयकैरित्यर्थः। यत्र एकस्मिन्नेव श्रीमूर्त्यादौ दीर्घकाल-नैरन्तर्य्येण स्फुरणमस्ति तत्र श्रीमूर्त्यादिगोचरवृत्तिरेकैव तद्भेदे मानाभावात् सिद्धान्ते वृत्तेः क्षणस्थितिकत्वानभ्युपगमात्।

तथा च न तत्र व्यभिचारशङ्केत्याह धारावहनस्थले इति। ननु तत्र वृत्तेरेकत्वे धारावहनत्वप्रसिद्धिविरोधः एकस्यां तद-सम्भवात् ध्यानसमाध्योरपि उक्तरीत्या एकवृत्तिरूपत्वापत्तौ तयोः प्रत्ययसन्ततिरूपत्वप्रतिपादकभाष्यादिविरोधप्रसङ्गाच्च इत्याशङ्क्य धारायाः अनेकवृत्तिरूपत्वमङ्गीकृत्य व्यभिचारं परिहरति तदभ्युपगमेऽपि इति। सम्भवेनेति धारायाः इति शेषः। उपपत्तेरिति द्वितीयादिवृत्तीनामज्ञानानिवर्त्तकत्वदोषो नास्ति इति शेषः। धारावाहिकवृत्तीनां न्यायमत इव क्षण-स्थितिकत्वमुपेत्यापि व्यभिचारं परिहरति प्रतिक्षणोत्पद्येति। प्रत्युत्पन्नाः अनेकाश्च या वृत्तयः तत्सन्ताने इत्यर्थः। अभ्युपगमेऽपि

प्रामाण्याभावेन आवरणानिवर्त्तकत्वेऽपि अहा-
नेश्च। न हि विषयाबाधमात्रं प्रामाण्यं
प्रागवगतानधिगतयोः पर्वततद्-वृत्तिपावकयो-
रनुमितिविषययोरबाधस्य अविशेषेण उभयत्रापि
अनुमितेः प्रामाण्यप्रसङ्गात्। न चेष्टापत्तिः
वह्नौ अनुमितिः प्रमाणमितिवत् पर्वतेऽपि
अनुमितिः प्रमाणमिति व्यवहारादर्शनात्।

---

इति धाराया इति शेषः। अहानेश्चेति। ज्ञानमज्ञाननिवर्त्तक-
मिति नियमभङ्गरूपायाः हानेरभावादित्यर्थः। हान्यभावे
हेतुमाह प्रमाण्याभावेनेति। अत्र हेतुमाह अधिगतार्थमात्रेति
अनधिगतार्थविषयकत्वाभावो मात्रपदार्थः। तथा च द्वितीया-
दिवृत्तीनां प्रमात्वं नास्ति स्मृतिवदधिगतार्थमात्रविषयकत्वादि-
त्यर्थः। ननु अनधिगता बाधितार्थानुभवत्वं प्रमात्वं न भवति
अबाधितानुभवपदव्यावर्त्तयोर्भ्रमस्मृत्योरिव अनधिगतपदव्याव-
र्त्याभावात् तथा च अबाधितार्थानुभवत्वमात्रं प्रमात्वं तच्च द्विती-
यादिवृत्तिषु अक्षतमिति तत्र नियमभङ्गरूपा हानिः स्यात्
एव इति नेत्याह नहीति। प्रामाण्यमित्यनन्तरं तथा सति इति
शेषः। नैयायिकः शङ्कते न चेष्टापत्तिरिति न इष्टापत्तेरिति
चेति सम्बन्धः। व्यवहारादर्शनादिति। तथा च प्रामाण्याप्रामा-
ण्यव्यवस्थायाः व्यवहारानुसारित्वादनुमितेः पर्वतांशे प्रमात्वा-
भावेन अलक्ष्यत्वे सिद्धे पर्वतांशानुमितौ प्रमालक्षणस्यातिव्याप्ति-
परिहाराय अनधिगतत्वविशेषणं तल्लक्षणे देयमेव ततश्च धारा-
दि तीयादिवृत्तीनां न प्रामाण्यमिति भावः।

विवरणे साक्षिसिद्धस्य अज्ञानस्य अभावव्यावृत्तिप्रत्यायनार्थानुमानादिविषयत्वेऽपि प्रमाणावेद्यत्वोक्तेश्च। तस्माद् द्वितीयादिवृत्तीनां प्रामाण्याभावात् उपासनादिवृत्तीनामिव अज्ञा-

---

अज्ञातत्वस्य प्रमालक्षणे प्रवेशोऽस्तीत्यत्र हेत्वन्तरमाह विवरण इति। विवरणे अज्ञानस्य प्रमाणावेद्यत्वोक्तेश्चेति सम्बन्धः। अत्रानुमानपदम् अनुमितिपरं प्रमाणपदमपि प्रमितिपरं प्रमालक्षणस्य प्रकृतत्वादिति बोध्यम्। ननु अज्ञानस्य अनुमितिशाब्दार्थापत्तिरूपवृत्तिविषयत्वे कथं तस्य प्रमाणावेद्यत्वमत आह साक्षिसिद्धस्येति। अज्ञोऽहमित्यनुभवरूपेण साक्षिणा अज्ञानस्वरूपस्य ज्ञातत्वादज्ञानानुमित्यादेः अज्ञानस्वरूपे विषये अज्ञातत्वघटितप्रमात्वं नास्तीति मत्वा प्रमाणावेद्यत्वं तस्योक्तं न च साक्षिण एव प्रमाणत्वात् कथं सामान्यतः प्रमाणावेद्यत्वमुक्तमिति वाच्यम्। साक्ष्यतिरिक्तप्रमाणावेद्यत्वस्य एव विवक्षितत्वात् साक्षिणो नित्यत्वेन प्रमाकरणाजन्यतया पराभिमतेश्वरज्ञानवत् साक्षिणः प्रमा अप्रमावहिर्भूतत्वेन प्रमाणत्वाभावाद्वा तदवेद्यत्ववचनमिति भावः। ननु साक्षिप्रसिद्धं चेदज्ञानं किमर्थं तर्हि तत्रानुमानाद्युपन्यस्यते तत्राह अभावव्यावृत्तीति। अज्ञानस्य पराभिमताज्ञानादभावरूपात् या व्यावृत्तिस्तत् प्रत्यायनमर्थः प्रयोजनं येषामनुमानादीनां तानि तथेत्यर्थः। एतदुक्तं भवति अहमज्ञ इत्यनुभवसिद्धमज्ञानं भावरूपमिति सिद्धान्तिनः तदज्ञानप्रागभावरूपमिति वैशेषिकादयः। ततश्चानुमानादिभिरज्ञानस्याभावप्रतियोगिकभेदः साध्यत इति न तेषां वैयर्थ्यम्। न च तस्य भावरूपत्वसाधने

नानिवर्त्तकत्वेऽपि न हानिः प्रमाणवृत्तीनामेव तन्निवर्त्तकत्वाभ्युपगमात् ।

ननु न अयमपि नियमः परोक्षवृत्तेर्नियमेन अज्ञानानिवर्त्तकत्वादिति चेत् । अत्र केचिदाहुः । द्विविधं विषयावरकम् अज्ञानम् एकं विषया-

---

वा किं लभ्यत इति वाच्यम् । मायान्तु प्रकृतिं विद्यादित्यादिशास्त्रसिद्धस्य प्रपञ्चपरिणाम्युपादानत्वस्य सिद्धेः तत्साधनफलत्वात् । तस्मादिति । अनधिगतत्वघटितप्रमालक्षणाभावादित्यर्थः । उपासनादिवृत्तीनामिवेति उपासनारूपा वृत्तिर्न ज्ञानं क्लृप्ततत्कारणाजन्यत्वात् मनसो ज्ञानकरणत्वस्य निरस्तत्वात् निरसिष्यमाणत्वाच्च किन्तु गमनादिवत् क्रियारूपापुरुषकृतिसाध्यत्वात् अतः सा नोपास्यस्वरूपा ज्ञाननिवर्त्तिका एवमिच्छाद्वेषादिवृत्तयोऽपि न स्वविषयाज्ञाननिवर्त्तिकाः ज्ञानरूपत्वाभावात् द्वितीयादिवृत्तीनां तु स्मृतिवद्ज्ञानरूपत्वेऽपि न अज्ञाननिवर्त्तकत्वमुपेयते प्रमात्वाभावादित्यर्थः । ननु कथं न हानिस्तासां प्रमात्वाभावेऽपि ज्ञानत्वाभ्युपगमेन ज्ञानमात्रमज्ञाननिवर्त्तकमिति नियमस्य व्यभिचाररूपहानेरावश्यकत्वादित्याशङ्क्याह प्रमाणवृत्तीनामेवेति । नत्वधिगतार्थमात्रगोचरवृत्तीनामपि इत्येवकारार्थः । तथा च ज्ञानमात्रमज्ञाननिवर्त्तकमिति नियमो नाङ्गीक्रियते येन उक्तदोषः स्यादिति भावः । अभ्युपगमादिति अनन्तरम् इत्याहुरिति शेषः । केचित् तु इति उपक्रमात् प्रमामात्रमज्ञाननिवर्त्तकमिति नियमस्यापि व्यभिचारं शङ्कते नन्विति । परोक्षज्ञानस्यापि तन्निवर्त्तकत्वसत्त्वात् न व्यभिचार इति वक्तुमज्ञानस्य द्वैविध्यमाह

श्रितं रज्ज्वादिविक्षेपोपादानभूतं कार्य्यकल्प्यम्। पुरुषाश्रितमन्यत् विषयमहं न जानामि इति अनुभविकम्। पुरुषाश्रितस्य विषयसम्भिन्नविक्षेपोपादानत्वासम्भवेन विषयाश्रितस्य विषयमहं न जानामि इति साक्षिरूपप्रकाशसंसर्गायोगेन द्विविधस्यापि आवश्यकत्वात्।

एवं च परोक्षस्थले वृत्तेर्निर्गमनाभावात् दूरस्थ-

---

द्विविधमित्यादिना। रज्ज्वादेर्यो विक्षेपः सर्पादिरूपो विवर्त्तः तदुपादानभूतमित्यर्थः। कार्य्यकल्प्यमिति विक्षेपाख्यकार्य्यानुपपत्तिकल्प्यं न तु अनुभवसिद्धमित्यर्थः। ननु रज्ज्वादिगताज्ञानस्य रज्जुं न जानामि इति अनुभवसिद्धत्वात् कथं तस्य कार्य्यैकगम्यत्वमित्याशङ्क्य अनुभवस्य विषयगताज्ञानं न विषय इत्याह अन्यदिति। अत्र विषयावरकमज्ञानं द्विविधम् एकं विषयाश्रितमन्यत्पुरुषाश्रितमिति सम्बन्धः। तथा च विषयाश्रितं सप्रमाणं प्रदर्श्य पुरुषाश्रितं सप्रमाणं दर्शयतीति वा अन्यदित्यस्यावतरणं बोध्यम्। ननु एकेनैव अज्ञानेन सर्पादिविक्षेपस्य न जानामीत्यनुभवस्य सिद्धेः किमज्ञानद्वैविध्येन अत आह पुरुषाश्रितस्येति विषयो रज्ज्वादिरधिष्ठानं तत् सम्भिन्नो विषयतादात्म्यापन्नो यो विक्षेपस्तदुपादानत्वासम्भवेन इत्यर्थः। न जानामीत्याकारको यः साक्षिरूपः प्रकाशस्तत्संसर्गायोगेनेत्यर्थः।

इदानीं व्यभिचारं परिहरति एवञ्चेति। अज्ञानद्वैविध्ये सति इत्यर्थः। एवञ्च परोक्षस्थले विषयगताज्ञाना-

वृक्षे आप्तवाक्यात् परिमाणविशेषावगमेऽपि तद्वि-परीतपरिमाणविक्षेपदर्शनाच्च विषयगताज्ञाननिवृत्तौ अपि पुरुषगताज्ञाननिवृत्तिरस्त्येव शास्त्रार्थं न जानामीति अनुभूताज्ञानस्य तदुपदेशानन्तरं निवृत्त्यनुभवात् ।

---

निवृत्तावपि पुरुषगताज्ञाननिवृत्तिरस्त्येवेति सम्बन्धः। तथा च न व्यभिचार इति भावः। परोक्षज्ञानस्य विषयगताज्ञान-निवर्त्तकत्वभावे हेतुद्वयमाह वृत्तेरित्यादिना। निर्गमनाभावा-दिति विषयचैतन्यसंसृष्टाया एव वृत्तेर्विषयचैतन्यगताज्ञान-निवर्त्तकत्वस्य वक्ष्यमाणतया निर्गमनाभावे वृत्तिविषयचैतन्य-संसर्गो न सिध्यतीति भावः। तद्विपरीतेति। दूरे दृश्यमानो वृक्षः सन्निहितवृक्ष इव महानित्याप्तवाक्यजन्यपरोक्षज्ञान-विषयभूताद्दूरस्थवृक्षगतात्तस्मात् परिमाणविशेषात् विपरीतो यः परिमाणरूपविक्षेपविशेषः तस्य दर्शनादित्यर्थः। यदि परोक्ष-ज्ञानं विषयगताज्ञाननिवर्त्तकं स्यात् तदा आप्तवाक्यजन्यावगमेन परिमाणविशेषाज्ञाननिवृत्त्यापत्त्या विपरीतपरिमाणात्मक-विक्षेपोत्पत्तिर्न स्यात् उपादानाभावादिति भावः। परोक्ष-ज्ञानेन पुरुषगताज्ञाननिवृत्तौ हेतुमाह शास्त्रार्थमिति। शास्त्रार्थं न जानामीत्यनेन प्रकारेण यच्छास्त्रार्थाज्ञानमनुभूतं तस्य शास्त्रार्थोपदेशानन्तरं शास्त्रार्थाज्ञानमिदानीं निवृत्तमिति निवृत्तिरनुभूयते तत्र शास्त्रार्थो द्विविधः धर्मरूपो ब्रह्मरूपश्च धर्मरूपशास्त्रार्थे उपदेशजन्यज्ञानं परोक्षमेव न तु कदाचिदपि अपरोक्षं तस्य साक्षात्कारायोग्यत्वात् तथा च तत्र विषयगता-ज्ञाननिवृत्तिप्रसक्तिरेव नास्तीति पुरुषगताज्ञानमेव निवर्त्तते

अत एवानुमेयादौ सुषुप्तिव्यावृत्तिरिति विवरणस्य तद्विषयाज्ञाननिवृत्तिरर्थ इत्युक्तं तत्त्वदीपने इति।

अन्ये तु नयनपटलवत् पुरुषाश्रितमेवा-

---

इति वक्तव्यम्। इतरथा तन्निवृत्त्यनुभवविरोधात् ब्रह्मरूपे च शास्त्रार्थे उपदेशजन्यज्ञानं परोक्षं तावत् मात्रान्न विषयावरकं मूलाज्ञानविषयगतं निवर्त्तते मननादिविधिवैयर्थ्यप्रसङ्गात् अतः पुरुषगताज्ञानमेव निवर्त्तते इति वक्तव्यमन्यथा तत्रापि तन्निवृत्त्यनुभवविरोधादेव इति भावः।

परोक्षज्ञानस्य अज्ञाननिवर्त्तकत्वे विवरणादिसम्मतिमाह अतएवेति। उक्तानुभवबलादेव इत्यर्थः। तद्विषयेत्यत्र तत्पदमनुमेयादिपरं सुषुप्तिपदमज्ञानपरं व्यावृत्तिपदं निवृत्तिपरमिति व्याख्यातं तत्त्वदीपने तथा चानुमेयादौ विषयगताज्ञाननिवृत्त्यभावस्य वक्ष्यमाणतया तत्र पुरुषगता-ज्ञाननिवृत्तिरनुमित्यादिपरोक्षज्ञानेन जायत इत्ययमर्थस्तत्र विवक्षित इति प्रतीयत इत्यर्थः।

अज्ञानद्वैविध्याभावेऽपि प्रमामात्रमज्ञाननिवर्त्तकमिति नियमस्य न व्यभिचार इति मतं दर्शयति अन्ये त्विति। पुरुषगताज्ञानापेक्षया अन्यद्विषयगतमज्ञानं किं विषया-वरणार्थमुपेयते किंवा शुक्ति-रजतादिविक्षेपोत्पत्त्यर्थं नाद्य इत्याह नयनपटलवदिति। नयनगतकाचादिवदित्यर्थः। न द्वितीय इत्याह न तदतिरेकेणेति। विषयगताज्ञाना भावेऽपि वक्ष्यमाणविधया विक्षेपोत्पत्तिसम्भवादिति

ज्ञानं विषयावरणं न तद्व्यतिरेकेण विषयगताज्ञाने प्रमाणमस्ति। न च पुरुषाश्रितस्य विषयगतविक्षेपपरिणामित्वं न सम्भवति तत्सम्भवे वा दूरस्थवृक्षपरिमाणे परोक्षज्ञानात् अज्ञाननिवृत्तौ विपरीतपरिमाणविक्षेपो न सम्भवति इति वाच्यम् ?। वाचस्पतिमते सर्वस्य प्रपञ्चस्य जीवाश्रिताज्ञानविषयीकृतब्रह्मविवर्त्तत्वेन तद्वच्छुक्तिरजतादेः पुरुषाश्रिताज्ञानविषयीकृतब्रह्मविवर्त्तत्वोपपत्तेः। परोक्षवृत्त्यैकावस्थानिवृत्तावपि अवस्थान्तरेण विपरीतपरिमाणविक्षेपोपपत्तेश्च इत्याहुः।

---

भावः। प्रमाणाभावोऽसिद्ध इति शङ्कते न चेति। न सम्भवतीति पुरुषगताज्ञानस्य शुक्त्याद्यवच्छिन्नचैतन्ये सत्त्वाभावादिति भावः। पुरुषगतस्यैव अज्ञानस्य विषयगतविक्षेपोपादानत्वे दोषमाह तत्सम्भवे वेति पुरुषगताज्ञानस्य विषयगतविक्षेपपरिणामित्वं तच्छब्दार्थः। न सम्भवतीति विषयगताज्ञानस्यानभ्युपगमात् पुरुषगताज्ञानस्य च आप्तोदयदेशजन्यपरोक्षज्ञानेन निवृत्तत्वाच्च इति भावः। आद्यदोषं परिहरति वाचस्पतिमत इति। शुक्तिरजतादिविक्षेपस्यस्य अज्ञानपरिणामत्वपक्षे अज्ञानस्य विषयचैतन्यगतत्वं वक्तव्यं तस्य अज्ञानपरिणामत्वानङ्गीकारपक्षे तु तस्य विषयचैतन्यगतत्वं नापेक्षितमिति भावः। दार्ष्टान्तिके ब्रह्मपदं शुक्त्याद्यवच्छिन्नचैतन्य-

अपरे तु शुक्तिरजतादिपरिणामोपपत्त्याज्ञ-

---

रूपब्रह्मपरं न तु पूर्णब्रह्मपरम् अवच्छिन्नचैतन्यस्यैव शुक्तिरजताद्यधिष्ठानत्वोपगमादिति भावः। विपरीतपरिमाणरूपो विक्षेपो न सम्भवतीति द्वितीयदोषं परिहरति परोक्षवृत्त्येति। परोक्षज्ञानादज्ञाननिवृत्तिर्यथा अनुभूयते तथा उदाहृतस्थले सत्यपि परोक्षज्ञाने विपरीतपरिमाणोत्पत्तिरनुभूयते तथा च अनुभवद्वयानुरोधेन पुरुषाश्रितस्यैव अज्ञानस्य विषयावरकस्य एकदेशः परोक्षज्ञानेन निवर्त्तते एकदेशान्तरमनुवर्त्तत इति कल्प्यते न तु अज्ञानद्वैविध्यमभ्युपगम्यते गौरवादिति भावः। अवस्थान्तरेणेति अनन्तरं पुरुषाश्रिताज्ञानस्यैव इति शेषः। वस्तुतस्तु परोक्षज्ञानस्य अज्ञाननिवर्त्तकत्वमतेऽपि प्रतिबन्धरहितमेव परोक्षज्ञानमज्ञाननिवर्त्तकं प्रकृते च भ्रमानुरोधेन दूरत्वादिदोषप्रतिबद्धत्वादाप्तवाक्यजन्यमपि ज्ञान पुरुषगताज्ञाननिवर्त्तकं न भवति अतो न विपरीतपरिमाणोत्पत्त्यनुपपत्तिशङ्कावकाशः। न च तथा सति आप्तोपदेशानन्तरं दूरस्थवृक्षगतपरिमाणविशेषं न जानामि इत्यनुभवापत्तिरिति वाच्यं सत्तानिश्चयरूपपरोक्षज्ञानस्य सत्यप्यज्ञाने तदनुभवप्रतिबन्धकत्वोपपत्तेः। न च प्रमामात्रमज्ञाननिवर्त्तकमिति नियमस्य प्रतिबद्धपरोक्षप्रमाया व्यभिचार इति वाच्यम्। अप्रतिबद्धत्वस्य प्रमाविशेषणत्वोपपत्तेरिति बोध्यम्। एवम् अप्रतिबद्धप्रमामात्रमज्ञाननिवर्त्तकमिति नियममनुसृत्य तदव्यभिचाराय परोक्षज्ञानस्याज्ञाननिवर्त्तकत्वमुपपादितमिदानीं तथा नियमो नास्ति किन्तु अप्रतिबद्धापरोक्षज्ञानमेवाज्ञाननिवर्त्तकमतो न परोक्षज्ञानव्यभिचारशङ्केतिमतमवतारयति।

अपरे तु इति लोके घटादेर्मृदादिपरिणामत्वस्य प्रसिद्धत्वात्

स्यात् विषयावगुण्ठनपटवद्विषयगतमेव अज्ञानं तदावरणम् ।

न च तथा सति अज्ञानस्य अन्तःकरणोपहितसाक्ष्यसंसर्गेण

ततः प्रकाशानुपपत्तिः परोक्षवृत्तिनिवर्त्यत्वासम्भवश्च दोष इति वाच्यम् ?

---

तद्वत् शुक्तिरजतादेरपि परिणामत्वं सिध्यति तत्परिणामि च अन्वयव्यतिरेकाभ्यां परिशेषसहकृताभ्याम् अज्ञानमेव सिध्यति शुक्त्यादेः प्रातिभासिकरजतादिपरिणामित्वासम्भवादज्ञानस्य च विषयचैतन्यगतस्य यथा रजतादिविक्षेपपरिणामित्वमाञ्जस्येन उपपद्यते न तथा पुरुषाश्रितस्य उपपद्यते अतस्तदुपपत्त्या आञ्जस्यानुरोधेन विषयगतमेवावस्थारूपमज्ञानमास्थेयं न तु पुरुषगतमप्यवस्थारूपमज्ञानान्तरं वैयर्थ्यात् मानाभावाच्च इति भावः । यद्यपि पुरुषाश्रितस्यापि अज्ञानस्य पुरुषमपरित्यज्यैव दीर्घप्रभान्यायेन वृत्तिद्वारा वहिर्निर्गत्य विषयचैतन्यमाश्रितस्य रजतादिपरिणामित्वमुपपद्यते तथापि सा उपपत्तिः नाञ्जस्यमूलाज्ञानवदवस्थाज्ञानस्यापि निष्क्रियत्वेन प्रभान्यायानवतारादित्यभिप्रेत्य परिणामोपपत्त्या आञ्जस्यादित्युक्तम् ।

तथा सतीति विषयावरकाज्ञानस्य विषयगतत्वे सतीत्यर्थः ।

तत इति पञ्चमी साक्षिण इत्यर्थः ।

असम्भवश्चेति परोक्षवृत्तेर्विषयदेशे निर्गमनाभावादिति भावः ।

अवस्थारूपाज्ञानस्य साक्ष्यसंसर्गेऽपि तत्-संसृष्टमूलाज्ञानस्यैव शुक्तिमहं न जानामि इति प्रकाशोपपत्तेः।

शुक्त्यादेरपि मूलाज्ञानविषयचैतन्याभिन्नतया तद्विषयत्वानुभवाविरोधात्।

विवरणादिषु मूलाज्ञानसाधनप्रसङ्गे एव इद-महं न जानामि इति प्रत्यक्षप्रमाणोपदर्शनाच्च।

---

आद्यदोषं परिहरति अवस्थारूपाज्ञानस्येति। शुक्तिं न जानामीत्याद्यनुभवस्य न अवस्थाज्ञानं विषयगतं विषयः किन्तु मूलाज्ञानं तस्यैव साक्षिसंसृष्टत्वादित्यर्थः। ननु मूलाज्ञानस्य ब्रह्मविषयकत्वात् कथं तस्य शुक्तिविषयकत्वा-नुभवः सम्भवति अवस्थाज्ञानस्य वा कथं शुक्तिविषयकत्वा-नुभवः सम्भवति तस्यापि शुक्त्यवच्छिन्नचैतन्यमात्रविषयकत्वात् शुक्तेरवस्थाज्ञानविषयचैतन्यतादात्म्यात्।

शुक्तिविषयकत्वानुभवो न विरुध्यते इति चेत्। तुल्यमुत्तरमित्यभिप्रेत्याह शुक्त्यादेरपीति अभिन्नतयेति। जड़मात्रस्य मूलाज्ञानविषयचैतन्ये अध्यस्ततया शुक्त्यादेरपि तत्तादात्म्यरूपं तदभिन्नत्वमस्तीति भावः।

शुक्तिं न जानामीत्याद्यनुभवस्य मूलाज्ञानविषयकत्वे विवरणादिसम्मतिमाह विवरणादिषु इति। ननु मूला-ज्ञानसाधनप्रकरणे अहमज्ञ इत्याकारो योऽनुभवः प्रदर्शितः स एव मूलाज्ञानसाधकः। इदमहं न जानामीत्यनु-भवस्तु अवस्थाज्ञानविषयक एव न च प्रकरणविरोधः शङ्क-

अहमज्ञ इति सामान्यतोऽज्ञानानुभव-एव मूलाज्ञानविषयः शुक्तिमहं न जानामि इत्यादिविषयविशेषालिङ्गिताज्ञानानुभवस्तु अव-स्थाज्ञानविषय इति विशेषाभ्युपगमेऽपि अवस्था-ऽवस्थावतोरभेदेन मूलाज्ञानस्य साक्षिसंसर्गात् वा

---

नीयः। शुक्तिरजतादिलक्षणपरिणामोपपत्तये अवस्था-ज्ञानस्यापि साधनीयत्वेन मूलाज्ञानसाधनप्रकरणेऽपि प्रसङ्गात् तत्साधनोपपत्तेः। यथा इदं न जानामी-त्यनुभवः तत्तद्विषयावच्छिन्नचैतन्याज्ञानगोचरः। एवमह-मज्ञस्तत्त्वं न जानामीत्यनुभवो मूलाज्ञानगोचर इति। दृष्टान्त-विधया मूलाज्ञानसाधनप्रस्तावेऽपि विषयविशेषालिङ्गिताज्ञाना-नुभवदर्शनोपपत्तेश्च।

तस्मात् इदं न जानामि शुक्तिं न जानामीत्याद्यनुभवानां मूलाज्ञानविषयकत्वे प्रमाणाभावादवस्थाज्ञानविषयकत्वस्यैव तत्साधनार्थतया वक्तव्यत्वाच्च तस्य विषयगतत्वे सिद्धे साक्षि-संसर्गाभावान्न तदनुभवः सम्भवतीति इत्याशयवतीं शङ्कामनु-वदति अहमज्ञ इतीति।

विषयगताज्ञानस्य साक्षिणा सह साक्षात् सम्बन्धाभावे-ऽपि परम्परासम्बन्धसम्भवान्न तदनुभवानुपपत्तिरिति। परि-हरति अवस्थावस्थावतो रिति। अभेदेनेति तादात्म्यमभेदः तथा च साक्षिसंसृष्टमूलाज्ञानावस्थात्वाद्विषयगताज्ञानस्य मूलाज्ञानद्वारा साक्षिसंसर्ग इत्यर्थः।

साक्षीति साक्षिचैतन्यस्य अवस्थाज्ञानाश्रयविषयचैतन्यस्य च वस्तुत एकत्वात् वस्तुतः साक्षि अभिन्नचैतन्याश्रितत्वं साक्षिणा सह विषयगताज्ञानस्य संसर्ग इत्यर्थः। यदुक्तं

साक्षिविषयचैतन्ययोः वास्तवैक्यात् वा विषय-गतस्यापि अवस्थाज्ञानस्य साक्षिविषयत्वोपपत्तेः।

परोक्षज्ञानस्य अज्ञानानिवर्त्तकत्वेऽपि ततः तन्निवृत्त्यनुभवस्य सत्तानिश्चयरूपपरोक्षवृत्ति-प्रतिबन्धक-प्रयुक्तानुभव-निवृत्तिनिबन्धन-भ्रान्ति-त्वोपपत्तेः।

अपरोक्षज्ञानस्यैव अज्ञाननिवर्त्तकत्वनियमाभ्युपगमादित्याहुः।

---

परोक्षवृत्तिनिवर्त्त्यत्वं विषयगताज्ञानस्य न सम्भवति परोक्ष-वृत्तेर्निर्गमनाभावात्। तथा च प्रमामात्रमज्ञाननिवर्त्तक-मिति नियमो न सम्भवति परोक्षवृत्तौ व्यभिचारादिति तन्न। परोक्षज्ञानस्याज्ञाननिवर्त्तकत्वानुपगमे न तथा नियमा-नभ्युपगमात् तथा नियमे हि अभ्युपगते परोक्षवृत्तौ व्यभि-चारदोषो भवेत्।

ननु तर्हि शास्त्रार्थं न जानामीत्यनुभूताज्ञानस्य तदुपदेशा-नन्तरं तन्निवृत्त्यनुभवविरोध इति नेत्याह। परोक्षज्ञानस्य इति तत इति परोक्षज्ञानादित्यर्थः। भ्रान्तित्वोपपत्तेरिति न च अत्र बाधकाभावात् कथं भ्रान्तित्वकल्पनमिति वाच्यम्। विषयगताज्ञानापेक्षया पुरुषगतानन्तावस्थाज्ञानान्तरकल्पना-गौरवस्य बाधकस्य सत्त्वादिति भावः।

कथं तर्हि प्रमाणवृत्तीनां तन्निवर्त्तकत्वाभ्युपगमस्तत्राह। अपरोक्षज्ञानस्यैव इति। न तु परोक्षज्ञानसाधारणप्रमाण-

ननु नायमपि नियमः अविद्याहङ्कार-सुखदुःखादितद्धर्मप्रत्यक्षस्य अज्ञाननिवर्त्तकत्वा-नभ्युपगमादिति चेत् न। अविद्यादिप्रत्यक्षस्य साक्षिरूपत्वेन वृत्तिरूपापरोक्षज्ञानस्य आवरण-निवर्त्तकत्वनियमानपायात्।

(अथ साक्षिस्वरूपनिरूपणम्)

अथ कोऽयं साक्षी जीवातिरेकेण व्यवह्रियते।

अत्रोक्तं कूटस्थदीपे देहद्वयाधिष्ठानभूतं कूटस्थचैतन्यं स्वावच्छेदकस्य देहद्वयस्य

साक्षादीक्षणान्निर्विकारत्वाच्च साक्षीत्युच्यते।

---

ज्ञानमात्रस्य अतो न परोक्षज्ञाने व्यभिचार इत्येवकारा-भिप्रायः।

तद्धर्मेति तच्छब्दोऽहङ्कारपर अनभ्युपगमादिति अविद्याह-ङ्कारादीनां स्वसत्ताकाले भाननियमेन तेषामावरणानङ्गी-कारादित्यर्थः। नियमस्य सङ्कोचं वदन् परिहरति नेति। सुखादिधर्मिणोऽहङ्कारस्य साक्षिप्रत्यक्षविषयत्वोक्त्या अहमर्थ-जीवापेक्षया भिन्नस्तत्साक्षी निर्दिष्टः सुखादिधर्मिणोऽहङ्कार-स्यैव लोके जीवत्वप्रसिद्धेस्तथा च योऽयं जीवभिन्नः साक्षी व्यवह्रियते स नास्ति मानाभावादित्याक्षिपति।

अथेति यः साक्षी जीवातिरेकेण व्यवह्रियते अयं क इति सम्बन्धः किं शब्द आक्षेपार्थः मानाभावोऽसिद्ध इत्याशयेनाह अत्रोक्तमिति।

साक्षादीक्षणादिति अपरोक्षतया द्रष्टृत्वादित्यर्थः।

लोकेऽपि हि औदासीन्यबोधाभ्यामेव साक्षित्वं सिद्धम्।

---

निर्विकारत्वात् चेति ननु द्रष्टृत्वं दृष्टिक्रियाकर्त्तृत्वं निर्विकारत्वं च कर्त्तृत्वादिविकारराहित्यं तथा च तयोः परस्परविरोध इति चेन्न दृष्टिस्वरूपे एव कूटस्थे तत्कर्त्तृत्वस्य साक्षात् द्रष्टरि संज्ञायामिति सूत्रानुसारेण साक्षिशब्दात् प्रतीतस्य सवितरि प्रकाशात्मके प्रकाशत इति प्रकाशकर्त्तृत्ववत् उपचारमात्रत्वात् साक्षात्पदाद्द्रष्टरि अर्थे इनि प्रत्ययो भवति साक्षिपदस्य संज्ञात्व इति सूत्रार्थः।

ननु साक्षिपदात् साक्षिलक्षणं बोद्धृत्वमात्रं प्रतीयते न तु निर्विकारत्वरूपमौदासीन्यमपि तत् कथं साक्षिलक्षणे निर्विकारत्वमपि प्रक्षिप्यते तत्राह लोकेऽपि हीति। अपिशब्दव्याख्यानमवधारणं तच्च औदासीन्य बोद्धृत्वयोः प्रत्येकं लक्षणत्वशङ्काव्यवच्छेदार्थं हिशब्दव्याख्यानं प्रसिद्धपदं लोके हि द्वयोर्विवदमानयोः सतोः ताभ्यामन्यस्तयोर्विवादस्यापरोक्षतया बोद्धा उदासीनश्च यो भवति स साक्षीत्युच्यते अतः उदासीनत्वविशेषणमावश्यकम् औदासीन्यमात्रमुक्तविवादस्थले स्तम्भादेरस्तीति तद्वारणाय बोद्धृत्वविशेषणमिति मन्तव्यम्।

स्थूलसूक्ष्मात्मकदेहद्वयावच्छिन्नं स्वावच्छेदकदेहद्वयाभासकं चैतन्यं साक्षीति यदुक्तं न तत् सम्भवति तथाभूतचैतन्ये मानाभावात्। न च तदभावे देहद्वयावभासासिद्धिरिति वाच्यम्। प्रकाशात्मकान्तःकरणवृत्तिभिरेव तत्सिद्धेरिति मत्वा शङ्कते यद्यपीति। जीवपदमहङ्कारात्मकान्तःकरणपरं नित्यचैतन्यस्य अनङ्गीकारपक्षे जड़ाहङ्कारातिरिक्तजीवाभावाद्वृत्तीनामन्तः-

यद्यपि जीवस्य वृत्तयः सन्ति देहद्वयभासिका-स्तथापि सर्वतः प्रसृतेन स्वावच्छिन्नेन कूटस्थ-चैतन्येन ईषत् सदाभास्यमेव देहद्वयं जीवस्व-रूपचैतन्यप्रतिविम्बगर्भान्तःकरणात् विच्छिद्य विच्छिद्योद्गच्छद्भिः वृत्तिज्ञानैर्भास्यते ।

---

करणपरिणामतायाः कामः सङ्कल्प इत्यादिश्रुतिसिद्धत्वात् चेति बोध्यम् ।

वृत्तीनां दीपादिवत् प्रकाशात्मकत्वेऽपि तासां जड़त्वात् देहद्वयावभासकत्वं न सम्भवति स्वप्रकाशनित्यचैतन्याभ्युपगमे तु तत्प्रतिविम्बयुक्तानां तासां देहद्वयानुभवरूपत्वं सम्भवति। अतः तादृशचैतन्यमुपेयमित्यभिप्रायेणाह तथा अपि इति ।

किञ्च वृत्तीनामन्तरालदशासु देहद्वयस्यास्पष्टं भानं देहद्वयगोचरवृत्तीनां सद्भावकाले त्वहं कर्त्ता स्थूलोऽहमित्यादिरूपेण स्पष्टं भानमित्यनुभवसिद्धं तत्रास्पष्टभानोपपत्तये वृत्तिज्ञानातिरिक्तं नित्यसाक्षिचैतन्यमुपेयमित्याशयेनाह सर्वतः प्रसृतेनेति व्याप्तेनेत्यर्थः। देहद्वयं कूटस्थचैतन्येन ईषत् सदा भास्यमानमेव वृत्तिज्ञानैः स्फुटमवभास्यत इति सम्बन्धः। जीवचैतन्यरूपो यः प्रतिविम्बस्तद्गर्भात्तद्युक्तादित्यर्थः। अनेन अन्तःकरणप्रतिविम्बो जीवः विम्बचैतन्यरूपः कूटस्थः साक्षीति जीवसाक्षिणोर्भेदो दर्शितः। यथा अग्नितप्तायःपिण्डादुद्गच्छन्तो विस्फुलिङ्गाः साग्नय एवोद्गच्छन्ति एवं चैतन्यप्रतिविम्बोपेतादन्तःकरणादुत्पद्यमानाः वृत्तयोऽपि तत्प्रतिविम्बगर्भा एव उत्पद्यन्ते अतस्तासां देहाद्यनुभवरूपत्वं सम्भवतीति सूचयितुमन्तःकरणस्य प्रतिविम्बगर्भत्वमुक्तम् ।

अन्तरालकाले तु सह वृत्त्यभावैः कूटस्थ-चैतन्येनैव भास्यते।

अत एव अहङ्कारादीनां सर्वदा प्रकाश संसर्गात् संशयाद्यगोचरत्वम्। अन्यज्ज्ञान-

---

जाग्रदवस्थायां देहद्वयस्य साक्षिचैतन्यमात्रादस्पष्टतया भानावसरं दर्शयितुं विच्छिद्य विच्छिद्येत्युक्तम्।

तमेवावसरं स्पष्टमाह अन्तरालकाले तु इति। तुशब्दस्य व्याख्यानमेवकारः देहद्वयं वृत्त्यभावैः सहावभास्यत इति सम्बन्धः। वृत्त्यभावैरित्यस्य वृत्तीनां ध्वंसैरिति अर्थः। उपलक्षणं च एतत् वृत्तीनामुत्पत्तिभिः वृत्तिभेदैश्च सहेत्यर्थः।

अयं भावः नित्यचैतन्यानभ्युपगमे वृत्त्युत्पत्तिविनाशतद्भेदादेः अपरोक्षतया भानं न स्यात् स्वोत्पत्तिविनाशयोः स्वग्राह्यत्वा-सम्भवात् वृत्तिगोचरापरोक्षवृत्तीनां निरभिप्रेष्यमाणतया तयोः वृत्त्यन्तरग्राह्यत्वासम्भवाच्च।

तस्माद् वृत्तिनाशादिसाक्षितयापि नित्यचैतन्यमुपेय-मिति अत्रैवोपपत्त्यन्तरं दर्शयति अतएवेति। नित्य-चैतन्यरूपसाक्षिसद्भावादेव इत्यर्थः। अहङ्कारप्राणशरी-रादीनां योग्यतद्धर्मसुखदुःखादीनाञ्च सदा अहङ्कारादिस त्ताकाले संशयादिनिवृत्तिलक्षणफलभाक्त्वं तावदनुभवसिद्धम्। न हि कदाचिदपि अहमासं न वा अहङ्कर्त्ता न वा अहं प्राणिमि न वा अहं ब्राह्मणो नवेत्यादिप्रकारेण अहङ्कारादिसत्ता-संशयः कस्यचिदप्यस्ति तच्च तेषां सदा प्रकाशसंसर्गं विना न सम्भवति। घटादीनां प्रकाशसंसर्गदशायामेव संशयाद्यगोचरत्व-दर्शनात् सदा प्रकाशसंसर्गित्वम् अहङ्कारादीनां जन्यज्ञानपक्षे न सम्भवति तेषामुत्पत्तिविनाशवत्त्वात् क्रमिकत्वात् प्रायेण वाह्य-

धाराकालीनाहङ्कारस्य एतावन्तं कालमिदमहं पश्यन्नेव आसमित्यनुसन्धानं च ।

न च कूटस्थप्रकाशिते कथं जीवस्य व्यवहार-स्मृत्यादिकमिति शङ्क्यम् ।

अन्योन्याध्यासेन जीवैकत्वापत्त्या कूटस्थस्य

---

विषयगोचरत्वाच्च तस्मात् अहङ्कारादीनां सदा संशयाद्यगोचर-त्वनिर्वाहाय तेषां सदा साक्षिचैतन्यरूपप्रकाशसंसर्गो वाच्य इति भावः। साक्षिसद्भावे उपपत्त्यन्तरमाह अहङ्कारग्रहणं धारान्तर्गतवृत्तीनामपि उपलक्षणम् । नित्यानुभवरूपसाक्ष्य-नङ्गीकारे दिव्यमङ्गलश्रीकृष्णमूर्तिगोचरवृत्तिसन्ततिकालीना-हमर्थस्य तत्कालीनवृत्तीनाञ्च तत्काले जन्यानुभवासम्भवेन संस्कारासम्भवादुत्तरत्रानुसन्धानं न स्यात्। न हि धाराकाले अहङ्कारगोचरो वा प्रत्येकं वृत्तिगोचरो वा जन्यानुभवः सम्भ-वति। धाराविच्छेदप्रसङ्गाद्वृत्तिसन्ततेरिच्छाघटितसामग्रीकत्वेन तद्विच्छेदासम्भवाच्च। तस्मादन्यज्ञानधाराकालीनाहमर्थादि-साक्षितया नित्यानुभवो वाच्य इति भावः। अनुसन्धानं चेति सङ्गच्छत इति शेषः।

ननु साक्षिचैतन्येनानुभूताहमर्थतद्वृत्तीनां कथमहं पश्य-न्नेवासमिति स्मरणं जीवस्य सम्भवति अहमर्थभूतप्रतिबिम्ब-जीवापेक्षया बिम्बभूतस्य कूटस्थस्य चैतन्यात्मकसाक्षिणो भिन्नत्वात् अन्यानुभूतेऽर्थेऽन्यस्य स्मरणायोगादिति शङ्कते न च कूटस्थेति।

स्वेन स्वतादात्म्यापन्नेन वा अनुभूतार्थे स्वस्य स्मरणं भवतीत्यङ्गीकारान्नातिप्रसङ्गः न हि देवदत्तयज्ञदत्तजीवयोः

जीवान्तरङ्गत्वात्। न च जीवचैतन्यमेव साक्षी भवतु किं कूटस्थेन इति वाच्यम्?।

लौकिकवैदिकव्यवहारकर्त्तुस्तस्य उदासीनद्रष्टृत्वासम्भवेन साक्षी चेता केवलो निर्गुणश्चेति श्रुत्युक्तसाक्षित्वायोगात्।

---

परस्परं तादात्म्यमस्ति येन देवदत्तानुभूतेऽर्थे यज्ञदत्तस्य स्मरणप्रसङ्ग इति दोषो भवेदित्याशयेन परिहरति अन्योन्याध्यासेनेति। तादात्म्याध्यासेनेत्यर्थः। जीवस्य कूटस्थे कल्पितत्वस्य प्रागेव निरूपितत्वादिति भावः। न च एवमपि सर्वदेहेषु साक्षिण एकत्वाद्देवदत्तसाक्षिणानुभूतदेवदत्ताहङ्कारादिषु यज्ञदत्तादेरपि अनुसन्धानप्रसङ्गः। यज्ञदत्तादेरपि देवदत्तसाक्षिण्येवाध्यस्ततया तदेकत्वापत्तेः सत्त्वादिति वाच्यम्। देहद्वयरूपावच्छेदकभेदेन तत्तज्जीवतादात्म्यापन्नसाक्षिणो भेदाभ्युपगमादेवमेव अवच्छेदकभेदेन साक्षिभेदं ज्ञापयितुमेव स्वावच्छेदकस्येति विशेषणं पूर्वमेव दत्तमिति बोध्यम्।

ननु अस्तु जीवकूटस्थनामकं चैतन्यद्वयं तथापि जीव एव साक्षी किं न स्यादिति शङ्कते न चेति किं कूटस्थेनेति। कूटस्थस्य साक्षित्वेनेत्यर्थः। न तु कूटस्थस्यैवाक्षेपः तस्य साधितत्वात्।

उदासीनस्यैव लोके साक्षित्वस्य प्रसिद्धत्वात् तदनुरोधेन श्रुत्यनुरोधेन च कूटस्थस्यैव साक्षित्वं न जीवस्येति परिहरति लौकिकेति। साक्षिणो लक्षणमाह श्रुतिः। चेता केवल इति। चेता बोद्धा केवलः अकर्त्ता उदासीन इति यावत्।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति इति कर्मफलभोक्तुर्जीवात् उदासीनप्रकाशरूपसाक्षिणः पृथगाम्नानाच्चेति ।

नाटकदीपेऽपि नृत्यशालास्थितदीपदृष्टान्तेन साक्षी जीवात् विविच्य दर्शितः ।

---

ज्ञानादिगुणक आत्मेति वैशेषिकादिमतं श्रुतिः स्वयमेव निराकरोति निर्गुणश्चेति । मध्यमपरिमाणः सक्रिय आत्मेति दिगम्बरमतनिरासार्थश्चकारः निष्क्रियश्चेत्यर्थः ।
साक्षिणो जीवाद्भिन्नत्वे श्रुतिमप्याह तयोरन्य इति । जीवकूटस्थयोर्मध्ये कूटस्थादन्यो जीवः पिप्पलं कर्मफलं स्वादु यथा भवति तथा अत्ति भुङ्क्ते शरीर स्याश्वत्थवृक्षत्वेन निरूपितत्वात् कर्मफलस्य पिप्पलत्वेन निरूपणमिति द्रष्टव्यम् । स्वाद्विति विशेषणं पुण्यफलाभिप्रायम् जीवादन्यः कूटस्थः अनश्नन् अशनं कर्मफलभोगमकुर्वन् अभिचाकशीति अभि आभिमुख्येन अपरोक्षतया चाकशीति बुद्ध्यादिसाक्षितया प्रकाशत इति यावत् । अत्रानश्नन्नित्यनेन भोक्तृत्वे निषिद्धे सति कर्तृत्वमपि निषिद्धं भवति तथा च अनश्नन्नभिचाकशीति पदाभ्याम् उदासीनत्वे सति बोद्धृत्वरूपं साक्षित्वं प्रदर्शितमित्यर्थः ।

कूटस्थदीपे निरूपितः साक्षी अन्यत्रापि दृष्टान्तविशेषपूर्वकं सुषुप्तिसाधारणो निरूपित इत्याह नाटकदीपेऽपि इति । दृष्टान्तप्रतिपादकतत्रत्यश्लोकं पठति नृत्यशालास्थित इति । प्रभुं नृत्याभिमानिनं सभ्यास्तत्परिसरवर्त्तिनः । अविशेषेणेति दीपो हि वृद्धिं प्राप्य प्रभुं प्रकाशयति मध्यमावस्थां प्राप्य सभ्यान् ततो निष्कृष्टावस्थां प्राप्य नर्त्तकी-

तथा हि नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्त्तकीम्। दीपयेत् अविशेषेण तदभावेऽपि दीप्यते।

तथा चिदाभासविशिष्टाहङ्काररूपं जीवं विषयभोग-साकल्य-वैकल्याभिमानप्रयुक्तहर्षविषादवत्त्वात् नृत्याभिमानिप्रभुतुल्यम् तत्परिसरवर्त्तित्वेऽपि तद्वाहित्यात् सभ्यपुरुषतुल्यान् विष-

---

मिति प्रकाश्य तारतम्यानुसारेण वृद्ध्यादिविकारं प्राप्य न दीपयेत् किन्तु एकरूपेणैव स्थितः सन् प्रकाशयेदित्यर्थः। इदञ्च विशेषणं दार्ष्टान्तिके निर्विकारस्य कूटस्थस्य साक्षित्वज्ञापनार्थमिति मन्तव्यम्। तदभावेऽपि इति प्रभुसभ्याद्यभावेऽपि इत्यर्थः।

अहङ्कारः प्रभुः सभ्या विषया नर्त्तकी मतिः तालादिधारीण्यक्षाणि दीपः साक्ष्यवभासक इति दार्ष्टान्तिकसंग्राहकं श्लोकं मनसि निधायाह तथेति।

जीवस्य नृत्याभिमानिप्रभुतुल्यत्वकल्पनाप्रयोजकं साम्यमाह विषयेति। नृत्यसाकल्यवैकल्यप्रयुक्तहर्षादिमत्त्वं प्रभोरभिमानपदेन सूचितम्।

यथा सभ्याः प्रभुपरिसरवर्त्तिनस्तथा रूपादयो विषयाः जीवपरिसरवर्त्तिनस्तथा च विषयाणां सभ्यसाम्यात् सभ्यत्वकल्पनं युक्तमित्याशयेनाह तत्परिसरवर्त्तित्वेऽपि इति। तत्पदं जीवपरम्।

ननु जीवपरिसरवर्त्तिनामपि विषयाणां जीववत् प्रभुतुल्यत्व-

यान् नानाविधविकारवर्त्तित्वात् नर्त्तकीतुल्यां धियं च दीपयन् सुषुप्त्यादौ अहङ्काराद्यभावेऽपि दीप्यमानश्चिदाभासविशिष्टाहङ्काररूपजीवभ्रमाधिष्ठान-कूटस्थ-चैतन्यात्मा साक्षी ।

---

मेव कुतो न कल्प्यते इत्याशङ्क्य तत्प्रयोजकाभावादित्याशयेनाह तद्बाह्यित्यादिति । प्रभुतुल्यत्वकल्पकहर्षविषयादेरभावादित्यर्थः ।

यद्वा विषयाणां सभ्यपुरुषसाम्यमाह तद्बाह्यित्यादिति । बुद्धेर्नर्त्तकीसाम्यमाह नानाविधेति । यथा तालादिधारिणः पुरुषाः नर्त्तकीमनुवर्त्तन्ते एवम् इन्द्रियाण्यपि धियमनुवर्त्तन्ते इत्यनेन साम्येन इन्द्रियाणां तालादिधारिपुरुषसाम्यं श्लोकोपात्तम् । धियञ्चेत्यत्र चशब्दार्थः जीवादीनामवभासकसाक्षिदीपतुल्य इति चरमपादार्थः । तं संगृह्णाति दीपयन्नित्यादिना । प्रकाशयन्नित्यर्थः ।

दीपयन्नित्यतः प्राक् जाग्रदादौ इति शेषः । नाटकदीपे निरूपितः साक्षी कूटस्थदीपोक्तकूटस्थ एव नान्य इत्याशयेनाह चिदाभासविशिष्टेति । कूटस्थदीपे हि जीवभ्रमाधिष्ठानभूतकूटस्थचैतन्यं जीवादेरभासकमित्युक्तं नाटकदीपे च चिदाभासविशिष्टाहङ्कारं जीवं कल्पयित्वा तदवभासकं चैतन्यं साक्षीत्युक्तं ततश्च तत्रोक्तकूटस्थ एव अत्र साक्षीत्यवगम्यते अन्तःकरणप्रतिविम्बरूपजीवाधिष्ठानत्वतदवभासकत्वादेर्निर्दिश्यसाम्यात् तथा च नाटकदीपेऽपि नृत्यशालास्थदीपदृष्टान्तेन साक्षी जीवात् विविच्य दर्शित इति पूर्वग्रन्थे

एवं जीवात् विवेचितोऽयं साक्षी न ब्रह्म-कोटिरपि। किन्तु अस्पृष्टजीवेश्वरविभागं चैतन्य-मित्युक्तं कूटस्थदीपे।

तत्त्वप्रदीपिकायामपि मायाशबलिते सगुणे परमेश्वरे केवलो निर्गुण इति विशेषणानुपपत्तेः सर्वप्रत्यग्भूतं विशुद्धं ब्रह्म जीवाभेदेन साक्षीति प्रतिपाद्यत इति विदितम्।

---

कूटस्थदीपे यः साक्षी जीवाद्भेदेन दर्शितः स एव नाटक-दीपेऽपि तयो भेदेन दर्शित इति विवक्षितार्थः सिद्ध इति भावः।

साक्षी यथा जीवकोटिर्न भवति जीवस्योदासीनत्वाभावात् तथा ईश्वरकोटिरपि न भवति जगत्सृष्टिनियमनादि-व्यापारकर्त्तुः तस्य उदासीनत्वाभावादीश्वरस्य परोक्षतया जीवं प्रति बुद्ध्यादिसाक्षितया नित्यापरोक्षसाक्षिरूपत्वासम्भवाच्च इत्याशयेनाह एवं जीवादिति।

ब्रह्मपदमीश्वरपरं न तु उदासीनचैतन्यपरं कस्तर्हि साक्षीति पृच्छति किन्तु इति उत्तरमाह अस्पृष्टेति। उक्त-मिति शैवपुराणेषु कूटस्थः प्रविवेचितः। जीवेशत्वादि-रहितः केवलः स्वप्रभुः शिव इति श्लोकेनेति शेषः। जगद्रूप-त्वमादिपदार्थः। केवल उदासीनः शिवः शुद्धः परमा-त्मेत्यर्थः।

ईश्वरत्वादिधर्मरहितचिदात्मैवान्यत्रापि साक्षित्वेन उक्त इति संवादार्थमाह तत्त्वदीपिकायामपि। सर्वेषां जीवा-नामन्तःकरणगतचित्प्रतिविम्बात्मकानां प्रत्यग्भूतमधिष्ठान-

कौमुद्यां तु एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्म्माध्यक्षः सर्वभूताधि-

---

तया आन्तरं स्वरूपभूतं शुद्धं जीवत्वेश्वरत्वजगद्रूपत्वरहितं ब्रह्म जीवाभेदेन तत्तज्जीवाधिष्ठानत्वादेव तत्तज्जीवतादात्म्यापत्त्या प्रतिशरीरं प्राप्तभेदं सत् साक्षीति प्रतिपाद्यते इति शब्दः प्रकारवाची सन् साक्षित्वमाह तथा च साक्षित्वं प्रतिपद्यते परमेश्वरस्यैव कश्चिद्रूपभेदः साक्षी नाम कुतः देवत्वादिश्रुतेर्नंत्वीश्वरविलक्षणः साक्षी देवत्वादिश्रुतिविरोधादित्येवकारार्थः। देवत्वादीत्यादिपदेन सर्वभूतान्तरात्मत्वादिधर्मा गृह्यन्ते। एतदुक्तं भवति देवत्वादयो धर्माः श्रुतिस्मृत्यादिषु परमेश्वरधर्मत्वेन प्रसिद्धा इति नान्यस्य साक्षित्वं देवत्वादिश्रवणविरोधात्। यद्यपि देवत्वं हिरण्यगर्भेन्द्रियादिजीवसाधारणं तथापि इतरधर्माणामीश्वरगतमेव ग्राह्यमिति भावः।

परमेश्वरस्य शिवविष्ण्वात्मना प्राप्तं भेदं निराचष्टे एक इति। विश्वभूतस्य परमेश्वरस्य मूर्त्तिभेदेन शिवविष्णुसंज्ञानत्वीश्वरभेदोऽपि इत्यर्थः। तथा च श्रुत्यन्तरं शाश्वतं शिवमच्युतमिति अच्युतपदस्य विष्णौ रूढत्वात् आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पत इत्यादिस्मृतयोऽपि अत्र शतशो द्रष्टव्याः श्रुतौ सर्वभूतेषु इत्यनन्तरं वर्त्तत इति शेषः। तथा च स्मृतिः।—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति।

इति। तर्हि किमिति सर्वैषां नोपलभ्यते तत्राह गूढ इति। तथा च स्मृतिः।—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः।

वासः साक्षी चेता केवलो निर्गुणश्च इति देव-त्वादिश्रुतेः परमेश्वरस्य एव रूपभेदः कश्चित् जीवप्रवृत्तिनिवृत्त्योरनुमन्ता स्वयम् उदासीनः साक्षी नाम।

---

इति श्रीकृष्णोऽत्राह शब्दार्थः। प्रकाशः प्रकाशमान इत्यर्थः।

परमात्मनो भूतेषु अवस्थानाभ्युपगमेऽधिकरणभेदात् तस्यापि भिन्नत्वशङ्का स्यात् तां वारयति व्यापीति। व्यापि-त्वमीवद् वस्तुतो जीवभिन्नत्वं वारयति सर्वभूतान्तरात्मेति। सर्वभूतानां ब्रह्मादिस्तम्बपर्य्यन्तसङ्घातानामन्तरवस्थित आत्मा सर्वजीवस्वरूप इति यावत्। परमेश्वरस्य कर्मकर्त्तृजीवाभिन्नत्वे तस्यापि तत्कर्त्तृत्वं स्यादिति नेत्याह कर्माध्यक्ष इति। जीव-कर्त्तृकर्मणां साक्षी न स्वयं तत्कर्त्तेत्यर्थः। जीवपरमात्मनोः औपाधिकभेदेन धर्मव्यवस्था सम्भवतीति भावः। सर्वभूतेषु इत्यादिना। परमात्मापेक्षया भेदेन भूतानां निर्देशात् तस्य सद्वितीयत्वमाशङ्क्याह सर्वभूताधिवास इति। अधि उपरि वसन्ति अस्मिन् भूतानि इति अधिवासोऽधिष्ठानं सर्वेषां भूतानामधिवासः न च अधिष्ठानातिरेकेण आरोपितानां पृथक् सत्त्वमस्तीति ना-द्वितीयत्वविरोध इति भावः। न केवलं जीवगतकर्मणामेव साक्षी किन्तु जीवानामपि इत्याशयेनाह साक्षीति। अवशिष्टा श्रुतिः प्रागेव व्याख्याता। अनुमन्ता नैरन्तर्य्येण बोद्धा स्वयमिति जीवे व्यापारवत्यपि स्वयं तद्रहितः। रूपविशेषसाक्षिलक्षणमुक्त्वा साक्षिपदं तत्र वर्त्तयति साक्षी नामेति। नामपदं श्रुतिप्रसिद्धि-द्योतकम्।

**स च कारणत्वादिधर्म्मानास्पदत्वात् अपरोक्षो जीवगतम् अज्ञानादि अवभासयंश्च जीवस्य अन्तरङ्गः सुषुप्त्यादौ च कार्य्यकारणोपरमे जीवगताज्ञानमात्रव्यञ्जकः प्राज्ञशब्दितः।**

---

ननु साक्षी जीवस्यापरोक्षः तस्याज्ञानान्तःकरणाद्यनुभवरूपत्वाङ्गीकारात् ईश्वरस्तु नित्यं परोक्षः कारणत्वसर्वज्ञत्वसर्वनियन्तृत्वादेर्जीवं प्रति अयोग्यत्वेन तद्विशिष्टविश्वचैतन्यरूपेश्वरस्य अयोग्यत्वादिति चेत् ? न, तस्यरूपविशेषत्वाङ्गीकारेणापरोक्षत्वोपपत्तेरित्याशयेनाह स चेति। न चेश्वरस्यैतादृशरूपभेदे मानाभावः शङ्कनीयः एको देव इति मन्त्रस्य अनश्नन्योऽभिचाकशीति मन्त्रभागस्य उदासीने परमेश्वररूपभेदे मानत्वात् कारणत्वादिधर्मास्पदे वेश्वरे सृष्टिवाक्यानां सर्वेषामेव मानत्वादिति भावः। स च जीवस्यापरोक्षोऽन्तरङ्गश्चेति सम्बन्धः।

उभयत्र हेतुमाह जीवगतमज्ञानाद्यवभासयन्निति। अन्तःकरण-तद्धर्मसुखदुःखादि-संग्रहार्थमादि-पदसाक्षि-चैतन्यमज्ञानाद्यवभासनद्वारा अहमज्ञः अहं सुखी दुःखीत्यादिव्यवहारनिर्वाहकं भवति अतः साक्षी जीवस्यान्तरङ्गः लोके राजादिव्यवहारनिर्वाहकपुरुषे राजान्तरङ्गत्वस्य प्रसिद्धत्वादिति भावः।

ननु सुषुप्त्यादौ साक्षी अस्यान्तःकरणतद्वृत्त्यादेरुपरतत्वात् तदा चिदात्मनः साक्षित्वं न स्यात् तथा च तेभ्यो विलक्षणः

तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद न आन्तरमेव एव अयं पुरुषः प्राज्ञेन आत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद न आन्तरं प्राज्ञेन आत्मना अन्वारूढ़ उत्सर्जन् यातीति श्रुतिवाक्याभ्यां सुषुप्त्युत्क्रान्त्यवस्थयोः

---

साक्षी चिन्मात्रोऽहं सदा शिव इत्यादौ सुषुप्त्यादौ अपि तस्य साक्षित्वव्यवहारविरोध इत्यत आह सुषुप्त्यादाविति। तेभ्य इति भोक्त्रादिभ्य इत्यर्थः। तदापि मूलाज्ञानस्य साक्ष्यस्य सत्त्वात् न विरोध इति भावः।

परमेश्वरस्यैव रूपविशेषात्मके साक्षिणि सुषुप्त्युत्क्रान्तिविषयकवाक्यद्वयमपि प्रमाणमित्याशयेनाह प्राज्ञशब्दित इति। सुषुप्तिविषयकवाक्ये उत्क्रान्तिविषयकवाक्ये च प्राज्ञशब्देन यथोक्तसाक्षिण एव प्रतिपादितत्वादिति भावः।

ननु सुषुप्त्युत्क्रान्त्योर्भेदेन इत्यधिकरणे सुषुप्त्यादिविषयकश्रुतिगतप्राज्ञशब्दस्य सर्वेश्वरत्वभूताधिपतित्वादिविशिष्टपरमात्मप्रतिपादकताया उक्तत्वात् कथं प्राज्ञशब्दस्य उदासीनेश्वरपरत्वमत आह तद्यथेति।

दृष्टान्तवाक्ये बाह्यं रथ्यादिवृत्तान्तमान्तरं गृहकृत्यं पुरुषो जीवः प्राज्ञः परमात्मा अनेन सम्परिष्वक्तः सुषुप्तावुपाधिलयादेकीभावं प्राप्तः बाह्यं जाग्रत्प्रपञ्चं आन्तरं स्वप्नप्रपञ्चं किञ्चन किञ्चिदपि उत्क्रान्तिवाक्यमुदाहरति प्राज्ञेनात्मना अन्वारूढ़ इति। अन्वारूढः अधिष्ठितः उत्सर्जन् वेदनावशात् शब्दं कुर्वन् याति शरीराद्बहिर्निर्गच्छति उत्क्रामति इत्यर्थः।

जीवभेदेन प्रतिपादितः परमेश्वर इति सुषुप्त्यु-त्क्रान्त्यधिकरणनिर्णयोऽपि साक्षिपर इत्यु-पवर्णितम् ।

तत्त्वशुद्धावपि यथा इदं रजतमिति भ्रम-स्थले वस्तुतः शुक्तिकोट्यन्तर्गतोऽपि इदमंशः

---

अवस्थयोरिति सप्तमी प्रतिपादित इत्यनन्तरं प्राज्ञ इति शेषः। तथाच वाक्याभ्यां जीवभेदेन प्रतिपादितः प्राज्ञः परमेश्वर इति निर्णयोऽपि साक्षिपर इत्युपवर्णितं कौमुद्यामिति सम्बन्धः। बृहदारण्यकषष्ठाध्यायो जीवानुवादमात्ररूपः न तदतिरिक्ते-श्वरपर इति पूर्वपक्षे प्राप्ते सिद्धान्तः। तद्यथा प्रिययेत्यादि-वाक्ययोः सुषुप्त्यवस्थायामुत्क्रान्त्यवस्थायां च पुरुषशब्दित-जीवापेक्षया भेदेन परमेश्वरस्य तृतीयान्तप्राज्ञशब्देन व्यपदेशात् न षष्ठाध्यायो जीवानुवादमात्ररूपः किन्तु तदतिरिक्तेश्वर-प्रतिपादनपरः। तत्प्रतिपादनञ्च लोकप्रसिद्धजीवानुवादेन तस्येश्वराभेदप्रतिपादनार्थं तथा च वाक्यशेषो दृश्यते। स वा एष महानज आत्मा योऽयं विज्ञानमय इति यो विज्ञानमयो जीवः स एष महानात्मा पूर्णः परमात्मेत्यर्थं इति तदधिकरण-निर्णयः। ननु अस्य निर्णयस्य उदासीनेश्वररूपसाक्षिपरत्वमनुप-पन्नं स वा एष महानज आत्मेत्येतदनन्तरम् एष सर्वेश्वर एष भूताधिपतिरित्यादिना। तस्य सर्वेश्वरत्वादिगुणजातप्रतिपाद-नादिति चेत् न ज्ञेयब्रह्मप्रकरणगतसर्वेश्वरत्वादिवचनस्य स्तुति-मात्रपरत्वादिति भावः।

कौमुदीकारमतस्य संवादार्थं मतान्तरमुपन्यस्यति तत्त्वशु-द्धावपि इति। इदं रजतमिति भ्रमस्थले रजताभेदेन प्रतिभास-

प्रतिभासतो रजतकोटिः तथा ब्रह्मकोटिरेव साक्षी प्रतिभासतो जीवकोटिरिति जीवस्य सुखादिव्यवहारे तस्योपयोग इत्युक्त्वा अयमेव पक्षः समर्थितः।

केचित्तु अविद्योपाधिको जीव एव साक्षात् द्रष्टृत्वात् साक्षी लोकेऽपि हि अकर्त्तृत्वे सति द्रष्टृत्वं साक्षित्वं प्रसिद्धम्।

---

मानोऽपि इदमंशः रजतान्तर्भूतो न भवति रजतवत् तस्य बाधाभावान्नापि शुक्तावेव अन्तर्भवति तस्य शुक्त्यंशवदज्ञातत्वप्रसङ्गात्। अतो यथेदमंशस्य वस्तुतः शुक्तिरूपत्वं प्रतिभासतो रजताभिन्नत्वमेवं साक्षिणोऽपि वस्तुगत्या ईश्वररूपाभेदत्वं कल्पिततत्तज्जीवाधिष्ठानरूपस्य साक्षिणः सुखाद्यनुभवितुः अहं सुखमनुभवामीत्यादिप्रतिभासतस्तत्तज्जीवाभिन्नत्वम् अतो जीवस्य सुखादिव्यवहारे तस्य सुखाद्यनुभवितुः जीवैकत्वमापन्नस्योपयोग इत्यर्थः।

अयमेवेति साक्षिणो वस्तुतोऽपि जीवान्तर्भावे तस्य ब्रह्मकोटित्वोक्तिविरोधात् तस्य ईश्वररूपाभेदत्वं तत्त्वशुद्धिकाराभिमतमिति गम्यत इति भावः।

जीवसाक्षिणोर्भेदपक्षानुपन्यस्य तयोरभेदपक्षावुपन्यस्यति केचित्तु इत्यादिना। जीव एव साक्षीति सम्बन्धः नत्वीश्वरस्य रूपभेदः साक्षी तत्र मानाभावादित्येवकाराभिप्रायः।

जीवस्य साक्षित्वाभ्युपगमे हेतुमाह साक्षात् द्रष्टृत्वादिति। तस्य औदासीन्यं सूचयति अविद्योपाधिक इति।

तच्च असङ्गोदासीनप्रकाशरूपे जीव एव साक्षात् सम्भवति।

जीवस्य अन्तःकरणतादात्म्यापत्त्या कर्तृत्वाद्यारोपभाक्त्वेऽपि स्वयम् उदासीनत्वात्।

एको देव इति मन्त्रस्तु ब्रह्मणो जीवभावाभिप्रायेण साक्षित्वप्रतिपादकः।

---

एतदेव प्रपञ्चयितुम् इदमेव साक्षिलक्षणं नान्यदिति पूर्वोक्तं स्मारयति लोकेऽपि चेति।

पूर्वं संग्रहेणोक्तं जीवस्यैव साक्षित्वं प्रपञ्चयति तच्च इति साक्षादिति। अविद्याप्रतिबिम्बरूपजीवस्य स्वतः सम्भवति इत्यर्थः। अनेन क्लृप्तस्य जीवस्यैव साक्षित्वसम्भवे तदतिरिक्तसाक्षी न कल्पनीयः गौरवादिति सूचितम्।

ननु लौकिकवैदिकव्यवहारकर्त्तुरौदासीन्यमसिद्धमिति उक्तमित्याशङ्क्य बुद्धितादात्म्यप्रयुक्तमेव कर्त्तृत्वादिकं स्वतस्तु उदासीनत्वमित्युपगमात् तस्य साक्षित्वं सम्भवतीत्याह। जीवस्य अन्तःकरणेति।

ननु ईश्वरस्य साक्षित्वानुपगमे मन्त्रविरोध इत्यत आह एको देव इति मन्त्रस्त्विति। साक्षी तावज्जीवस्यापरोक्ष इत्युक्तम् ईश्वरस्य तु उदासीनस्यापि अपरोक्षत्वं न सम्भवति बिम्बभूतेश्वरस्य जीवादौपाधिकभेदसत्त्वेन जीवं प्रति जीवान्तरचैतन्यस्येवापरोक्षत्वायोगादतो जीवभावापन्नब्रह्माभिप्रायो मन्त्रगतसाक्षिप्रतिपादकभाग इति भावः। ईश्वररूपभेदस्य अपरोक्षत्वानुपपत्तिरूपहेतुर्मन्त्रस्त्विति तुशब्देन उक्त इति ध्येयम्।

द्वा सुपर्णेति मन्त्रो गुहाधिकरणन्यायेन जीवेश्वरोभयपरः। गुहाधिकरणभाष्योदाहृत-पैङ्गिरहस्यब्राह्मणव्याख्यातेन प्रकारेण जीवान्तः-करणोभयपरो वेति न कश्चिद्विरोध इत्याहुः।

---

ननु गुहाधिकरणे यथा गुहां प्रविष्टा इति मन्त्रो जीवेश्व-रोभयपरः तथा द्वा सुपर्णेति मन्त्रोऽपि जीवेश्वरोभयपर इत्युक्तं भाष्ये। तथा च द्वा सुपर्णेति मन्त्रे तयोरन्यः पिप्पलं स्वादु अत्तीति वाक्यं जीवविषयम् अनश्नन्नन्योऽभिचा-कशीतिवाक्यं परमेश्वरविषयमिति पर्य्यवस्यति ततश्च जीवस्य साक्षित्वपक्षे ईश्वरस्य साक्षित्वप्रतिपादकेन अनश्नन्नन्य इति मन्त्रभागेन विरोध इत्याशङ्क्याह द्वा सुपर्णेति मन्त्र इति। यदा मन्त्रः जीवेश्वरोभयपरस्तदापि न विरोधः। कश्चिदेको देव इति मन्त्रवत् द्वा सुपर्णेति मन्त्रस्यापि जीवभावापन्नपरमात्म-परत्वोपगमादित्यर्थः।

ननु गुहाधिकरणभाष्ये पैङ्गिरहस्यब्राह्मणमुदाहृतं तच्च इदं ब्राह्मणं तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम् अनश्नन्नन्यो-ऽभिचाकशीति अनश्नन्नन्योऽभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञा-विति अनेन ब्राह्मणेनादनवाक्यम् अन्तःकरणविषयम् अनश्नन् वाक्यं क्षेत्रज्ञविषयमिति व्याख्यातम्। न च ब्राह्मणेनैव सत्त्व-क्षेत्रज्ञपरत्वेन मन्त्रे व्याख्यायमाने कथं भाष्यकारैरस्य मन्त्रस्य जीवेश्वरपरत्वमुक्तमिति वाच्यम्। तदुक्तेः कृत्वा चिन्तामात्र-त्वेन विरोधाभावात् तथा च अन्तःकरणप्रतिबिम्बरूपो जीवो यदि पैङ्गी ब्राह्मणाभिप्रेतक्षेत्रज्ञः स्यात् तदा तस्यैवानश्नन्निति-वाक्योक्तं साक्षित्वं स्यात् न अविद्याप्रतिबिम्बस्य।

अन्ये तु सत्यं जीव एव साक्षी न तु सर्वगतेन अविद्योपहितेन रूपेण पुरुषान्तरान्तःकरणादीनामपि पुरुषान्तरं प्रति स्वान्तःकरणभासकसाक्षिसंसर्गाविशेषेण प्रत्यक्षत्वापत्तेः। न च अन्तःकरणभेदेन प्रमातृभेदात् तदनापत्तिः।

---

तथा च अविद्याप्रतिबिम्बरूपस्य ब्रह्मस्वभावस्य जीवस्य साक्षित्वपक्षः पैङ्गीब्राह्मणनिर्णीतार्थकद्वासुपर्णेतिमन्त्रभागविरुद्धः प्रसज्येतेत्याशङ्क्याह गुहाधिकरणभाष्योदाहृतेति। न कश्चित् विरोध इति पैङ्गीब्राह्मणाभिप्रेतः क्षेत्रज्ञो न अन्तःकरणगतचैतन्यप्रतिबिम्बरूपो जीवः तस्य कर्तृभोक्तृस्वभावत्वेन अनश्नन्निति वाक्योक्तसाक्षित्वासम्भवात् किन्तु असङ्गोदासीनप्रकाशरूपाविद्याप्रतिबिम्बरूपजीव एव ब्राह्मणाभिप्रेतः क्षेत्रज्ञः तस्य अनश्नन् वाक्योक्तसाक्षित्वसम्भवस्योपपादितत्वादतो विद्याप्रतिबिम्बरूपजीवस्य साक्षित्वपक्षे न पैङ्गीरहस्यब्राह्मणानुरोधिमन्त्रविरोध इत्यर्थः।

अविद्यायां चैतन्यप्रतिबिम्बरूपजीवस्य एव साक्षित्वमुपेत्य तत्र कश्चित् विशेषं वक्तुं मतान्तरमवतारयति अन्ये तु इति। न तु अविद्यायां चिद्बिम्बभूतेश्वरसाक्षी तस्य अपरोक्षत्वानुपपत्तेरित्येवकाराभिप्रायः। रूपेणेति साक्षीत्यनुसङ्गः।

सर्वशरीरसाधारणाविद्योपाधिकस्य साधारणरूपेण साक्षित्वाभावे हेतुमाह पुरुषान्तरेति। यज्ञदत्तान्तःकरण तद्वृत्तीनामित्यर्थः। पुरुषान्तरं प्रतीति देवदत्तं प्रतीत्यर्थः। स्वेति स्वस्य देवदत्तस्य अन्तःकरणभासको यः साक्षी तेन

साक्षिभास्येऽन्तःकरणादौ सर्वत्र साक्ष्यभेदे सति प्रमातृभेदस्य अप्रयोजकत्वात्।

तस्मात् अन्तःकरणोपधानेन जीवः साक्षी। तथा च प्रतिपुरुषं साक्षिभेदात् पुरुषान्तरान्तःकरणादेः पुरुषान्तरसाक्ष्यसंसर्गात् वा तदयोग्यत्वात् वा अप्रकाश उपपद्यते।

---

साक्षिणा सह देवदत्तान्तःकरणस्येव यज्ञदत्तान्तःकरणादीनामपि संसर्गाविशेषात् देवदत्तस्य यथा स्वान्तःकरणं प्रत्यक्षं तथा यज्ञदत्तान्तःकरणं तद्वृत्तयोऽपि देवदत्तस्य प्रत्यक्षाः स्युरित्यर्थः। अत्र पुरुषान्तरं प्रतिपुरुषान्तरान्तःकरणादीनामपि प्रत्यक्षत्वापत्तेरिति सम्बन्धः। तत्र हेतुः स्वान्तःकरणेत्यादिरिति।

सर्वशरीरेषु साक्षिण एकत्वेऽपि प्रतिशरीरं प्रमातृभेदान्नोक्तदोष इत्याशङ्कते न चेति। देवदत्तं प्रति तदन्तःकरणादेः प्रत्यक्षत्वे हि देवदत्तसाक्षिसंसर्गः प्रयोजकः।

तथा च यज्ञदत्तान्तःकरणादीनामपि देवदत्तं प्रति अपरोक्षत्वप्रयोजकस्य देवदत्तसाक्षिसंसर्गस्याविशेषेण तं प्रति अपरोक्षत्वापादनात्मको दोषः प्रत्यक्षत्वप्रयोजकसाक्षी संसर्गभेदेनैव परिहर्त्तव्यो नाप्रयोजकप्रमातृभेदेनेति दूषयति साक्षिभास्य इति साक्ष्यभेद इति।

साक्षिण एकत्वे सतीत्यर्थः। अप्रयोजकत्वादिति देवदत्तं प्रति तदीयान्तःकरणादिकमेव प्रत्यक्षं नान्यदीयान्तःकरणादिकमिति व्यवस्थायामिति शेषः।

तस्मादिति। अविद्योपाधिकजीवस्य साधारणरूपेण

सुषुप्तौ अपि सूक्ष्मरूपेण अन्तःकरणसद्भावात् तदुपहितः साक्षी तदापि अस्त्येव।

न च अन्तःकरणोपहितस्य प्रमातृत्वेन न तस्य साक्षित्वम् सुषुप्तौ प्रमात्रभावेऽपि साक्षि-सत्त्वेन तयोर्भेदस्य अवश्यं वक्तव्य इति वाच्यम्।

---

साक्षित्वासम्भवादित्यर्थः। तथा चेति। साक्षिभेदप्रयोजको-पाधिभेदविवक्षायां सत्यामित्यर्थः। तदयोग्यत्वात् वेति। पुरुषान्तरं प्रति अयोग्यत्वकल्पनात् वा प्रत्यक्षत्वाभाव उपपद्यत इत्यर्थः।

ननु अविद्याप्रतिबिम्बरूपजीवस्य अविद्योपाधिकत्वेन एव रूपेण साक्षित्वे सति तस्य सुषुप्तिसाधारण्यं सम्भवति प्रतिशरीरं साक्षिभेदसिद्ध्यर्थं तस्यान्तःकरणोपहितत्वेन रूपेण साक्षित्वे तु सुषुप्तिसाधारण्यं तस्य न सम्भवति सुषुप्तावन्तः-करणलयश्रवणादित्याशङ्क्याह सुषुप्तावपि इति शङ्कते। न च अन्तःकरणोपहितस्येति। अविद्याप्रतिबिम्बरूपजीवस्येति शेषः।

न तस्येति। अन्तःकरणोपहितजीवस्य साक्षित्वं न सम्भवति तस्य प्रमातृत्वादन्यथा प्रमातुरेव साक्षित्वापत्त्या साक्षिप्रमात्रो-र्भेदो न स्यादिति भावः।

इष्टापत्तिमाशङ्क्याह सुषुप्ताविति अभावेऽपि। अस्मिन् प्राण एव एकधा भवतीति श्रुतौ सुषुप्तिकाले प्राणशब्दिते परमात्मनि एकीभावलक्षणस्य प्रमातृलयस्य श्रवणादिति भावः।

साक्षिसत्त्वेनेति। सुषुप्तिकाले साक्षिणः सत्त्वमवश्यं वाच्यं तत्काले तत्सत्त्वस्य त्रिषु धामसु इत्यादिबहुश्रुतिसिद्धत्वात्

विशेषणोपाध्योर्भेदस्य सिद्धान्तसम्मतत्वेन अन्तःकरणविशिष्टः प्रमाता तदुपहितः साक्षीति भेदोपपत्तेरित्याहुः।

---

धामसु अवस्थासु इत्यर्थः। तत्काले साक्षिणा अनुभूतानामज्ञानसुखसुषुप्तीनामुत्थितस्य न किञ्चिदवेदिषं सुखमस्वाप्समिति स्मरणदर्शनाच्च। न चाहमस्वाप्समिति स्वापादिवदहमर्थस्य प्रमातुरपि सुषुप्तिकालीनत्वेन स्मरणदर्शनात् तस्यापि तदा सत्त्वं वाच्यमेव इति वाच्यम्। सुषुप्तौ प्रमातृलयप्रतिपादकबहुश्रुतिविरोधेन अहमस्वाप्समित्यादिस्मरणस्याहमर्थांशे अनुभवरूपत्वकल्पनान्न प्रमातुस्तदा सत्त्वमावश्यकम्। तथा च सुषुप्तिकाले सदसतोः साक्षिप्रमात्रोरभेदायोगात् प्रमातुः सकाशात् साक्षी भिन्न एव वाच्य इत्यर्थः। प्रमातृसाक्षिणोरभेदपक्षे प्रमातुरुदासीनत्वाभावेन साक्षित्वासम्भवरूपदोषसंग्रहार्थश्चकार इति बोध्यम्।

न च वाच्यमित्यत्र हेतुमाह अन्तःकरणविशिष्ट इति। अन्तःकरणस्य अविद्योपाधिके जीवे विशेषणत्वेन प्रमातृत्वप्रयोजकत्वमुपाधित्वेन साक्षित्वप्रयोजकत्वम्। तथा च विशिष्टोपहितयोः प्रमातृसाक्षिणोर्भेदः विशिष्टस्य प्रमातुः कर्त्तृभोक्तृत्वस्वभावत्वेऽपि उपहितस्य उदासीनत्वात् साक्षित्वञ्च सम्भवतीत्यर्थः।

ननु विशेषणत्वस्य उपाधित्वस्य च भेदे सति एकस्यापि अन्तःकरणस्य विशेषणत्वादिरूपेण भेदं कल्पयित्वा तद्विशिष्टस्य प्रमातृत्वं तदुपहितस्य साक्षित्वमिति व्यवस्था सिध्यति तयोर्भेद एव कथमित्यत आह विशेषणोपाध्योरिति।

कार्य्यान्वयित्वे सति व्यावर्त्तकत्वं विशेषणत्वं यथा नीलोत्पलमानयेत्यादौ नैल्यस्य तस्य रक्तोत्पलादिव्यावर्त्तकत्वादुत्पलद्वारा आनयनरूपकार्य्यान्वयित्वाच्च लक्षणे कार्य्यपदविधेयपरं तथा च यत् काकवत् तद्देवदत्तगृहमित्यादौ विधेयस्य देवदत्तगृहत्वस्य कार्य्यस्य उपलक्षणे काकेनास्त्यन्वयः। गृहान्तरव्यावर्त्तकत्वं त्वस्तीति तत्रातिव्याप्तिवारणाय सत्यन्तकार्य्यान्वयि निर्विशेष्य उत्पलादौ अतिव्याप्तिवारणाय विशेष्यदलम्। कार्य्यान्वयित्वे सति कार्य्यान्वयकाले विद्यमानत्वमुपाधित्वं यथा लोहितस्फटिकमानयेत्यादौ स्फटिकसन्निहितस्य जपाकुसुमस्य उपाधित्वं तस्यानयनलक्षणकार्य्यान्वयाभावात् स्फटिकान्तरव्यावर्त्तकत्वादानयनान्वयकाले विद्यमानत्वाच्च। तत्र प्रथमसत्यन्तं विशेषणे नैल्यादौ अतिव्याप्तिवारणाय न च विशेषणत्वेनाभिमतनैल्यादिकमपि अत्र लक्ष्यमेवेति वाच्यम्। जपाकुसुमादौ उपाधित्वव्यवहारवत् नैल्यादौ तथा व्यवहाराभावात् जपाकुसुमादौ स्फटिकादिविशेषणत्वव्यवहाराभावाच्च। तथा च विशेषणोपाध्योर्भेदावश्यम्भावे सति विशेषणत्वाभिमतनैल्यादेरलक्ष्यत्वात् अत्रातिव्याप्तिवारणं युक्तमेव। काकवत् गृहं प्रविशेत्यत्र प्रवेशरूपकार्य्यान्वयकाले यदि दैवयोगादुपलक्षणभूतकाकस्यान्यत्र गमनं काकान्तरस्य तद्गृहे आगमनं तदा तत्रागतकाकस्य पूर्वं स्थितकाकवत् व्यावर्त्तकत्वं नास्ति। तथा च तत्रागतकाके प्रवेशानन्वयिनि विद्यमाने उपाधित्वरहिते अतिव्याप्तिवारणाय द्वितीयसत्यन्तम् उक्तस्थल एव उपलक्षणीभूतकाके अतिव्याप्तिवारणाय विशेष्यदलम्। न च यत्र उपलक्षणीभूतकाकस्यैव कार्य्यकालेऽपि दैवाद्विद्यमानत्वं तत्रोपलक्षणकाके कृत्स्नं लक्षणमस्तीत्यतिव्याप्तिरिति वाच्यम्। कार्य्यकाले नियमेन विद्यमानत्वस्य विवक्षितत्वात्। ननु एवमपि

साक्षिणोऽज्ञानावृतत्वसाधनम्।

ननु उक्तरूपस्य साक्षिणश्चैतन्यमात्रावरकेण अज्ञानेन आवरणमवर्ज्जनीयमिति कथम् आवृतेन अविद्याहङ्कारादिभानमिति चेत् राहुवत् अविद्या स्वावृतप्रकाशप्रकाश्येति केचित्।

---

लोहितस्फटिकमानयेत्यत्र क्वचित् वाक्यश्रवणकाले सत एव जपाकुसुमस्य स्फटिकानयनकाले दैवादविद्यमानत्व-सम्भवात् जपाकुसुमस्यापि कार्य्यकाले विद्यमानत्वनियमो नास्तीति चेत् तर्हि इदं लक्षणं श्रोत्रत्वोपाधिकर्णशष्कुल्या-मन्तःकरणादौ च विवक्षितमस्तु जपाकुसुमस्यान्यस्य वा तत्तुल्यस्य स्वनिष्ठधर्मासञ्जकत्वरूपं प्रसिद्धमेव उपाधि-त्वमस्तु न चाननुगमः स्वनिष्ठेत्यादिलक्षणोपाधित्वस्य प्रसिद्धोपाधौ कर्णवलये विम्बप्रतिविम्बपक्षे दर्पणादौ स्वोप-हितविम्बमुखे स्वधर्मानासञ्जके च बाधितत्वेन तत्संग्राहक-लक्षणान्तरकरणस्य आवश्यकतया तस्यादोषत्वादनुगतलक्षण-सम्भवे हि तस्य दोषत्वं प्रसिद्धम्। तथाच प्रकृते अन्तःकरणस्य उभयविधोपाधित्वसम्भवात्कार्यानन्वयित्वे सतीत्यादिलक्षणानु-रोधेन अन्तःकरणोपहितो जीवः साक्षीत्युपगमे साक्षित्वं जीवचैतन्यमात्रनिष्ठं पर्यवस्यति जीवचैतन्यमात्रन्तु उदासीन-मेवेति नोपहितस्य साक्षित्वानुपपत्तिर्न वा प्रमातृसाक्षिणोः साङ्कर्यमिति संक्षेपः।

अविद्याहङ्कारादीनां पूर्वोक्तं साक्षिभास्यत्वमाक्षिपति ननु इति चैतन्यमात्रेति। कृत्स्नचैतन्यावरकेणेत्यर्थः। कथ-मिति। न च साक्षिगोचरापरोक्षवृत्त्या तदावरणनिवृत्तौ

वस्तुतोऽविद्यान्तःकरणतद्धर्मावभासकं साक्षिचैतन्यं विहायैव अज्ञानं चैतन्यम् आवृणोतीति अनुभवानुसारेण कल्पनान्न कश्चित् दोषः। अत एव सर्वदा तेषाम् अनावृतप्रकाशसंसर्गात् अज्ञानविपरीतज्ञानसंशयागोचरत्वम्।

---

निवृत्तावरणेन साक्षिणा अविद्यादिभानं सम्भवतीति वाच्यम्। तेषां केवलसाक्षिभास्यसिद्धान्तविरोधप्रसङ्गात् मनसा करणत्वस्य निरस्यिष्यमाणतया साक्षिचैतन्यगोचरापरोक्षवृत्त्यसम्भवाच्च। अहङ्कारादीनां स्वसत्ताकाले तत्सत्ताप्रकारकसंशयाद्यभावेन सदा तेषां संशयादिनिवृत्तिप्रयोजकतया सदा प्रकाशसंसर्गे वक्तव्ये सति कादाचित्कवृत्त्या तेषां सदा भानासम्भवाच्च सदा साक्षिगोचरवृत्तिसन्तत्युपगमे युगपद्वृत्तिद्वयानभ्युपगमेन बाह्यघटादिप्रतीत्युच्छेदप्रसङ्गाच्च तस्मात् साक्षिमात्रभास्यत्वमविद्याहङ्कारादीनां वक्तव्यं तच्च न सम्भवति तस्यावृतत्वात्। न च साक्षिचैतन्यं विहायान्यदेव चैतन्यमावृतमिति वाच्यम्। अज्ञानस्य चैतन्यमात्रावरकत्वादन्यथा साक्षिचैतन्यादन्यचैतन्येऽप्यावरणाभावप्रसङ्गादित्याक्षेपाभिप्रायः।

आवृतस्यापि साक्षिणो विद्याप्रकाशकत्वं दृष्टान्तेन दर्शयन् परिहरति राहुवदिति। राहुणा सर्वात्मना वृतस्य चन्द्रमण्डलादेः स्वावरकराहुमात्रप्रकाशकत्वेऽपि तदतिरिक्तप्रकाशकत्वादर्शनादवाप्यावृतस्य साक्षिणः कथञ्चिदविद्यामात्रावभासकत्वं स्यात् नाहङ्कारादिभासकत्वमित्यस्वरसादाह वस्तुत इति अनुभवानुसारेणेति। अहङ्कारादिषु उक्तरीत्या कादा-

साक्षिचैतन्यस्य अनावृतत्वे तत्स्वरूपभूतस्य आनन्दस्यापि प्रकाशापत्तिरिति चेत् न इष्टापत्तेः। आनन्दरूपप्रकाशप्रयुक्तस्य आत्मनि निरुपाधिकप्रेम्णो दर्शनात् भासत एव परमप्रेमास्पदत्वलक्षणं सुखमिति विवरणाच्च॥

---

चित्वज्ञानासम्भवेऽपि सदा प्रकाशसंसर्गफलस्य संशयनिवृत्त्यादेः सत्त्वानुसारेणेत्यर्थः।

अनुभवफलमेवोपदर्शयति अतएवेति। अज्ञानस्य साक्षिचैतन्यं विहायैव आवरकत्वस्वभावकल्पनादेवेत्यर्थः। अगोचरत्वमिति। ननु अविद्याया भावरूपत्वादौ अहङ्कारस्यानात्मत्वादौ सुखदुःखादिवृत्तीनामनात्मधर्मत्वादावज्ञानविपरीतज्ञानसंशयानां सत्त्वेन तेषां सदा संशयाद्यगोचरत्वमसिद्धमिति चेत् न। अविद्यादिसत्त्वकाले कदाचिदप्यविद्यादिसत्त्वप्रकारकाज्ञानाद्यभावस्य विवक्षितत्वात्तथा च तद्गतविशेषगोचराज्ञानविपरीतज्ञानादेरभ्युपगमेऽपि न दोष इति भावः।

शङ्कते साक्षिचैतन्यस्येति। नन्विष्टापत्तेरिति वक्तुं न शक्यते संसारदशायां स्वरूपानन्दप्रकाशप्रयुक्तकार्यादर्शनादित्यत आह आनन्दरूपेति। लोके हि तस्य तस्यानुभूयमाने आनन्दे प्रीतिरनुभवसिद्धा तथा च प्रीतेः प्रकाशमानानन्दविषयकत्वे सिद्धे प्राणिमात्रस्य स्वस्वात्मनि दुःखदशायामपि प्रीतिदर्शनादात्मगोचरप्रीतेरपि प्रकाशमानात्मानन्दविषयकत्वं सिध्यति पुत्रादिगोचरप्रीतिः तावदौपाधिकी उपाधिश्च आत्मसुखाभिव्यक्तिसाधनमुपाधित्वव्यतिरिक्तदशायां तेषु प्रीतेरदर्शनादात्मनि तु प्रीति-

अथ साक्ष्यानन्दस्य अनावृतत्वनिरूपणम् ।

स्यादेतत् इदानीमपि आनन्दप्रकाशे मुक्ति-संसारयोरविशेषप्रसङ्गः ।

ननु कल्पितभेदस्य साक्ष्यानन्दस्य प्रकाशे-

---

निरुपाधिकी पुत्रादिष्विवात्मनि प्रीतिरन्यार्थत्वाभावात्। तथा च श्रुतिरात्मनस्तु कामाय सर्वं प्रियं भवति तथा तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरमिति। अन्त-रतरमित्यनेन सर्वान्तरमुच्यते तथा च यत् सर्वान्तरमात्मचैतन्यं तदेतत् अपरोक्षं प्रीतिविषयत्वेन सम्भावितात् पुत्रादेः सर्व-स्मादतिशयेन प्रियमिति द्वितीयश्रुत्यर्थः। तथा च आत्मानन्दो यदि प्रकाशेत तदा आत्मनि श्रुत्यनुभवसिद्धा निरुपाधिकप्रीतिर्न स्यात्। प्रीतेः प्रकाशमानानन्दविषयकत्वनियमादतः साक्ष्या-नन्दप्रकाशापादने इष्टापत्त्यभिधानं युक्तमेव।

उक्तार्थे वृद्धसम्मतिमप्याह भासत एवेति। परमप्रेमविष-यत्वं परमप्रेमास्पदत्वं तल्लक्षणं यस्य सुखस्य तत्तथा सुखं भासत एव परमप्रेमास्पदत्वादन्यथा तत् न स्यादित्येवकारा-भिप्रायः।

तच्च सुखं साक्षिचैतन्याभिन्नमिति स्वरूपानन्दप्रकाशे सम्मतिर्भवत्येव संसारदशायां स्वरूपानन्दस्फुरणाभ्युपगमे बाध-कमाशङ्कते स्यादेतदित्यादिना।

तस्मात् साक्ष्यानन्दस्य अनावृतत्वकल्पनमयुक्तमित्यन्तेन सिद्धान्ती विशेषं शङ्कते।

ननु इति। अविद्यायामानन्दप्रतिबिम्बः साक्ष्यानन्दः

ऽपि अनवच्छिन्नस्य ब्रह्मानन्दस्य आवृतस्य संसार-दशायाम् अप्रकाशेन विशेषोऽस्ति इति चेत् न।

आनन्दे अनवच्छेदांशस्य अपुरुषार्थत्वात् आन-न्दापरोक्षमात्रस्य च इदानीमपि सत्त्वात्।

---

तस्य बिम्बभूतानन्दाद्भेदः कल्पितस्तथा च संसारदशाया-मनावृतसाक्ष्यभिन्नप्रतिबिम्बानन्दप्रकाशेऽपि बिम्बभूतब्रह्मा-नन्दो न प्रकाशते तथा प्रकाशमानोऽपि साक्ष्यानन्दः प्रति शरीरं भिन्न एव प्रकाशते। नतु अनवच्छिन्न इति शेषो-ऽस्तीत्यर्थः। बिम्बभूतब्रह्मानन्दाप्रकाशे हेतुरावृतस्येति। अत्र यद्यपि मूलाज्ञानं शुद्धचिन्मात्राश्रयं तद्विषयकं नतु बिम्ब-भूतेश्वरविषयकं तस्यानावृतत्वेऽपि जीवापेक्षया कल्पितभेदव-त्त्वात् तस्य जीवं प्रत्यप्रकाशमानत्वं सम्भवति तथा मुक्तौ बिम्ब-भूतब्रह्मानन्दस्फुरणमपि सिद्धं मूलाज्ञाननिवृत्तौ तत्प्रयुक्त-प्रतिबिम्बभावस्येव बिम्बभावस्यापि निवृत्त्यवश्यम्भावात् तथापि पूर्वपक्षिमुखपिधानमात्रे सिद्धान्तिनस्तात्पर्य्यमिति बोध्यम्।

किमनवच्छिन्नानन्दस्फुरणं मोक्षे विशेषः आनन्दस्फुरण-मात्रं वा उभयथापि विशेषो वक्तुं न शक्यते इत्याह पूर्ववादौ नेति। अवच्छेदो हि भेदः स च आत्मनि कल्पितस्तथाव-च्छेदाभावः।

यद्यानन्दादतिरिक्तस्तदा दोषमाह अनवच्छेदांशस्येति।

यद्यानन्द एव कल्पितो भावस्याधिष्ठानात्मकत्वात् तदा अस्य द्वितीयप्रकारे एवान्तर्भाव इति मत्वा तं प्रकारं दूषयति आनन्दापरोक्षमात्रस्य चेति। तथा च न मुक्तिसंसारयोर्विशेष इति भावः।

ननु अवच्छिन्नसाक्ष्यानन्दः सातिशयः सुषुप्तिसाधारणात् अनतिस्पष्टात् ततो वैषयिकानन्देषु अतिशयानुभवात् ।

अनवच्छिन्नो ब्रह्मानन्दस्तु निरतिशयः आनन्दवल्ल्यां मानुषानन्दाद्युत्तरोत्तरशतगुणोत्कर्षोपवर्णनस्य ब्रह्मानन्दे समापनादिति चेत् न ।

---

सिद्धान्ती प्रकारान्तरेण विशेषमाशङ्कते। ननु अवच्छिन्नेति। प्रतिशरीरमवच्छिन्नत्वेन न प्रकाशमानः साक्ष्यानन्दः सातिशयः उत्कर्षापकर्षातिशयवानित्यर्थः ।

साक्ष्यानन्दस्यातिशयत्वे हेतुमाह सुषुप्तिसाधारणादिति। स्पष्टता उत्कर्षः अतिस्पष्टता अत्युत्कर्षः सुषुप्तिकाले प्रकाशमानोऽपि साक्ष्यानन्दः स्पष्ट एव इतरथा तस्य सुखमस्वाप्समिति परामर्शनीयत्वाभावप्रसङ्गात्। लोके हि य आनन्दः स्पष्टमनुभूतः स एव पुनः परामर्शयोग्यो नानुभूतानन्दमात्रमिति प्रसिद्धम्। तथा च ततः साक्ष्यानन्दात् सुषुप्तावतिस्पष्टतारहितात् स्रक्चन्दनादिविषयप्रयुक्तानन्देषु उत्कर्षविशेषानुभवादित्यर्थः।

अनवच्छिन्न इति। कल्पितावच्छेदाभावात्मा ब्रह्मानन्दो मुक्तिकाले प्रकाशमानोऽतिशयसामान्यरहित एव इत्यक्षरार्थः। मुक्तौ ब्रह्मानन्द एकरूपेण पूर्णतया च प्रकाशते इदानीं तादृशब्रह्मानन्दप्रकाशो नास्ति किन्तु उत्कर्षापकर्षोपेतानन्दप्रकाश एवास्ति अतः स्वरूपानन्दस्फुरणेऽपि तत्तदुत्कृष्टानन्दाभिलाषारूपपिशाचीग्रस्ततया कस्यापि निवृत्तिर्नास्तीति संसारमोक्षयोर्विशेष इति भावः।

सिद्धान्ते साक्ष्यानन्दविषयानन्दब्रह्मानन्दानां वस्तुत एकत्वेन उत्कर्षापकर्षासम्भवात् ।

मानुषानन्दादीनामुत्तरोत्तरमुत्कर्षं श्रुतिर्वदति इति चेत् को वा ब्रूते श्रुतिर्न वदति इति किन्तु अद्वैतवादे तदुपपादनम् अशक्यमित्युच्यते ।

---

अविद्याप्रतिविम्बरूपसाक्ष्यानन्दस्य लोके विषयानन्दत्वेन गृहीतस्य सातिशयत्वे ब्रह्मानन्दस्यैकरूपत्वे च श्रुतिं प्रमाणयति आनन्दवल्लग्रामिति । मानुषानन्दः सार्वभौमानन्दः स च शतगुणितः सन् मनुष्यगन्धर्वानन्दो भवति सोऽपि शतगुणितः सन् देवगन्धर्वानन्दो भवति एवमेव पित्रानन्दादिषु स एको ब्रह्मण आनन्द इत्युक्तहिरण्यगर्भानन्दान्तेषु उत्कर्षापकर्षयोरुपवर्णनं योजनीयम् ।

समापनादिति । स यश्चासावादित्ये स एक इति वाक्येन इति शेषः । पुरुषो मनुष्यः आद्यचकारस्तिर्यगादिसंग्रहार्थः । आदित्यपदं मण्डलाभिमानिदेवतापरं द्वितीयचकारस्तदितरसकलदेवतासंग्रहार्थः । तथा च देवमनुष्यतिर्य्यक्षु सर्वत्र विद्यमानो ब्रह्मानन्द एक एकरूप एव न तु साक्ष्यानन्दवत् सातिशय इति श्रुत्यर्थः ।

साक्ष्यानन्दविषयानन्दब्रह्मानन्दानां सति भेदे उक्तरीत्या मुक्तिसंसारयोर्विशेषो वक्तुं शक्यते स एव तवासिद्ध इति पूर्ववादी दूषयति नेति असम्भवादिति उत्कर्षापकर्षयोर्जातिविशेषरूपयोरेकस्यां व्यक्तावसम्भवादित्यर्थः ।

ननु आनन्दव्यक्तेर्वस्तुगत्या एकत्वेऽपि कल्पितभेदवत्यां तस्या-

ननु एकस्यैव सौरालोकस्य करतलस्फटिकदर्पणाद्यभिव्यञ्जकविशेषोपधानेन अभिव्यक्तितारतम्यदर्शनात् एकत्वेऽपि आनन्दस्य अभिव्यञ्जकसुखवृत्तिभेदोपधानेन अभिव्यक्तितारतम्यरूपम् उत्कर्षापकर्षवत्त्वं युक्तमिति चेत् न। दृष्टान्तासम्प्रतिपत्तेः।

---

मुत्कर्षादिः सम्भवतीत्यभिसन्धिमान् सिद्धान्ती शङ्कते मानुषानन्दादीनामिति। अनुभवानुसारिश्रुतिसिद्धानन्दोत्कर्षादेरपलापकरणमयुक्तं पूर्ववादिन इत्यर्थः।

अभिसन्धिमविद्वानिव पूर्ववादी दूषयति को वेति। का तर्ह्यनुपपत्तिरिति सिद्धान्ती शङ्कते किन्त्विति तामाह अद्वैतवाद इति। आनन्दैकत्वमत इत्यर्थः।

अशक्यमिति। औपाधिकभेदेनापि तदुपादानमशक्यमनुरूपदृष्टान्ताभावादिति पूर्ववादिनोऽपि अभिसन्धिः एकस्यामपि आनन्दव्यक्तौ औपाधिकभेदेन श्रुत्यनुभवसिद्धानन्दोत्कर्षादेरुपपादनं कर्त्तुं शक्यमिति स्वाभिसन्धिमुद्घाटयन् सिद्धान्ती शङ्कते।

ननु एकस्यैवेति। आलोकस्य करतलादिसम्बन्धरहितस्य याभिव्यक्तिस्तदपेक्षया करतले ईषदधिकाभिव्यक्तिस्तदपेक्षया स्फटिके अधिकाभिव्यक्तिस्तदपेक्षयाप्यधिका दर्पणादौ अभिव्यक्तिरनुभवसिद्धा तद्बलात् क्वतेऽपि स्वरूपानन्दव्यञ्जकवृत्तितारतम्ये न तत्तत् वृत्त्युपहितसाक्ष्यानन्दे उत्कर्षादिकमुपपद्यत इत्यर्थः।

यद्यालोक एकव्यक्तिक एकरूपश्च स्वतो भवेत् तदा तथा-

सर्वतः प्रसृमरस्य सौरालोकस्य गमने विना करतलादिसम्बन्धमस्पृष्टं प्रकाशमानस्य निम्नतले प्रसृमरस्य जलस्येव करतलसम्बन्धेन गतिप्रतिहतौ बहुलीभावात् अधिकप्रकाशः भास्वरदर्पणादिसम्बन्धेन गतिप्रतिहतौ बहुलीभावात् तदीयदीप्तिसंवलनाच्च ततोऽपि अधिकप्रकाश इति तत्र अभिव्यञ्जकोपाधिकाभिव्यक्तितारतम्यानभ्युपगमात् ।

दृष्टान्तसम्प्रतिपत्तौ च गगनप्रसृतसौरालोकवत् अनवच्छिन्नानन्दस्य अस्पृष्टता करतला-

---

विधस्वरूपानन्दस्य दृष्टान्तो भवेन्न त्वालोकस्यैकव्यक्तित्वमस्ति तस्य नानाकिरणसमूहरूपत्वात् नाप्येकरूपत्वं तस्यास्ति तत्र तत्र सौरकिरणानामल्पत्वबाहुल्यरूपनानारूपत्वावगमादिति पूर्ववादी स्वाभिसन्धिमुद्घाटयत् दूषयति नेति। असम्प्रतिपत्तेरिति ममासम्मतत्वादित्यर्थः ।

प्रसृमरस्येति गमनशीलस्य इत्यर्थः ।

गतिप्रतिहताविति सूर्य्यकिरणानां गतिप्रतिबन्धे सति इत्यर्थः। अतएव यत्र भूभागे करतलादिकृतप्रतिबन्धवशात् सूर्य्यकिरणा न प्रसरन्ति तत्र तमोरूपा छाया दृश्यते आलोकस्य गतिप्रतिहत्या बहुलीभावे दृष्टान्तमाह निम्नतल इति यथा निम्नतले प्रसृमरस्य जलस्य करतलसम्बन्धेन गतिप्रतिहतौ जलस्य बहुलीभावस्तथेत्यर्थः ।

द्यवच्छिन्नसौरालोकवत् सुखवृत्त्यवच्छिन्नानन्दस्य अधिकाभिव्यक्तिरिति मुक्तितः संसारस्यैव अभ्यर्हितत्वापत्तेश्च ।

एतेन संसारदशायां प्रकाशमानोऽपि आनन्दो मिथ्याज्ञानतत्संस्कारविक्षिप्ततया तीव्रवायुविक्षिप्तदीपप्रभावत् न स्पष्टं प्रकाशते मुक्तौ तदभावात् यथावत् अवभासते इत्यपि निरस्तम् ।

---

अधिकेति । करतलादिसम्बन्धरहितगगने य आलोकस्य स्फुटः प्रकाशस्तदपेक्षया अधिक इत्यर्थः । तदीयदीप्तिसंवलनादिति । दर्पणादे र्या दीप्तिः प्रभा तया मिश्रणादित्यर्थः । ततोऽपि इति करतलगतप्रकाशादपीत्यर्थः । तत्रेति । एकरूपस्य आलोकस्य उपाधिगततारतम्यकृताभिव्यक्तितारतम्यासंप्रतिपत्तेर्न तस्य दृष्टान्तत्वं सम्भवतीत्यर्थः ।

उक्तदृष्टान्ताङ्गीकारे सिद्धान्तिनो बाधकमप्याह दृष्टान्तसम्प्रतिपत्तौ चेति मुक्तित इति । तथा च सिद्धान्ते मुक्तिमुद्दिश्य तत्साधनेषु कस्यापि प्रवृत्तिर्न स्यादिति भावः ।

मुक्तिसंसारयोरविशेषप्रसङ्गचोद्ये समाधानप्रकारविशेषोऽपि वक्ष्यमाणहेतुना निरस्त इत्याह पूर्ववादी एतेनेति । अनात्मनि देहादौ आत्मत्वज्ञानं वस्तुत आत्मसम्बन्धशून्ये देहादौ आत्मीयत्वमज्ञानं च मिथ्याज्ञानं तच्च जाग्रदादिकाले स्वरूपानन्दस्य प्रकाशमानस्यापि विक्षेपकमस्पष्टतापादकं मिथ्याज्ञानजन्यसंस्कारश्च सुषुप्तौ प्रकाशमानस्यापि आनन्दस्य विक्षेपकः पुरुषार्थत्वविघटकः पुनर्भोगप्रदकर्मविशेषोद्बोधितमिथ्याज्ञान-

निर्विशेषस्वरूपानन्दे प्रकाशमाने तत्र विक्षेपदोषात् अप्रकाशमानस्य मुक्त्यन्वयिनोऽतिशयस्य असम्भवात्। तस्मात् साध्यानन्दस्य अनावृतत्वकल्पनमयुक्तम्।

अत्र आहुरद्वैतविद्याचार्य्याः। यथा अत्युत्कृष्टस्य एकस्य एव धवलरूपस्य मालिन्यतारतम्ययुक्तेषु अनेकेषु दर्पणेषु प्रतिबिम्बे सति उपाधिमा-

---

संस्कारवशादेव हि सर्वो जन्तुः सौषुप्तमानन्दानुभवं परित्यजति ततश्च सौषुप्तानन्दप्रकाशस्याध्रुवस्य मुमुक्ष्वभिलषितत्वाभावाद-पुरुषार्थत्वमिति भावः।

दृष्टान्ते प्रभायाः सावयवत्वात् तीव्रवायुना केषाञ्चिदवयवानां नाशरूपाद्वा प्रभारूपगतभास्वरत्वस्य तेन प्रतिबन्धरूपात् वा विक्षेपात् प्रकाशमानायामपि दीपप्रभायामस्पष्टप्रकाशता उपपद्यते अवयवगुणादिविशेषरहितस्य ब्रह्मानन्दस्य तु न तथा विशेष उपपद्यते इत्याह निर्विशेषेति। प्रकाशमाने इति सति सप्तमी तत्रेत्यधिकरणसप्तमी मुक्त्यन्वयिन इति मुक्तिदशायां प्रकाशमानस्येत्यर्थः। अतिशयस्येति दृष्टान्त इवावयवरूपस्य जातिविशेषरूपस्य वेत्यर्थः।

तस्मादिति मुक्तिसंसारयोः अविशेषप्रसङ्गादित्यर्थः।

स्यादेतदित्यादिना प्राप्तं पूर्वपक्षं निराकरोति अत्राहुरित्यादिना। एकस्य एकरूपस्य स्वरूपानन्दस्याभिव्यक्तितारतम्येऽनुरूपं दृष्टान्तं वदन् स्वरूपानन्दे श्रुत्यनुभवसिद्धं तार-

लिन्यतारतम्यात् तत्र तत्र प्रतिबिम्बे धावल्या-पकर्षः तारतम्येन अध्यस्यते एवं वस्तुतो निरति-शयस्य एकस्य एव स्वरूपानन्दस्य अन्तःकरणप्रति-बिम्बिततया साक्ष्यानन्दभावे प्राक्तनसुकृतसम्प-त्त्यधीनविषयविशेषसम्पर्क-प्रयुक्तसत्त्वोत्कर्षापक-र्षरूपशुद्धितारतम्ययुक्तसुखरूपान्तःकरणवृत्तिप्रति-बिम्बिततया विषयानन्दभावे च तमोगुणरूपो-पाधिमालिन्यतारतम्यदोषात् अपकर्षः तारतम्येन

---

तम्यशब्दोक्तमुत्कर्षापकर्षवत्त्वमुपपादयति यथेति अत्युत्-कृष्टस्येति। धवलरूपाणां मध्ये सर्वोत्तमस्य इत्यर्थः। एकस्येति अनेन वक्ष्यमाणौ उत्कर्षापकर्षौ तत्र स्वतो नस्त इति सूचितम्।

तत्र तत्र प्रतिबिम्बे इत्येतानि पदानि समानाधिकरणानि धावल्यापकर्ष इति ईषन्मलिनदर्पणप्रतिबिम्बे अपकर्षोऽध्यस्यते ततः मध्यमविधमलिनदर्पणप्रतिबिम्बे च तदपेक्षया अधिकोऽप-कर्षोऽध्यस्यते अत्यन्तमलिनदर्पणप्रतिबिम्बे च अत्यन्तापकर्षोऽ-ध्यस्यते ततश्च तादृशदर्पणेषु प्रतिबिम्बितं धवलरूपं तारतम्येन अभिव्यज्यते वस्तुत एकरूपमपि स्वरूपेण प्रकाशमानमपि इत्यर्थः। अन्तःकरणेति सुषुप्तावन्तःकरणं सूक्ष्मरूपेण तिष्ठ-तीति साक्ष्यानन्दस्य सुषुप्तिसाधारण्यं बोध्यम्। मतान्तरेषु त्वविद्यायां प्रतिबिम्बिततया साक्ष्यानन्दभावो द्रष्टव्यः। आन-न्दभाव इति प्राप्ते सति इति शेषः। सम्पत्तिः परिपाकः फलजननोन्मुख्यमिति यावत् प्राक्तनसुकृतसम्पत्त्यधीनो यो

अध्यस्यत इति संसारदशायां प्रकाशमानेऽपि आनन्देऽध्यस्तापकर्षतारतम्येन सातिशयत्वात् अतएव विद्योदये निखिलापकर्षाध्यासनिवृत्ते-रारोपितसातिशयत्वापायात् कृतकृत्यतेति विशे-षोपपत्तेर्निरुपाधिकप्रेमगोचरतया प्रकाशमानः साध्यानन्दोऽनावृत एवेति ॥

अन्ये तु प्रकाशमानोऽपि आनन्दो नास्ति न प्रकाशत इति आवरणानुभवादावृत एव।

---

बिम्बविशेषसम्पर्कः तत्प्रयुक्तौ यौ सत्त्वस्योत्कर्षापकर्षौ तद्रूपं यच्छुद्धितारतम्यं तद्युक्तासु सुखरूपास्वन्तःकरणवृत्तिषु प्रति-बिम्बिततया विषयानन्दभावे च प्राप्ते सति इत्यर्थः। वृत्तीनां स्वरूपसुखव्यञ्जकतया सुखरूपत्वमुक्तम् एतदुक्तं भवति पूर्व-जन्मसुसम्पादितपुण्यकर्मपरिपाकवशात् अन्तःकरणस्य स्रक्-चन्दनादिरूपविषयविशेषगोचरवृत्तिद्वारा विषयविशेषैः सह सम्बन्धे सति तद्गतसत्त्वगुणस्य उत्कृष्टविषयसम्बन्धादुत्कर्षो भवति। निकृष्टविषयसम्बन्धान्निकर्षो भवति ततश्च अन्तःकर-णगतसत्त्वांशपरिणामरूपाः वृत्तयः स्वरूपानन्दगोचरा जायन्ते। जायमानाश्च ता अप्युत्कर्षापकर्षोपेता एव जायन्ते। तासु आनन्दप्रतिबिम्बो विषयानन्द उच्यते इति।

ननु स्वरूपानन्दगोचरसत्त्ववृत्तिगतापकर्षवशात् प्रति-बिम्बरूपे विषयानन्दे अपकर्षाध्यासो वक्तव्यः मलिनद्रव्य-कृतदर्पणोपाधिनिष्ठापकर्षवशात् तत्प्रतिबिम्बे अपकर्षाध्या-सदर्शनात् तथा च स्वरूपानन्दगोचरासु वृत्तिषु सत्त्वगुणप-

एकस्मिन्नपि साक्षिणि अविद्याकल्पितरूपभेद-सम्भवेन चैतन्यरूपेण अनावरणस्य आनन्दरूपेण आवरणस्य च अविरोधात्।

---

स्थानभूतासु अपकर्षप्रयोजकं मलिनद्रव्यं किञ्चिदवश्यं वक्तव्यं साक्षाद्दर्पणसंयुक्तस्यैव मलिनद्रव्यस्य दर्पणे अपकर्षा-धायकत्वदर्शनादित्यत आह तमोगुणरूपेति। अन्तः-करणस्य सत्त्वरजस्तमोगुणात्मकत्वात् तद्वृत्तिषु अपि तमोगुण-रूपोपाधिरनुवर्त्तते तत्कृतो यो मालिन्यतारतम्यदोषापकर्ष-तारतम्यात्मको वृत्तिगतदोष इति यावत् तस्माद्दोषादपकर्षः सत्त्ववृत्तिप्रतिबिम्बरूपे विषयानन्देऽध्यस्यत इत्यर्थः। पूर्वं विषयसम्पर्कः सुखरूपवृत्तिकारणत्वेन निर्दिष्टः तत्र विषयविशे-षेति विशेषपदं विषयगतोत्कर्षतारतम्यपरं तत् तारतम्यं च सुखरूपवृत्तिगतोत्कर्षतारतम्यप्रयोजकत्वेन निर्दिष्टम् इह तु सुखरूपवृत्तिषु एवापकर्षप्रयोजकतया अपकर्षतारतम्यप्रयोजक-तया च तारतम्योपेततमोगुणात्मकं मलिनद्रव्यं निर्दिष्टमिति विभागो बोध्यः।

ततः किं तत्राह इति संसारदशायामिति प्रकाशमाने-ऽपि आनन्दे यदध्यस्तमपकर्षतारतम्यं तेन सातिशयत्वात् विषयानन्दस्य इत्यर्थः। तथा च निकृष्टमानन्दमनुभवतः उत्-कृष्टानन्दस्याभिभूतस्य तत्सम्पादनाय प्रयतमानस्य तत्सा-धनत्वभ्रान्त्या कदाचित् दुःखसाधनेष्वपि प्रवर्त्तमानस्य देव-मनुष्यतिर्य्यगादियोन्यापत्तिलक्षणो भवत्यनर्थं इति नास्ति निवृत्तिरित्यर्थः। निवृत्तेरिति मूलाज्ञाननिवृत्तौ तत्कार्य्यो-पाधिनिवृत्त्या तत्कृतापकर्षाद्यध्यासनिवृत्तेरित्यर्थः। कृत-

स्वरूपप्रकाशस्य आवरणानिवर्त्तकतया प्रकाशमाने आवरणस्य अविरोधाच्च ।

---

कृत्यतेति कृत्यं कर्त्तव्यजातं कृतं येन सः कृतकृत्यः तस्य भावस्तत्ता पुरुषस्य हि विद्योदयात् पूर्वं दुःखनिवृत्तये सुखावाप्तये च बहुकर्त्तव्यजातमासीद्विद्योदये तु दुःखमात्रस्य निवृत्तत्वादत्युत्कृष्टधवलरूपस्य निर्मलदर्पण इव निरतिशयस्वरूपानन्दभानाच्च तन्निवृत्तये तत्प्राप्तये वा न किञ्चित्कर्त्तव्यमस्तीतिभावः । तदाह भगवान् श्रीकृष्णः एतत् बुद्धा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेति एतन्निरतिशयानन्दरूपं ब्रह्मापरोक्षतया बुद्धा बुद्धिमान् भवति कृतकृत्यश्च भवति पण्डितोऽपि भवति हे भारत ! अर्जुन ! यतस्तत्त्वज्ञानं विना पाण्डित्यादिकं न लभ्यते तस्मात्तदेव सम्पादय अन्यत्सर्वं परित्यजेति भावः । विशेषोपपत्तेरिति मुक्तिसंसारयोरिति शेषः ।

ननु ब्रह्मानन्दवत्साक्ष्यानन्दोऽपि आवृतोऽस्तु तथा च मुक्तिसंसारयोर्विशेषः सुवच इति न इत्याह निरुपाधिकेति एवम्भूतः प्रेमास्वरूपानन्दावरणसत्त्वेन सम्भवति लोके च प्रकाशमानसुख एव प्रीतेरनुभवसिद्धत्वादिति भावः । साक्षिचैतन्यस्य अनावृतत्वे तदभिन्नस्य आनन्दस्याप्यनावृतत्वापत्त्या मुक्तिसंसारयोरविशेषप्रसङ्ग इति पूर्वपक्षे प्राप्ते स्वरूपानन्दस्य अनावृतत्वेऽपि तयोर्विशेषः सम्भवतीति सिद्धान्तो दर्शितः ।

इदानीं तस्य आवृतत्वमुपेत्यैव विशेषं मुक्तिसंसारयोर्वदन् सिद्धान्तं दर्शयति अन्येत्विति वेदान्तप्रतिपाद्यस्वरूपानन्दो मे नास्ति न प्रकाशते इति व्यवहारदर्शनात्तद्धेतुभूतमावरणं तावदस्त्येव संसारदशायां मुक्तौ तु तदावरणनाशात् स्वरूपानन्द-

स्फुरणमस्तीति न तयोरविशेषप्रसङ्ग इत्यर्थः। अत्र प्रकाशमानोऽप्यानन्द आवृत एवेति सम्बन्धः न त्वनावृतः तस्य अनावृतत्वे उक्तव्यवहारविरोधप्रसङ्गादित्येवकाराभिप्रायः। ननु एवमात्मनि सदा निरुपाधिकप्रेमा न स्यादनावृतस्वरूपानन्दस्फुरणस्य अभावात् वृत्तिकृतानन्दस्फुरणस्य च कादाचित्कत्वादिति चेत् न फलबलेन आवृतस्यापि स्वरूपानन्दप्रकाशस्य निरुपाधिकप्रेमहेतुत्वकल्पनात्तत एव परप्रेमास्पदत्वलक्षणं सुखमिति विवरणस्याप्यत्रैव तात्पर्य्योपपत्तेश्च अनेनैवाभिप्रायेण प्रकाशमानोऽपीत्युक्तमन्यथा प्रकाशमानत्वविशेषणस्य आवृतत्वकल्पने उपयोगाभावेन वैयर्थ्यप्रसङ्गादिति बोध्यम्।

साक्षिचैतन्याभिन्नस्य साक्ष्यानन्दस्य आवृतत्वे साक्षिचैतन्यमप्यावृतं स्यादेकत्र आवृतत्वानावृतत्वयोर्युगपत् विरोधादित्यत आह एकस्मिन्नपीति। यथा वस्तुत एकस्मिन्नेव चैतन्ये जीवेश्वरत्वाख्यौ रूपभेदौ कल्प्येते नाहमीश्वरः किन्तु संसारीति व्यवहारबलात्तथाहं सुखीत्यादि ज्ञानमानन्दो न भातीत्यादिरूपेणाहङ्काराद्यवभासकज्ञानस्य आनन्दात्भेदव्यवहारदर्शनात्तदनुरोधेन चित्त्वानन्दत्वाख्यौ रूपभेदावनादिसिद्धौ कल्प्येते यथा च एकस्मिन्नेव चैतन्ये जीवत्वावच्छेदेनाज्ञत्वादिकमीश्वरत्वावच्छेदेन तदभावश्च कल्प्यते तथैवानन्दत्वावच्छेदेन आवृतत्वे चित्त्वावच्छेदेनाहङ्काराद्यवभासकचैतन्ये तदभावश्च कल्प्यते फलबलादिति न विरोधः जीवत्वादेरिव चित्त्वादिरूपभेदस्याप्यविद्याकल्पितत्वाभ्युपगमान्नाद्वैतविरोधश्च इत्यर्थः।

ननु एकस्मिन् साक्षिणि रूपभेदेनावृतत्वतदभावयोर्विरोधाभावेऽप्यानन्दः प्रकाशमानोऽप्यावृत इति विरुद्धं प्रका-

त्वदुक्तमर्थं न जानामि इति प्रकाशमान एव आवरणदर्शनात्।

---

शस्य आवरणविरोधित्वादिति न इत्याह स्वरूपप्रकाशस्य इति। आगन्तुकवृत्तिरूपप्रकाशस्य आवरणविरोधित्वकल्पनात्न स्वरूपप्रकाशस्तद्विरोधी तस्य आवरणसाधकत्वादित्यर्थः। ननु एवं प्रकाशमानोऽप्यानन्द आवृत इति ग्रन्थे प्रकाशमानत्वविशेषणं स्वरूपप्रकाशस्य आवरणाविरोधित्वज्ञापनार्थमिति तत्प्रयोजनसम्भवात् तद्विशेषणम् आत्मनि निरुपाधिकप्रेमसम्भवज्ञापनप्रयोजनकमिति यदुक्तं तन्न सम्भवतीति चेत्तर्हि विनिगमकाभावेन तद्विशेषणस्य उभयप्रयोजनकत्वमस्तु स्वरूपप्रकाशे आवरणाविरोधित्वस्य एव आनन्दावरणपक्षे आनन्दरूपे आत्मनि निरुपाधिकप्रेमसम्भवस्याप्यवश्यं ज्ञापनीयत्वात्।

स्वरूपप्रकाशस्यावरणाविरोधित्वे हेत्वन्तरमाह त्वदुक्तमिति एवकारानन्तरमाप्तोक्तार्थं इति शेषः। श्रीकृष्ण एव वेदान्तवेद्यः परमात्मा दुर्विज्ञेयोऽयम् अकृतात्मभिरित्याप्तोपदेशानन्तरं मन्दस्य वाक्यार्थबोधो न भवति स च मन्दस्त्वदुक्तमर्थं न जानामीत्यज्ञानमनुभवतीति प्रसिद्धं लोके तत्र त्वद्वाक्यस्यास्ति कश्चिदर्थं इति जानामि आप्तवाक्यत्वात् विशेषन्तु न जानामीति व्यवहारदर्शनादवगतो यस्त्वद्वाक्यार्थत्वलक्षणः सामान्याकारः स एव विशेषावरकाज्ञानस्य विषयतया प्रकाशते तथा च त्वदुक्तमर्थं न जानामीत्यनुभवे अज्ञानविशेषणतया प्रकाशमान-सामान्याकारस्यावरणविषयत्वा-भावादावरणविषयस्य विशेषस्य प्रकाशमानत्वाभावात् प्रकाशमानस्यावृतत्वेन अयमनुभवः प्रमाणमिति शङ्कते न च तत्रेति।

न च तत्र अनावृतसामान्याकारावच्छेदेन विशेषावरणमेव अनुभूयत इति वाच्यम्। अन्या-वरणस्य अन्यावच्छेदेन भानेऽतिप्रसङ्गात्।

न च सामान्यविशेषभावो नियामक इति न अतिप्रसङ्ग इति वाच्यम्। व्याप्यव्यापकभावा-तिरिक्तसामान्यविशेषभावाभावेन वह्निं न जानामि इति धूमावरकाज्ञानानुभवप्रसङ्गात्।

---

अन्यावरकाज्ञानस्यान्यावच्छेदेन प्रकाशाभ्युपगमे चैत्रं न जानामीत्यनुभूयमानाज्ञानस्य विष्णुमित्रविषयकत्वप्रसङ्ग इति दूषयति अन्यावरणस्येति। ननु त्वद्वाक्यार्थत्वलक्षण आकारस्ता-वत् सामान्यरूपः आप्तोपदिष्टे श्रीकृष्ण इव त्वदुपदिष्टेषु श्रीकृष्ण-प्रतिपत्त्युपायेषु अपि त्वद्वाक्यार्थत्वस्य सत्त्वात् वेदान्तवेद्य-त्वादिलक्षणाकारस्तु विशेषरूपः तस्य श्रीकृष्णस्वरूपमात्रवृत्ति-त्वात्।

तथा च विशेषावरकाज्ञानं सामान्याकारावच्छेदेन प्रकाशते इत्युपगमेनातिप्रसङ्गः चैत्रत्वविष्णुमित्रत्वयोः सामा-न्यविशेषभावाभावादिति शङ्कते न च सामान्येति। किं सामान्य-विशेषभावः श्रीकृष्णमूर्त्तित्वविष्णुमूर्त्तित्वयोरिव व्याप्यव्यापक-भावः तदतिरिक्तो वा? न द्वितीयस्तस्यानिरूपणादित्याशयेनाह व्याप्येति। आद्ये दोषमाह वह्निमिति। तस्मात् अज्ञानानुभवे अज्ञानविशेषणतया यद्वस्तु प्रकाशते तदेवावरणविषय इति वक्तव्यम्। न च त्वदुक्तं न जानामीति ज्ञानस्य त्वदुक्तार्थ-प्रकारकत्वे सत्यज्ञानविशेष्यकत्वेन त्वदुक्तार्थो विशेषणरूप एव

तस्माद् यदवच्छिन्नम् अज्ञानं प्रकाशते तदेव आवृतमिति प्रकाशमानेऽपि अज्ञानं युज्यते।

अज्ञानं च यथा साक्ष्यंशं विहाय चैतन्यम् आवृणोति एवम् आनन्दमपि तत्तत् सुख-रूपवृत्तिकवलीकृतं विहायैव आवृणोति स एष वैषयिकानन्दस्य आवरणाभिभवः।

---

इत्युपगमे तज्ज्ञानस्य विशेषणज्ञानरूपकारणस्याभावात् तद्विशिष्टाज्ञानानुभवो न स्यादिति वाच्यम्। अज्ञानानुभवस्य नित्यसाक्षिरूपत्वोपगमेन तत्र विशेषणज्ञानानपेक्षणात्। न च प्रकाशमानत्वमावृतत्वञ्च विरुद्धं प्रकाशस्यावरणविरोधित्वादिति वाच्यम्।

अस्य विरोधस्य प्रागेव परिहृतत्वादित्याशयेनोपसंहरति तस्मादिति। अन्यावरकाज्ञानस्यान्यावच्छिन्नतया भानासम्भवादित्यर्थः। यदवच्छिन्नमिति येन वस्तुना विशेषितमित्यर्थः।

ननु आनन्दस्यावृतत्वे विषयसम्पर्कदशायां विशिष्यानन्दप्रकाशो न स्यादित्यत आह अज्ञानं चेति। ननु वृत्तेरावरणाभिभावकत्वोपगमादज्ञानस्य सुखवृत्तिविषयीकृतानन्दानावरकत्वमिति कथमुच्यते तत्राह स एष इति। सुखवृत्तिविषयत्वप्रयुक्तानावरकत्वस्वभाव एव वृत्तिकृतावरणाभिभव इत्यर्थः।

स च आवरणाभिभवः प्रत्यूषसमये बाह्यावरणाभिभववत् कारणविशेषप्रयुक्तवृत्तिविशेषवशात् तरतमभावेन भवति।

अतः स्वरूपानन्दविषयानन्दयोः विषयानन्दानां च परस्परभेदसिद्धिरिति वदन्ति।

सर्वथापि साक्षिचैतन्यस्य अनावृतत्वात् आवरणाभिभवार्थं वृत्तिमनपेक्ष्यैव तेन अहङ्कारादिप्रकाशनमिति तुल्यमेव।

---

ननु सुखरूपवृत्तेरेकरूपत्वात् तत्कृतावरणाभिभवोऽपि एकरूप एव स्यात् तथा च विषयसम्बन्धदशायामानन्दोऽपि एकरूपतयैव प्रकाशेन न तु उत्कृष्टापकृष्टरूपेणेति नेत्याह स चेति। यथा प्रत्यूषसमये आलोकतारतम्येन बाह्यतमसस्तारतम्यप्रयुक्ताभिभवो भवति ततश्च तमसावृतानां पदार्थानां तारतम्यभावप्रयुक्तं प्रकाशनं भवति एवं विषयविशेषरूपकारणविशेषप्रयुक्तो यो वृत्तिषु विशेषः उत्कर्षतारतम्यरूपस्तद्वशात् तारतम्यभावप्रयुक्त एव अवरणाभिभवो भवति ततश्च आनन्दोऽपि तारतम्यभावयुक्त एव प्रकाशते इत्यर्थः।

एवमपि आनन्दस्यैकत्वाभ्युपगमात् तद्भेदप्रथा कथं सिध्यति तत्राह अत इति। वस्तुत एकस्मिन्नपि आनन्दे उपाधिप्रयुक्तभेदाभ्युपगमादित्यर्थः। तथा च विद्यया आवरणनिवृत्तौ सत्यां प्रकाशमानानन्दः स्वरूपानन्दस्तदनिवृत्तिदायां वृत्तिसम्बन्धात् प्रकाशमानानन्दो विषयानन्द इति स्वरूपानन्दविषयानन्दयोर्भेदो ज्ञातव्यस्तथा वृत्तिभेदेन आनन्दभेदाभ्युपगमात् विषयानन्दानां परस्परं भेदप्रसिद्धिश्चावकल्पत इत्यर्थः।

अथ अहङ्काराद्यनुसन्धानोपपादनम्।

ननु एवं कथम् अहङ्कारादीनाम् अनुसन्धानं ज्ञानसूक्ष्मावस्थारूपस्य संस्कारस्य ज्ञाने सति अयोगेन नित्येन साक्षिणा तदाधानासम्भवात्।

अत्र केचिदाहुः। स्वसंसृष्टेन साक्षिणा सदा भास्यमानेऽहङ्कारस्तत्तद्घटादिविषयवृत्त्याकारपरिणतस्वावच्छिन्नेन अपि साक्षिणा

---

अहङ्कारादीनां केवलसाक्षिभास्यत्वं परमप्रकृते सिद्धमित्याशयेनाह सर्वथा अपि इति। स्वरूपानन्दस्यानावृतत्वपक्षे तस्यावृतत्वपक्षे च इत्यर्थः। तेनेति साक्षिचैतन्येन इत्यर्थः।

ननु सिद्धान्ते संस्कारस्यानुभवनाशरूपत्वोपगमेन संस्कारार्थं साक्षिचैतन्यस्य अहङ्कारादिगोचरवृत्त्यपेक्षा अस्त्येवेति शङ्कते ननु एवमिति। अहङ्कारादिसाक्षिणो वृत्त्यनपेक्षत्वे सति इत्यर्थः। अनुसन्धानं स्मृतिः तदाधानेति संस्कारोत्पादनेत्यर्थः। तदाधानासम्भवे हेतुमाह ज्ञानसूक्ष्मावस्थारूपस्येत्यादिना। ननु यदि साक्षिचैतन्यस्थितिदशायां तत्सूक्ष्मावस्थारूपसंस्कारोत्पत्त्ययोगस्तर्हि तन्नाशदशायां तदुत्पत्तिरस्तु नेत्याह नित्येन इति।

तथा च अहङ्काराद्यवच्छिन्नसाक्षिचैतन्यस्यानावृत्तत्वेन तदभिभवार्थं वृत्त्यनपेक्षणेऽपि संस्कारार्थं तदपेक्षासत्त्वात् केवलसाक्षिभास्यत्वम् अहङ्कारादीनामिति सिद्धान्तव्याकोप इति भावः। अहङ्कारादिगोचरवृत्तिं विनैव संस्कारोपपत्तेर्न सिद्धान्तविरोध इति समाधत्ते अत्र केचिदाहुरिति। स्वपदद्वय-

भास्यत इति तस्य अनित्यत्वात् सम्भवति संस्काराधानं घटादौ विषय इव।

न हि स्वाकारवृत्त्यवच्छिन्नसाक्षिणैव स्वगोचरसंस्काराधानमिति नियमोऽस्ति।

तथा सति वृत्तिगोचरसंस्कारासम्भवेन वृत्तेरस्मरणप्रसङ्गात्। अनवस्थापत्त्या वृत्तिगोचरवृत्त्यन्तरस्य अनुव्यवसायनिरासेन निरस्तत्वात्।

---

अहङ्कारपरं स्वसंसृष्टेन इत्यादिना भास्यत इत्यन्तेन ग्रन्थेन अहङ्कारस्य यथा अहङ्कारावच्छिन्नसाक्षिभास्यत्वं तथा घटपटादिविषयगोचरवृत्त्यवच्छिन्नसाक्षिभास्यत्वमप्यस्तीति दर्शितं भवति ततः किं तत्राह तस्य इति। घटादिगोचरवृत्त्यवच्छिन्नसाक्षिचैतन्यस्य अनित्यत्वात् तेन यथा घटादौ विषये संस्काराधानं सम्भवति तथा तेनैव वृत्त्यवच्छिन्नसाक्षिचैतन्येन अहङ्कारादावपि संस्काराधानं सम्भवतीति न अहङ्कारगोचरवृत्त्यपेक्षेति भावः।

ननु अहङ्कारव्यतिरिक्तेषु घटादिषु सर्वत्र स्वाकारवृत्त्यवच्छिन्नचैतन्येनैव घटादिगोचरसंस्काराधानदर्शनात् स्वगोचरवृत्त्या एव स्वगोचरसंस्काराधानमिति नियमोऽवसीयते तथा च अहङ्कारमात्र एव कथमन्यगोचरवृत्त्या तदाधानमित्याशङ्क्याह न हीति।

तथा नियमे मानाभावादप्रयोजकत्वाच्च इति भावः। नियमाभ्युपगमे बाधकमाह। तथा सतीति। ननु ज्ञानरूपवृत्तेः संस्कारादिलाभाय वृत्तिगोचरवृत्त्यन्तरमप्यस्तु

किन्तु यद्वृत्त्यवच्छिन्नचैतन्येन यत् प्रकाशते तद्वृत्त्या तद्गोचरसंस्काराधानमित्येव नियमः।

---

नेत्याह अनवस्थापत्तेरिति। घटादिगोचरवृत्तिस्मरणसिद्ध्यर्थं तद्गोचरवृत्त्यन्तरोपगमे द्वितीयवृत्तिस्मरणाय तृतीयापि तद्गोचरावृत्तिर्वक्तव्या स्यादेवं तत्तद्वृत्तिगोचरवृत्त्यभ्युपगमापत्त्या वृत्त्यनवस्था प्रसज्येत। न च द्वितीयतृतीयादिवृत्तीनां मध्ये कासाञ्चिदज्ञातानामेव नाशाभ्युपगमसम्भवान्न अनवस्थाप्रसक्तिरिति वाच्यम्। उत्पन्नाया वृत्तेरवश्यज्ञातव्यत्वादन्यथा सत्यामेव घटाद्याकारवृत्तौ कदाचिन्मया इदं ज्ञायते नवा घटादिवृत्तिनाशानन्तरं मया इदं ज्ञात न वेति वा संशयप्रसङ्गात्। तस्मात् वृत्तेरवश्यज्ञातव्यत्वं वृत्तेर्वृत्त्यैव वेद्यत्वपक्षे प्रापयेदेव अनवस्थाम् अनेनैव न्यायेन निबन्धनेषु अनुव्यवसायो निरस्तः। ततश्च स्वगोचरवृत्त्यैव स्वगोचरसंस्काराधाननियमो नास्ति वृत्तिषु असम्भवादित्यर्थः।

ननु अन्यगोचरवृत्त्या अन्यगोचरसंस्काराधानोपगमे घटगोचरवृत्त्या पटादावपि तदाधानप्रसङ्ग इति शङ्कते। किन्तु इति अतिप्रसङ्गपरिहाराय प्रयोजकमाह यद्वृत्तीति। यद्वस्तुगोचरवृत्त्यवच्छिन्नचैतन्ये यावन्तः पदार्थाः प्रकाशन्ते तद्वस्तुगोचरवृत्त्या तावत्सु पदार्थेषु संस्काराधानमिति नियमे घटगोचरवृत्त्यवच्छिन्नचैतन्ये च पटादेरप्रकाशनान्नातिप्रसङ्गः न तु स्वगोचरवृत्त्यैव स्वगोचरसंस्काराधानमिति नियम इति एवकारार्थः। ननु घटादिवृत्त्यवच्छिन्नचैतन्ये घटादिप्रकाशनं निर्विवादं तत्र चैतन्येऽहङ्कारस्यापि प्रकाशनं घटादिविषयवृत्त्याकारपरिणतस्वावच्छिन्नेनापि साक्षिणा भास्यत इति पूर्वग्रन्थे

एवं च ज्ञानसुखादयोऽपि अन्तःकरण-वृत्तयस्तप्तायःपिण्डाद् व्युच्चरन्तो विस्फुलिङ्गा इव स्वावच्छिन्नेन वह्निनेव स्वस्वावच्छिन्नेन अनित्येन साक्षिणा भास्यन्त इति युक्तं तेषु अपि

---

दर्शितम्। तथा च घटादिवृत्त्या अहङ्कारेऽपि संस्काराधान-मस्तु तथापि घटादिज्ञानरूपाया वृत्तेः स्वावच्छिन्नचैतन्ये प्रका-शनस्यासिद्धत्वात्तस्याः स्वगोचरसंस्कारजनकत्वं न स्यात् तथाच सुखदुःखेच्छाद्वेषादीनामहङ्कारधर्माणां घटादिवृत्त्यवच्छिन्न-चैतन्ये प्रकाशनप्रसक्त्यभावात् तया तेषु संस्काराधानं न स्यात् न च सुखादिरूपवृत्तिषु घटादिवृत्त्या संस्कारानाधानेऽपि सुखदुःखादिगोचरान्तःकरणवृत्तिभिरेव तासु तदाधानमस्तु ज्ञानरूपासु घटादिवृत्तिषु तदाधानार्थं वृत्त्यन्तरोपगम इव अनवस्थाप्रसक्त्यभावादिति वाच्यम्। सुखदुःखादिगोचरावृत्ति-रभ्युपगम्यमाना किं ज्ञानरूपा किं वा इच्छादिवृत्तिविक्रि-यारूपा नाद्यस्तदुत्पादककरणाभावान्मनःकरणताया निराक्रि-यमाणत्वान्न द्वितीयस्तस्या अपि वृत्तेः संस्काराधानाय तत्-गोचरवृत्त्यन्तरोपगमे सैवानवस्था प्राप्नोति।

तस्मात् ज्ञानरूपासु घटादिवृत्तिषु ज्ञानभिन्नासु सुखदुःखादि-रूपवृत्तिषु च कथं संस्काराधानमित्याशङ्क्याह एवञ्चेति। उक्त-नियमे सतीत्यर्थः। अन्तःकरणे या या वृत्तय उत्पद्यन्ते ज्ञानरूपा-स्तद्भिन्ना वा ताः सर्वा अपि स्वस्वावच्छिन्ननित्यचैतन्यभास्या एव। तथाच चैतन्यस्य नित्यत्वेऽपि तद्भास्यतया तदवच्छेदक-तया च उत्पद्यमानानामहङ्कारधर्माणामनित्यतया तत्तद्धर्मवि-

संस्काराधानम्। यस्तु घटैकाकारधीस्था चिद् घटमेव अवभासयेत् घटस्य ज्ञातता ब्रह्मचैतन्येन अवभास्यते इति कूटस्थदीपोक्तो विषयविशेषणस्य ज्ञानस्य विषयावच्छिन्नब्रह्मचैतन्यावभास्यत्वपक्षः यश्च तत्त्वप्रदीपिकोक्तो ज्ञानेच्छादीनाम् अनवच्छिन्नशुद्धचैतन्यरूपनित्यसाक्षिभास्यत्वपक्षस्तयोरपि चैतन्यस्य स्वसंसृष्टापरोक्षरूपत्वात् वृत्ति-

---

शिष्टस्य तत्तदवभासकस्य चैतन्यस्य नाशरूपस्तद्धर्मगोचरः संस्कारः सम्भवतीति न ज्ञानसुखादिषु संस्कारानुपपत्तिरिति भावः। दृष्टान्ते स्वपदं विस्फुलिङ्गपरं घटस्यैव एकस्याकार इवाकारो यस्याः सा घटैकाकारा सा चासौ धीश्च तस्यां स्थिता चित् चिदाभासः घटाकारवृत्तिप्रतिबिम्बरूपं घटज्ञानमिति यावत् घटमेव न घटस्य ज्ञाततामपि इत्येवकारार्थः। ज्ञातता नाम ज्ञानविषयत्वं विषयतासम्बन्धेन विषयनिष्ठं ज्ञानमित्यर्थः। तच्च ज्ञानं विषयस्य विशेषणं ज्ञातो घट इत्यनुभवादिति भावः। ननु अनयोः पक्षयोः ज्ञानेच्छादिभासकचैतन्यस्य नित्यत्वात् कथं ज्ञानेच्छादिषु संस्कारः। न च पूर्वोक्तरीत्या ज्ञानेच्छादिवृत्तीनां स्वस्वावच्छिन्नसाक्षिचैतन्यप्रकाश्यत्वमादाय अनयोरपि पक्षयोः संस्काराधानमिति वाच्यम्। घटादिगोचरवृत्तिप्रतिबिम्बरूपज्ञानस्य ज्ञातताशब्दितस्य तद्वृत्त्यनवच्छिन्नविषयाधिष्ठानब्रह्मचैतन्यभास्यत्वोक्तिविरोधात् तथा द्वितीयपक्षे ज्ञानेच्छादिवृत्तीनामनवच्छिन्नसाक्षिभास्यत्वोक्तिविरोधप्रसङ्गात् अतः कथं तयोः पक्षयो-

संसर्गोऽवश्यं वाच्य इति तत्संस्पृष्टानित्यरूप-सद्भावात् न तेषु संस्काराधाने काचिदनुपपत्ति-रिति।

अन्ये तु सुषुप्तावविद्याद्यनुसन्धानसिद्धये

---

स्वदाधानमत आह तयोरपीति। विषयावच्छिन्नब्रह्मचैतन्यस्य ज्ञातताभासकत्वमते तद्ब्रह्मचैतन्यं ज्ञातताया अपरोक्षज्ञान-रूपमेवोपेयते ज्ञातोऽयं घट इति ज्ञातताया अपरोक्षत्वानु-भावात् अनवच्छिन्नशुद्धचैतन्यमपि इच्छाज्ञानादीनामपरोक्ष-ज्ञानरूपमेवोपेयते इच्छादिवृत्तीनामपि अपरोक्षत्वानुभवात्। तथा च अपरोक्षज्ञानरूपद्विविधचैतन्यस्य स्वविषयभूतैर्ज्ञाने-च्छादिभिः संसर्गोऽवश्यम्भावी अपरोक्षज्ञानस्य स्वतादात्म्यापन्न-विषयानुभवरूपत्वनियमात् ततश्च स्वविषयभूतैर्ज्ञानेच्छादि-नाशसमये ज्ञानादिविशिष्टरूपेण द्विविधचैतन्यस्यापि नाश-लक्षणसंस्कारोपपत्तिरित्यर्थः। तयोरपीति सप्तमी। चैतन्य-स्येति द्विविधस्येति शेषः। तत्पदं ज्ञानेच्छादिरूपवृत्तिपरं यदि च स्वगोचरवृत्त्यैव स्वसंस्काराधानमवश्यं वाच्यम्। तदापि नानुपपत्तिः अविद्यावृत्तिभिरहङ्कारतद्धर्मगोचराभिरहङ्कारादिषु संस्काराधानसम्भवात्। न च वृत्तिगोचरवस्तुरपगमे प्रागुक्तानव-स्थाप्रसक्तिरिति वाच्यम्। अविद्यावृत्तीनामनुभवायोग्यत्वेन तासु ज्ञानाय संस्काराय वा ज्ञानेच्छाद्यनुभवकाले अविद्या-वृत्त्यन्तरानुपगमात्। न च अविद्यावृत्तीनामक्लृप्तसंस्कारजन-कत्वकल्पने गौरवमिति वाच्यम्।

सुषुप्तौ तासां तज्जनकत्वस्य क्लृप्तत्वादित्याशयेन मतान्त-

कल्पिताम् अविद्यावृत्तिमहमाकाराम् अङ्गी-
कृत्य अहमर्थे संस्कारम् उपपादयन्ति।

न च अस्मिन् पक्षे एतावन्तं कालमिदम्
अहं पश्यन्नेव आसमित्यन्यज्ञानधाराकालीना-

---

रमाह अन्ये त्विति। उत्थितस्य अविद्याद्यनुसन्धानसिद्धये सुषुप्तौ कल्पितामविद्यादिगोचरामविद्यादिवृत्तिमिव अहमाकारामविद्यावृत्तिमङ्गीकृत्येति वाक्यं योजनीयं यथा श्रुते सुषुप्तौ यदविद्याद्यनुसन्धानं तत्सिद्धये इति भ्रान्तिः स्यात् सन्निधानात् तथा सुषुप्तौ कल्पिताया एव अविद्यावृत्तेरहमाकारत्वमङ्गीकृतमिति भ्रान्तिः स्यादिति बोध्यम्। अविद्यादीत्यादिपदं सुखसुषुप्त्योः संग्रहार्थं सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सुषुप्तिकालीनानां सुखसुषुप्त्यविद्यादीनामुत्थानानन्तरमनुसन्धानदर्शनात् तत्कालीनाविद्याद्यनुभवस्य नित्यसाक्षिरूपतया तस्याविद्यावृत्तिरूपावच्छेदकाकल्पने संस्कारासम्भवेनोक्तानुसन्धानाभावप्रसङ्गात्। ननु अज्ञानाहङ्कारादिगोचराविद्यावृत्त्युपगमे तेषां केवलसाक्षिवेद्यत्वसिद्धान्तव्याकोप इति चेत् न, अविद्यावृत्तीनां क्लृप्तज्ञानकारणजन्यत्वाभावेन ज्ञानात्मकवृत्तित्वाभावात् ज्ञानात्मकवृत्त्यनुपहितसाक्षिण एव केवलसाक्षिशब्दार्थत्वाङ्गीकारादिति भावः। अहमर्थग्रहणं तद्धर्माणामपि उपलक्षणं तुल्यन्यायतया बाधकाभावेन च तद्धर्मेषु अपि अविद्यावृत्तिभिः संस्कारस्योपपादितत्वादिति बोध्यम्।

ननु अस्मिन् पक्षे अन्यज्ञानधाराकाले नाहमर्थादिषु

हमर्थानुसन्धानानुपपत्तिः। अवच्छेदकभेदेन सुखदुःखयौगपद्यवत् वृत्तिद्वययौगपद्यस्यापि अविरोधेन अन्यज्ञानधाराकालेऽपि अहमाकाराविद्यावृत्तिसन्तानसम्भवादिति।

अपरे तु अहमाकारा वृत्तिरन्तःकरणवृत्तिरेव

---

अहमर्थादिगोचराविद्यावृत्त्यसम्भवेन संस्काराधानं न स्यात्। धाराकाले अविद्यावृत्त्यङ्गीकारे युगपद्वृत्तिद्वयप्रसङ्गादिति शङ्कामनूद्य दृष्टान्तेन परिहरति न च अस्मिन् पक्षे इति। अविद्यावृत्तिभिः संस्काराधानपक्ष इत्यर्थः। अवच्छेदकभेदेनेति। शिरसि मे वेदना पादे मे सुखमित्यनुभवादिति भावः। वृत्तिद्वयेति। अन्यज्ञानधाराकालेऽपि अन्यवस्तुगोचरान्तःकरणवृत्तिरहमर्थगोचराविद्यावृत्तिश्च युगपत् प्रमाया अवच्छेदकभेदेन न विरुध्यत इत्यर्थः। सन्तानेति। ननु अन्यज्ञानधाराकाले एकैवाविद्यावृत्तिरिति वक्तुं शक्यते तदा तन्नानात्वे मानाभावात् लाघवाच्च इति चेत् सत्यं तथापि अन्तःकरणवृत्तिसन्ततिरूपत्वात् धारायास्तत् कालीनाविद्यावृत्तेरपि सन्ततिरूपत्वं सम्भवतीति सम्भावनामात्रेण तथोक्तमत एवाह सन्तानासम्भवादिति। अहमर्थांशे अन्तःकरणवृत्त्यैव संस्काराधानं सम्भवतीति न तदंशेऽपि अविद्यावृत्तिः कल्पनीया अन्तःकरणवृत्तिसम्भवे तत्कल्पनायोगात्। न च अन्यज्ञानधाराकाले अहमर्थगोचरान्तःकरणवृत्तिः न सम्भवति सुखदुःखयौगपद्यवत् ज्ञानद्वययौगपद्यायोगादिति वाच्यम्।

किन्तु उपासनादिवृत्तिवत् न ज्ञानं क्लृप्ततत्कारणाजन्यत्वात्। न हि तत्र चक्षुरादिप्रत्यक्षलक्षणं सम्भवति। न वा लिङ्गादिकं लिङ्गादिप्रतिसन्धानशून्यस्यापि अहङ्कारानुसन्धानदर्शनात्। न अपि मनः करणं तस्योपादानभूतस्य क्वचिदपि करणत्वाक्लृप्तेः। तर्हि अहमर्थप्रत्यभिज्ञापि ज्ञानं न स्यादिति चेत् न। तस्या अहमंशे ज्ञानत्वाभावेऽपि तत्तांशे स्मृतिकरणत्वेन क्लृप्तसंस्कारजन्यतया ज्ञानत्वात्। अंशभेदेन ज्ञाने परोक्ष-

---

संस्कारार्थाहंवृत्तेः ज्ञानरूपत्वानुपगमादिति मतान्तरमाह अपरे त्विति। तर्हि सा वृत्तिर्घटादिवृत्तिवत् ज्ञानरूपापि स्यात् तथा च ज्ञानात्मकवृत्त्युपहितसाक्षिवेद्यत्वापत्त्या अहमर्थस्य केवलसाक्षिभास्यत्वसिद्धान्तहानिरित्याशयेनाह शङ्कते किन्तु इति। परिहरति उपासनादीति। इच्छादिसंग्रहार्थमादिपदम् अनुसन्धानम् अनुभवः क्वचिदपि इति वृत्तिज्ञानं प्रति उपादानभूतस्यान्तःकरणस्याहमाकारवृत्तेः सकाशादन्यत्र क्वचिदपि वृत्तौ तस्य करणत्वात् क्लृप्तेरित्यर्थः। तर्हीति। योऽहं स्वप्ने साक्षाद्भगवन्तं श्रीकृष्णमन्वभूवं सोऽहमिदानीं तं स्मरामीति प्रत्यभिज्ञा अहमर्थांशे ज्ञानं न स्यात् ज्ञानकारणाजन्यत्वादित्यर्थः। इष्टापत्त्या परिहरति नेति। तर्हि प्रत्यभिज्ञानं तत्तांशेऽपि ज्ञानं न स्यादेकस्यां प्रत्यभिज्ञायां ज्ञानत्वतदभावयोर्विरोधेनायोगादित्यत आह तस्या इति। प्रत्यभि-

त्वापरोक्षत्ववत् प्रमात्वाप्रमात्ववत् च ज्ञानत्वा-ज्ञानत्वयोरपि अविरोधात् इत्याहुः ।

इतरे तु अहमाकारापि वृत्तिः ज्ञानमेव मामहं जानामि इत्यनुभवात् । न च करणासम्भवः अनुभवानुसारेण मनस एव अन्तरिन्द्रियस्य करणत्वस्य अपि कल्पनादित्याहुः ।

---

ज्ञाया इत्यर्थः । अंशभेदेनेति । विषयैकदेशोऽत्र अंशः स च प्रागेव दर्शितः । अहमंश इति तत्तांश इति च परोक्षत्वेति । पर्वतो वह्निमानित्यनुमितेः सिद्धान्ते वह्न्यंशे परोक्षत्वं सन्निकृष्ट-पर्वतांशे त्वपरोक्षत्वमुपेयते मतद्वयसम्मतं दृष्टान्तमाह प्रमा-त्वेति । पूर्वोपदर्शितप्रत्यभिज्ञाया अहमर्थांशेऽपि ज्ञानत्वमुपेय-मन्यथा हि प्रत्यभिज्ञाप्रामाण्येनान्तःकरणोपहितचैतन्य-रूपस्य जीवस्य अहमर्थस्य स्थायित्वसाधनं सूत्रभाष्ययोर्दृ-श्यमानं विरुध्येत तथाच सूत्रम् अनुस्मृतेश्चेति । अनुस्मृतिः प्रत्य-भिज्ञा तथाच तत्सूत्रस्य भाष्यं परावाहं पूर्वेद्युरद्राक्षं स एवाहमद्य स्मरामीति ।

तथाच प्रत्यभिज्ञाया अहमंशे ज्ञानत्वाभावाभिधानम-युक्तमिति मन्यमानानां मतमाह इतरेत्विति अनुभवा-दिति । अहमर्थगोचरवृत्तौ ज्ञानत्वानुभवादित्यर्थः । मनस इति । अतएव वियत्पादे भाष्ये बुद्धेः करणत्वाभ्युपगमा-दिति अतएव चाहङ्कारधर्माणां ज्ञानसुखादीनां केवल-साक्षिभास्यत्वेऽप्यहमर्थरूपस्य मनः प्रति असाधारणविष-यस्य सत्त्वात्तस्येन्द्रियत्वं प्राणपादे चक्षुरादेरिव भाष्यकारैः

सकारणाध्यासनिरूपणम्।

एवं सति बाह्यविषयापरोक्षवृत्तीनामेव आवरणाभिभावकत्वनियमः पर्यवसन्नः। ननु न अयमपि नियमः शुक्तिरजतस्थले इदमाकारवृत्तेरज्ञानानभिभावकत्वात्। अन्यथा उपादानाभावेन रजतोत्पत्त्ययोगादिति चेत् अत्राहुः।

---

एव व्यवस्थापितमिति मन्तव्यम्। केवलसाक्षिभास्यत्वसिद्धान्तोऽपि अत एवाहमर्थव्यतिरिक्ताज्ञानसुखादिमात्रविषय इत्यपि मन्तव्यम्। ननु मनस इन्द्रियत्वपक्षे रूपाद्यक्षे चक्षुरादेरिव तस्याहमर्थे प्रमाणत्वं वाच्यं तच्च न सम्भवति अहमर्थस्य अनावृतसाक्षिचैतन्येऽध्यस्तस्याज्ञातत्वाभावेन मनसः अज्ञातज्ञापकत्वाभावादिति चेत् न, तद्वति तत्प्रकारानुभवत्वमबाधितानुभवत्वं वा प्रमात्वमिति मतानुरोधेनाहमाकारज्ञानस्य प्रमात्वोपपत्तौ तत्करणस्य मनसोऽपि चक्षुरादेरिव प्रमात्वसम्भवादिति भावः।

ननु तर्हि अपरोक्षवृत्तीनामावरणाभिभावकत्वनियमस्य अहमाकारापरोक्षवृत्तौ व्यभिचार इत्याशङ्क्य नियमस्य सङ्कोचं दर्शयति एवं सतीति। अहमाकारापरोक्षवृत्त्युपगमे सति इत्यर्थः। उक्तनियमानाक्षिपति ननु इति। इदं रजतमिति भ्रमस्थले प्रथममिदमाकारापरोक्षवृत्तिरुदेति पश्चादिदं रजतमिति भ्रमो भवति तत्रेदमाकारायाः प्रथमोत्पन्नवृत्तेरज्ञाननिवर्त्तकत्वं नास्ति उतास्ति आद्ये नियमस्य व्यभिचारमाह नायमपीति। यथा अपरोक्षवृत्तिमात्रमज्ञाननिवर्त्तकमिति नियमो नास्ति अहमाकारवृत्तौ

इदमाकारवृत्त्या इदमंशाज्ञाननिवृत्तौ अपि शुक्तित्वादिविशेषांशाज्ञानानिवृत्तेस्तदेव रजतोपादानं शुक्तित्वाद्यज्ञाने रजताध्यासस्य तज्ज्ञाने तदभावस्य अनुभूयमानत्वात्। अध्यासभाष्यटीका विवरणेऽनुभूयमानान्वयव्यतिरेकस्यैव अज्ञानस्य रजताद्यध्यासोपादानत्वोक्तेः। अत एव शुक्त्यंशोऽधिष्ठानम् इदमंश आधारः सविलासाज्ञानविषयोऽधिष्ठानम् अतद्रूपोऽपि तद्रू-

---

व्यभिचारात् तथा वाह्यगोचरा परोक्षवृत्तिमात्रमज्ञाननिवर्त्तकमिति नियमो नास्ति इदमाकारवृत्तौ व्यभिचारादित्यर्थः। द्वितीये बाधकमाह अन्यथेति। इदमाकारवृत्तेरज्ञानाभिभावकत्व इत्यर्थः। इदमाकारवृत्तिनिवर्त्यमज्ञानमन्यत् रजतोपादानभूताज्ञानमन्यत् तथाच न व्यभिचारः न वा रजतोत्पत्त्ययोग इति परिहरति अत्राहुरिति। शुक्तित्वादिविशेषांशावरकाज्ञानमेव रजतोपादानमित्यत्र मानमाह शुक्तित्वाद्यज्ञान इति। नीलपृष्ठत्वादिकमादिपदार्थः। रजतमेवाध्यस्यत इति अध्यास इत्यर्थः। प्रथमतत्पदं विशेषांशपरं द्वितीयतत्पदमध्यासपरं तत्र सम्मतिमाह अध्यासेति। टीका पञ्चपादिका अनुभूयमानावन्वयव्यतिरेकौ यस्येति विग्रहः। ननु पुरोवर्त्तिद्रव्यस्य शुक्तित्वादिविशेषरूपविशिष्टस्य एव रजतकारणाज्ञानावृतत्वाभ्युपगमे तस्यैवाधिष्ठानत्वं स्यात् न तु इदन्त्वरूपविशिष्टस्य इदमंशस्य सविलासाज्ञानविषयस्यैवाधिष्ठानत्वात् तथाचाधि-

षेण आरोप्य बुद्धौ स्फुरन्नाधार इति संक्षेपशारीरके विवेचनादिति।

अपरे तु इदं रजतमिति इदमंशसम्भिन्नत्वेन प्रतीयमानस्य रजतस्येदमंशाज्ञानमेव उपादानं तस्य च इदमाकारवृत्त्या आवरणशक्तिमात्र-

---

ष्ठानारोप्ययोरेकज्ञानविषयत्वनियमाच्छुक्तिरजतमिति भ्रमाकारः स्यात् न स्याच्चेदं रजतमिति प्रतीत्याकारः इदमंशस्याधिष्ठानत्वाभावादित्यत आह अतएवेति। अध्यासोपादानाज्ञानविषयत्वादेवेत्यर्थः। शुक्त्यंश इति। शुक्तित्वविशेषरूपेण पुरोवर्त्तंशवच्छिन्नचैतन्यमित्यर्थः। इदमंशस्याधिष्ठानत्वाभाव इष्टापत्त्याशयेनाह इदमंश इति। ननु तस्याधारत्वे आगतमेवाधिष्ठानत्वं तयोर्भेदाभावादिति न इत्याह सविलासेति। विलासो रजतादिविक्षेपविषयत्वमात्रतत्वमतद्रूपोऽपीति तत्पदमध्यस्तरजतादिपरं तथा च अध्यस्तरजताद्यभेदरहितोऽपि तदभिन्नत्वेन स्फुरन्नित्यर्थः। अधिष्ठानस्य एव आरोपितरजततादात्म्यात् वस्तुगत्या इदमंशस्य अतद्रूपत्वमिति बोध्यम्। अस्मिन्मते अधिष्ठानारोप्ययोरेकज्ञानविषयत्वं नास्ति किन्तु आधारारोप्ययोरेव तदिति न भ्रमस्य शुक्त्यंशोल्लेखापत्तिरिति भावः।

ननु अधिष्ठानारोप्ययोरारोपे प्रकाशमानत्वस्य सम्भावना भाष्यटीकाविवरणादिषु समर्थिता तद्विरोधित्वमाशङ्क्य मतान्तरं तदविरुद्धमाह अपरे त्विति। सम्भिन्नत्वं तादात्म्यमिति यावत्। अज्ञानमेवेति। न तु विशेषांशाज्ञानमित्येवका-

निवृत्तौ अपि विक्षेपशक्त्या सह तदनुवृत्तेर्नोपादानत्वासम्भवः। जलप्रतिबिम्बितवृक्षाधोऽग्रत्वाध्यासे जीवन्मुक्त्यानुवृत्तप्रपञ्चाध्यासे च सर्वात्मना अधिष्ठानसाक्षात्कारानन्तरभाविन्याम् आवरणनिवृत्तौ अपि विक्षेपशक्तिसहिताज्ञानमात्रस्य उपादानत्वसम्प्रतिपत्तेरित्याहुः।

---

रार्थः। विशेषांशस्यारोपे स्फुरणाभावेन तस्याधिष्ठानरूपत्वासम्भवादिति भावः। शुक्तित्वादिरूपविशेषदर्शनस्य अध्यासप्रतिबन्धकत्वात् तदभावविषयौ पूर्वोक्तान्वयव्यतिरेकाविति भावः। ननु इदमाकारवृत्त्या इदमंशाज्ञानस्य निवृत्तत्वात् कथम् इदमंशस्याधिष्ठानत्वमत आह तस्य चेति। इदमंशाज्ञानस्येत्यर्थः। ननु अज्ञानस्यावरणांशमात्रनिवृत्तिर्विक्षेपशक्त्या सह अनुवृत्तिश्च क्वापि न दृष्टा अत आह जलप्रतिबिम्बेति प्रपञ्चेति। जीवन्मुक्तस्यापि अन्तःकरणादिप्रपञ्चप्रतीतेः सत्त्वादिति भावः। सर्वात्मनेति। रजतादिभ्रमस्थले हि सर्वात्मना अधिष्ठानसाक्षात्कारो नास्ति शुक्तित्वादिविशेषरूपेण शुक्तिसाक्षात्काराभावादतस्तत्र इदमंशाज्ञाननिवृत्तावपि विशेषांशाज्ञाननिवृत्त्यभावात् तस्याध्यासोपादानत्वप्रसक्तिरस्ति प्रतिबिम्बभ्रमस्थले तु जले वृक्षो नास्त्येव ऊर्ध्वाग्र एवायं वृक्ष इति सर्वात्मना विशेषदर्शनस्य सत्त्वात् सामान्यांशाज्ञानं निवृत्तं विशेषांशाज्ञानमनिवृत्तमिति विभागासम्भवेन विशेषांशाज्ञानम् उपादानमिति वक्तुमशक्यं तस्मादत्र वृक्षाधोऽग्रत्वाध्यासानुरोधेन एकस्यैव अज्ञानस्य आवरणांशनिवृत्तावपि विक्षेपशक्तिमदज्ञानांशानुवृत्तिरुपेया। तथा

कवितार्किकचक्रवर्त्तिनृसिंहभट्टोपाध्यायास्तु इदं रजतमिति भ्रमरूपवृत्तिव्यतिरेकेण रजतोत्पत्तेः प्रागिदमाकारा वृत्तिरेव नास्तीति तस्या अज्ञाननिवर्त्तकत्वसदसद्भावविचारं निरालम्बनं मन्यन्ते।

तथा हि न तावद् भ्रमरूपवृत्तिव्यतिरेकेण इदमाकारा वृत्तिरनुभवसिद्धा ज्ञानद्वित्वाननु-

---

जीवन्मुक्त्यवस्थायामपि ब्रह्मतत्त्वसाक्षात्कारादौ आवरणमात्रनिवृत्तिः विक्षेपशक्तिमदज्ञानांशानुवृत्तिश्च वाच्या तस्या रजताध्यासस्थलेऽपि इदमंशाज्ञानस्य उपादानत्वं सम्भवतीति भावः। एवं बाह्यगोचरापरोक्षवृत्तीनां सर्वासामेवावरणाभिभावकत्वनियमस्य भ्रमस्थलीयेदमाकारवृत्तौ या व्यभिचारशङ्का सा तत्रापि इदमंशाज्ञाननिवर्त्तकत्वस्य इदमंशावरणमात्रनिवर्त्तकत्वस्य वा सत्त्वादित्युपपादनेन निरस्ता।

इदानीं प्रथममिदमाकारे वृत्तिरेव भ्रमस्थले नास्ति तत्र न व्यभिचारशङ्का तत्समाधाने तु दूरत एव निरस्तेत्याह कवितार्किकेति भ्रमरूपवृत्तीति। पूर्वमतद्वये इदमाकारवृत्तिसत्त्वात् तदभिव्यक्तचैतन्यरूपमेव शुक्तिरजतादिज्ञानं न तु वृत्तिरूपम् अस्मिन्मते तु तदभावाद्वृत्तिरूपमेव तज्ज्ञानमिति मन्तव्यम्। एतच्चाग्रे स्फुटं भविष्यति।

धर्मिज्ञानरूपामिदमाकारवृत्तिं निराकरोति तथा हि इत्यादिना। सा किमनुभवसिद्धा उत कार्य्यकल्प्या अथवा सामग्रीकल्प्या नाद्य इत्याह न तावदिति ज्ञानद्वित्वेति। इद-

भवात्। नापि अधिष्ठानसामान्यज्ञानम् अध्यास-कारणमिति कार्य्यकल्प्या तस्याः तत्कारणत्वे मानाभावात्।

न च अधिष्ठानसम्प्रयोगाभावे रजताद्यनुत्पत्तिस्तत्र मानं ततो दुष्टेन्द्रियसम्प्रयोगस्यैव अध्यासकारणत्वप्राप्तेः।

---

मित्येकं ज्ञानमिदं रजतमिति ज्ञानमपरमित्यनुभवाभावादित्यर्थः। द्वितीयं निराकरोति नापि अधिष्ठानेति। अध्यासरूपं कार्य्यं स्वकारणमधिष्ठानगोचरसामान्यज्ञानमन्तरेणानुपपद्यमानं सत् तत् कल्पयति ततश्च अधिष्ठानसामान्यज्ञानरूपा इदमाकारा वृत्तिः सिध्यतीत्यपि न मन्तव्यम्। अधिष्ठानसामान्यज्ञानस्याध्यासकरणत्वे मानाभावादित्यर्थः।

मानाभावोऽसिद्ध इति शङ्कते न चेति। इदमर्थस्य चक्षुःसंयोगे सति रजतादिरूपस्याध्यासस्योत्पत्तिर्नान्यथेत्यनुभवसिद्धम्। तथा च उक्तान्वयव्यतिरेकाभ्यामधिष्ठानसामान्यज्ञानस्य रजताद्यध्यासं प्रति कारणत्वं सिध्यति न च उक्तान्वयादिना सम्प्रयोगस्यैव अध्यासकारणत्वं सिध्यति न धर्मिज्ञानस्येति वाच्यम्। तथा सति अहङ्काराद्यध्यासे सम्प्रयोगासम्भवेन व्यभिचारापत्तेः अतः संप्रयोगस्याध्यासं प्रति कारणत्वग्राहकाभ्यामेवान्वयव्यतिरेकाभ्यां शुक्तिरजताद्यध्यासस्थले धर्मिज्ञानस्यैव सम्प्रयोगसाध्यस्य कारणत्वं कल्प्यते। तथा च अधिष्ठानसामान्यज्ञानस्याध्यासकारणत्वे उक्तावन्वयव्यतिरेकौ प्रमाणं भवत एवेति गूढाभिसन्धिः। अभिसन्धिमज्ञात्वा दूषयति तत इति। उक्तान्वयादित इत्यर्थः। संप्रयोगमात्रस्य प्रमास्थलसाधारणत्वात् दुष्टेत्युक्तम्।

न च सम्प्रयोगो न सर्वत्रभ्रमव्यापि अधिष्ठान-स्फुरणं तु स्वतः प्रकाशमाने प्रत्यगात्मनि अहङ्कारा-राद्यध्यासमपि व्याप्नोति इति वाच्यम्।

तस्यापि घटाद्यध्यासाव्यापित्वात्। घटादि-प्रत्यक्षात् प्राक् तदधिष्ठानभूतनीरूपब्रह्ममात्र-गोचरचाक्षुषवृत्त्यसम्भवात्। स्वरूपप्रकाशस्य आवृतत्वात्।

---

धर्मिज्ञानकारणवादी स्वाभिसन्धिमाविष्करोति न च सम्प्रयोग इति। अधिष्ठानसामान्यज्ञानस्य संप्रयोगस्येव न व्यभिचार इत्याह अधिष्ठान स्फुरणन्त्विति। संप्रयोगवैलक्षण्य-स्यार्थस्तु शब्दः अधिष्ठानस्फुरणकर्तृ शुक्तिरजताद्यध्यासमिव अहङ्काराद्यध्यासमपि व्याप्नोतीत्यर्थः। स्वत इति वाह्य-चैतन्यस्यावृतत्वात् वृत्तिकृतं तत्र अधिष्ठानस्फुरणं साक्षि-चैतन्यस्यानावृतत्वात् अहङ्काराद्यध्यासे स्वप्नप्रपञ्चाद्यध्यासे च तत् स्वतः सिद्धमित्यर्थः।

अधिष्ठानसामान्यज्ञानस्य अपि व्यभिचारमाह तस्यापीति। उक्तज्ञानं तच्छब्दार्थः। घटाद्यध्यासव्यापित्वाभावादित्यर्थः। तथा च धर्मिज्ञानं नाध्यासकारणमिति भावः। अव्यापित्व-शब्दितं व्यभिचारमुपपादयति घटादीत्यादिना। घटाद्यध्यास-स्थले शुक्तिरजताद्यध्यासस्थल इव किं वृत्तिकृतमधिष्ठानस्फुर-णम् अहङ्काराद्यध्यासस्थल इव स्वतः सिद्धं वा नाद्य इत्याह। घटादिप्रत्यक्षादिति। तत्पदं घटादिपरं न द्वितीय इत्याह स्वरूपेति।

आवृतानावृतसाधारण्येन अधिष्ठानप्रकाशमात्रस्य अध्यासकारणत्वे शुक्तीदमंशसंयोगात् प्रागपि तदवच्छिन्नचैतन्यस्वरूपप्रकाशस्य आवृतस्य सद्भावेन तदापि अध्यासापत्तेः।

न च अध्याससामान्येऽधिष्ठानप्रकाशसामान्यं हेतुः प्रातिभासिकाध्यासेऽभिव्यक्ताधिष्ठानप्रकाश इति न अतिप्रसङ्गः सामान्ये सामान्यस्य विशेषे विशेषस्य हेतुत्वौचित्यादिति वाच्यम्।

---

ननु अधिष्ठानप्रकाशमात्रम् अध्यासे कारणं लाघवान्न तु अभिव्यक्ताधिष्ठानप्रकाशः तथा च सन् घटः सन् पट इत्यादिरूपेषु अध्यासेषु घटाद्यधिष्ठानस्य सद्रूपस्य ब्रह्मणः स्वप्रकाशत्वादधिष्ठानप्रकाशमात्रं तत्रापि अस्तीति न व्यभिचार इत्याशङ्क्याह आवृतानावृतेति तदापीति। संप्रयोगात् प्राक्कालेऽपि इत्यर्थः।

धर्मिज्ञानकारणवादी शङ्कते न चाध्याससामान्य इति प्रातिभासिक इति। अभिव्यक्ताधिष्ठानस्फुरणं प्रतिभासिकाध्यासेषु एव कारणमाचार्य्याणामभिप्रेतम् तेषु एव दोषसंप्रयोगसंस्काररूपकारणत्रयजन्यताया अध्यासटीकाविवरणादिषु व्यवस्थापितत्वेन संप्रयोगकारणताग्राहिकप्रमाणलभ्याधिष्ठानापरोक्षस्य तेषु एव कारणत्वसिद्धेरित्यर्थः। प्रकाशपदानन्तरं हेतुपदमनुषञ्जनीयं नातिप्रसङ्ग इति न संप्रयोगात् प्राक् रजताद्यध्यासप्रसङ्ग इत्यर्थः। रजताद्यध्यासस्य प्रातिभासिकत्वेन तदधिष्ठानापरोक्षाय संप्रयोगाधीनवृत्तेरपेक्षितत्वादिति भावः।

एवमपि प्रातिभासिकशङ्खपीतिमकूपजल-नैल्याद्यध्यासाव्यापनात्। रूपानुपहितचाक्षुष-प्रत्ययायोगेन तदानीं शङ्खादिगतशौक्ल्योपलम्भा-भावेन च अध्यासात् प्राक् शङ्खादिनीरूपाधिष्ठान-गोचरवृत्त्यसम्भवात्।

---

औचित्यादिति। तथा च धर्मिज्ञानस्याध्यासकारणत्वे संप्रयोगकारणताग्राहकान्वयादेः प्रमाणस्य सत्त्वात् बाधकाभावाच्च तस्याध्यासकारणत्वसिद्धौ इतिदमाकारा वृत्तिः सिद्धेति भावः। अभिव्यक्ताधिष्ठानप्रकाशस्य प्रातिभासिकाध्यासेषु अपि सर्वत्र व्याप्तिर्नास्तीति कवितार्किकमतानुवर्त्ती दूषयति एवमपीति। अधिष्ठानापरोक्षस्य प्रातिभासिकाध्यासमात्रहेतुत्वे स्वीकृतेऽपि इत्यर्थः। धर्मिज्ञानकारणवादे हि प्रथममिदमित्येवमाकारा वृत्तिरुदेति तथा च वृत्त्याभिव्यक्ते शङ्खजलाद्यवच्छिन्नचैतन्ये पीतनीलरूपादेरध्यास इति प्रक्रिया। तथा च तत्रेदमाकारा वृत्तिः किं शङ्खादिद्रव्यमात्रं विषयीकरोति किंवा रूपविशिष्टं द्रव्यं नाद्य इत्याह रूपानुपहितेति। रूपाविषयकद्रव्यचाक्षुषवृत्तिः न सम्भवति इतरथा वाय्वादेरपि चाक्षुषत्वापत्तेरिति भावः। द्वितीयेऽपि किं शुक्लरूपविशिष्टद्रव्यं विषयीकरोति किं वा आरोप्यरूपविशिष्टं न द्वितीयः आरोप्यरूपविशिष्टशङ्खादिवृत्तेरेव भ्रान्तित्वेन तस्या धर्मिज्ञानत्वाभावानाद्य इत्याह। तदानीमिति। अध्यासात् पूर्वकाल इत्यर्थः। तदानीं शौक्ल्योपलम्भे च अध्यासाभावप्रसङ्गादिति भावः। असम्भवादिति। तथा च अभिव्यक्ताधिष्ठानस्फुरणस्य तत्र अस-

न च प्रातिभासिकेषु अपि रजताध्यासमात्रे निरुक्तो विशेषहेतुरास्तामिति वाच्यम्। तथा सति सम्प्रयोगात् प्राक् पीतशङ्खाद्यध्यासाप्रसङ्गाय तदध्यासे दुष्टेन्द्रियसम्प्रयोगः कारणमित्यवश्यं वक्त-

---

व्यत्वात् व्यभिचारेण धर्मिज्ञानं नाध्यासकारणमिति भावः। ननु अध्यासात् पूर्वं द्रव्यमात्ररूपेण शङ्खादिगोचरा चाक्षुषवृत्ति-रुदेत्येव द्रव्यगोचरचाक्षुषवृत्तौ रूपविषयकत्वनियमस्याप्रयोजकत्वात् न चैवं वाय्वादेरपि चाक्षुषत्वप्रसङ्गः। द्रव्यचाक्षुषे द्रव्यगतोद्भूतरूपस्य नियामकत्वादध्यासात् पूर्वकाले द्रव्यग्रहणेऽपि शुक्तित्वादेरिव दोषबलात् सन्निकृष्टस्यापि शुक्लरूपमात्रस्याग्रहणोपपत्तेश्च। तदुक्तं भामत्यां शङ्खश्च दोषाच्छादितशुक्लिमा न द्रव्यमात्रस्वरूपं गृहीत्वेति शुक्लिमा शुक्लरूपमित्यर्थः। अस्तु वा तत्र शुक्लरूपविशिष्टशङ्खादिग्रहणं तथापि नाध्यासानुपपत्तिर्दोषबलेन रूपगतशुक्लत्वजातिग्रहणप्रतिबन्धमात्रेण अपि तदुपपत्तेस्तथा च प्रातिभासिकाध्यासेषु अभिव्यक्ताधिष्ठानस्फुरणस्य व्यभिचाराभावात् धर्मिज्ञानरूपा इदमाकारा वृत्तिः सिद्धा भवति तत्सिद्धौ च तस्यामावरणनिवर्त्तकत्वसदसद्भावादिचिन्ता सालम्बनैवाचार्य्याणां न निरालम्बनेति चेत् सत्यमस्मिन् मते अयमेवास्वरसः उपाध्याया मन्यन्ते इत्यनेन सूचितः।

पीतशङ्खादिभ्रमस्थले वस्तुतो व्यभिचाराभावेऽपि तमभ्युपगम्य धर्मिज्ञानकारणवादो शङ्कते न च प्रातिभासिकेषु अपि इति निरुक्त इति। अभिव्यक्ताधिष्ठानप्रकाश इत्यर्थः। तथा सतीति। पीतशङ्खाद्यध्यासेषु अभिव्यक्ताधिष्ठानप्रकाशस्य

व्यतया तस्यैव सामान्यतः प्रातिभासिकाध्यास-
मात्रे लाघवात् कारणत्वसिद्धौ तत एव रजता-
ध्यासकादाचित्कत्वस्यापि निर्वाहात् अधिष्ठान-
प्रकाशस्य सामान्यतो विशेषतो वा अध्यासका-
रणत्वस्य असिद्धेः।

---

हेतुत्वानुपगम इत्यर्थः। अधिष्ठानापरोक्ष्यवत् संप्रयोगस्य अपि पीतशङ्खाद्यध्यासेषु कारणत्वानुपगमे संप्रयोगात् प्रागपि पीतशङ्खाद्यध्यासप्रसङ्गः। अतस्तत्परिहाराय तत्र संप्रयोगस्य कारणत्वमवश्यं वाच्यमित्यर्थः। ततः किं तत्राह तस्यैवेति। दुष्टेन्द्रियसंप्रयोगस्यैव इत्यर्थः। सामान्यत इत्युक्तं सामान्यमेव दर्शयति प्रातिभासिकाध्यासमात्र इति। प्रातिभासिकाध्यासत्वमेव दुष्टेन्द्रियसंप्रयोगकार्य्यतावच्छेदकं लाघवात् न तु पीतशङ्खाद्यध्यासत्वं गौरवादित्यर्थः। ततोऽपि किं तत्राह तत एवेति। संप्रयोगात् प्राक् पीतशङ्खाद्यध्यासप्रसङ्गपरिहाराय तत्र सामान्यतः क्लृप्तात् दुष्टेन्द्रियसंयोगादेवेत्यर्थः। कादाचित्कत्वस्यापीति। सदा रजताध्यासप्रसङ्गपरिहारायाभिव्यक्ताधिष्ठानप्रकाशस्य रजताद्यध्यासकारणत्वं वाच्यम्। तथा सति शुक्त्यवच्छिन्नचैतन्यरूपस्य अधिष्ठानप्रकाशस्यावृततया सदा तदभिव्यक्तेरभावेन सदा रजताद्यध्यासप्रसङ्गपरिहारोपपत्तेरिति हि धर्मिज्ञानकारणवादिनस्तवाभिप्रायः। स च अतिप्रसङ्गपरिहारः पीतशङ्खाद्यध्यासस्थले क्लृप्तात् सम्प्रयोगादेव लभ्यत इत्यर्थः। सामान्यत इति। अधिष्ठानप्रकाशमात्रमध्यास-मात्रे कारणमभिव्यक्ताधिष्ठान-प्रकाशः

ननु च सादृश्यनिरपेक्षेऽध्यासान्तरेऽकारणत्वेऽपि तत्सापेक्षे रजताद्यध्यासे रजतादिसादृश्यभूतरूपविशेषादिविशिष्टधर्मिज्ञानरूपम् अधिष्ठानसामान्यज्ञानं कारणम् अवश्यं वाच्यम्।

---

प्रातिभासिकाध्यासे कारणमिति पूर्वोक्तं कार्यकारणभावद्वयमपि न सिध्यतीत्यर्थः। ननु तस्यैव सामान्यतः प्रातिभासिकाध्यासमात्रे लाघवात् कारणत्वसिद्धौ इत्ययुक्तमहङ्काराद्यध्यासे साक्षिचैतन्ये स्वप्नाध्यासे च सम्प्रयोगासम्भवेन व्यभिचारात् न च अहङ्काराद्यध्यासस्य व्यावहारिकत्वमते तत्र व्यभिचारो न दोष इति वाच्यम्। तथापि तत्प्रातिभासिकत्वमते दोषपरिहारासम्भवात् साक्षिणि स्वप्नाध्यासे प्रातिभासिकत्वस्य सम्प्रतिपन्नतया तत्रोक्तव्यभिचारस्य दृढत्वाच्च न च स्वप्नाद्यध्यासेऽभिव्यक्ताधिष्ठानस्फुरणं कारणमन्यथा स्वप्नप्रपञ्चस्यापरोक्षाभावप्रसङ्गात् बाह्यप्रातिभासिकाध्यासे तु दुष्टेन्द्रियसंप्रयोगः कारणमिति न तस्य व्यभिचार इति वाच्यम्। प्रातिभासिकाध्यासमात्रे त्वदुक्तलाघवेनाभिव्यक्ताधिष्ठान-प्रकाशस्य कारणत्वौचित्यात् बाह्याध्यासेषु संप्रयोगस्याधिष्ठानचैतन्याभिव्यञ्जकवृत्त्युत्पादकतया चरितार्थसम्भवाच्च। पीतशङ्खाद्यध्यासस्थलेऽपि अधिष्ठानचैतन्याभिव्यञ्जकवृत्तिसम्भवस्य दर्शितत्वाच्चेति चेत् सत्यं सूक्ष्मदृष्ट्या विचार्यमाणे एवमेव स्थूलदृष्ट्या तु संप्रयोगस्य लाघवात् प्रातिभासिकाध्यासमात्रे कारणत्वमुक्तमिति मन्तव्यम्।

शुक्तिरजताद्यध्यासात् प्रागिदमाकारवृत्तिसिद्धये प्रकारान्तरेण धर्मिज्ञानस्य कारणत्वं प्रकृते ननु च सादृश्येति।

दुष्टेन्द्रियसम्प्रयोगमात्रस्य कारणत्वे शुक्तिवदिङ्गालेऽपि तद्रजताध्यासप्रसङ्गात्।

न च सादृश्यमपि विषयदोषत्वेन कारणमिति वाच्यम्। विसदृशेऽपि सादृश्यभ्रमे सति अध्याससद्भावात् जलधिसलिलपूरे दूरे नीलशिलारोपदर्शनात्।

---

अध्यासान्तर इति पीतशङ्खाद्यध्यास इत्यर्थः। शङ्खादेः पीतरूपादेश्च सादृश्याभावादिति भावः। तत्पदं सादृश्यपरं रजतादिना सह शुक्त्यादेः सादृश्यभूतो यो रूपविशिष्टादिस्तद्विशिष्टधर्मीत्यर्थः। स्थाण्वादौ पुरुषाद्यध्यासापेक्षितमूर्द्धत्वादिकमादिपदार्थः। संप्रयोगमात्रेति सादृश्यानापेक्षायामिति मात्रपदार्थः। अग्निदग्धं नीलरूपवत् काष्ठमिङ्गालशब्दार्थः।

ननु अपेक्षितमपि सादृश्यं स्वरूपसदेवाध्यासकारणं तावता उक्तातिप्रसङ्गनिरासान्न ज्ञातं सत् तत्कारणं तथा च न धर्मिज्ञानस्य कारणत्वसिद्धिरिति मत्वा शङ्कते न च सादृश्यमपीति। स्वरूपसत्कारणत्वे सादृश्यभ्रमादध्यासो न स्यात् सादृश्यभ्रमस्थले स्वरूपसतः सादृश्यस्याभावात् अतः सादृश्यज्ञानं भ्रमप्रमासाधारणमध्यासकारणं वाच्यमिति तद्विशिष्टधर्मिज्ञानसिद्धिरिति। धर्मिज्ञानकारणवादी परिहरति विसदृशेऽपीति। तत्रोदाहरणमाह जलधिसलिलपूर इति। प्रवाहः पूरशब्दार्थः जलस्य वस्तुतः शुक्लरूपवत्त्वात् नीलशिला-

न च तद्धेतोरेवेति न्यायात् सादृश्यज्ञानसामग्र्येव अध्यासकारणमस्तु इति युक्तम्। ज्ञानसामग्र्या अर्थकारणत्वस्य क्वचिदप्यदृष्टेः।

ततः सादृश्यज्ञानत्वस्यैव लघुत्वाच्च। न च स्वतः शुभ्रेऽपि शुभ्रकलधौतभृङ्गारगतेऽपि स्वच्छे जले एव नैल्याध्यासः न मुक्ताफले इति

---

तलसादृश्यं नास्ति अतः सादृश्यभ्रमात् नीलशिलातलत्वारोप इति भावः। ननु धर्मिज्ञानकारणतापक्षेऽपि तत्सामग्रीत्वेन दुष्टेन्द्रियसंप्रयोगोऽवश्यं वाच्यः। तथा च आवश्यकत्वादध्यासविशेषकारणतावच्छेदकं सादृश्यज्ञानसामग्रीत्वमेव न तु सादृश्यज्ञानत्वम्।

ततश्च न धर्मिज्ञानसिद्धिरित्याशयेन इङ्गाले रजताध्यासप्रसङ्गं विस्मृत्य शङ्कते न च तद्धेतोरेवेति। तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किं तेनेति न्यायादित्यर्थः। धर्मिज्ञानवादी निराकरोति ज्ञानसामग्र्या इति। धर्मिज्ञानकारणतामते हि धर्मिज्ञानं रजतादिरूपार्थोत्पत्तौ कारणमिष्यते तथा च तद्धेतोरेवेति न्यायेन धर्मिज्ञानसामग्रीभूतसंप्रयोगस्य कारणत्वमुच्यमानं रजताद्यर्थोत्पत्तावेव भवेत् तच्च न सम्भवति संनिकर्षस्य ज्ञान इव विषयोत्पत्तौ कारणतायाः क्वचिदप्यक्लृप्तत्वादित्यर्थः।

तत इति। सादृश्यज्ञानसामग्रीत्वापेक्षया सादृश्यज्ञानत्वस्यैव कारणतावच्छेदकत्वे लाघवादित्यर्थः। तथा च धर्मिज्ञानसिद्धिरिति भावः। सादृश्यज्ञानस्याध्यासविशेषे कारणत्वाभावेऽपि व्यवस्थासम्भवात् न धर्मिज्ञानसिद्धिरिति मत्वा

व्यवस्थावद् वस्तुस्वभावादेव शुक्तौ रजताध्यासो नेङ्गालादौ इति व्यवस्था न तु सादृश्यज्ञानापेक्षत्वादिति वाच्यम्।

स्वतः पटखण्डे पुण्डरीकमुकुलत्वानध्यासेऽपि तत्र एव कर्त्तनादिघटिततदाकारे तदध्यासदर्शनेन तदध्यासस्य वस्तुस्वभावम् अननुरुध्य सादृश्यज्ञानभावाभावानुरोधित्वनिश्चयात्।

---

पुनः शङ्कते न च स्वत इति। जलस्य मुक्ताफलस्य च नैल्येन सादृश्याभावे समानेऽपि जल एव नैल्याध्यासो दृश्यते न मुक्ताफल इति व्यवस्थायां जलादिवस्तुस्वभाव एव हेतुर्नान्य इत्यर्थः। ननु पात्रगतनैल्यसन्निधानं जले तदध्यासे नियामकं न स्वभाव इत्यत आह शुभ्रकलधौतेति। निर्मलसौवर्णपात्रविशेषगतेऽपि इत्यर्थः। ननु एवमपि जलगतनीलरूपवत् द्रव्यसंसर्गात् तत्रैव तदध्यास इति नेत्याह स्वतः शुभ्रेऽपीति। जलविशेषणं स्वतः शुभ्रपदव्याख्यानं स्वच्छ इति पदम्। एवं क्वचित् स्वभावस्यैवाध्यासप्रयोजकत्वे क्लृप्ते फलितमाह वस्तुस्वभावादेवेति। उक्तपीतशङ्खाद्यध्यास इव भृङ्गारादिगतजले नैल्याध्यासे सादृश्यज्ञानानपेक्षत्वेऽपि पुण्डरीकमुकुलत्वाध्यासे तदपेक्षाया अन्वयव्यतिरेकसिद्धत्वेन तद्वच्छुक्तिरजताध्यासेऽपि सादृश्यज्ञानभावाभावाभ्यामेव व्यवस्था न तु वस्तुस्वभावादगतिकगतित्वात् वस्तुस्वभावाश्रयणस्य।

तथा च धर्मिज्ञानकारणतासिद्धिरप्रत्यूहेति मत्वा दूषयति स्वतः पटखण्ड इति। पुण्डरीकस्य कमलस्य या

अन्यथा अन्यदापि तत्र तदध्यासप्रसङ्गात्।

उच्यते। सादृश्यज्ञानस्य अध्यासकारणत्ववादेऽपि विशेषदर्शनप्रतिबध्येषु रजताद्यध्यासेषु एव तस्य कारणत्वं वाच्यं न तु तदप्रतिबध्येषु पीतशङ्खाद्यध्यासेषु असम्भवात्।

विशेषदर्शनप्रतिबध्येषु च प्रतिबन्धकज्ञानसामग्र्याः प्रतिबन्धकत्वानियमेन विशेषदर्शन-

---

मुकुलत्वावस्था तस्या अनध्यासेऽपि इत्यर्थः। तत्र एव पटखण्ड एव। कर्त्तनादिना घटितः सम्पादितः तदाकारः पुण्डरीकमुकुलत्वाकारो यस्य पटखण्डस्य स तथा तस्मिन् इत्यर्थः। तदध्यासेति पुण्डरीकमुकुलत्वाध्यास इत्यर्थः। तदध्यासस्य अनुरोधित्वनिश्चयादिति सम्बन्धः।

अन्यथेति। वस्तुस्वभावस्यैव तदध्यासकारणत्व इत्यर्थः। अन्यदापीति कर्त्तनादिना तदाकारसम्पादनात् प्रागपि इत्यर्थः। ननु सादृश्यनिरपेक्षेऽध्यासान्तरे अकारणत्वेऽपि इत्यादिना प्राप्तं सादृश्यज्ञानस्याध्यासविशेषे कारणताप्रसाधनद्वारा धर्मिज्ञानस्य कारणत्वमावश्यकमिति पूर्वपक्षं कतिवतार्किकमतानुवर्त्ती निराकरोति उच्यत इत्यादिना न तु इति। पीतत्वाभावव्याप्यशङ्खत्ववान् अयं नैल्याभावव्याप्यजलत्ववदिदमित्यादिरूपविशेषदर्शनाप्रतिबद्धेषु इत्यर्थः। उक्तविशेषदर्शने सत्यपि पीतः शङ्खः नीलं जलमित्यध्यासदर्शनादिति भावः। असम्भवादिति वस्तुतः सादृश्यस्य तस्य तत्र असम्भवात् पुण्डरीकमुकुलत्वभ्रमवत् सादृश्यज्ञानानानुरोधित्वाच्च इत्यर्थः।

सामग्री अवश्यं प्रतिबन्धिका वाच्येति तत एव सर्वव्यवस्थोपपत्तेः किं सादृश्यज्ञानस्य कारणत्वकल्पनया। तथा हि।

इङ्गालादौ चक्षुःसम्प्रयुक्ते तदीयनैल्यादिरूपविशेषदर्शनसामग्रीसत्त्वान्न रजताध्यासः। शुक्त्यादौ अपि नीलभागादिव्यापिचक्षुःसंप्रयोगे तत्

---

ततः किं तत्राह विशेषदर्शनप्रतिबध्येषु चेति। प्रतिबन्धकसामग्र्याः प्रतिबन्धकत्वे दाहप्रतिबन्धकमण्यादिसामग्र्या दाहप्रतिबन्धकत्वप्रसङ्गः। तद्वारणाय ज्ञानपदं मण्यादेः प्रतिबन्धकज्ञानत्वाभावान्नातिप्रसङ्गः। ज्ञानसामग्र्याः प्रतिबन्धकत्वोक्तौ धर्मिज्ञानसामग्रीभूतसंप्रयोगस्याध्यासप्रतिबन्धकत्वप्रसङ्गः तद्वारणाय प्रतिबन्धक इति ज्ञानविशेषणम्। धर्मिज्ञानस्य च अध्यासानुगुणत्वेन प्रतिबन्धकज्ञानत्वाभावान्नोक्तातिप्रसङ्गः। तथा च पक्षे साध्याभाववत्ताज्ञानं ग्राह्याभावावगाहित्वादनुमितिं प्रति साक्षात् प्रतिबन्धकं तत्र साध्याभावव्याप्यवत्ताज्ञानं प्रतिबन्धकज्ञानसामग्रीत्वेनानुमितिप्रतिबन्धकमिति व्यवस्था प्रसिद्धेत्यर्थः। तत एव वेति। प्रतिबन्धकज्ञानसामग्र्याः प्रतिबन्धकत्वस्वीकारादेव इत्यर्थः। किमिति। तथा च धर्मिज्ञानरूपा इदमाकारा वृत्तिर्न सिध्यति इति भावः।

सादृश्यज्ञानस्य अकारणत्वे पूर्वोक्तातिप्रसङ्गं परिहरति इङ्गालादाविति। इङ्गालगतनैल्यादिर्विशेषः। तद्दर्शनसामग्री च चक्षुःसंयुक्तेङ्गालतादात्म्यरूपा अत्रास्तीति बोध्यम्।

सत्त्वान्न तदध्यासः सदृशभागमात्रसंप्रयोगे तद-भावादध्यासः। तदा अपि शुक्तित्वरूपविशेषदर्शनसामग्रीसत्त्वात् अनध्यासप्रसङ्ग इति चेन्न। अध्याससमये शुक्तित्वदर्शनाभावेन तत्पूर्वं तत् सामग्र्यभावस्य त्वया अपि वाच्यत्वात्।

---

नीलभागादीति त्रिकोणभागसंग्रहार्थमादिपदं तत्सत्त्वादिति विशेषदर्शनसामग्रीसत्त्वादित्यर्थः। न तदिति। तत् पदं रजतादिपरं ननु यदि शुक्तिसंप्रयोगकाले रजताध्यासाभावस्तर्हि संप्रयोगोऽप्यध्यासकारणं न स्यादिति न इत्याह सदृशभागमात्रेति तदभावादिति। नैल्यादिदर्शनसामग्र्य-भावादित्यर्थः। शङ्कते तदापीति। सदृशभागमात्रसंप्रयोग-कालेऽपि इत्यर्थः। अनध्यासप्रसङ्ग इति। तथा चाध्यासाभाव-प्रसङ्गपरिहाराय सादृश्यज्ञानं दोषत्वेनाध्यासकारणं वाच्यं ततश्च उक्तदोषरूपप्रतिबन्धकसत्त्वादप्रतिबद्धाशुक्तित्वदर्शनसा-मग्री नास्ति अतो रजताद्यध्यास उपपद्यत इति धर्मिज्ञान-कारणवादिनोऽभिसन्धिः। अनध्यासप्रसङ्गं परिहर्त्तुम् उभय-सम्मतमर्थं धर्मिज्ञानापलापी दर्शयति न इत्यादिना त्वयापीति। सादृश्यज्ञानकारणतावादिनोऽपि इत्यर्थः। वाच्यत्वादिति। सदृशभागमात्रसंप्रयोगकाले शुक्तित्वदर्शनसामग्र्यां चक्षुःसंयुक्त-तादात्म्यलक्षणायां सत्यामप्यध्यासदर्शनेन तदनुरोधात् शुक्तित्व-रूपविशेषदर्शनसामग्र्याः प्रतिबन्धको दोषोऽवश्यं वाच्य इति तावत्सत्यं स च दोषो।न सादृश्यज्ञानं किन्तु दूरत्वादि-रेवातो दोषत्वेनापि न सादृश्यज्ञानमध्यासकारणमिति न धर्मिज्ञानसिद्धिरिति तदपलापिनोऽप्यभिसन्धिः।

मम सादृश्यज्ञानरूपाध्यासकारणदोषेण प्रतिबन्धात् तदा शुक्तित्वदर्शनसामग्र्यभावाभ्युपगमः। तव तथाभ्युपगमे तु घट्टकुटीप्रभातवृत्तान्त इति चेद् न। समीपोपसर्पणानन्तरं रजतसादृश्यरूपे चाकचक्ये दृश्यमान एव शुक्तित्वोपलम्भेन तस्य तत् सामग्रीप्रतिबन्धकत्वासिद्धौ दूरत्वादिदोषेण प्रतिबन्धात् वा व्यञ्जकनीलपृष्ठत्वादिग्राहकासमवधानात् वा तत्सामग्र्यभावस्य वक्तव्यत्वात्।

---

धर्मिज्ञानवादी स्वाभिसन्धिमुद्घाटयन् आशङ्कते ममेति तवेति। धर्मिज्ञानापलापे प्रवृत्तस्य कवितार्किकमतानुवर्त्तिन इत्यर्थः। सादृश्यज्ञानस्य अध्यासकारणत्वं त्वदनिष्टं दूरगतस्यापि तव प्रसज्येतेति भावः। धर्मिज्ञानापलापवाद्यपि स्वाभिसन्धिमुद्घाटयन् अनध्यासप्रसङ्गं परिहरति न इत्यादिना। तस्येति सादृश्यदर्शनस्य इत्यर्थः। तत्सामग्रीति शुक्तित्वदर्शनसामग्रीत्यर्थः। रजतरागादिदोषसंग्रहार्थमादिपदं ननु दूरस्थस्यापि पुंसः कदाचिच्छुक्तौ शुक्तिप्रमायाः दर्शनेन दूरत्वस्यापि सादृश्यज्ञानस्य एव व्यभिचारस्तुल्यः तथा रजते रागवतोऽपि समीपोपसर्पणानन्तरं शुक्तिप्रदर्शनेन तस्यापि व्यभिचारस्तुल्यः। तथाच दूरत्वादेरपि दोषत्वं न स्यात् यदि च क्वचिदध्यासे कदाचित् कश्चिद्दोष इति रीत्या दूरत्वादेर्दोषत्वेनाध्यासकारणत्वं समर्थ्यते तदा ज्वालादौ

एवं जलधिजले नियतनीलरूपाध्यासप्रयो-जकदोषेण दूरे नीरत्वव्यञ्जकतरङ्गादिग्राहकास-

---

सादृश्यज्ञानरूपेणैव दोषेण सेयं दीपज्वालेत्यादि भ्रमस्य सर्वानुभवसिद्धतया तस्यापि कदाचिद्रजताध्यासादौ दोषत्वेन कारणत्वं दुर्वारं सादृश्यज्ञानस्य दोषत्वं भाष्यसम्मतञ्च तथाच देवताधिकरणे भाष्यं सादृश्यात् प्रत्यभिज्ञानं केशादिष्विवेति। तथा बौद्धाधिकरणेऽपि सादृश्यनिमित्तप्रतिसन्धानमिति। प्रतिसन्धानं प्रत्यभिज्ञानं तथाच सादृश्य ज्ञानस्य दोषत्वेना-ध्यासकारणत्वमत निराकरणमयुक्तमिति चेत् सत्यं तथापि स्थूलबुद्धिमाश्रित्येदमिति ध्येयम्। सहकार्य्यभावात् सामग्र्यभाव-माह व्यञ्जकेति शुक्तित्वव्यञ्जक इत्यर्थः। ग्राहकपदं नील-भागव्यापि चक्षुःसंप्रयोगपरं तत्सामग्रीति शुक्तित्वविशेषदर्शन-सामग्र्यभावयोभाभ्यां वक्तव्यत्वादित्यर्थः।

शुक्तिरजतभ्रमस्थलोक्तन्यायमन्यत्रापि योजयति एव-मिति। सादृश्यज्ञानरूपदोषं विना रजताध्यासवन्नीलशिला-तलत्वाद्यध्यासः सम्भवतीत्यर्थः। जले नीलशिलातलत्वा-ध्यासे हि शुक्लरूपात्मकविशेषदर्शनं जलराशित्वादिरूप-विशेषदर्शनं च प्रतिबन्धकं ततः शुक्लरूपादिदर्शनसामग्र्यपि तत्र प्रतिबन्धिका तथा च प्रतिबन्धकज्ञानसामग्र्यभावादेव नीलशिलातलत्वारोपः। ननु प्रथमं जले नैल्याध्यासेन सादृश्यज्ञानसम्पत्तौ सत्यां तद्दोषान्नीलशिलातलत्वाध्यास इत्यर्थः। ननु जलधिसलिलपूरशुक्लरूपात्मकविशेषदर्शन-सामग्र्याभावोऽसिद्धः तत्र नीलशिलातलत्वारोपात्पूर्वकाले चक्षुःसंयुक्ते जले शुक्लरूपस्य तादात्म्याभ्युपगमेन चक्षुः-

अवधानेन च शौक्ल्यजलराशित्वादिविशेषदर्शनसामग्र्यभावात् शिलातलत्वाद्यध्यासः।

विस्तृते पटे परिणाहरूपविशेषदर्शनसामग्री-

---

संयुक्ततादात्म्यरूपसन्निकर्षस्य आलोकादेश्च सत्त्वात्तथा तलराशित्वादिरूपविशेषदर्शनसामग्र्यभावोऽप्यसिद्धः। जलराशित्वव्यञ्जकतरङ्गादिप्रत्यक्षस्यापि तत्र सत्त्वादित्यत आह नियतेति। जलधिसलिले दूरे नैल्याध्यासवत्समीपोपसर्पणानन्तरमपि तदध्यासो दृश्यते अतस्तस्य नियतत्वम्। एतदुक्तं भवति शुक्लरूपात्मकविशेषदर्शनसामग्री नियतनीलशिलारूपाध्यासप्रयोजकदोषेण प्रतिबद्धा अतः सा अप्रतिबद्धा नास्ति दूरत्वदोषाज्जलराशित्वव्यञ्जकतरङ्गादेर्ग्राहकसमवधानं नास्ति तेन जलराशित्वरूपविशेषदर्शनसामग्र्येव नास्ति तथा च द्विविधप्रतिबन्धकज्ञानसामग्र्यभावाज्जलधिसलिले नीलशिलातलत्वाद्यध्यास उपपद्यत इति। तत्र इदं बोध्यं जलधिसलिलपूरे नीलशिलातलत्वारोपे उक्तविधया विशेषदर्शनसामग्र्यभावस्य अपेक्षितत्वेऽपि न तावन्मात्रात्तदध्यासः किन्तु जले नीलरूपाध्यासेन नीलशिलातलसादृश्यज्ञानसम्पत्त्यनन्तरमेव तदध्यासस्तथा च दूरे नीलशिलातलत्वाध्यासवतां जलधिसलिलपूरसमीपोपसर्पणानन्तरं व्यवहारः। अस्मिन् जलधिसलिलपूरे मम दूरे नैल्यनैश्चल्यादिसाम्येन नीलशिलातलत्वभ्रम आसीत् इदानीं स भ्रमो निवृत्त इति। एवं तत्र तत्र सादृश्यदोषात् मम पूर्वमन्यथा भ्रम आसीत् इदानीं स निवृत्त इति लोकव्यवहार एव। सादृश्यज्ञानस्य दोषत्वेनाध्यासविशेषकारणत्वसाधको द्रष्टव्य इति।

सत्त्वात् न पुण्डरीकमुकुलत्वाध्यासः कर्त्तं-
नादिघटिततदाकारे तदभावात् तदध्यास इति।

ननु एवं करस्पृष्टे लोहशकले तदीयनीलरूप-
विशेषदर्शनसामग्र्यभावात् रजताध्यासः किं न
भवेत् सादृश्यज्ञानानपेक्षणादिति चेद् भवत्येव
किन्तु तास्रादिव्यावर्त्तकविशेषदर्शनसामग्र्या अपि
अभावात् तदध्यासेनापि भाव्यमिति क्वचिदने-

---

सादृश्यज्ञानस्याध्यासकारणताग्राहकान्वयव्यतिरेकोदाह-
रणान्तरमप्यन्वयथयति विस्तृत इति। परिणाहो विस्तार-
स्तद्दर्शनं पुण्डरीकमुकुलत्वाध्यासप्रतिबन्धकं तत्सामग्री-
सत्त्वादित्यर्थः। सादृश्यज्ञानकारणमते हि चक्षुःसंप्रयोगस्थले
चाक्षुषं सादृश्यज्ञानं धर्मिज्ञानत्वेन दोषत्वेन च रजताद्य-
ध्यासोत्पत्तौ कारणं त्वगिन्द्रियसंप्रयोगस्थले च स्पार्शनं
सादृश्यज्ञानमुक्तविधया रजताद्यध्यासोत्पत्ताविव कारणं
कवितार्किकमते तु धर्मिज्ञानप्रसङ्गभीत्या सादृश्यज्ञानं कुत्राप्य-
ध्यासे कारणं नाभ्युपेयत इति व्यवस्था।

तथा च त्वगिन्द्रियेदमर्थसंप्रयोगस्थले त्वदभिमताध्यास-
कारणसत्त्वात् स किं न स्यादिति शङ्कते ननु एवमिति।
सादृश्यज्ञानं विनापि अध्यासप्रतिबन्धकविशेषदर्शन सामग्र्य-
भावमात्रेण अध्यासोपगम इत्यर्थः। किं तत्र रजताध्यास
आपाद्यते किं वा रजताध्यास एव आपाद्यते आद्ये
इष्टापत्तिरित्याह भवत्येवेति। द्वितीयं शङ्कते किन्त्विति
तत्र विशेषदर्शनसामग्र्यभावस्य तास्राद्यध्याससाधारणत्वात्

क्वाध्यासे संशयगोचरो भवति क्वचित्तु रजतप्राये कोशगृहादौ रजताध्यास एव भवति क्वचित् सति अपि सादृश्यज्ञाने शुक्तिकादौ कदाचित् करण-दोषाद्यभावेन अध्यासानुदयवत् अध्यासानुदयेऽपि न हानिः।

तस्मात् न कार्य्यकल्पया इदमाकारवृत्ति-

---

रजताद्यध्यास एव स्यादित्यत्रापादकं नास्तीति मत्वा परिहरति ताम्रादीति। रङ्गसुवर्णशकलादिसंग्रहार्थमादिपदं क्वचिदिति। करतलस्पृष्टलोहशकलस्थलेऽपि क्वचिदित्यर्थः। गोचर इति लोहशकलरूपेदमर्थः। किमिदं रजतं किं वा ताम्रं किं वा सुवर्णादीति संशयविषयो भवति इत्यर्थः। ताम्रादिव्यावर्त्तकविशेषदर्शनस्थले तु रजताध्यास एव भवतीत्याह क्वचित्त्विति। यस्मिन् कोशगृहादौ प्रायेण रजतशकलानामेवावस्थानं तत्र प्रविष्टस्य दैवादयःशकले करतलस्पृष्टे सति तत्र रजताध्यास एव भवति रजतकोशगृहमिति बुद्धेस्तस्य सत्त्वादित्यर्थः। ननु क्वचित् करतलस्पृष्टलोहशकले रजताध्यासाभावोऽपि दृश्यते स च तव मते न सम्भवति विशेषदर्शनसामग्र्यभावस्य तत्रापि सत्त्वेन रजताध्यासापत्तेरावश्यकत्वात् मम तु सादृश्यज्ञानरूपकारणाभावात् स न भवतीति वक्तुं शक्यत इत्यत आह क्वचित् सत्यपीति। समीपोपसर्पणानन्तरं सत्यपि सादृश्यज्ञाने यथा रजताध्यासाभावस्तव मते उपेयते तथा मम, सतेऽपि क्वचिदध्यासाभावो न दोषावह इत्यर्थः।

नाप्यप्रतिबद्धा इदमर्थसंप्रयोगकारणकल्प्या । ततो भवन्त्या एवेदं वृत्तेर्दुष्टेन्द्रियसंप्रयोगक्षुभिता- विद्यापरिणामस्वसमानकालरजतविषयत्वस्यापि अस्माभिरुच्यमानत्वात् ।

---

तस्मादिति । कथमपि धर्मिज्ञानस्य अध्यासकारणत्वा- सिद्धेरित्यर्थः । इदमाकारवृत्तिरनुभवसिद्धा वा कार्य्यकल्प्या वा कारणकल्प्या वेति विकल्पत्रये प्रथमद्वितीयौ निरस्य तृतीयं निराकरोति नाप्यप्रतिबद्धेति इदमर्थस्य चक्षुः- संप्रयोगकाले अन्यत्र व्यासङ्गे सति इदमर्थगोचरज्ञानानुद- यादप्रतिबद्धेतिविशेषणं यथोक्तसंप्रयोगवशाज्जायमाना वृत्तिः भ्रान्तिरूपैव जायते न तु भ्रान्तेः प्राचीना इदमर्थमात्रगोचरा प्रमारूपा तत्र मानाभावादित्याशयेनाह तत इति । इद- मर्थावच्छिन्नचैतन्ये विद्यमाना रजतपरिणामिन्यविद्या दुष्टेन्द्रियसम्प्रयोगरूपादध्यासनिमित्तकारणभूतात् क्षोभं कार्य्याभिमुख्यं प्राप्नोति उत्तरक्षणे च रजतरूपेण परि- णमते दुष्टेन्द्रियसंप्रयोगात् वृत्तिरपि तथैव जायते तथा च अप्रतिबद्धात् दुष्टेन्द्रियसंप्रयोगात् भवति इदमर्थगोचरवृत्तिः स्वकालोत्पन्नरजतविशिष्टम् इदमर्थं विषयीकरोति इत्यर्थः । स्वपदं वृत्तिपरं धर्मिज्ञानपक्षे इदमाकारवृत्तिरविद्या क्षोभिका तदभावपक्षे धर्मिज्ञानहेतुसंप्रयोगोऽविद्याक्षोभक इति स्थिते तत्रान्यपक्षोऽनुपयुक्तः । इदमर्थसंप्रयोगस्य इदमाकार- वृत्ताविव रजतगोचरवृत्तावहेतुत्वात् ज्ञानसमकालोत्पन्नरजतस्य ज्ञानात् पूर्वं चक्षुःसन्निकर्षाभावाच्च ।

तत्र च ज्ञानसमानकालोत्पत्तिके प्रतिभासमात्रविपरिवर्त्तिनि रजते तत् प्राचीनसंप्रयोगाभावेऽपि तत् तादात्म्याश्रयेदमर्थसंप्रयोगादेव तस्यापि चक्षुर्ग्राह्यत्वोपपत्तेः। चक्षुषा रजतं पश्यामि इति प्रातिभासिकरजतस्य स्वसंप्रयोगाभावेऽपि चाक्षुषत्वानुभवात्।

न च स्वसंप्रयोगाभावादेव बाधकात् न तच्चाक्षुषं नापि दुष्टेन्द्रियसंप्रयोगजन्यमिदं-

---

तथा च रजतगोचरवृत्तौ सामग्र्यभाव एव इदं वृत्तेः धर्म्मिमात्रगोचरतां व्यवस्थापयतीत्याशङ्क्याह तत्र चेति भ्रमस्थल इत्यर्थः। प्रतिभासकालमात्रे विपरिवर्त्तनं सत्ता यस्य तत् प्रतिभासमात्रविपरिवर्त्ति तस्मिन् प्रतीति व्याप्यसत्ताक इति यावत् इदमर्थसंप्रयोगस्य रजतगोचरवृत्त्युत्पत्तावपि हेतुत्वं सम्भवति न च अन्यसंप्रयोगादन्यगोचरवृत्त्युपगमे घटेन्द्रियसंप्रयोगात् पटगोचरवृत्त्यापत्तिरिति वाच्यम्। स्वागोचरवृत्तौ स्वस्य स्वतादात्म्याश्रयस्य वा इन्द्रियेण सह संप्रयोगः कारणमिति कल्पना तावता उक्तातिप्रसङ्गपरिहारोपपत्तेरित्याशयेनाह तत् प्राचीनेति। रजतप्रतिभासात् प्राचीनेत्यर्थः। तत् तदात्म्येति रजतस्येदमर्थे कल्पितत्वात् रजततादात्म्याश्रयत्वमिदमर्थस्य पटतादात्म्याश्रयत्वन्तु न घटेऽस्ति पटस्य तत्र अनध्यस्तत्वादिति भावः। चक्षुःसंप्रयोगानाश्रयस्यापि रजतस्य चाक्षुषवृत्तिविषयत्वकल्पने हेतुमाह चाक्षुषेति।

वृत्तिसमकालं ज्ञानकारणस्य इन्द्रियसंप्रयोगस्य अर्थकारणत्वाक्लृप्तेः किन्तु इदंवृत्त्यनन्तरभावि तज्जन्यं तदभिव्यक्तसाक्षिण्यध्यासात् तन्नास्य चाक्षुषत्वानुभवस्तु स्वभासकचैतन्याभिव्यञ्जकेदं-वृत्तिजनकत्वेन परम्परया चक्षुरपेक्षामात्रेण इति वाच्यम् ? । तथा सति पीतशंखभ्रमे चक्षु-रनपेक्षाप्रसङ्गात् । न हि तत्र शंखग्रहणे चक्षुर-पेक्षा रूपं विना केवलशंखस्य चक्षुर्ग्राह्यत्वायो-

---

धर्मिज्ञानवादी चाक्षुषत्वानुभवस्य अन्यथा सिद्धिं वदन् धर्मीन्द्रियसंप्रयोगजन्या वृत्तिः धर्मिमात्रगोचरा इत्याशयेन शङ्कते न च इति । तत् रजतमिदं वृत्तिसमकालं सत् दुष्टेन्द्रियसंप्रयोगजन्यमपि न भवतीति । अत्र ज्ञानकारणस्य इति । तथा च प्रातिभासिकरजतस्य ऐन्द्रियकत्वपक्षे अन्यसंप्रयोगस्य अन्यगोचरवृत्तिजनकत्वमेकं कल्पनीयं तथा ज्ञानकारणस्य सन्निकर्षस्य रजताद्यर्थोत्पत्तौ कारणत्वमपरं कल्पनीयमिति गौरवमिति भावः । यदि संप्रयोगो न रज-ताद्यर्थे कारणं तर्हि किं तत्र कारणमविद्यामात्रस्य सदा सत्त्वेन रजताद्यध्यासस्य कादाचित्कत्वेन प्रतीतस्य प्रयोजकत्वानुप-पत्तेरिति शङ्कते । किन्तु इति उत्तरमाह इदंवृत्त्यनन्तर-भावीति इन्द्रियसंयोगादिदमर्थमात्रगोचरावृत्तिरुदेति तया चाध्यासं प्रति निमित्तकारणभूतया क्षुब्धा सति अविद्या रजता-कारेण परिणमते रजतस्य च इदमाकारवृत्त्यभिव्यक्तमिद-मर्थावच्छिन्नचैतन्यमधिष्ठानं तथा च रजतं स्वगोचरवृत्तिं

शात्। न अपि पीतिमग्रहणे आरोप्ये ऐन्द्रियक-
त्वानभ्युपगमात्।

---

विनैव चैतन्यभास्यमहङ्कारादिवदित्यर्थः। तज्जन्यमित्यत्र तदभिव्यक्तेत्यत्र च तत्पदमिदंवृत्तिपरं तद्वृत्तेश्च कादाचित्कत्वात् रजताद्यध्यासस्य कादाचित्कत्वमिति भावः। तद्भास्यमिति साक्षिभास्यमित्यर्थः। न च वाह्यचैतन्यभास्यस्य शुक्तिरूप्यादेरहङ्कारादिवत् कथं साक्षिभास्यत्वमिति वाच्यम्। स्वगोचरज्ञानरूपवृत्त्यनुपहितचैतन्यभास्यस्यैव साक्षिभास्यशब्दार्थत्वात्। तथा च यथा अविद्याहङ्कारतद्धर्माणामवभासकचैतन्यमविद्यादिगोचरया ज्ञानात्मकवृत्त्या उपहितं न भवति एवं शुक्तिरजतादिभासकचैतन्यमपि शुक्तिरजतादिगोचरज्ञानात्मकवृत्त्युपहितं न भवतीति तस्य साक्षिभास्यत्वमुक्तमिति मन्तव्यम्। ननु शुक्तिरजतस्य साक्षिभास्यत्वे चाक्षुषत्वानुभवविरोध इति नेत्याह चाक्षुषत्वानुभवस्त्विति स्वं शुक्तिरजतं तद्भासकस्य इदमंशावच्छिन्नचैतन्यस्य अभिव्यञ्जिकामिदंवृत्तिं प्रति चक्षुषो जनकत्वेन शुक्तिरजतस्य चक्षुरपेक्षा वर्त्तते सा च अपेक्षा परम्परया एव स्वाधिष्ठानगोचरवृत्त्यर्थम् अपेक्षितत्वात् न तु साक्षात् स्वगोचरवृत्त्यर्थमनपेक्षितत्वाद्यथाकथञ्चित् चक्षुरपेक्षामात्रेण तत्र चाक्षुषत्वानुभव उपपद्यते एव इत्यक्षरार्थः। ननु चक्षुषा रजतं पश्यामि इत्यनुभवो हि रजते चाक्षुषवृत्तिविषयत्वमवगाहते न तु शुक्तिरजतगतं चाक्षुषवृत्त्यभिव्यक्तचैतन्यविषयत्वमिति वस्तुगतिः। तथाच परम्परया चक्षुरपेक्षामात्रेणेति ग्रन्थेन चाक्षुषत्वानुभवस्य चाक्षुषवृत्त्यभिव्यक्तचैतन्यविषयत्वं रजतगतं विषय्य इति तदनुभवस्य गतिः

न च पीतिमा स्वरूपतो नाध्यस्यते किन्तु नयनगतपित्तपीतिम्नोऽनुभूयमानस्य शङ्खसंसर्गमात्रम् अध्यस्यत इति पीतिमानुभवार्थमेव चक्षुरपेक्षेति वाच्यम् ।

---

कल्पितेति प्रतिभाति तदयुक्तं शब्दवदनुभवस्य व्याख्यानानर्हत्वादिति चेत् न, वस्तुत इदमर्थगतस्य इदन्त्वस्य तत्र अनुभूयमानस्य यथा शुक्तिरजते संसर्गारोपस्तथा इदमर्थगतस्य तत्र अनुभूयमानस्य चाक्षुषत्वस्य शुक्तिरजते संसर्गारोप इत्यस्यार्थस्य विवक्षितत्वात् । तथा च स्वस्मिन् आरोपणीयं यत् चाक्षुषवृत्तिविषयत्वम् इदमर्थगतं तल्लाभाय शुक्तिरजतस्य चक्षुरपेक्षा वर्त्तत इत्ययमर्थः परम्परया चक्षुरपेक्षामात्रेणेति ग्रन्थस्य द्रष्टव्य इति न कश्चिद् दोषः । प्रातिभासिकरजतादेः साक्षिभास्यत्वमेव न तु ऐन्द्रियकत्वमिति मतं दूषयति तथा सति इति । अधिष्ठानस्य ऐन्द्रियकत्वलाभाय एव इन्द्रियापेक्षा नत्वारोप्यस्य तदर्थमिन्द्रियापेक्षेत्युपगमे सति इत्यर्थः ।

नहीति । इदञ्च आपाततः पीतशङ्खभ्रमादिस्थलेऽपि अध्यासप्राचीनधर्मिगोचरचाक्षुषवृत्तेः प्रागुपपादितत्वादिति मन्तव्यम् । नापि पीतिमग्रहण इति चक्षुरपेक्षेत्यनुषङ्गः ।

रूपं विना केवलशङ्खस्य चक्षुर्ग्राह्यत्वायोगमुपेत्यारोपितस्य साक्षिभास्यत्ववादी शङ्कते न च पीतिमेति पीतरूपमित्यर्थः । यथा शुक्तौ रजतं स्वरूपेण अध्यस्यते तथा शङ्खे पीतरूपं न अध्यस्यत इत्यर्थः । नयनगतं यत्पित्तं पीतरूपयुक्तद्रव्यविशेषः तस्य यः पीतिमा तस्य पित्तद्रव्य एव अनुभूयमानस्य शङ्खे संसर्ग एव

तथा सति शङ्खतत्संसर्गयोरप्रत्यक्षत्वप्रसङ्गात्। नयनप्रदेशगतपित्तपीतिमाकारवृत्त्यभिव्यक्तसाक्ष्यसंसर्गेण तयोः तद्भास्यत्वाभावात्। पीतिमसंसृष्टशङ्खगोचरैकवृत्त्यनभ्युपगमाच्च।

---

अध्यस्यते। यथा कुसुमादौ अनुभूयमानस्य लौहित्यस्य स्फटिकमण्यादौ संसर्गाध्यासस्तद्वत्। न च अन्यगतस्य अन्यत्र आरोपाभ्युपगमे अन्यथाख्यातिप्रसङ्ग इति वाच्यम्। अध्यस्यमानसंसर्गस्य अनिर्वचनीयस्य उत्पत्त्यभ्युपगमेन अन्यथाख्यातिवैलक्षण्यसत्त्वादिति भावः। पीतिमानुभवार्थमेव इति शङ्खे पीतरूपासंसर्गाध्यासात् प्राचीनो यः पित्तद्रव्ये पीतरूपानुभवस्तदर्थमित्यर्थः।

तत्र किं नयनप्रदेशगत एव पित्तद्रव्ये पीतिमानुभवः किं वा शङ्खदेशं व्याप्य तत्रस्थे पित्तद्रव्ये पीतिमानुभवः आद्यं दूषयति तथा सतीति। नयनगत एव पित्तद्रव्ये पीतरूपानुभवाङ्गीकार इत्यर्थः। शङ्खतत्संसर्गयोरिति शङ्खस्य शङ्खपीतरूपयोः संसर्गस्य च इत्यर्थः। शङ्खतत्संसर्गयोर्भानं किं पित्तपीतिमगोचरवृत्त्यभिव्यक्तेन साक्षिणा किं वा पीतिमसंसृष्टशङ्खगोचरवृत्त्यभिव्यक्तेन साक्षिणा नाद्य इत्याह नयनप्रदेशेति। नयनप्रदेशगतपित्तपीतिमाकारवृत्त्या तत्प्रदेशस्थं पीतिमावच्छिन्नचैतन्यमभिव्यज्यते तेन च अभिव्यक्तचैतन्यलक्षणसाक्षिणा सह शङ्खस्य शङ्खे समारोपितपीतरूपसंसर्गस्य च सम्बन्धात् शङ्खतत्संसर्गयोरापरोक्ष्यं न स्यात् इत्यर्थः। न द्वितीय इत्याह, पीतिमसंसृष्टेति अनभ्युपगमाच्चेति। साक्षिभास्यत्ववादिना इति शेषः।

न च नयनप्रदेशस्थस्य पित्तपीतिम्नो दोषाच्छङ्खे संसर्गाध्यासो नोपेयते किन्तु नयनरश्मिभिः सह निर्गतस्य विषयव्यापिनस्तस्य तत्र संसर्गाध्यासः कुसुम्भारुणित इव कौसुम्भ इति सम्भवति तदाकारवृत्त्यभिव्यक्तसाक्षिसंसर्ग इति वाच्यम् ।

तथा सति सुवर्णलिप्त इव पित्तोपहतनयनेन वीक्ष्यमाणे शंखे तदितरेषां पीतिमधीप्रसङ्गात् । न च स पीतिमा समीपे गृहीत एव दूरे ग्रहीतुं शक्यः विहायसि उपर्य्युत्पतन् विहङ्गम इव इतरेषां च समीपेन ग्रहणमिति वाच्यम् ।

---

शङ्खदेशप्राप्ते पित्तद्रव्ये पीतिमानुभव इति द्वितीयं शङ्कते न चेति । विषयव्यापिनस्तस्येति शङ्खरूपमधिष्ठानं व्याप्तस्य पित्तद्रव्यस्य इत्यर्थः । तथा च पित्तपीतिमाकारवृत्त्या शङ्खदेशस्थस्यैव चैतन्यस्य अभिव्यक्त्या शङ्खतत्संसर्गयोरापरोक्ष्यं सम्भवतीति भावः । कुसुम्भस्तु रक्तद्रव्यविशेषः तद्व्याप्ते पटे यथा कुसुम्भे अनुभूयमानस्य रक्तरूपस्य संसर्गारोपस्तथा इत्यर्थः ।

नयनगतपित्तद्रव्यस्य नयने सर्वैः अनुभूयमानस्य नयनरश्मिद्वारा निर्गत्य शङ्खव्यापित्वोपगमे बाधकमाह तथा सतीति । पित्तोपहतनयनः पुरुषः यदा शङ्खं पश्यति तदा तदितरेषामपि पीतः शङ्ख इत्यनुभवप्रसङ्गात् इत्यर्थः ।

इतरेषामपि तच्चक्षुर्निकटन्यस्तचक्षुषां पीति-मसामीप्यसत्त्वेन तद्ग्रहणस्य दुर्वारत्वात्।

एवमपि अतिधवलसिकतामयतलप्रवह-दच्छनदीजले नैल्याध्यासे गगननैल्याध्यासे च नक्तावस्तु निशि चन्द्रिकायां नैल्याध्यासे च अनुभूयमानारोपस्य वक्तुमशक्यत्वेन तत्र नैल्य-

---

ननु पित्तद्रव्यस्य नयनप्रदेशात् विषयदेशं प्रति गमनावसरे यथा पित्तोपहतनयनेन नयनदेशमारभ्य विषयव्याप्ति-पर्य्यन्तं पीतिमा गृह्यते तथा अन्यैरपि नयनसमीपे मध्ये च पीतिमा गृहीतश्चेत् शङ्खदेशेऽपि ग्रहीतुं शक्यते नान्यथा इत्यत्र दृष्टान्तमाह विहायसीति। यथा विहङ्गमः पक्षी गगने उत्पतन् उत्पतनावसरे भूप्रदेशमारभ्य येन पुंसा गृह्यते तेनैव गगनोपरिभागे दूरं ततोऽपि गृह्यते नान्यैस्तथा प्रकृतेऽपि इत्यर्थः।

दृष्टान्तवैषम्यमाह इतरेषामपीति। दृष्टान्ते हि गगनोपरि-भागे दूरे विहङ्गमं पश्यन् कश्चिदन्यं प्रत्युपदिशति मम चक्षु-र्निकटे त्वच्चक्षुर्न्यस्तं चेत् त्वयापि स विहङ्गमो द्रष्टुं शक्यत इति स चान्यस्तथा कृत्वा तं पश्यति न तथा प्रकृते सम्भवति इत्यर्थः।

अस्तु वा अनुभूयमानारोपस्थले कथञ्चित् चक्षुरपेक्षा स्मर्य्यमाणनैल्याद्यध्यासस्थले तु तदपेक्षा सर्वात्मना वक्तुमशक्ये-त्याह एवमपीति। जलाधारभूभागे वा जलमिश्रितद्रव्यविशेषे वा यदि नीलरूपमस्ति तदा तत्रैव अनुभूयमाननैल्यस्य जले

संसृष्टाधिष्ठानगोचरचाक्षुषवृत्त्यनभ्युपगमे चक्षु-रनुपयोगस्य दुष्परिहरत्वाच्च ।

अनास्वादिततिक्तरसस्य बालस्य मधुरे तिक्तताभासो जन्मान्तरानुभवसंस्कारहेतुक इति प्रतिपादयता पञ्चपादिकाग्रन्थेन स्वरूपतोऽध्य-स्यमानस्यैव तिक्तरसस्य ऐन्द्रियकत्वस्फुटीकर-णाच्च ।

---

अध्यास इति शङ्का भवेत् तन्निवृत्तये सिकतामयतलस्य अतीव-धवलत्वं नदीजलस्य वा अच्छत्वं विशेषणमुपात्तं अच्छत्वं निर्मलत्वं निशि रात्रौ चन्द्रिकायामित्यस्यापि पूर्वोक्तमेव प्रयोजनं द्रष्टव्यम् । दुष्परिहरत्वाच्चेति । अतः पीतशङ्खजलनैल्याद्यध्यासेषु आरोप्य-पीतिमनैल्यादिसंसृष्टाधिष्ठानगोचरचाक्षुषवृत्त्यनुपगमेऽपि चक्षु-रनुपयोगो न दुष्परिहरः । शंखादिधर्मिमात्रगोचरचाक्षुषवृत्ति-सम्भवस्य प्राग्दर्शितत्वादिति मन्तव्यम् ।

आरोप्यस्य इन्द्रियजन्यवृत्तिविषयत्वे सम्मतिमाह अना-स्वादितेति । अस्मिन् जन्मनि अनास्वादितः रसनेन्द्रियेण अन-नुभूतस्तिक्तरसो येन बालेन सः तथा तस्येत्यर्थः । मधुरे स्तन्यादौ तिक्तताभासस्तिक्ततासाक्षात्कारः स च जन्मान्तरीयतिक्तरसा-नुभवजन्यसंस्कारजन्यः । आरोपे आरोप्यसजातीयपूर्वानुभवज-न्यसंस्कारस्य कारणत्वादित्यक्षरार्थः । अत्र ग्रन्थे तिक्तताभासस्य संस्कारसहकृतरसनेन्द्रियजन्यत्वं भाति तस्य संस्कारमात्रजन्यत्वे स्मृतित्वप्रसङ्गात् तथा च तिक्तताध्यासाधिष्ठानस्य मधुरद्रव्यस्य

अन्यथा तत्र रसनव्यापारापेक्षानुपपत्तेः।

---

रसेन्द्रियायोग्यतया परिशेषात् स्वरूपतोऽध्यस्यमानस्य तिक्तरसस्यैव रसनेन्द्रियजन्यवृत्तिविषयत्वं स्पष्टीकृतमिति भवति समारोप्यस्यैन्द्रियकत्वे सम्मतिरयं ग्रन्थ इति भावः।

अन्यथेति। आरोप्यतिक्तरसस्य ऐन्द्रियकत्वानुपगमे तत्र बालस्य तिक्ततावभासस्थले रसनेन्द्रियव्यापारो न स्यात् मधुरद्रव्यस्य तदयोग्यत्वादित्यर्थः। वस्तुतस्तु तिक्ततावभास इत्यत्र तिक्ततापदावभासपदयोः कर्मधारयः। अवभासपदञ्च अवभास्यत इति व्युत्पत्त्या अध्यस्यमानतिक्तरसपरं पञ्चपादिकायामेव अवभासपदस्यावभास्यमानतापदेन तथा व्याख्यातत्वात् जन्मान्तरीयसंस्कारोऽपि अध्यस्यमानतिक्तरसोत्पत्तौ हेतुः प्रातिभासिकाध्यासस्थलेषु दोषसंस्काराधिष्ठानसामान्यज्ञानरूपकारणत्रयस्य अध्यस्यमानपदार्थोत्पत्ताविव कारणतायाः टीकाविवरणादिषु एव स्पष्टत्वात्। तथा च कथमनेन ग्रन्थेन स्वरूपतोऽध्यस्यमानस्यैव तिक्तरसस्यैन्द्रियकत्वस्पष्टीकरणं न च तिक्तस्यैन्द्रियकत्वाभावे रसनव्यापारापेक्षानुपपत्तिरिति वाच्यम्। बालस्य अन्येषां वा तिक्तरसाध्यासकाले रसनेन्द्रियव्यापारसत्त्वे मानाभावात् न च तथा सति तिक्ततानवभासप्रसङ्ग इति वाच्यम्। त्वगिन्द्रियजन्यमधुरद्रव्यगोचरवृत्त्या अभिव्यक्ते मधुरद्रव्यावच्छिन्नचैतन्ये तिक्तताध्यासाङ्गीकारेण तिक्ततायाः स्वगोचरवृत्तिं विनैव स्वाधिष्ठानचैतन्यभास्यत्वसम्भवात्। अस्तु वा तिक्तताध्यासस्थले रसनेन्द्रियापेक्षा तथापि नाध्यस्यमानतिक्तरसस्य ऐन्द्रियकत्वसिद्धिरध्यस्यमानतिक्ततां प्रति मधुरद्रव्यनिष्ठमधुररसस्याधिष्ठानत्वसम्भवेन तदधिष्ठानभूतमधुररसग्रहणे तदपे-

तस्मात् उदाहृतनैल्याध्यासस्थलेषु अधिष्ठानसंप्रयोगादेव तद्गोचरचाक्षुषवृत्तिसमकालोदयोऽध्यासस्तस्यावृत्तेर्विषय इति तस्य चाक्षुषत्वमभ्युपगन्तव्यम् ।

रूपं विना केवलाधिष्ठानगोचरवृत्त्यभावे च विषयचैतन्याभिव्यक्त्यभावेन जलतदध्यस्तनैल्यादीनां तद्भास्यत्वायोगात् ।

---

च्चोपपत्तेः पञ्चपादिकागतमधुरपदस्य मधुररससाधारणत्वेन तद्विरोधाभावाच्च । न च मधुररसग्रहणे तिक्तताध्यासानुपपत्तिरिति वाच्यम् । रसग्रहणेऽपि दोषविशेषेण मधुररसत्वजातिसाक्षात्कारप्रतिबन्धे सति तदध्यासोपपत्तेः । तस्मादारोप्यस्य साक्षिमात्रभास्यत्वं पूर्वाचार्याणां सार्वत्रिकव्यवहारसिद्धं निरपवादमिति मन्तव्यम् ।

इतः परं कवितार्किकमतानुसारेण यत् पञ्चपादिकाग्रन्थव्याख्यानं कृतं तदेवानुवर्त्यते तस्मादिति । अध्यस्यमानपदार्थस्य साक्षिभास्यत्वमते पीतशङ्खाद्यध्यासेषु चक्षुरनुपयोगस्य दुष्परिहरत्वादित्यर्थः । तद्गोचरेति अधिष्ठानगोचरेत्यर्थः । वृत्तिसमकालमुदयो यस्याध्यासस्य पीतरूपादेः स तथेत्यर्थः । अधिष्ठानसम्प्रयोगजन्याया वृत्तेरारोपितरूपादिविशिष्टशङ्खादिविषयत्वानङ्गीकारे आरोपितरूपादेरनवभासप्रसङ्ग इत्यर्थः ।

रूपं विना केवलाधिष्ठानगोचरवृत्त्यभावे चेति । आरोप्यपीतिमनैल्यादिसंसृष्टशङ्खादिगोचरवृत्त्यनभ्युपगमे चेति चका-

तिक्तरसाध्यासस्थले तु अधिष्ठानाध्यासयोरेकेन्द्रियग्राह्यत्वाभावात् त्वगिन्द्रियजन्याधिष्ठानगोचरवृत्त्या तदवच्छिन्नचैतन्याभिव्यक्तौ पित्तोपहतरसनसंप्रयोगादेव तत्र तिक्तरसाध्यासस्तन्मात्रविषयरासनवृत्तिश्च समकालमुदेतीति तिक्तरसस्य रासनत्वमपि अभ्युपगन्तव्यम्।

त्वगिन्द्रियजन्याधिष्ठानगोचरवृत्त्याभिव्यक्तचैतन्यभास्ये तिक्तरसे परम्परया अपि रसनोपयोगाभावेन तत्र कथमपि प्रकारान्तरेण रासनत्वानुभव-

---

रार्थः। तत्पदं चैतन्यपरं पञ्चपादिकाग्रन्थोक्तं तिक्तरसस्याध्यस्यमानस्यैन्द्रियकत्वं चाक्षुषाध्यासस्थल इव अधिष्ठानारोप्ययोरेकवृत्तिविषयत्वेन न सम्भवति किन्तु तिक्तरसमात्रगोचररासनवृत्तेरत्युपपादयति।

तिक्तरसाध्यासस्थले त्विति तदवच्छिन्नेति। मधुरादिद्रव्यरूपाधिष्ठानावच्छिन्नेत्यर्थः। पित्ताख्यदोषेण उपहतं यद्रसनं तेन सह मधुरद्रव्यरूपाधिष्ठानस्य सम्प्रयोगात् तत्राधिष्ठानावच्छिन्नचैतन्ये तिक्तरसाध्यास उदेति तदेवाध्यस्यमानतिक्तरसमात्रगोचररासनवृत्तिश्च उदेतीत्यर्थः।

ननु तिक्तरसाध्यासस्य मास्तु रासनत्वं तिक्तरसभानन्तु केवलसाक्षिरूपमिति मतमेव कुतो नाद्रियते तत्राह त्वगिन्द्रियेति। चैतन्यभास्ये तिक्तरस इति अभ्युपगम्यमान इति शेषः। परम्परयापीति। रजताद्यध्यासस्थल इव धर्मि-

समर्थनासम्भवात्। तथैव रजतस्यापि चाक्षुषत्वो-पपत्तेः पश्यामि इत्यनुभवो न बाधनीयः।

न च असंप्रयुक्तस्य रजतस्य चाक्षुषत्वे प्रत्यक्षमात्रे विषयेन्द्रियसन्निकर्षः कारणं द्रव्यप्रत्यक्षे तत्संयोगः कारणं रजतप्रत्यक्षे रजतसंयोगः कारणमिति गृहीतानेककार्यकारणनियमभङ्गः स्यादिति वाच्यम्। सन्निकर्षत्वस्य संयोगाद्यनुगतस्यैकस्य अभावेनाद्यनियमासिद्धेः।

---

मात्रगोचरवृत्त्युत्पादनद्वारा अपि इत्यर्थः। धर्मिणो मधुरद्रव्यादेः रसनेन्द्रियायोग्यत्वादिति भावः। तत्र तिक्ततारूपे अध्यासे कथमपीत्यस्य व्याख्या प्रकारान्तरेणेति। यद्यपि स्वप्नकाले केवलसाक्षिभास्येषु रसरूपादिषु रासनचाक्षुषत्वाद्यनुभवस्यारोपरूपतया वक्ष्यमाणत्वेन प्रकृतेऽपि तथा समर्थनं सम्भवति स्वप्नपदार्थानामिव प्रातिभासिकतिक्तरसादेरपि इन्द्रियासन्निकृष्टत्वेन सामग्र्यभावस्य तुल्यत्वात् तथापि तं प्रकारमजानता तत्र कथमपीत्याद्युक्तमिति ध्येयम्। तथैवेति। यथा रासनवृत्तिविषयत्वमादाय रासनत्वानुभवः समर्थितस्तथा चाक्षुषवृत्तिविषयत्वमादायैव चाक्षुषत्वानुभवसम्भवे तदनुभवस्यारोपरूपत्वकल्पनमयुक्तमित्यर्थः। न बाधनीय इति अयुक्तम्।

बाधके सति तद्बाधस्यावश्यकत्वादिति मत्वा शङ्कते न चेति। शङ्कितं बाधकं परिहरति सन्निकर्षस्येत्यादिना आद्यनियमासिद्धेरिति जन्यप्रत्यक्षमात्रे इन्द्रियसन्निकर्षः कारणमिति

द्वितीयनियमस्य नैयायिकरीत्या तमसीव संयोगायोग्ये क्वचिद्द्रव्येऽपि द्रव्यत्वाध्याससम्भवात् व्यवहारदृष्ट्या यद्द्रव्यत्वाधिकरणं तद्विषयत्वेन प्रातिभासिकरजते द्रव्यत्वस्य अधिष्ठानगतस्यैव इदन्त्ववदध्यासात् प्रतीत्यभ्युपगमेन च द्वितीयनियमाविरोधात्। द्वितीयनियमरूपसामान्यकार्य्यकारणभावव्यतिरेकेण विशिष्यापि कार्य्यकारणभावकल्पनाया गौरवपराहतत्वेन तृतीयनियमासिद्धेः।

---

नियमासिद्धेरित्यर्थः। जन्यपदं नित्यसाक्षिरूपे प्रत्यक्षे व्यभिचारवारणार्थं शाब्दापरोक्षमते शाब्दभिन्नत्वमपि प्रत्यक्षे विशेषणं द्रष्टव्यम्। तत्रेदं बोध्यं संयोगाद्यन्यतमत्वमनुगतमस्ति न्यायमते अभावत्वादिवदखण्डोपाधिरूपं चार्सन्निकर्षत्वं सम्भवतीत्याद्यनियमविरोधो दुर्वार इति।

आद्यनियमस्यासिद्धिमुक्त्वा जन्यद्रव्यप्रत्यक्षे इन्द्रियसंयोगः कारणमिति द्वितीयमुपेत्य प्रकृते तस्याविरोधमाह द्वितीयनियमस्येति। द्वितीयनियमस्य व्यवहारदृष्ट्या यद्द्रव्यत्वाधिकरणं तद्विषयत्वेन द्वितीयनियमाविरोधादिति सम्बन्धः। नियमस्य व्यावहारिकद्रव्यविषयत्वकल्पनायां नियामकमाह संयोगायोग्ये क्वचिदिति एकत्वद्वित्वादावित्यर्थः। एकत्वमेकमित्यादिप्रकारेण तत्रापि संख्याश्रयत्वभ्रमेण द्रव्यत्वाध्याससम्भवादित्यर्थः। तथा च द्रव्य-

यत्सामान्ये यत्सामान्य हेतुस्तद्विशेषे तद्विशेषो हेतुरिति न्यायस्यापि यत्र बीजाङ्कुरादौ सामान्यकार्यकारणभावाभ्युपगमे बीजा-

---

प्रत्यक्षमात्रे इन्द्रियसंयोगस्य कारणत्वनियमस्य एकत्वादौ द्रव्यत्वाध्यासकाले तत्प्रत्यक्षे व्यभिचार इत्यर्थः। अद्रव्ये द्रव्यत्वारोपे दृष्टान्तमाह तमसीवेति। सिद्धान्ते तस्य द्रव्यत्वाभ्युपगमादाह नैयायिकरीत्येति प्रौढालोकाभावः तम इति नैयायिकैरुक्तरीत्येत्यर्थः। गुणाश्रयत्वं द्रव्यलक्षणमिति जानतां तमसि रूपवत्त्वभ्रमेण द्रव्यत्वभ्रमः सम्भवतीत्यर्थः। ननु शुक्ति-रजतादौ घटादाविव स्वभावत एव द्रव्यत्वमस्तु अन्यथा रजतत्वादिजातिरपि तत्र न स्यात् न च इष्टापत्तिरुत्तरत्र तत्र रजतत्वादिजातेः साधयिष्यमाणत्वात् ततश्च शुक्तिरजतादिकमपि व्यवहारदृष्ट्या द्रव्यत्वाधिकरणं भवति व्यवहारदशायां शुक्तौ रजतबाधवच्छुक्तिरजते द्रव्यत्वरजतत्वादिजातिबाधादर्शनात् तथा च शुक्तिरजतादेरिन्द्रियासंयुक्तस्य ऐन्द्रियकवृत्तिविषयत्वाभ्युपगमे द्वितीयनियमविरोधोऽपि दुर्वार इति चेत् सत्यं शुक्ति-रजतादौ रजतत्वं द्रव्यत्वादिजातिर्नास्तीति मतमनुसृत्य तत्र द्रव्यत्वप्रतीतिं घटयति प्रातिभासिकरजत इति। इदमर्थगतेदन्त्वस्येव तद्गतद्रव्यत्वस्यापि तत्र संसर्गारोप इत्यर्थः। तथा च शुक्तिरजतं व्यवहारदृष्ट्या द्रव्यत्वाधिकरणं न भवतीति भावः।

ननु द्रव्यप्रत्यक्षे इन्द्रियसंयोगः कारणमित्युपगमे रजतचाक्षुषे रजतचक्षुःसंयोगः कारणमिति तृतीयनियमोऽपि दुर्वारः। रजतस्य द्रव्यविशेषत्वात् रजतचक्षुःसंयोगस्य च इन्द्रियसंयोगविशेषत्वात् द्रव्यविशेषप्रत्यक्षे इन्द्रियसंयोगविशेषः कारणमित्य-

न्तरात् अङ्कुरान्तरोत्पत्त्यादिप्रसङ्गः तद्विषयत्वेन ततोऽजागलस्तनायमानविशेषकार्य्यकारणभावासिद्धेः।

न च अत्रापि द्रव्यप्रत्यक्षे द्रव्यसंयोगः कारणमिति सामान्यनियममात्रोपगमेऽन्यसंयोगात् अन्यद्रव्यप्रत्यक्षापत्तिरिति अतिप्रसङ्गोऽस्ति इति वाच्यम्। तद्द्रव्यसंयोगः कारणमिति नियमाभ्युपगमात्। अन्यथा तृतीयनियमेऽपि अतिप्रसङ्गस्य दुर्वारत्वात्। तस्मात् नास्ति कॢप्तनियमभङ्गः।

---

स्यार्थस्य यत्सामान्यन्यायसिद्धत्वादिति शङ्कां परिहरति यत्सामान्य इति। सामान्यकार्य्यकारणभावापन्नातिप्रसङ्गावहस्तत्रैव अयं न्यायो नान्यत्रेत्यर्थः। न्यायस्य तद्विषयत्वेनेति सम्बन्धः। तत इति न्यायादित्यर्थः।

ननु वीजसामान्यस्याङ्कुरसामान्यस्य च कार्य्यकारणभावोपगमे वीजान्तरादङ्कुरान्तरोत्पत्तिप्रसङ्गवदिहाप्यतिप्रसङ्गसत्त्वादुक्तन्यायप्रवृत्तिरस्त्येवेति शङ्कते न च अत्रापीति। उक्तातिप्रसङ्गपरिहाराय तत्तदङ्कुरव्यक्तिं प्रति तत्तद्वीजव्यक्तेः उक्तन्यायेन हेतुत्वकल्पनवत् प्रकृतेऽपि तत्तद्द्रव्यप्रत्यक्षं प्रति तद्द्रव्यसंयोगस्यैव तेन न्यायेन कारणत्वं सिध्यति न तु तेन न्यायेन तृतीयकार्य्यकारणभावः सिध्यति इत्याशयेनाह तत्तद्द्रव्येति। ननु तेन न्यायेन अतिप्रसङ्गपरिहा-

किञ्च अत्र क्लृप्तनियमभङ्गेऽपि न दोष इदं रजतं पश्यामि इति नीलं जलं पश्यामि इत्यादेरनन्यथासिद्धस्य अनुभवस्य प्रथमगृहीतानामपि प्रत्यक्षमात्रे विषयसन्निकर्षः कारणमित्यादिनियमानां व्यावहारिकविषये सङ्कोचकल्पनमन्तरेण उपपादनासम्भवात्।

न च एवं सति प्रमायां सन्निकर्षः

---

राय तृतीयनियम एव कुतो न कल्प्यते तत्राह अन्यथेति तृतीयनियमकल्पने इत्यर्थः। अतिप्रसङ्गस्येति अन्यरजतचक्षुःसंयोगात् अन्यरजतचाक्षुषापत्तिरित्येवं रूपस्य इत्यर्थः। न च व्यक्तिनियमवत् तृतीयनियमोऽप्यस्त्विति वाच्यम्। अतिप्रसङ्गपरिहारानुपयुक्तस्य तस्याजागलस्तनायमानस्याकल्पनीयताया उक्तत्वादिति भावः। तस्मादिति प्रथमतृतीयनियमयोरसिद्धत्वात् द्वितीयनियमस्य च अविरुद्धत्वादित्यर्थः।

ननु प्रथमद्वितीयविरोधस्य दुर्वारतायाः प्रागुक्तत्वात् तदन्तःपातिव्यक्तिनियमविरोधस्य अपि दुर्वारत्वाच्च नास्ति क्लृप्तनियमभङ्ग इत्ययुक्तमत आह किञ्च अत्रेति। शुक्तिरजतादिस्थल इत्यर्थः। अनन्यथासिद्धस्य इति स्वप्नकाले केवलसाक्षिभास्येषु रजतादिषु चाक्षुषत्वाद्यनुभवस्येव अत्रापि आरोपरूपत्वकल्पनासम्भवादनन्यथा सिद्धत्वमसिद्धं क्लृप्तसामग्र्यभावस्य स्वप्न इवापि तुल्यत्वात् अन्यथा स्वप्नेऽपि इन्द्रियव्यापाराकल्पनादनुभवविरोधे सति तत्काले तदुपरमश्रवणस्य अन्यथानयनोपपत्तेरित्यादिकमत्रानुसन्धेयम्। अनुभवस्योपपादनासम्भवादिति सम्बन्धः।

कारणं न भ्रम इत्यपि सङ्कोचकल्पनासम्भवाद-सन्निकृष्टस्यैव देशान्तरस्थस्यैव रजतस्य इह आरोपापत्तिरित्यन्यथाख्यातिप्रसारिका।

अभिव्यक्तचैतन्यावगुण्ठनशून्यस्य देशान्तरस्थ-रजतस्य आपरोक्ष्यानुपपत्तेः।

ख्यातिबाधानुपपत्त्यादिभिर्भ्रमविषयस्य अनिर्वचनीयत्वसिद्धेश्च।

---

क्लृप्तनियमानां सङ्कोचकल्पने सति शुक्तिरजतादेरनिर्वचनीयत्वासिद्धिं शङ्कते न चैवं सतीति। देशान्तरस्थं रजतादिकं भ्रमविषय इति न्यायमतं तत्रासन्निकृष्टस्य कथं प्रत्यक्षत्वमित्यनिर्वचनीयख्यातिवादिभिः शङ्कायां कृतायां सन्निकर्षः प्रत्यक्षे कारणमित्यादिनियमस्य भवतां मते व्यावहारिकपदार्थप्रत्यक्षविषयत्वेन सङ्कोचवत् मम मतेऽपि तस्य प्रत्यक्षप्रमायां सन्निकर्षः। कारणमिति प्रत्यक्षप्रमाविषयत्वेन सङ्कोचकल्पनोपपत्तेरन्यथाख्यातिवादस्य न किञ्चिद्बाधकमिति परिहारः सुवचः परेषामित्यर्थः।

भ्रमरूपे प्रत्यक्षे सन्निकर्षस्याहेतुत्वेऽपि नान्यथाख्यातिवादप्रसक्तिरिति परिहरति अभिव्यक्तेति। अर्थस्यापरोक्षत्वे इन्द्रियसन्निकृष्टत्वं न प्रयोजकं किन्तु अभिव्यक्तचैतन्याभिन्नत्वमिति वक्ष्यते। तथा च भ्रमविषयस्य रजतादेः देशान्तरस्थत्वे आपरोक्ष्यं न सम्भवतीति शुक्तितादात्म्यापन्नं रजतं सिध्यतीत्यर्थः। अवगुण्ठनं तादात्म्यम्।

ननु एवमपि शुक्तिरजतं शुक्तिवत् सत्यमेव स्यान्ना-

न च अधिष्ठानसम्प्रयोगमात्रात् प्रातिभासिकस्य ऐन्द्रियकत्वोपगमे शुक्तिरजताध्याससमये तत्रैव कालान्तरेऽध्यसनीयस्य रङ्गस्यापि चाक्षुषत्वं कुतो न स्यादिति वाच्यम्।

---

निर्वचनीयं मानाभावादित्यत आह ख्यातीति। ख्यातिरपरोक्षप्रतीतिस्तथा भ्रमविषयस्य देशान्तरस्थत्वं असत्त्वञ्च निरस्तं भवति। असतः संवित्तादात्म्याभावे न प्रत्यक्षत्वायोगात्। शुक्तौ कालत्रयेऽपि रजतं नास्तीत्यबाधितबाधकप्रत्यक्षबलात् रजतस्थितिसमयेऽपि शुक्तौ रजताभावः सिध्यति। शुक्तौ यदि रजतं न स्यात् तदा ख्यात्यनुपपत्तिः यदि तत्र तत् सत्यं स्यात् तदा शुक्तौ शुक्तित्वमिव न बाध्येत अतः ख्यातिबाधानुपपत्त्या तस्य अनिर्वचनीयत्वं सिध्यति। शुक्तिरजतस्य उत्पत्तिविनाशवत्त्वादनिर्वचनीयत्वसिद्धिः एतच्च विवर्त्तलक्षणनिरूपणावसरे प्रपञ्चितमिति नात्र प्रपञ्च्यते। उत्पत्तिमत्त्वादियुक्तिरादिशब्दार्थः।

शुक्तिरजतादेः साक्षिभास्यत्ववादी शुक्तिरजतस्य स्वतादात्म्याश्रयेदमर्थसंप्रयोगादेव चाक्षुषवृत्तिविषयत्वेऽतिप्रसङ्ग इति शङ्कते न चेति तत्रैवेति। शुक्तावेव कालान्तरे यदध्यसनीयं तस्य इत्यर्थः। कुत इति। या वृत्तिः शुक्तिरजतं विषयीकरोति सैव वृत्तिः शुक्तौ कालान्तरेऽध्यसनीयं रङ्गमपि कुतो न विषयीकरोति तस्या वृत्तेः रजततादात्म्याश्रयेदमर्थसंप्रयोगजन्यत्वस्येव कालान्तरीयरङ्गतादात्म्याश्रयेदमर्थसंप्रयोगजन्यत्वस्याप्यविशेषादित्यर्थः। तथा च संप्रयोगो न रजतगोचरवृत्तिहेतुः किन्तु सादृश्यविशिष्टधर्मिज्ञानमेव हेतुः

रजताध्याससमये रङ्गरजतसाधारणचाकचक्यदर्शनाविशेषेऽपि यतो रागादिरूपपुरुषदोषाभावादितस्तत्र तदा न रङ्गाध्यासस्तत एव मया तद्विषयवृत्त्यनुदयस्यापि उपगमात्।

तस्मात् इदमंशसम्भिन्नरजतगोचरा एका एव वृत्तिरिन्द्रियजन्या न ततः प्रागिदमाकारा

---

साद्दश्यज्ञानस्य दोषत्वेन धर्मिज्ञानत्वेन च रजताद्यध्यासे कारणम्। रजतादिकञ्च स्वगोचरवृत्तिं विनैव चैतन्यभास्यमिति मतमुपेयमिति भावः।

तव मतेऽपि शुक्तौ कालान्तरे अध्यसनीयस्य रङ्गस्य रजताध्याससमय एवाध्यासः किं न स्यादधिष्ठानस्य साद्दश्यज्ञानस्य च रजतरङ्गाध्यासासाधारणत्वादिति दोषतौल्यं सूचयति रजताध्याससमय इति। यदि च द्दश्यमानसाद्दश्यरूपविषयदोषाविशेषेऽपि रजताध्याससमये रङ्गगोचररागात्मकपुरुषदोषस्य अभावात् रजतरागस्य सत्त्वाच्च न रङ्गाध्यास इति परिहार इष्यते तदा ममापि तुल्यमुत्तरमित्याशयेनाह यत इति। रागादिरूपो यः पुरुषदोषस्तदभावादेः सकाशादित्यर्थः। रागादीत्यादिपदेन रङ्गस्य बुद्धौ विपरिवर्त्तनं गृह्यते। दोषाभावादीत्यादिपदेन रजतरागो गृह्यते। तत एवेति रङ्गगोचररागादेरभावात् रजतरागसत्त्वादन्यस्माद्वा कारणात् रजतस्य एव तत्र उत्पत्तिस्तत्काले रजतविशिष्टधर्मिगोचरवृत्तेरुदयस्योपेयत इत्यर्थः।

कवितार्किकमतमुपसंहरति तस्मादिति। धर्मिज्ञानस्य

वृत्तिरिति न अत्रैव इयम् अज्ञाननिवर्त्तकत्व-सदसद्भावचिन्ता कार्य्येति ।

अन्ये तु अधिष्ठानज्ञानम् अध्यासकारण-मिति इदमाकारां वृत्तिमुपेत्य तदभिव्यक्तेनैव साक्षिणा तदध्यस्तरजतस्य अवभाससम्भवात् तद्भासकसाक्ष्यभिव्यञ्जिकया तया एव इदंवृत्त्या रजतविषयसंस्काराधानोपपत्तेश्च रजताकारा वृत्तिर्व्यर्थेति मन्यन्ते ।

---

कारणत्वे मानाभावादित्यर्थः । नात्रेति इदमाकारवृत्ता-वित्यर्थः ।

धर्मिज्ञानस्य कारणत्वे मानाभावबलमापातत इत्युपपादितं तत्र तत्र तदेतदभिसन्धाय तस्य तत् कारणत्वमतमेवाह अन्ये तु अधिष्ठानज्ञानमिति । इदमाकारवृत्तिपक्षेऽपि रजतगोचर-वृत्तिरङ्गीकर्त्तव्येति केचित् तन्मतं दूषयति इदमाकारामिति । अन्ये तु इदमाकारा वृत्तिमुपेत्य रजताकारा वृत्तिः व्यर्थेति मन्यन्त इति सम्बन्धः । इदमाकारवृत्त्युपगमे हेतुः अधिष्ठानज्ञा-नमध्यासकारणमितीति इतिशब्दो हेत्वर्थः । धर्मिज्ञानस्याध्यास-कारणत्वादित्यर्थः । इदमाकारवृत्तिर्व्यतिरिक्ता रजताकारवृत्तिः किं रजतभानार्था किं वा तत्संस्कारार्था नाद्य इत्याह तदभि-व्यक्तेनैव इति । इदमाकारवृत्त्यभिव्यक्तेनैव इत्यर्थः । द्वितीयं दूषयति तद्भासकेति । न च अन्यगोचरवृत्त्या कथमन्यगोचर-संस्काराधानमिति वाच्यम् । यद्वृत्त्यवच्छिन्नचैतन्ये यावन्तः

ज्ञानद्वयपक्षे इदमित्येका वृत्तिरध्यासकारणभूता इदं रजतमिति द्वितीया वृत्तिरध्यस्तरजतविषया न तु इदमंशं विना अध्यस्तमात्रगोचरा सा। इदं रजतं जानामि इति तस्या इदमर्थतादात्म्यापन्नरजतविषयत्वानुभवादिति केचित्।

अन्ये तु यथा इदमंशावच्छिन्नचैतन्यस्था अविद्या रजताकारेण विवर्त्तते एवमिदमंशविषयवृत्तिज्ञानावच्छिन्नचैतन्यस्था अविद्या रज-

---

पदार्थाः प्रकाशन्ते तयैव वृत्त्या तावत्सु पदार्थेषु संस्काराधानमिति प्रागुक्तत्वादिति भावः।

ये तु स्वगोचरवृत्त्यैव स्वगोचरसंस्काराधानमिति मन्यन्ते तेषां मते अध्यस्तरजतगोचरवृत्तिरप्यस्ति तत्र किं द्वितीयावृत्तिरध्यस्तरजतविशिष्टधर्मिगोचरा किं वा रजतमात्रगोचरेति संशये मतद्वयेन निर्णयं दर्शयति ज्ञानद्वयपक्ष इत्यादिना। द्वितीयवृत्तिरिदं रजतमित्येवमाकारा सापि अध्यस्तरजतविषयेति सम्बन्धः। आकारविशेषोपादानफलमाह न तु इति। द्वितीयवृत्तेः विशिष्टविषयकत्वे अनुभवं प्रमाणयति इदं रजतं जानामीति।

द्वितीयवृत्तेः अध्यस्तमात्रविषयकत्वमिति मतमाह। अन्ये तु इति। ज्ञानद्वयपक्षे द्वितीयवृत्तिरविद्यावृत्तिरिति प्रतिपादतति यथेत्यादिना। विवर्त्तते परिणमत इत्यर्थः। एव-

तज्ज्ञानाभासाकारेण विवर्त्तते न तु इदमंश-वृत्तिवदनध्यस्तं रजतज्ञानमस्ति ।

तथा च रजतस्य अधिष्ठानगतेदन्त्वसंसर्गभानवत् तज्ज्ञानस्यापि अधिष्ठानगतेदंविषयत्व-संसर्गभानोपपत्तेर्न तस्यापि इदंविषयत्वमभ्युपगन्तव्यम् ।

---

मिति । इदमंशविषयं यत् वृत्तिज्ञानं तदवच्छिन्नेत्यर्थः । इदमाकारवृत्त्यवच्छिन्नचैतन्यगताविद्याध्यस्तरजतमात्रगोचरवृत्ति-रूपेण परिणमति सा च वृत्तिर्ज्ञानाभासः क्लृप्तज्ञानकरणा-जन्यत्वादित्यर्थः । अनध्यस्तमिति । ज्ञानाभासरूपं रजतज्ञानं रजतवत् प्रातिभासिकमेव न तु इदमाकारवृत्तिवत् व्यावहारिकं ज्ञानाभासस्यापि शुक्तिरजतवत् एव शुक्त्यज्ञाननिवर्त्तक-प्रत्यक्षबाध्यत्वादित्यर्थः ।

ज्ञानाभासस्य रजतमात्रविषयकत्वे तस्य इदं रजतमित्याकारो न स्यात् इत्याशङ्क्य ज्ञानाभासस्य इदमंशविषयकत्वाभावेऽपि तस्य तदाकारः सम्भवतीत्याशयेनाह तथा चेति । ज्ञानाभासं प्रति इदंविषयकवृत्त्यवच्छिन्नचैतन्यस्य अधिष्ठानत्वे सति इत्यर्थः । इदमंशज्ञाने ज्ञानाभासं प्रत्यधिष्ठानभूते विद्यमानं यदिदन्त्वविषयकत्वं तत्संसर्गो रजतगोचरज्ञानाभासे भासते तत्र दृष्टान्तमाह रजतस्येति । रजताधिष्ठानगतस्य इदन्त्वस्य संसर्गो यथा रजते भासते तथा इत्यर्थः । ननु ज्ञानाभासेन रजते गृह्यमाणे इदन्त्वसंसर्गो गृह्यते चेत् इदन्त्व-

न च रजतत्ववदध्यस्तस्य रजतेदन्त्वसंसर्गस्य रजतज्ञानगोचरत्वात् तत्प्रतियोगिन इदन्त्वस्यापि तद्विषयत्वं वक्तव्यमिति वाच्यम्।

स्वतादात्म्यापन्नस्य इदन्त्वविषयत्वादेव तस्य तत्संसर्गविषयत्वेऽतिप्रसङ्गाभावात्। न च अधिष्ठानाध्यासयोरेकस्मिन् ज्ञाने प्रकाशनियमस्य सम्भावनाभाष्यविवरणे प्रतिपादनात् एकवृत्तिविषयत्वं वक्तव्यमितिवाच्यम्। वृत्तिभेदेऽपि इदमाकारवृत्त्याभिव्यक्ते एकस्मिन् साक्षिणि तयोः प्रकाशोपगमादित्याहुः।

---

मपि तेन अवश्यं ग्राह्यम् इदन्त्वग्रहणं विना तत्संसर्गग्रहणायोगात्।

तथा च ज्ञानाभासस्य रजतविशिष्टेदमंशविषयकत्वसिद्धिरिति शङ्कते न चेति। संसर्गांशस्य रजतज्ञानाभासगोचरत्वे हेतुगर्भविशेषणमध्यस्तस्येति वक्तव्यमिति। अन्यथा घटत्वादिनिरूपितसंसर्गप्रत्यक्षस्य घटत्वादिविषयकत्वं न स्यात् इति अतिप्रसङ्गापत्तेरिति भावः।

ज्ञानाभासस्य इदन्त्वरूपप्रतियोगिविषयकत्वाभावेऽपि ज्ञानाभासं प्रत्यधिष्ठानतया ज्ञानाभासतादात्म्यापन्नस्य इदमंशज्ञानस्य प्रतियोगिविषयकत्वात् ज्ञानाभासस्य संसर्गविषयकत्वं सम्भवति तावतैव उक्तातिप्रसङ्गपरिहारोपपत्ते-

वृत्तिनिर्गमावश्यकत्वनिरूपणम् ।

ननु सर्वपदार्थानां साक्षिप्रसादादेव प्रकाशोपपत्तेः किं वृत्त्या । घटादिविषयसंस्काराधानाद्युपपत्तये तदपेक्षणेऽपि तन्निर्गमाभ्युपगमो व्यर्थः । परोक्षस्थल इव अनिर्गतवृत्त्यवच्छिन्नसाक्षिणैव घटादेरपि प्रकाशोपपत्तेः ।

न च तथा सति परोक्षापरोक्षवैलक्षण्यानुप-

---

रिति परिहरति स्वतादात्म्याश्रयस्येति । स्वपदं ज्ञानाभासपरम् । वृत्तिभेदेऽपीति । अध्यस्तमात्रगोचराविद्यावृत्तेः विवरणकारैः एव अभ्युपगमात् तदुक्तनियमे ज्ञानपदं साक्षिपरमेव न वृत्तिपरमिति विवरणकाराणामाशयो लक्ष्यत इति भावः ।

एवं बाह्यगोचरापरोक्षवृत्तीनामेव आवरणाभिभावकत्वमिति नियमस्य भ्रमस्थलीयेदमाकारवृत्तौ व्यभिचारशङ्कायां सत्यां तद्वृत्त्यभ्युपगमानभ्युपगमाभ्यां तां परिहृत्य प्रसङ्गात् ज्ञानद्वयपक्षे किञ्चित् विचार्य पूर्वोक्तं वृत्तिनिर्गममाक्षिपति ननु इति किं वृत्त्येति । वृत्तिरेव मास्तु तन्निर्गमो दूरापास्त एव इत्याशयः । ननु केवलसाक्षिण एव विषयानुभवरूपत्वे कालान्तरे विषयानुसन्धानं न स्यादनुभवनाशलक्षणसंस्काराभावात् । तथा आगन्तुकवृत्त्यनङ्गीकारे चक्षुराद्यनुविधानं न स्यात् नित्यसाक्षिणि चक्षुरादेरनुपयोगादतो वृत्तिरादर्त्तव्येत्याशङ्क्य तामङ्गीकरोति घटादीति । ननु विषयप्रकाश एव तन्निर्गमफलमिति न इत्याह परोक्षस्थल इवेति ।

पत्तिः शाब्दानुमित्योरिव करणविशेषप्रयुक्तवृत्ति-वैजात्यादेव तदुपपत्तेः ।

अत्र केचिदाहुः । प्रत्यक्षस्थले विषयाधिष्ठानतया तदवच्छिन्नमेव चैतन्यं विषयप्रकाशः साक्षात् तादात्म्यरूपसम्बन्धसम्भवे स्वरूपसम्बन्धस्य अन्यस्य वा कल्पनाऽयोगादिति तदभिव्यक्त्यर्थं युक्तो वृत्तिनिर्गमाभ्युपगमः ।

---

ननु प्रत्यक्षपरोक्षज्ञानयोर्वैलक्षण्यमनुभवसिद्धं तच्च प्रत्यक्ष-स्थले वृत्तिनिर्गमाभ्युपगमे निर्वहति बहिर्निर्गतवृत्त्यव-च्छिन्नचैतन्यमपरोक्ष-ज्ञानमनिर्गतवृत्त्यवच्छिन्नचैतन्यं परोक्ष-ज्ञानमिति नेत्याह । न च तथा सति इत्यादिना वृत्त्यनि-र्गमने सतीत्यर्थः । इन्द्रियजन्यज्ञानं प्रत्यक्षं तदजन्यज्ञानं परोक्षमिति वैलक्षण्योपपत्तेरित्यर्थः ।

यथा शाब्दज्ञाने शब्दरूपकरणविशेषप्रयुक्तं शाब्दत्वरूपं वैजात्यं यथा वा अनुमितावनुमितत्वं तथेत्यर्थः । करण-विशेषः इन्द्रियमनुमानादि च तत्प्रयुक्तवृत्तिषु वैजात्यं प्रत्यक्ष-त्वादिजातिरूपमुपाधिरूपं वा तस्मादेवेत्यर्थः ।

वृत्तिनिर्गमं साधयति अत्र केचिदाहुरिति । विषयाधिष्ठान-तया विषयावच्छिन्नं यच्चैतन्यं तदेव विषयप्रकाशः न जीवचैतन्यं तस्य विषयं प्रति उपादानत्वाभावेन साक्षात्तादात्म्यसम्बन्धा-भावादित्यर्थः । अन्यस्य वेति परम्परासम्बन्धस्य वेत्यर्थः । तादात्म्यरूपसम्बन्धसम्भवे स्वरूपसम्बन्धकल्पनायोगात् साक्षात्

परोक्षस्थले व्यवहिते वह्न्यादौ वृत्तिसंसर्गायोगादिन्द्रियवदन्वयव्यतिरेकशालिनो वृत्तिनिर्गमद्वारस्य अनुपलम्भाच्च अनिर्गतवृत्त्यवच्छिन्नचैतन्यमेव स्वरूपसम्बन्धेन विषयगोचरमगत्या अभ्युपगम्यत इति ।

अन्ये तु अहङ्कारसुखदुःखादिष्वापरोक्ष्यं साक्षात् चैतन्यसंसर्गिषु क्लृप्तमिति घटादावपि विषयसंसृष्टमेव चैतन्यमापरोक्ष्यहेतुरिति तदभिव्यक्तये वृत्तिनिर्गमं समर्थयन्ते ।

---

सम्बन्धसम्भवे अन्यस्य सम्बन्धस्य कल्पनायोगादिति विभागः । ततः किं तत्राह इति । तदभिव्यक्त्यर्थमिति । विषयावच्छिन्नब्रह्मचैतन्यस्यैव विषयप्रकाशकत्वात् तस्य च आवृतत्वात् आवरणाभिभवरूपाभिव्यक्तिसिद्ध्यर्थमित्यर्थः ।

ननु उक्तयुक्त्या परोक्षस्थलेऽपि विषयावच्छिन्नब्रह्मचैतन्यमेव विषयावभासकं स्यात् ततश्च तत्रापि तन्निर्गमः प्रसज्येतेति नेत्याह परोक्षस्थल इति । वृत्तिनिर्गमनहेतुसन्निकर्षाभावादित्याशयेनाह व्यवहित इति ।

वृत्तिनिर्गमने उपपत्त्यन्तरमाह अन्ये त्विति संसर्गिषु क्लृप्तमिति । संसर्गस्तादात्म्यं विषयापरोक्षे क्वचित् क्लृप्तप्रयोजकस्य संसर्गस्यैव अन्यत्रापि सम्भवे तत्त्यागायोगादिति भावः । विषयसंसृष्टमेवेति । न तु तदसंसृष्टं जीवचैतन्यमित्येवकारार्थः । तदिति । विषयावच्छिन्नब्रह्मचैतन्याभिव्यक्त्य इत्यर्थः ।

इतरे तु शब्दानुमानावगतेभ्यः प्रत्यक्षावगते स्पष्टता तावदनुभूयते नहि रसालपरिमलादि-विशेषे शतवारमाप्तोपदिष्टेऽपि प्रत्यक्षावगत इव स्पष्टता अस्ति तदनन्तरमपि कथं तदिति जिज्ञासानुवृत्तेः।

न च शब्दान्माधुर्य्यादिमात्रावगमेऽपि रसालमाधुर्य्यादिवृत्त्यवान्तर-जातिविशेषवाचिशब्दाभावात् तत्सत्त्वेऽपि श्रोतुः तस्यागृहीतसङ्गतिकत्वात् शब्दादसाधारणजातिविशेषावच्छिन्नमा-

---

प्रत्यक्षे वस्तुनि आवरणाभिभवस्य आवश्यकताप्रतिपादनपूर्वकं तदभिभवार्थं वृत्तिनिर्गमनमिति प्रतिपादयति इतरे तु इति। ननु शब्दाद्यवगतेऽप्यर्थे स्पष्टता किं न स्यादिति नेत्याह नहीति। परिमलः सुगन्धः। आदिपदं रसालगतरससंग्रहार्थम् आम्रफले मधुररसादिरस्तीत्येवंरूपादाप्तवाक्यात् शतवारमुक्तादपि मधुरत्वादिसामान्यविशिष्टतयैव रसादिज्ञानं भवति न तु मधुरत्वव्याप्यजातिविशेषविशिष्टरसादिज्ञानं तथा च रसादिगतजातिविशेषज्ञानाभावादेव जातिविशेषे जिज्ञासा उपपद्यते न तु शब्दादवगतेऽपि स्पष्टत्वाभावादित्याशयेन शङ्कते

न च शब्दादिति। माधुर्य्यं मधुररसः माधुर्य्यादिभानावगमेऽपि शब्दादसाधारणजातिविशेषावच्छिन्नमाधुर्य्यावगमो नास्तीति सम्बन्धः। असाधारणो यो जातिविशेषस्तदवच्छि-

धुर्य्यावगमो नास्तीति जिज्ञासानुपपत्तिर्युक्तेति शङ्काम् ।

रसाले सर्वातिशायी माधुर्य्यविशेषोऽस्तीति अस्मात् शब्दात् तद्गतावान्तरजातिविशेषस्यापि अवगमात् । न ह्ययं विशेषशब्दः तद्गतं विशेषं विहायान्यगतं विशेषं तत्र बोधयति अप्रामाण्यापत्तेः ।

---

अतया माधुर्य्यावगमो नास्तीत्यर्थः । जातिविशेषावगमाभावे उपायाभावहेतुमाह रसालेत्यादिना । रसालस्य यत् माधुर्य्यादि तद्वृत्ति योऽवान्तरजातिविशेषस्तद्वाचकशब्दाभावादित्यर्थः । तद्बोधकशब्दमङ्गीकृत्यापि शक्तिग्रहाभावात् तदवगमो न सम्भवतीत्याह तस्यापीति । तस्येति अवान्तरजातिविशेषवाचकशब्दस्येत्यर्थः । न च शङ्क्यमिति सम्बन्धः ।

तद्वाचकपदाभावेऽपि तद्बोधको वाक्यरूपशब्दोऽस्ति तेन च जातिविशेषावगमोऽप्यस्ति तथा च अवगते जातिविशेषे स्पष्टत्वाभावादेव जिज्ञासेत्याशयेनाह रसाल इत्यादिना । अयं शब्दः किं तद्गतं जातिविशेषं बोधयति किं वा अन्यगतं साम्यमङ्गीकरोति तद्गतावान्तरेति । द्वितीयं दूषयति न ह्ययमिति । तत्रेति रसालमाधुर्य्यादावित्यर्थः । तात्पर्य्यविषय एव शब्दस्य प्रामाण्याभ्युपगमादिति भावः । न च अप्रामाण्ये इष्टापत्तिरिति वाच्यम् । आप्तवाक्यस्य तदङ्गीकारायोगादिति भावः ।

न च तद्गतमेव विशेषं विशेषत्वेन सामान्येन रूपेण बोधयति न विशिष्येति जिज्ञासेति वाच्यम्।

प्रत्यक्षेणापि मधुररसविशेषगस्य जातिविशेषस्य स्वरूपत एव विषयीकरणेन जातिविशेषगतविशेषान्तराविषयीकरणात् जिज्ञासानुवृत्तिप्रसङ्गात्। तस्मात् प्रत्यक्षग्राह्योऽभिव्यक्त्यापरो-

---

माधुर्य्यगतजातिविशेषाभावमङ्गीकृत्य शङ्कते न च तद्गतमेवेति। सामान्येनेति विशेषत्वं रसालमाधुर्य्यगते जातिविशेष इव फलान्तरमाधुर्य्यगतेषु जातिविशेषेष्वपि सत्त्वात् सामान्यरूपमिति भावः। न विशिष्येति जातिविशेषगतविशेषविशिष्टतया जातिविशेषं न बोधयति तथाच रसालमाधुर्य्यगतजातिविशेषस्य स्वरूपेण शब्दावगतत्वेऽपि स्वगतासाधारणविशेषविशिष्टतया अनवगतत्वादेव जिज्ञास्यत्वमिति भावः। जातिविशेषगतोऽसाधारणविशेषः किं जातिरूपः किं वा जातिविशेषाश्रयेतरावृत्तित्वे सति जातिविशेषाश्रयवृत्तित्वरूपोपाधिर्वा? नाद्यः जातौ तदनङ्गीकारात् न द्वितीयः, रसालमाधुर्य्यगतजातिविशेषे प्रत्यक्षेणापि तदग्रहणेन प्रत्यक्षावगतेऽपि जातिविशेषजिज्ञासानुवृत्तिप्रसङ्गात् तस्मात् प्रत्यक्षेणापि स जातिविशेषः स्वरूपेणैव गृह्यत इति वक्तव्यम्।

स्वरूपेण तदवगमस्य उक्तशब्दादप्यस्त्येवेति शब्दावगतस्यापि स्पष्टत्वे तत्र जिज्ञासानुवृत्तिर्न स्यादित्याशयेनाह। प्रत्य-

त्वैकरसचैतन्यावगुण्ठनात् स्पष्टता जिज्ञासानिवर्त्तनक्षमा शब्दादिगम्ये तदभावात् अस्पष्टतेति व्यवस्थाभ्युपगन्तव्या।

अत एव साक्षिवेद्यस्य सुखादेः स्पष्टता शाब्दवृत्तिवेद्यस्यापि ब्रह्मणो मननादेः प्रागज्ञाननिवृत्तावस्पष्टता तदनन्तरं तन्निवृत्तौ स्पष्टतेति वृत्तिनिर्गममुपपादयन्ति।

ननु एतावतापि विषयावरकाज्ञाननिवृत्त्यर्थं

---

त्वेणापीति तस्मादिति। प्रत्यक्षावगत इव शब्दादिगम्येऽर्थं स्पष्टत्वाभावादित्यर्थः। अनुभवसिद्धायाः स्पष्टतायाः प्रयोजकमाह अभिव्यक्तेति। अपरोक्षत्वं स्वप्रकाशत्वमेकरसत्वमेकरूपत्वं अभिव्यक्तं यदपरोक्षैकरसचैतन्यं तत्तादात्म्यात् प्रत्यक्षशास्त्रे स्पष्टताविषयताविशेषरूपेत्यर्थः।

अनेन विषयगतस्पष्टता प्रयोजकीभूताया विषयचैतन्याभिव्यक्ति-रावरण-निवृत्तिरूपा तस्याः सिद्धये वृत्तिनिर्गमनमपेक्षितमिति सूचितम् आवरणनिवृत्तेः स्पष्टताप्रयोजकत्वे अन्वयव्यतिरेकौ दर्शयति अतएव इत्यादिना। अभिव्यक्तचैतन्यसंसर्गादेव इत्यर्थः। शाब्दवृत्तौति शब्दजन्या वृत्तिर्मननाद्यनुष्ठानात् प्रागसम्भावनाविपरीतभावनाभ्यां प्रतिबद्धत्वादज्ञानानिवर्त्तकात्तदनुष्ठानानन्तरमप्रतिबद्धत्वात् अज्ञाननिवर्त्तिकेति भावः।

ननु एतावतापि इति अत्र केचिदाहुरित्यादिना मत-

वृत्तिनिर्गम इत्युक्तं तदयुक्तम् विषयावच्छिन्नचैतन्यगतस्य तदावरकाज्ञानस्य अनिर्गतवृत्त्या निवृत्त्युपगमेऽपि अनतिप्रसङ्गात्।

न च तथा सति देवदत्तीयघटज्ञानेन यज्ञदत्तीयघटाज्ञानस्यापि निवृत्तिप्रसङ्गः समानविषयत्वस्य सत्त्वात् अहमर्थविषयचैतन्यनिष्ठयोर्ज्ञानाज्ञानयोः भिन्नाश्रयत्वेन तयोर्विरोधे समानाश्रयत्वस्य अतन्त्रत्वादिति वाच्यम्।

---

त्रयोपन्यासात्मकग्रन्थेनापि इत्यर्थः। विषयावरकाज्ञानस्य पुरुषगतत्वमते अनिर्गतवृत्त्या निवृत्तिसम्भवेऽपि तस्य विषयावच्छिन्नचैतन्यगतत्वपक्षे तन्निर्गमापेक्षा स्यादिति आशङ्क्य निर्गतवृत्त्यैव विषयगताज्ञानस्यापि निवृत्तौ नास्ति बाधकमित्याशयेन अज्ञानं विशिनष्टि विषयावच्छिन्नचैतन्यगतस्येति।

ननु ज्ञानाज्ञानयोर्निवर्त्त्यनिवर्त्तकभावलक्षणे विरोधे समानाश्रयत्वे सति समानविषयकत्वं तन्त्रं समानाश्रयत्वं च वृत्तिनिर्गमने सति सम्भवति अज्ञानाश्रये विषयचैतन्ये वृत्तिरूपज्ञानस्यापि स्थितिलाभात्तन्निर्गमाभावे तु तयोः समानाश्रयत्वासम्भवात् समानविषयकत्वमात्रं विरोधप्रयोजकं पर्य्यवस्यति तथाच अतिप्रसङ्ग इति शङ्कते न च तथा सतीति। वृत्तिनिर्गमानुपगमे सति इत्यर्थः। सत्त्वादिति देवदत्तीयघटज्ञानयज्ञदत्तीयघटाज्ञानयोरिति शेषः। अहमर्थेति वृत्तिनिर्गमनाभावे सति ज्ञानमहमर्थनिष्ठमेव न

समानाश्रयविषयत्वं ज्ञानाज्ञानयोर्विरोधप्रयोजकमङ्गीकृत्य वृत्तिनिर्गमाभ्युपगमेऽपि देवदत्तीयघटवृत्तेः यज्ञदत्तीयघटाज्ञानस्य च घटावच्छिन्नचैतन्यैकाश्रयत्वप्राप्त्याऽतिप्रसङ्गतादवस्थ्यात् न यदज्ञानं यं पुरुषं प्रति यद्विषयावरकं तत् तदीयतद्विषयकज्ञाननिवर्त्यमिति पृथगेव विरोधप्रयोजकस्य वक्तव्यतया समानाश्रयत्वस्यानपेक्षणात् ।

---

विषयचैतन्यनिष्ठं विषयावरकाज्ञानञ्च विषयचैतन्यनिष्ठमेव न तु अहमर्थनिष्ठं तथाच समानाश्रयत्वं बाधितत्वात् न प्रयोजककोटिप्रविष्टमित्यर्थः ।

समानाश्रयविषयत्वमिति । ज्ञानाज्ञानयोर्विरोधे समानाश्रयत्वे सति समानविषयकत्वं प्रयोजकं परिकल्प्य तन्निर्वाहाय वृत्तिनिर्गमे स्वीकृतेऽपि उक्तदोषतादवस्थ्येन तयोर्विरोधे उक्तप्रयोजकात् अन्यदेव प्रयोजकं कल्पनीयं यच्च वृत्तिनिर्गमं विना एव सिध्यति अतो विरोधप्रयोजकोपपादकतयापि वृत्तिनिर्गमो न सिद्ध्यतीति समुदायार्थः । देवदत्तीयेति यज्ञदत्तीयघटाज्ञानाश्रये घटावच्छिन्नचैतन्य देवदत्तीयघटज्ञानरूपवृत्तेर्निर्गमनद्वारा सम्बन्धे सति देवदत्तीयघटज्ञानयज्ञदत्तीयघटाज्ञानयोः समानाश्रयत्व सति समानविषयकत्वं लभ्यते न च देवदत्तीयघटवृत्त्या यज्ञदत्तीयघटाज्ञाननिवृत्तिरस्तीत्युक्तदोषतादवस्थ्यमित्यर्थः । यदीदं प्रयो-

अत्राहुः। वृत्तिनिर्गमानुपगमे ज्ञानाज्ञानयोर्विरोधप्रयोजकमेव दुर्निरूप्यम्। यदज्ञानं यं पुरुषं प्रतीत्याद्युक्तमिति चेत् न। परोक्षज्ञानेनापि विषयगताज्ञाननिवृत्तिप्रसङ्गात्। अपरोक्षत्वमपि निवर्त्तकज्ञानविशेषणमिति चेत् किं तदपरोक्षत्वं न तावज्जातिः दण्डायमासीदिति संस्कारोपनीतदण्डविशिष्टपुरुषविषयस्य चाक्षुषज्ञानस्य दण्डांशेऽपि तत्सत्त्वे तत्रापि विषयगताज्ञाननिवृत्त्यापातात् दण्डं साक्षात्क-

---

जकं न सम्भवति किं तर्हि तत्प्रयोजकं वृत्तिनिर्गमनं निरपेक्षं पूर्ववादिनस्त्वाभिप्रेतं तत्राह यदज्ञानमिति। तदज्ञानं तत्पुरुषीयतद्विषयकज्ञाननिवर्त्त्यमित्यर्थः। तथाच प्रयोजकशरीरे यं पुरुषं प्रतीत्यनेन च यज्ञदत्तं प्रति विषयावरकाज्ञानस्य यज्ञदत्तीयज्ञानेनैव निवृत्तिर्न देवदत्तज्ञानेन इति नियमलाभान्नोक्तातिप्रसङ्ग इति सूचितम्।

वृत्तिनिर्गमं साधयितु मुपक्रमते अत्राहुरित्यादिना। किं तदिति अपरोक्षत्वं जातिरुपाधिर्वेति किं शब्दार्थः आद्यं दूषयति न तावदिति। पूर्वं दण्डविशिष्टतया गृहीते विष्णुमित्रे वर्त्तमानकाले दण्डवियुक्ते प्रत्यक्षप्रत्यभिज्ञानं संस्काररूपोपनायकसहितादिन्द्रियाज्जायते अयं विष्णुमित्रो दण्डयासीदिति तत्र दण्डांशे प्रत्यक्षत्वमस्ति न वा आद्ये दोषमाह दण्डांशेऽपीति निवृत्त्यापातादिति न च

करोमीति तदंशेऽपि आपरोक्ष्यानुभवापत्तेश्च। अननुभवेऽपि संस्कारं सन्निकर्षं परिकल्प्य इन्द्रियसन्निकर्षजन्यतया तत्र काल्पनिकापरोक्ष्योपगमेऽनुमित्यादावपि लिङ्गज्ञानादिकं सन्निकर्षं परिकल्प्य तदङ्गीकारापत्तेः।

दण्डांशे आपरोक्ष्यासत्त्वे तु तस्य जातित्वायोगात् जातेर्व्याप्यवृत्तित्वनियमात्।

तदनियमेऽपि अवच्छेदकोपाधिभेदानिरूपणेन

---

अत्रेष्टापत्तिर्वक्तुं शक्या स दण्ड इदानीं कीदृश इति जिज्ञासानुदयप्रसङ्गादिति भावः। ननु अज्ञाननिवृत्त्यनुभवयोरभावेऽपि दण्डांशे प्रत्यक्षत्वं कल्प्यते कल्पकं च इन्द्रियसन्निकर्षजन्यत्वं सन्निकर्षश्च सविषयं प्रत्यासत्तिरिति मतमनुसृत्य संस्कारः कल्प्यते इत्याशङ्क्य अतिप्रसङ्गमाह अननुभवेऽपि इत्यादिना। अनुमितौ लिङ्गज्ञानं सन्निकर्षः उपमितौ सादृश्यज्ञानं सन्निकर्षः शाब्दे पदार्थोपस्थितिः सन्निकर्षः अर्थापत्तौ अनुपपद्यमानपदार्थज्ञानं सन्निकर्षः अभावज्ञाने प्रतियोगिज्ञानं सन्निकर्ष इति कल्पनया प्रत्यक्षप्रमाणपरिशेषापत्तेरिति भावः। तदङ्गीकारेति आपरोक्ष्यत्वाङ्गीकारापत्तेरित्यर्थः।

दण्डांशेऽपि प्रत्यक्षत्वं नास्तीति द्वितीयकल्पं दूषयति दण्डांश इति व्याप्यवृत्तित्वनियमादिति। अन्यथा एकस्यामेव प्रत्यभिज्ञायां तत्तदंशे संस्कारजन्यतया स्मृतित्वापत्तौ जातिसङ्करापत्तेरिति भावः।

तस्य अव्याप्यवृत्तिजातित्वायोगाच्च। नापि उपाधिस्तदनिर्वचनात्। इन्द्रियजन्यत्वमिति चेत् न साक्षिप्रत्यक्षाव्यापनात्।

अनुमितिशाब्दज्ञानोपनीतगुरुत्वादिविशिष्टघटप्रत्यक्षे विशेषणांशातिव्यापनाच्च।

---

तदनियमेऽपीति जाते र्व्याप्यवृत्तित्वनियमाभावेऽपि प्रकृते प्रत्यभिज्ञायां विष्णुमित्रांशे प्रत्यक्षत्वं दण्डांशे तदभावश्चास्तीति वक्तव्यं ततश्च अवच्छेदकभेदं विना प्रतियोगितदभावयोरेकत्र वृत्त्ययोगादुपाधिभेदो वाच्यः। स च दुर्निरूप्यस्तस्मादपरोक्षत्वजातेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व-रूपा व्याप्य-वृत्तित्वा-योगादव्याप्य-वृत्तिजातित्वमेव वाच्यं तत्र च दूषणयुक्तमिति भावः। ननु प्रकृते उपाधिभेदानिरूपणमसिद्धं लौकिक-सन्निकर्षजन्यत्व-तदभावयोर्वा संस्कारजन्य-ज्ञानत्व-तदभावयोर्वा विष्णुमित्र-विषयकत्व-तदभावयोर्वा अपरोक्षत्वतदभावौ प्रति उपाधित्वसम्भवादिति चेत् न, उक्तोपाधीनामपि भावरूपतया तदर्थमुपाध्यन्तरापेक्षायामनवस्थाप्रसङ्गादिति भावः। अपरोक्षत्वमुपाधिरिति पक्षं दूषयति नापीति। तन्निर्वचनमसिद्धमिति चेत् तत्र वक्तव्यं किमिन्द्रियजन्यत्वमपरोक्षत्वं किं वा सत्सन्निकर्षजन्यत्वं सिद्धान्त्यभिमतं वा तत्राद्यमनूद्य दूषयति इन्द्रियेति।

सुखादिप्रत्यक्षरूपे नित्यसाक्षिण्यव्याप्तिमुक्त्वा अतिव्याप्तिमप्याह अनुमितीति। यस्मिन् घटे अनुमानेन वा शब्देन वा

कारणान्तराभावेन तदंशे परोक्षेऽपि उपनयसहकारिसामर्थ्यादिन्द्रियस्यैव जनकत्वात् अनुगतजन्यतावच्छेदकाग्रहेण अनेकेषु इन्द्रियजन्यत्वस्य दुर्ग्रहत्वाच्च ।

तद्ग्रहे च तस्यैव प्रथमप्रतीतस्य आपरोक्ष्यरूपत्वोपपत्तौ प्रत्यक्षानुभवायोग्यस्य इन्द्रियजन्यत्वस्य तद्योग्यापरोक्ष्यरूपत्वकल्पनायोगात् ।

---

गुरुत्वमनुभूतं तस्मिन्निन्द्रियसन्निकर्षे सति 'घटोऽयं गुरुरिति प्रत्यक्षं भवति तत्र विशेषणीभूतगुरुत्वांशे अतिव्याप्तिरित्यर्थः ।

ननु गुरुत्वस्य इन्द्रियायोग्यतया परोक्षे तदंशज्ञाने तज्जन्यत्वमसिद्धमित्यत आह कारणान्तरेति परोक्षेऽपीति । यथा क्वचिदत्तमते अनुमितौ मनसः करणत्वं तथा इति भावः । न च इन्द्रियजन्यत्वमपरोक्षत्वं गुरुत्वांशज्ञाने च न तथा तज्जन्यत्वमिति चातिव्याप्तिरिति वाच्यं तथापि साक्षिप्रत्यक्षाव्याप्त्यनिरासादिति भावः । अनेकेषु रूपादिसाक्षात्कारेषु तज्जन्यत्वं दुर्ग्रहमनुगतजन्यतावच्छेदकाभावेन तज्ज्ञानं विना जन्यत्वज्ञानासम्भवादित्याह अननुगतेति ।

ननु साक्षात्करोमीत्यनुभवसिद्धः कश्चिदखण्डोपाधिरेव जन्यतावच्छेदकोऽस्त्वित्याशङ्क्य तर्हि स एव अपरोक्षत्वं भवेन्नान्यदित्याह तद्ग्रहे चेति । अवच्छेद्यजन्यत्वग्रहात् पूर्वमेवावच्छेदकग्रहस्यावश्यकत्वात् साक्षात्करोमि इति अनुभवयोग्यस्यापरोक्षत्वस्य तदयोग्यधर्मरूपत्वायोगाच्च इत्यर्थः

एतेन इन्द्रियसन्निकर्षजन्यत्वमापरोक्ष्यम् उपनयसहकृतेन्द्रियजन्यपरोक्षांशे च न सन्निकर्षजन्यत्वमनुमितावपि उपनीतभानसत्त्वेन प्रमाणान्तरसाधारणस्योपनयस्य असन्निकर्षत्वादित्यपि शङ्का निरस्ता ।

संयोगादिसन्निकर्षाणामननुगमेन अननुगमाच्च ।

---

अस्तु तर्हि उक्तावच्छेदकोपाधिरेवापरोक्षत्वरूपत्वं स किं व्याप्यवृत्तिरव्याप्यवृत्तिर्वा नाद्यः दण्डोऽयमासीदिति प्रत्यक्षे दण्डांशे इति व्याप्तेर्न द्वितीयः अवच्छेदकभेदानिरूपणात् न च विष्णुमित्रविषयकत्वावच्छेदेन तत्र अपरोक्षत्वरूपोपाधिरस्ति दण्डविषयकत्वावच्छेदेन तत्र एव तदभावोऽप्यस्तीति वाच्यं तथा सति दण्डांशे विष्णुमित्रविषयकत्वाभावस्य वक्तव्यतया तत्र प्रत्यक्षे विष्णुमित्रविषयकत्वतदभावयोरविरोधाय अवच्छेदकान्तरापेक्षायां पूर्वोक्तानवस्थाप्रसङ्गाद्-खण्डोपाधिस्वीकारे जातिमात्रविलयप्रसङ्गाच्च नोक्तोपाधिपक्षः सम्भवतीति भावः ।

उपाधिपक्षे द्वितीयकल्पं निराचष्टे एतेनेति । अव्याप्त्यादिदोषप्रसङ्गेनेत्यर्थः । इन्द्रियजन्यत्वमपरोक्षत्वमिति पक्षे या अतिव्याप्तिरुक्ता सा तत्सन्निकर्षजन्यत्वं तदिति पक्षे नास्ति इत्याह शङ्किकः उपनयेति । कारणान्तराभावे न इन्द्रियजन्यत्वसत्त्वेऽपि तत्सन्निकर्षत्वं नास्ति उपनयस्य सन्निकर्षत्वासम्भवात् सन्निकर्षान्तराभावाच्च इति भावः ।

यत् तवाभिमतमापरोक्ष्यं तदेव ममापि अस्त्विति चेत् न, तस्य शाब्दापरोक्ष्यनिरूपणा-प्रस्तावे प्रतिपादनीयस्य तत्रैव दर्शनीयया रीत्या अज्ञाननिवृत्तिप्रयोज्यत्वेन तन्निवृत्तिप्रयोजकवि-शेषणभावायोगात् ।

---

दूषणान्तरमाह संयोगादीति संयोगसंयुक्तसमवायादिसन्नि-कर्षाणामननुगमेन संयोगादिषु अनुगतसन्निकर्षत्वस्याभावेनेति यावत् अननुगमाच्चेति इन्द्रियसन्निकर्षजन्यत्वस्येति शेषः । तथा च घटतद्रूपरूपत्वशब्दशब्दत्वसुखादिगोचरसाक्षात्कारेषु साक्षा-त्करोमीत्यनुगतप्रत्यक्षं न स्यादिति भावः ।

उपाधिपक्षे तृतीयमुपाधिमाशङ्कते यत् तवाभिमतमिति । तव सिद्धान्तिनो यद्ज्ञानगतमपरोक्षत्वं सम्मतं तदेव मम मतेऽप्यस्तु तथा च अपरोक्षत्वस्याज्ञाननिवर्तकज्ञानविशेषणत्वासम्भवात् न परोक्षज्ञानेन तन्निवृत्तिप्रसङ्ग इति भावः । मदभिमतापरोक्षत्वस्य ज्ञाने तन्निवृत्तिप्रयोजकत्वं न सम्भवतीति सिद्धान्ती दूषयति न तस्येति मदभिमतापरोक्षत्वस्येत्यर्थः । प्रस्तावः प्रकरणं तच्च तृतीयपरिच्छेदावसाने द्रष्टव्यम । तत्रैव दर्शनीययेति ज्ञानस्यापरोक्षत्वं हि न करणविशेषप्रयुक्तं किन्तु अपरोक्षार्था-भिन्नत्वमिदं चापरोक्षत्वं विषयावभासकचैतन्यरूपज्ञाननिष्ठं न वृत्तिनिष्ठमतो न साक्षिप्रत्यक्षाव्याप्तिः अर्थापरोक्ष्यं च स्वव्यवहारानुकूलचैतन्याभिन्नत्वं स्वपदमर्थपरं तद्व्यवहारानु-कूलं च चैतन्यं निवृत्तावरणं तत्तदधिष्ठानचैतन्यमेव तथा च घटाद्यर्थस्य स्वव्यवहारानुकूलेन स्वाधिष्ठानचैतन्येन स्वगोचर-

तस्मात् तरति शोकमात्मविदिति श्रुतस्य ब्रह्मज्ञानस्य मूलाज्ञानाश्रयभूतसर्वोपादानब्रह्म-संसर्गनियतस्य मूलाज्ञाननिवर्त्तकत्वात् ऐन्द्रि-यकवृत्तयस्तत्तदिन्द्रियसन्निकर्षसामर्थ्यात् तत्तद्वि-षयावच्छिन्नचैतन्यसंसृष्टा एवोत्पद्यन्ते इति

---

वृत्त्यभिव्यक्तेन तादात्म्यलक्षणाभेदसत्त्वात् स्वव्यवहारानुकूल-चैतन्याभिन्नत्वरूपमपरोक्षत्वमुपपन्नं तथा अहङ्कारादिषु तद-धिष्ठानभूतस्य केवलसाक्षिरूपतत्प्रत्यक्षज्ञानस्य बाह्यघटादिषु तत्तदाकारवृत्त्युपहितस्य घटादिप्रत्यक्षज्ञानरूपस्य घटाद्यधि-ष्ठानचैतन्यस्य च तेन तेन विषयेण तादात्म्यसत्त्वादपरोक्षार्था-भिन्नत्वरूपमपरोक्षत्वमुपपन्नमिति हि तत्र दर्शनीया रीतिः। प्रयोज्यत्वेनेति विषयचैतन्यगताज्ञाननिवृत्तौ सत्यां विषयस्य घटादेः स्वव्यवहारानुकूलचैतन्याभिन्नत्वरूपमपरोक्षत्वं लभ्यते विषयस्य तल्लाभे सति तज्ज्ञानस्यापरोक्षार्थाभिन्नत्वरूपमपरो-क्षत्वं लभ्यते। तथाच विषयचैतन्यगताज्ञाननिवृत्तेः पूर्वं ज्ञान-स्यापरोक्षत्वालाभेन सिद्धान्त्यभिमतस्य ज्ञानगतापरोक्षत्वस्य विषयचैतन्यगताज्ञाननिवृत्तिप्रयोज्यस्याज्ञाननिवृत्तिं प्रति प्रयो-जकत्वासम्भवादित्यर्थः। तन्निवृत्तिं प्रति प्रयोजकतया निव-र्त्तकज्ञानविशेषणत्वायोगादित्यक्षरार्थः।

तस्मादिति यज्ज्ञानं यं पुरुषं प्रति इत्यादिरूपे निरुक्ते विरा-धप्रयोजकै अपरोक्षत्वस्य निवर्त्तकज्ञानविशेषणत्वासम्भवादि-त्यर्थः। तस्मादज्ञानाश्रयचैतन्यसंसर्गनियतत्वं निवर्त्तकज्ञान-विशेषणं वाच्यमिति सम्बन्धः। परोक्षज्ञानस्य अज्ञाननिवर्त्त-

नियममुपेत्य अज्ञानाश्रयचैतन्यसंसर्गनियतत्वं निवर्त्तकज्ञानविशेषणं वाच्यम्।

तथा च यदज्ञानं यं पुरुषं प्रति यद्विषयावरकं तत् तदीयतद्विषयतदज्ञानाश्रयचैतन्यसंस-

---

त्वप्रसङ्गवारणायेति शेषः। ननु विषयसंसृष्टस्य वृत्तिज्ञानस्य विषयगताज्ञाननिवर्त्तकत्वं क्वचिदपि अक्लृप्तमित्याशङ्क्य ब्रह्मगोचरवृत्तिज्ञाने क्लृप्तमित्याशयेनाह ब्रह्मज्ञानस्येति मूलाज्ञानाश्रयभूतसर्वोपादाने ब्रह्मणि संसर्गनियतस्येत्यर्थः। यदा ब्रह्मगोचरवृत्तिज्ञानमुदेति तदा नियमेन ब्रह्मसंसृष्टमेवोदेतीत्यत्र हेतुत्वेन सर्वोपादानत्वमुपात्तं कार्य्यमात्रस्य जन्मप्रभृत्युपादानभूतब्रह्मणा सह संसर्गनियमे सति ब्रह्मगोचरवृत्तिज्ञानस्यापि स्वनिवर्त्त्यमूलाज्ञानाश्रयभूते ब्रह्मणि संसर्गनियमोऽप्यर्थसिद्ध इति भावः। ब्रह्मज्ञानस्याज्ञाननिवर्त्तकत्वे हेतुमाह तरति शोकमिति। शोकपदमज्ञानपरं आत्मपदं प्रत्यगभिन्नब्रह्मपरं श्रुतस्येति पदात् पूर्वमज्ञाननिवर्त्तकत्वेनेति शेषः। परोक्षवृत्तीनां विषयचैतन्यसंसर्गाभावात् ऐन्द्रियकवृत्तीनां तत्संसर्गे को हेतुः तत्राह तत्तदिन्द्रियसन्निकर्षसामर्थ्यादिति अनेन परोक्षवृत्तीनामज्ञानाश्रयविषयचैतन्यसंसर्गनियतत्व-रूपविशेषणा-भावात् यदज्ञानं यं प्रति इत्याद्यंशसत्त्वेऽपि न तत्रातिप्रसङ्ग इति सूचितम्।

पर्य्यवसितं प्रयोजकं दर्शयति तथाच इति उक्तविशेषणे सति इत्यर्थः। घटावच्छिन्नचैतन्ये तदावरकाज्ञानानि बहूनि सन्ति तेषां मध्ये कानिचित् देवदत्तं प्रति तदावरकाणि कानिचिच्च

र्ग नियतात्मलाभज्ञाननिवर्त्त्यमिति ज्ञानाज्ञानयोर्विरोधप्रयोजकं निरूपितं भवति।

---

यज्ञदत्तादिकं प्रति तदावरकाणि एवं प्रतिविषयं पुरुषभेदेन अनेकाज्ञानानि सन्ति तथाच विषयावरकाज्ञानानां मध्ये यदज्ञानं यं पुरुषं देवदत्तं प्रति यद्विषयावरकं यस्य विषयस्य घटस्यावरकं तदज्ञानं तदीयेन देवदत्तीयेन तद्विषयेण तद्घटविषयकेण तदज्ञानाश्रयचैतन्यसंसर्गनियतात्मलाभज्ञानेन निवर्त्त्यमित्यर्थः। तदज्ञानेतिपदेन देवदत्तं प्रति घटावरकमज्ञानमभिधीयते तदज्ञानाश्रयचैतन्यं घटावच्छिन्नचैतन्यं तत्र यः संसर्गः तन्नियतः तद्व्याप्य आत्मलाभो यस्य घटगोचरवृत्तिज्ञानस्य तज्ज्ञानं तदज्ञानाश्रयचैतन्यसंसर्गनियतात्मलाभं तच्च तज्ज्ञानञ्चेति विग्रहः आत्मलाभः उत्पत्तिः नियमश्च यदा यदा घटगोचरवृत्तिज्ञानस्य घटेन्द्रियसन्निकर्षजन्यस्यात्मलाभस्तदा तदा घटावच्छिन्नचैतन्ये तस्य घटगोचरवृत्तिज्ञानस्य संसर्ग इत्येवमात्मकस्तदुक्तं प्रागैन्द्रियकवृत्तयस्तद्विषयावच्छिन्नचैतन्यसंसृष्टा एव उत्पद्यन्त इति नियममुपेत्येति तत्र यदा यदा ऐन्द्रियकवृत्तीनामुत्पत्तिस्तदा तदा विषयचैतन्ये तासां संसर्ग इति हि निमयः स्पष्टं भासते। एवं विषयान्तरेषु पुरुषान्तरेषु अज्ञानान्तरेषु ज्ञानान्तरेषु च इदं प्रयोजकं विशिष्य विशिष्य योजनीयम्। ननु परोक्षवृत्तीनां विषयचैतन्यसंसर्गाभावेन उक्तप्रयोजकानाक्रान्तत्वादज्ञाननिवर्त्तकत्वप्रसङ्गो नास्तीत्युक्तमयुक्तं क्वचित् परोक्षवृत्तेरपि विषयसंसर्गसत्त्वात् तथाहि हृदयपुण्डरीके नाड्यः सन्तीति वाक्याज्जायमानाया वृत्तेः कदाचिदन्तःकरणे हृदयपुण्डरीकस्थे नाडीहृदयान्यतरवस्तु-

न च एवं सति नाडीहृदयस्वरूपगोचरशाब्दज्ञानस्यापि अज्ञाननिवर्त्तकत्वप्रसङ्गः। तस्य कदाचिदर्थसम्पन्ननाड़ी-हृदयान्यतर-वस्तुसंसर्गसम्भवेऽपि विषयसंसर्गं विनापि शाब्दज्ञानसम्भवेन तत्संसर्गनियतात्मलाभत्वालाभात्। तस्मात् अज्ञानज्ञानविरोधनिर्वाहाय वृत्तिनिर्गमो वक्तव्य इति।

---

वच्छेदेन जनने सति तस्या वृत्तेस्तदन्यतरवस्त्ववच्छिन्नचैतन्यसंसर्गसत्त्वात् तदावरणविनिवर्त्तकत्वप्रसङ्गः न चेष्टापत्तिस्तदा तदन्यतरवस्तुनि जिज्ञासानुदयप्रसङ्गादिति शङ्का नियतपदेन निरस्तेत्याह।

न च एवं सतीति। विरोधप्रयोजकस्य नियमगर्भत्वे सति शाब्दज्ञानस्याप्यज्ञाननिवर्त्तकत्वप्रसङ्गो न च इति सम्बन्धः। यदा यदा हृदयादिगोचरशाब्दवृत्तेरुदयस्तदा तदा तस्या वृत्तेर्हृदयाद्यन्यतरवस्त्ववच्छिन्नचैतन्ये संसर्ग इति नियमो नास्तीति हेतुमाह तस्येति। तादृशशाब्दज्ञानस्य इत्यर्थः। ऐन्द्रियकवृत्तीनां हि तत्तदिन्द्रियगोलकावच्छिन्नान्तःकरणप्रदेशेषु उत्पत्तिनियमः सम्भाव्यते इन्द्रियनिरपेक्षवृत्तीनान्तु अन्तःकरणे जायमानानां प्रदेशनियमे कारणाभावात् हृदयादिगोचरशाब्दवृत्तिः कदाचिद्दैवयोगात् हृदयाद्यवच्छेदेनान्तःकरणे जायते कदाचित्तु हृदयादिप्रदेशं विहाय प्रदेशान्तरावच्छेदेन सा तत्र जायत इति निरुक्तनियमो नास्ति इत्यर्थः। अत्र तस्य इति षष्ठ्या सप्तम्या

अन्ये तु विषयगताज्ञानस्य लाघवात् समानाधिकरणज्ञाननिवर्त्तकत्वसिद्धौ वृत्ति-निर्गमः फलतीत्याहुः।

अपरे तु वाह्यप्रकाशस्य वाह्यतमोनिवर्त्त-कत्वं सामानाधिकरण्ये सति एव दृष्टमिति दृष्टानुरोधाद् वृत्तिनिर्गमः सिध्यतीत्याहुः।

---

पञ्चम्या च सम्बन्धः। तस्मादिति वृत्तिज्ञानस्याज्ञानाश्रयविषय-चैतन्यसंसर्गं विना तन्निवर्त्तकत्वासम्भवादित्यर्थः।

एवं ज्ञानाज्ञानयोर्विरोधप्रयोजकनिर्वाहकत्वेन वृत्तिनिर्गमनं प्रसाध्य तत्रैव हेत्वन्तराणि मतभेदेनाह अन्ये तु इत्यादिना लाघ-वादिति। विषयगताज्ञानस्यान्वयव्यतिरेकाभ्यां ज्ञाननिवर्त्त्यत्व-ग्रहदशायां लाघवात् समानाधिकरणज्ञाननिवर्त्त्यत्वं गृह्यते न तु व्यधिकरणज्ञाननिवर्त्त्यत्वमित्यर्थः। एतदुक्तं भवति अज्ञानस्य विषयचैतन्यगतत्वात् तन्निवृत्तिलक्षणज्ञानकार्य्य-मपि तद्गतमेव तथाच अज्ञाननिवृत्तिरूपकार्य्यस्य स्वकारण-भूतज्ञानेन सह इन्द्रियसन्निकर्षसामर्थ्यात् सामानाधिकरण्य-लक्षणसम्बन्धसम्भवे तत्त्यागायोगायोगात्कार्य्यकारणयोः सामा-नाधिकरण्यस्य औत्सर्गिकादिति।

वाह्यतम इति अन्धकार इत्यर्थः। सति एवेति अन्यत्र विद्यमानादालोकादन्यत्र तमो नाशो न दृष्ट इति एव-कारार्थः। अज्ञानस्यापि विषयावरकत्वेन वाह्यतमः-सदृशत्वाद्वृत्तिरूपस्य वृत्त्यारूढचैतन्यरूपस्य वा प्रकाशस्य आवरणनिवर्त्तकत्वेन आलोकसदृशत्वात् ज्ञानाज्ञानयोरपि

केचित्तु आवरणाभिभवार्थं वृत्तिनिर्गमा-नपेक्षायामपि चिदुपरागार्थं प्रमातृचैतन्यस्य विषयप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्त्यर्थं वा तदपेक्षेत्याहुः ।

अथ किंप्रमाणकोऽयं जीवब्रह्मणोरभेदः यो वृत्त्या अभिव्यज्येत । वेदान्तप्रमाणक इति घण्टा-घोषः । सर्वेऽपि वेदान्ता उपक्रमोपसंहारैक-

---

अन्धकारालोकयोरिव समानाधिकरणयोरेव निवर्त्यनिव-र्त्तकभावः कल्प्यते तच्च सामानाधिकरण्यमज्ञानाश्रये विषय-चैतन्ये वृत्तिज्ञानस्य संसर्गरूपं स च संसर्गो वृत्तिनिर्गमाधीन इति भावः। एवं विषयचैतन्यगताज्ञाननिवृत्तिरनिर्गत-वृत्त्यापि सम्भवति अतो वृत्तिनिर्गमनाभ्युपगमो व्यर्थ इत्याक्षेपे तन्निर्गमं विना तन्निवृत्तिर्न सम्भवतीति तदभ्युपगमः सफल इति समाधानं दर्शितमिदानीं विषयचैतन्यगताज्ञाननिवृत्त्यर्थं वृत्तिनिर्गमनं नापेक्षितमिति पूर्वपक्ष्युक्तमङ्गीकृत्यापि वृत्तिनि-र्गमनं साधयति केचित्त्विति ।

इदञ्च प्रकारद्वयं प्रागेव प्रपञ्चितमिति न इह प्रपञ्च्यत इति बोध्यम् । प्रमातृचैतन्यशब्दितस्य जीवस्य ब्रह्माभेदे नास्ति प्रमाणमिति शङ्कते ।

अथेति । अयमभेदः किं वेदान्तप्रमाणकः किं वा तदन्य-प्रमाणस्तत्र न तावदाद्यः कल्पः सम्भवति । वेदान्ताना-मुपासनादिपरत्वप्रतीतेर्न द्वितीयः । जीवब्रह्माभेदस्य औप-

रूप्यादितात्पर्य्यलिङ्गैर्विमृश्यमानाः प्रत्यगभिन्ने ब्रह्मण्यद्वितीये समन्वयन्ति। यथा च अयमर्थस्तथा शास्त्र एव समन्वयाध्याये प्रपञ्चितं विस्तरभयान्नेह प्रदर्श्यते।

प्रथमः परिच्छेदः समाप्तः।

---

निषदत्वश्रुतिविरोधादिति भावः। तत्राद्यं कल्पं परिगृह्य समाधत्ते वेदान्तेति। तेषाम् उपासनादिपरत्वं दूषयति सर्वेऽपीति। वेदान्तानां क्व तात्पर्य्यमिति विमृश्यमानाः सर्वे वेदान्ता अद्वये जीवाभिन्ने ब्रह्मणि समन्वयन्ति समन्वयतात्पर्य्यं लभन्ते। तात्पर्य्यज्ञापकानि लिङ्गानि कथयति उपक्रमेति आदिपदमभ्यासादिसंग्रहार्थम्। के ते वेदान्ताः कथं वा तेषु उक्तलिङ्गानां सत्त्वं को वा तैर्लिङ्गैस्तात्पर्य्यावगमप्रकार इत्याकाङ्क्षायामाह यथा चेति सर्वेषां वेदान्तानाम् अयमेव परमतात्पर्य्यविषयीभूतोऽर्थः। न तु उपासनादिप्रपञ्चितमित्यर्थः। तत्रापि कुतो न प्रपञ्च्यते तत्राह विस्तरेति ग्रन्थविस्तारभयादित्यर्थः।

इति प्रथमपरिच्छेदव्याख्या समाप्ता।

# द्वितीयः परिच्छेदः ।

प्रत्यक्षेण अद्वैतश्रुतेरबाधनिरूपणम् ।

अथ कथमद्वितीये ब्रह्मणि वेदान्तानां समन्वयः प्रत्यक्षादिविरोधादिति चेत् न । आरम्भणाधिकरणोदाहृतश्रुतियुक्तिभिः [व्या० सू० अ० २ पा० १ सू० १४ । ] प्रत्यक्षाधिगम्यस्य प्रपञ्चस्य ब्रह्मविवर्त्तरूपतया मिथ्यात्वावगमात् ।

---

प्रथमपरिच्छेदे ब्रह्मलक्षणविचारावसरे लक्षणस्य मतभेदेन ज्ञेयब्रह्मनिष्ठत्वनिरूपणेन ईश्वररूपब्रह्मनिष्ठत्वनिरूपणेन च तत्पदलक्ष्यार्थवाच्यार्थौ निरूपितौ तथा तदनन्तरं जीवतत्साक्षिणोः निरूपणेन त्वम्पदवाच्यार्थलक्ष्यार्थौ निरूपितौ तथा च अर्थात् वाक्यार्थरूपाभेदोऽपि निरूपितो भवति। वाक्यार्थस्य तत्त्वम्पदलक्ष्यार्थानतिरेकात् तथा च जीवाभिन्ने निर्विशेषे ब्रह्मणि वेदान्तसमन्वयरूपः प्रथमाध्यायार्थस्तात्पर्य्यतः पूर्वपरिच्छेदे निरूपितो भवति।

इदानीं द्वितीयाध्यायार्थरूपवेदान्तसमन्वयस्य मानान्तराविरोधं निरूपयितुं परिच्छेदान्तरमारभते। अथ कथमिति। समन्वयस्तात्पर्य्यं प्रत्यक्षेति ब्रह्मापेक्षया द्वितीयस्य प्रपञ्चस्य प्रत्यक्षसिद्धत्वादद्वितीयत्वं तस्य बाधितं तथा च बाधितेऽर्थे कथं श्रुतेस्तात्पर्य्यमप्रामाण्यप्रसङ्गादिति भावः। प्रपञ्चस्य रज्जुसर्पादिवत् ब्रह्मणि कल्पितत्वाद्वास्तवमद्वितीयत्वमबाधितमिति

ननु न श्रुतियुक्तिभिः प्रपञ्चस्य मिथ्यात्वं प्रत्याययितुं शक्यते घटः सन् इत्यादिघटादिसत्त्वग्राहिप्रत्यक्षादिविरोधात्। अत्राहुस्तत्त्वशुद्धिकाराः। न प्रत्यक्षं घटपटादि तत् सत्त्वं वा गृह्णाति किन्तु अधिष्ठानत्वेन घटाद्यनुगतं सन्मात्रं तथा च प्रत्यक्षमपि सद्रूपब्रह्माद्वैतसिद्ध्यानुकूलमेव।

तथा सति तत्सदित्येव प्रत्यक्षं स्यात् न तु घटः सन् इत्यादिप्रत्यक्षमिन्द्रियान्वयव्यतिरेकानुविधायीति चेत् न।

---

समाधत्ते न इति। श्रुतियुक्तिभिरिति एताः श्रुतियुक्तयो विवर्त्तलक्षणनिरूपणावसरेऽस्माभिः दर्शिता इति न अत्र प्रदर्श्यन्ते।

प्रत्यक्षविरोधे श्रुतियुक्तीनामेव बाधो न्याय्य इति मन्यमान आक्षिपति ननु नेति घटः सन्नित्यादिना घटादिसत्त्वग्राहिप्रत्यक्षेण सह प्रपञ्चमिथ्यात्वप्रत्यायकश्रुतियुक्तीनां विरोधत्वादित्यर्थः।

श्रुत्यादिभिर्गम्यं मिथ्यात्वविरुद्धं सत्त्वं प्रत्यक्षग्राह्यमेव न भवति। अतस्तद्विरोधशङ्कैव निरालम्बनेति पञ्चभिर्मतैः प्रतिपादयति अत्राहुरित्यादिना। प्रत्यक्षं घटादि न गृह्णाति तस्य घटादेः सत्त्वं वा न गृह्णाति चेत्तर्हि निर्विषयं तत् प्रसज्येतेति शङ्कते किन्तु इति उत्तरम् अधिष्ठानत्वेन इति सन्मात्रमिति सद्रूपं ब्रह्मैव प्रत्यक्षप्रमेयमित्यर्थः।

यथा भ्रमेषु इदमंशस्य अधिष्ठानस्य प्रत्यक्षेण ग्रहणम् इन्द्रियान्वयव्यतिरेकयोस्तत्रैवोपक्षयः रजतांशस्य आरोपितस्य भ्रान्त्या प्रतिभासस्तथा सर्वत्र सन्मात्रस्य प्रत्यक्षेण ग्रहणम् तत्रैव इन्द्रिय-व्यापारः घटादिभेदविशिष्टवस्तुप्रतिभासो भ्रान्त्या इत्युपगमात् ।

---

एवं स्थिते न केवलं प्रत्यक्षविरोधभावः किन्तु लाभोऽपि अस्तीत्याह तथा च इति घटादेः इन्द्रियकत्ववादी शङ्कते तथा सतीति । तस्य सन्मात्रविषयकत्वे सतीत्यर्थः । इन्द्रियेति न च सन्मात्रप्रत्यक्ष एव इन्द्रियान्वयाद्यनुविधानोपपत्तेः प्रत्यक्षस्य घटादिविषयकत्वाभावे तदनुविधानं न स्यादित्येतदभिप्रायकं विशेषणमयुक्तमिति वाच्यम्। स्वप्रकाशस्य सन्मात्रस्य प्रकाशनाय इन्द्रियापेक्षानुपपत्तेरिति भावः।

अत्राक्षेप्ता किं सिद्धान्त्येकदेशी किं वा भेदवादी आद्ये तत्सम्मतदृष्टान्तेन सन्मात्रस्य प्रत्यक्षप्रमेयत्वमाह यथेति तत्रैवेति। अधिष्ठानमात्रग्रहण एवेत्यर्थः। भ्रान्त्येति साक्षिरूपयेत्यर्थः। सन्मात्रस्येति तस्य स्वप्रकाशत्वेऽप्यावृतत्वात् आवरणनिवर्त्तकवृत्त्युत्पत्तये इन्द्रियापेक्षेति भावः। घटाटीति घटादेस्तद्भेदरूपस्य च वस्तुनः प्रतिभासो भ्रान्त्या ऐन्द्रियक-वृत्त्यभिव्यक्त-सन्मात्ररूपसाक्षि-चैतन्य-लक्षणयेत्यभ्युपगमादित्यर्थः। एतेन तत्सदित्येव प्रत्यक्षं स्यादित्याक्षेप्ता भेदवाद्यपि निरस्तः।

ननु तद्वत् इह बाधादर्शनात् तथाभ्युपगम एव निर्मूल इति चेत् न। बाधादर्शनेऽपि देशकालव्यवहितवस्तुवद् घटादिभेदवस्तुनः प्रत्यक्षायोग्यत्वस्यैव तत्र मूलत्वात्। तथा हि।

इन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः सर्वतो भिन्न एव प्रतीयते तदा तत्र घटादिभेदे संशयविपर्य्ययादर्शनात्।

यत्रापि स्थाण्वादौ पुरुषत्वादिसंशयः तत्रापि तद्व्यतिरिक्तेभ्यो भेदोऽसन्दिग्धाविपर्य्य-

---

सिद्धान्तिना घटादौ तत् सत्त्वे च प्रत्यक्षस्य प्रामाण्यानङ्गीकारेऽपि घटादेः प्रत्यक्षज्ञानसाक्षिरूपे भानाङ्गीकारात् भेदवादी शङ्कते नन्विति। शुक्तिरजतादेर्बाधदर्शनाद्युक्तं तस्य भ्रान्त्या प्रतिभासाङ्गीकरणं तथा घटादिद्वैतस्य बाधादर्शनात् तस्य भ्रान्तिमात्रसिद्धत्वमनुपपन्नमित्यर्थः। किं श्रौतबाधादर्शनं विवक्षितं किं वा प्रत्यक्षबाधादर्शनं यौक्तिकबाधादर्शनं वा आद्यमसिद्धं दृश्यमात्रस्य ब्रह्मणि नेह नानास्तीत्यादिश्रुत्या बाधदर्शनादित्याशयेनाह नेति द्वितीयमङ्गीकरोति बाधादर्शनेऽपि इति तृतीयमसिद्ध्या दूषयति देशकालेति घटादीति घटादेस्तद्धर्मिकभेदरूपस्य च वस्तुन इत्यर्थः।

प्रत्यक्षायोग्यत्वमेव दर्शयितुं प्रथमं सम्मतमर्थं दर्शयति इन्द्रियेति तत्रेति पदव्याख्या घटादिभेद इति घटादिधर्मिकभेद इत्यर्थः।

स्तत्वात् प्रकाशते एव भेदस्य च प्रतियोगिसहोप-लम्भनियमवतो न प्रत्यक्षेण ग्रहणं सम्भवति देश-कालव्यवधानेन असन्निकृष्टानामपि प्रतियोगिनां सम्भवात् ।

भेदज्ञानं प्रतियोग्यंशे संस्कारापेक्षणात् स्मृतिरूपमस्तु प्रत्यभिज्ञानमिव तत्तांश इति चेत् न। तथापि भेदगतप्रतियोगिवैशिष्ट्यांशे

---

सर्वतो भिन्न एव प्रतीयत इत्ययुक्तम् इन्द्रियसन्निकृष्टे स्थाण्वादौ क्वचित् पुरुषादिप्रतियोगिकभेदस्य अप्रतीतेः प्रतीतौ वा संशयाभावापत्तेरत आह यत्रापीति। ततः किं तत्राह भेदस्य चेति। प्रतियोगिसहोपलम्भनियमवत इति ससम्बन्धिकपदार्थप्रत्यक्षे यावत्सम्बन्धिविषयकत्वस्य यावत्सम्बन्धिप्रत्यक्षजन्यतायाश्च संयोगादिप्रत्यक्षे क्लृप्तत्वात् भेदप्रत्यक्षेऽपि यावत्प्रतियोगिविषयकत्वं यावत्प्रतियोगि-प्रत्यक्षजन्यत्वं च वाच्यम्। भेदप्रत्यक्षस्यापि ससम्बन्धिकपदा-र्थप्रत्यक्षत्वात्। तथा च यावन्तः प्रतियोगिनस्तावतां प्रति-योगिनां प्रत्यक्षासम्भवेन क्लृप्तसामग्र्यभावात् न भेदः प्रत्यक्ष-प्रमायोग्य इति। तस्य भ्रान्तिमात्रसिद्धत्वं युक्तं सिद्धान्ते तु भेदप्रत्यक्षस्य नित्यसाक्षिरूपत्वात् न कारणापेक्षेति भावः।

सहोपलम्भनियममात्रस्य भेदसत्यत्वमते कथञ्चिदुद्धारं शङ्कते भेदज्ञानमिति संस्कारापेक्षणादिति तज्जन्यत्वसम्भवादित्यर्थः। भेदज्ञाने हि प्रतियोगिनां प्रतियोगितावच्छेदकरूपेणैव भानं

तदभावात्। न च कनकाचलो भेदप्रतियोगी वस्तुत्वादिति भेदप्रतियोगिवैशिष्ट्यगोचरानुमित्या तत्संस्कारसम्भवः भेदज्ञानं विना अनुमित्यभावेन आत्माश्रयापत्तेः।

पक्षसाध्यहेतुपक्षताद्यभेदभ्रमे सति सिद्धसाधनादिना अनुमानाप्रवृत्त्या तद्भेदज्ञानविघटनीयस्य अपेक्षितत्वात्। अस्तु तर्हि भेदांशे इव प्रतियोगिवैशिष्ट्यांशेऽपि प्रत्यक्षत्वमिति चेत् न। प्रतियोगिनोऽप्रत्यक्षत्वे तद्वैशिष्ट्याप्रत्यक्षायोगात्। सम्बन्धिद्वयप्रत्यक्षं विना सम्बन्धप्रत्यक्षासम्भवात्।

---

परैरुपेयते तेन रूपेण सकलप्रतियोगिगोचरपूर्वानुभवासम्भवेन संस्कारासम्भवादसन्निकृष्टप्रतियोग्यंशे स्मृतिरूपत्वमपि न सम्भवति तदभ्युपगम्याप्याह सिद्धान्ती न तथापीति कनकाचलादिपदार्थानां सन्निकृष्टघटनिष्ठभेदप्रतियोगित्वेन पूर्वमननुभूतत्वादिति भावः। वैशिष्ट्यांशे पूर्वानुभवं शङ्कते कनकाचल इति एवमितरपदार्थेषु अपि अनुमानं द्रष्टव्यमिति भावः। आत्माश्रयपत्तेरिति भेदज्ञानस्य भेदज्ञानाधीनत्वेन किञ्चिद्भेदज्ञानं सिध्येदिति भावः।

अप्रवृत्त्येति तथा च पक्षाद्यभेदज्ञानस्यानुमितिप्रतिबन्धकतया तद्विघटकं पक्षादिभेदज्ञानमावश्यकमिति भावः। तर्हीति प्रतियोगिवैशिष्ट्यांशज्ञानस्य स्मृतिरूपत्वासम्भवे सति इत्यर्थः।

तस्मात् प्रत्यक्षायोग्यस्य प्रतियोगिनो भ्रान्तिरूप एव प्रतिभास इति तदेकवित्तिवेद्यत्वनियतस्य भेदस्य भेदैकवित्तिवेद्यत्वनियतघटादेश्च भ्रमैकविषयत्वात् प्रत्यक्षं निर्विशेषसन्मात्रग्राह्यद्वैतसिद्ध्यनुकूल मिति ।

न्यायसुधाकृतस्त्वाहुः घटादेः ऐन्द्रियकत्वेऽपि सन् घट इत्यादिरधिष्ठानसत्तानुवेध इति न विरोधः ।

एवं नीलो घट इत्यादिरधिष्ठाननैल्याद्यनु-

---

तदेकेति तत्पदं प्रतियोगिपरं नियमेन प्रतियोगिज्ञानविषयस्येत्यर्थः । वित्तिपदं प्रत्यक्षपरं भेदपदजन्यभेदज्ञानस्य प्रतियोगिविषयकत्वादर्शनादिति बोध्यम् । भ्रमैकविषयत्वादिति अधिष्ठानस्यापि भ्रमविषयत्वात् कल्पितत्वप्रसङ्गवारणाय एकपदमधिष्ठानस्य च सम्यक्दर्शनं प्रति अपि विषयत्वात् भ्रान्त्येकविषयत्वमसिद्धं तथा च प्रत्यक्षं सद्वस्तुनि एव प्रमाणं सत् श्रुत्यनुकूलमित्यर्थः ।

अस्तु वा घटादेश्चाक्षुषत्वाद्यनुभवानुरोधेन चक्षुरादिगम्यत्वं तथापि प्रपञ्चमिथ्यात्वसाधकश्रुतियुक्तीनां न प्रत्यक्षविरोधः प्रत्यक्षस्यापि घटादौ पृथक् सत्त्वग्राहित्वाभावादित्याह न्याय सुधाकृतस्त्वाहुरिति सन् घट इत्यादि घटादेः सत्त्वप्रतिभासोऽधिष्ठानसत्तासम्बन्धविषय एव अतो न विरोध इत्यर्थः ।

घटादौ प्रतीयमानसत्त्वस्याधिष्ठानगतत्वस्वीकारेऽपि

वेधः किं न स्यात् इति चेत् न। श्रुत्या सद्रूपस्य वस्तुनो जगदुपादानत्वमुक्तम् अविरोधात् सर्वसम्मतमिति तदनुवेधेनैव सन् घट इत्यादिप्रतिभासोपपत्तौ घटादौ अपि सत्ताकल्पने गौरवम्। तस्य रूपादिहीनत्वान्नैल्यादिकं घटादौ एव कल्पनीयमिति वैषम्यादिति।

संक्षेपशारीरकाचार्य्यास्त्वाहुः। प्रत्यक्षस्य घटादिसत्त्वग्राहित्वेऽपि पराग् विषयस्य प्रत्यक्षादेः तत्त्वावेदकत्वलक्षणप्रामाण्याभावात् न तद्वि-

---

प्रसङ्गं शङ्कते एवमिति। नीलो घट इत्यादिर्घटादौ नैल्यप्रतिभासोऽप्यधिष्ठाननैल्यसम्बन्धगोचरः किं न स्यादित्यर्थः। तथाच ब्रह्मरूपवत् स्यादिति भावः। नैल्यादेः सत्तावैषम्यं परिहरति नेति श्रुत्येति सदेवेत्यादि श्रुत्येत्यर्थः सर्वसम्मतमिति सर्वैरेव स्वीकर्त्तव्यमित्यर्थः। ननु यथा श्रुतं वैशेषिकादिभिरनङ्गीकारात् अविरोधादिति रज्ज्वादेः सर्पाद्युपादानत्ववत् कूटस्थब्रह्मणोऽप्युपादानत्वाविरोधादित्यर्थः। तदन्विति तत्पदमधिष्ठानपरं तस्येति जगदधिष्ठानभूतब्रह्मण इत्यर्थः। घटादौ एवेति न ब्रह्मणि तत्कल्पयितुं शक्यं श्रुतिविरोधादिति भावः। प्रत्यक्षस्य घटादौ पृथक् सत्त्वग्राहित्वेऽपि तस्य प्रमाणाभासत्वात् न तेन श्रुतेर्बाधशङ्कावकाश इत्याह।

संक्षेपशारीरकाचार्य्यास्त्विति पराग्विषयस्येति जड़मात्रविषयकस्य इत्यर्थः। तत्त्वेति अनधिगतत्वे सति-

रोधेन अद्वैतश्रुत्यादिबाधशङ्का। अज्ञातबोधकं हि प्रमाणं न च प्रत्यक्षादिविषयस्य घटादेरज्ञातत्वमस्ति जडे आवरणकृत्याभावेन अज्ञानविषयत्वानुपगमात्। स्वप्रकाशतया प्रसक्तप्रकाशं ब्रह्मैव अज्ञानविषय इति तद्बोधकमेव तत्त्वावेदकं प्रमाणं तदेव प्रमितिविषयः।

अत एव श्रुतिरपि आत्मा वा अरे द्रष्टव्य इत्यात्मन एव प्रमेयत्वमिति नियच्छति। न हि द्रष्टव्य इत्यनेन दर्शनं विधीयते प्रमाणपरतन्त्रस्य विध्यगोचरत्वात् किन्तु आत्मा दर्शनार्ह इति अज्ञातत्वात् आत्मन एव प्रमेयत्वम् उचितं न अन्यस्य इति नियम्यत इति।

---

अबाधितं तत्त्वं तदावेदकं तद्बोधकं तत्त्वं प्रमाणलक्षणमिति बहुवादिसम्मतं तच्च प्रत्यक्षस्य नास्तीति प्रमाणाभासरूपं प्रत्यक्षमिति भावः। घटादेरिति तस्याबाधितत्वे सत्यपि अज्ञातत्वं नास्तीत्यभिप्रायः। अन्यथा तदभावादपि प्रत्यक्षस्य प्रमाणाभासत्वप्रतिपादनसम्भवे अज्ञातत्वाभावमात्रप्रतिपादनायोगादतो बाधितत्वाभावमुपेत्य तस्याभासत्वप्रतिपादनमिह विवक्षितमिति बोध्यम्। कृत्यं कार्यं फलमिति यावत्।

स्वप्रकाशात्मन एव प्रमेयत्वे श्रुतिमपि प्रमाणयति अत एव इति अज्ञातत्वादेव इत्यर्थः। ननु द्रष्टव्य इति श्रुतिरात्म-

केचित्तु घटादिसत्त्वग्राहिणः प्रत्यक्षस्य प्रामाण्ये ब्रह्मप्रमाणान्यूनतावगमेऽपि तद्ग्राह्यं सत्त्वमनुगतप्रत्ययात् सत्ताजातिरूपं वा इह इदानीं घटोऽस्तीति देशकालसम्बन्धप्रतीतेस्तत्तद्देशकालसम्बन्धरूपं वा नास्ति घट इति स्वरूपनिषेधप्रतीतेः घटादिस्वरूपं वा पर्य्यवस्यति।

तच्च मिथ्यात्वेन न विरुध्यते न हि मिथ्यात्व-

---

दर्शनं विधत्ते नेत्याह न हीति अगोचरत्वादिति पुरुषयत्नसाध्यक्रियाया एव विधियोग्यत्वादिति भावः।

विधिप्रत्ययस्य गतिं पृच्छति किन्त्विति अर्हार्थस्तव्यप्रत्यय इत्याह आत्मेति।

प्रत्यक्षविषय जड़स्य अज्ञातत्वमुपेत्य जड़बोधकप्रत्यक्षस्य श्रुतितुल्यप्रमाणत्वस्वीकारेऽपि प्रत्यक्षग्राह्यघटादिसत्त्वस्य मिथ्यात्वाविरुद्धत्वान्न मिथ्यात्वबोधक श्रुत्यादीनां प्रत्यक्षविरोधशङ्केत्याह केचित्त्विति। प्रत्यक्षग्राह्यं सत्त्वं सत्ताजातिरूपं वा तत्तद्देशकालसम्बन्धरूपं वा घटादिस्वरूपं वा पर्य्यवस्यतीति सम्बन्धः। जातिरूपत्वे मानमाह अनुगतेति सन् घटः सन् पट इत्यादिरूपादित्यर्थः। द्वितीये मानमाह इहेति इहेदानीं घट इति प्रतीतिः घटे प्रतीयमानदेशकालसम्बन्धमेव सत्तारूपतया विषयीकरोतीति भावः। तृतीये मानमाह नास्ति घट इतीति घटो नास्तीति घटास्तितानिषेधत्वेन रूपेण घटस्वरूपनिषेधस्यैव अनुभवात् घटास्तित्वं घटस्वरूपं पर्य्यवस्यतीत्यर्थः।

वादिनापि घटादेः स्वरूपं वा तस्य देशकालसम्बन्धो वा तत्र जात्यादिकं वा न अभ्युपगम्यते किन्तु तेषामबाध्यत्वम्।

न च अबाध्यत्वमेव सत्यत्वं प्रत्यक्षग्राह्यमस्त्विति वाच्यम्। कालत्रयेऽपि न अस्य बाध इति वर्त्तमानमात्रग्राहिणा प्रत्यक्षेण ग्रहीतुमशक्यत्वात् इत्याहुः।

अन्ये तु अबाध्यत्वरूपसत्यत्वस्य प्रत्यक्षग्राह्यत्वेऽपि प्राणा वै सत्यं तेषाम् एष सत्यमिति श्रुत्या

---

ततः किन्तत्र आह तत्त्वेति न हीति। तुच्छविलक्षणप्रपञ्चस्वरूपाङ्गीकारादिति भावः घटादेः स्वरूपं वा नाभ्युपगम्यते इति नहीति सम्बन्धः। तथा तस्य देशकालसम्बन्धो वा नाभ्युपगम्यत इति नहीति सम्बन्धः। तत्र जात्यादिकं वा नाभ्युपगम्यते इति नहीति सम्बन्धः। एतत् सर्वं जगन्मिथ्यात्ववादिना अभ्युपगम्यत एव विरोधाभावादिति भावः। तर्हि कीदृशं सत्त्वं मिथ्यात्वविरोधि यत् त्वया वाभ्युपेयते जगतीति पृच्छति किन्त्विति उत्तरं तेषामिति घटादीनामित्यर्थः। किन्तु तेषामबाध्यत्वं नाभ्युपगम्यत इति सम्बन्धः।

मिथ्यात्वस्य बाध्यत्वरूपत्वात् तद्विरुद्धं सत्त्वमबाध्यत्वरूपमेव चेत् तर्हि इदमेव सत्त्वं प्रत्यक्षविषयोऽस्तु तथा च प्रत्यक्षविरोधशङ्का स्यादेवेति आशयवतीं शङ्कामुद्भाव्य निराचष्टे न च इत्यादिना नास्येति जगत इत्यर्थः।

अबाध्यत्वरूपमेव सत्त्वं प्रत्यक्षविषय इत्युपेत्यापि

प्रधानभूतप्राणग्रहणोपलक्षितस्य कृत्स्नप्रपञ्चस्य ब्रह्मणश्च सत्यत्वोत्कर्षापकर्षप्रतीतेः सत्यत्वे चाबाध्यत्वरूपे सर्वदैवाबाध्यत्वं किञ्चित्कालमबाध्यत्वमित्येवंविधोत्कर्षापकर्षं विना राजराजो मन्मथमन्मथ इत्यादिशब्दतात्पर्यगोचरनियन्तृत्वसौन्दर्य्यादीनामिव भूयो विषयत्वाल्पविषयत्वादिरूपोत्कर्षापकर्षासम्भवाद्विधान्तरेण तत्सम्भवेऽपि प्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वश्रुत्यन्तरैकार्थ्यादुक्तोत्कर्षापकर्ष एव पर्य्यवसानाच्च प्रत्यक्षग्राह्यं घटादिसत्यत्वम्। यावद् ब्रह्मज्ञानमबाध्यत्वरूपमिति न मिथ्यात्वश्रुतिविरोध इत्याहुः।

---

प्रत्यक्षविरोधाभावमाह अन्ये त्विति। अबाध्यत्वरूपसत्त्वस्य प्रत्यक्षग्राह्यत्वेऽपि न मिथ्यात्वश्रुतिविरोध इति सम्बन्धः। कालत्रयाबाध्यत्वरूपं सत्त्वं मिथ्यात्वविरोधि तच्च ब्रह्मण एव प्रपञ्चस्य तु यावत् तत्त्वज्ञानमबाध्यत्वरूपं सत्त्वमेतच्च न मिथ्यात्वविरोधीति न प्रत्यक्षविरोध इति वक्तुं प्रपञ्चब्रह्मणोः सत्त्ववैलक्षण्ये प्रमाणमाह प्राणा इति। तत्र प्राणपदेन प्रपञ्चोपलक्षणे नियामकमाह प्रधानभूतेति सूक्ष्मात्मरूपस्य प्राणस्य जगद्विधारकत्वात् प्राधान्यं द्रष्टव्यम्। न च उपलक्षणे मानाभावः ब्रह्मनोयः ब्रह्मस्वरूपप्रतिपादनपरवाक्ये प्रपञ्चैकदेशभूतप्राणग्रहणे प्रयोजनाभावात् कृत्स्नोपलक्षणे तु सत्यत्वेन प्रसिद्ध-

प्रपञ्चाधिष्ठानतया ब्रह्मैव परमार्थसत्यं न तु प्रपञ्चस्तस्य श्रुतिबाधितत्वेन परमार्थसत्यत्वायोगादिति।

ब्रह्मप्रमितिरूपप्रयोजनसम्भवादिति भावः। ततः किं तत्राह सत्यत्वे चेति राजेति राजत्वं पालकत्वरूपं नियन्तृत्वं तच्च पाल्यदेशसापेक्षं तथा च विष्णुशर्मा राजराज इति प्रयोगे विष्णुशर्मण इतरराजापेक्षया उत्कर्षः प्रतीयते इतरेषां च निकर्षः। तौ च पालनस्य भूयो देशविषयकत्वाल्पदेशविषयकत्वरूपौ मन्मथस्तावन्नारायणपुत्रः सुन्दर इति प्रसिद्धिः पुराणेषु। तथा च अतिसुन्दरोऽयमिति तात्पर्य्येण मन्मथमन्मथः श्रीराम इति प्रयोगो दृश्यते तत्र सौन्दर्य्यं नाम उत्कृष्टरूपादिमत्त्वमतिसौन्दर्य्यं ततोऽपि उत्कृष्टरूपादिमत्त्वमिति बोध्यम्।

असम्भवादिति नियन्तृत्वसौन्दर्य्यादिविलक्षणे बाधाभावरूपे सत्त्वे भूयो विषयत्वाल्पविषयत्वरूपोत्कर्षापकर्षयोः जातिविशेषरूपयोश्चासम्भवादित्यर्थः। ननु अबाधितत्वरूपेऽपि सत्त्वे प्रकारान्तरेण उत्कर्षापकर्षौ सम्भवत एव तथा हि प्रपञ्चब्रह्मणोः कालत्रयाबाध्यत्वरूपे सत्त्वे समानेऽपि ब्रह्मगतं सत्त्वं श्रुतिगम्यत्वात् उत्कृष्टम् इतरं तु लौकिकप्रमाणगम्यत्वात् निकृष्टमिति श्रुत्यर्थोपपादनसम्भवात् तथा च मिथ्यात्वविरुद्धसत्त्वग्राहिलौकिकप्रमाणविरोधशङ्का स्यात् एव इति नेत्याह। विधान्तरेण इति प्राणा वै सत्यमिति श्रुतौ सत्यशब्दः प्रपञ्चस्य यदि कालत्रयाबाध्यत्वरूपं सत्यत्वं प्रतिपादयेत् तदा निखिलप्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वप्रतिपादकश्रुत्यन्तरेण सह प्राणा वै सत्यमिति श्रुतेर्विरोधः स्यात् न च अविरोधेन श्रुतिद्वयप्रामाण्यसम्भवे विरोधेन प्रपञ्चमिथ्यात्वसाधकश्रुतिप्रामाण्यं ह्यातव्यं तस्माच्छ्रुत्युक्तसत्त्वोत्कर्षापकर्षयोः कालत्रयाबाध्यत्वादौ एव पर्य्यवसानं वाच्यं न अन्यत्र इत्यर्थः। एवम् अत्राह-

अपरे तु प्रपञ्चस्य सत्यत्वमिथ्यात्वग्राहिणोः श्रुतिप्रत्यक्षयोर्विरोधेऽपि दोषशङ्काकलङ्कितात् प्रथमप्रवृत्तात् प्रत्यक्षान्निर्दोषत्वादपच्छेदन्यायेन परत्वाच्च श्रुतिरेव बलीयसी। प्राबल्यमागमस्य एव जात्या तेषु त्रिषु स्मृतमिति स्मरणाच्च।

न च वेदैकगम्यार्थविषयकमिदं स्मरणम्। तत्र प्रत्यक्षविरोधशङ्काभावेन शङ्कितप्रत्यक्षविरोध एव वेदार्थे वेदस्य प्राबल्योक्त्यौचित्यात्।

---

रित्यादिना प्रपञ्चमिथ्यात्वसाधकश्रुतियुक्तीनां प्रत्यक्षं विरोधि न भवतीति प्रतिपादितम्।

इदानीं प्रत्यक्षस्य कालत्रयाबाध्यत्वरूपसत्त्वग्राहित्वेन श्रुतिविरोधित्वेऽपि न मिथ्यात्वसिद्ध्यनुपपत्तिः श्रुत्या प्रत्यक्षस्य बाधोपपत्तेरित्याह अपरे तु इति। श्रुतिरेव प्रत्यक्षात् बलीयसीति सम्बन्धः श्रुतेः। प्राबल्ये हेतुद्वयमाह निर्दोषत्वादिति अपच्छेदन्यायो वक्ष्यते प्रत्यक्षस्यापि निर्दोषत्वादिकं तुल्यमिति शङ्कां वारयति दोषेति एतच्चाग्रे स्पष्टं भविष्यति श्रुतेः प्राबल्ये मनुवचनमपि नियामकमित्याह प्राबल्यमिति जात्या आगमत्वेन एव तेषु तेषु प्रत्यक्षानुमानागमेषु स्मृतवैदिकेषु प्रसिद्धमित्यर्थः।

ननु वेदैकगम्ये स्वर्गसाधनत्वादौ वेदस्य प्राबल्यप्रतिपादकं तद्वचनं मिथ्यात्वन्तु न वेदैकगम्यं तस्यानुमानादिनापि सिद्ध्युपगमादतस्तत्र श्रुतेः प्राबल्ये तद्वचनं न प्रमाणमिति मत्वा शङ्कते न चेति निराकरोति तत्र इति वेदैकगम्यार्थं

तलवत् दृश्यते व्योम खद्योतो हव्यवाड़िव।
न तलं विद्यते व्योम्नि न खद्योतो हुताशनः॥
तस्मात् प्रत्यक्षदृष्टेऽपि युक्तमर्थं परीक्षितुम्।
परीक्ष्य ज्ञापयन्नर्थान्न धर्मात् परिहीयते॥

इति नारदस्मृतौ साक्षिप्रकरणे प्रत्यक्षदृष्टस्यापि प्रत्यक्षमविश्वस्य प्रमाणोपदेशादिभिः परीक्षणीयत्वाप्रतिपादनाच्च।

---

इत्यर्थः। तथा च वचनस्य तद्विषयत्वे वैयर्थ्यं स्यादिति भावः। वचनस्य मिथ्यात्वप्रतिपादकश्रुतिप्राबल्यपरत्वे तु सार्थक्यमित्याह शङ्कितेति शङ्कितः प्रत्यक्षेण सह विरोधो यस्य मिथ्यात्वरूपस्य वेदार्थस्य स तथा एतत् उक्तं भवति यस्मिन् अर्थे वेदतदितरप्रमाणयोर्विरोधः प्रसक्तस्तस्मिन् अर्थे द्वयोः प्रामाण्यायोगात् अन्यतरबाधे कर्त्तव्ये सति तत्र प्रबलेन दुर्बलस्य बाध इति च स्थिते कस्य प्राबल्यमिति भवत्यपेक्षा तथा च वचनस्यापेक्षितार्थसमर्पकत्वात् सार्थक्यमिति। ननु प्रत्यक्षस्य क्वचिदप्रामाण्ये दृष्टे सति प्रपञ्चसत्त्वग्राहिप्रत्यक्षेऽपि मिथ्यात्वविरोधिकोट्यनुसन्धानवतां स्यादप्रामाण्यरूपदोषशङ्का ततश्च शङ्कितदोषप्रत्यक्षं मिथ्यात्वश्रुत्या निर्दोषत्वेन प्रबलया बाध्यत इति वक्तव्यं तच्च न सम्भवति क्वचिदपि प्रत्यक्षाप्रामाण्यादर्शनादिति सत्ख्यातिवादिनः शङ्कां नारदवचनोदाहरणेन निराकरोति तलवदिति। तलमिन्द्रनीलमणिमयकटाहाकारत्वं तस्मादिति सर्वजनप्रसिद्धस्यापि व्योमादौ तलादिप्रत्यक्षस्याप्रामाण्यदर्शनादित्यर्थः। अर्थं इति प्रत्यक्षदृष्टेऽपि अर्थं इत्यर्थः। ज्ञापयन्निति आचार्य्यः शिष्यान् प्रति शास्त्रार्थान्

न हि नभो नैल्यप्रत्यक्षं नभसः शब्दादिषु पञ्चसु शब्दैकगुणत्वप्रतिपादकागमोपदेशमन्तरेण प्रत्यक्षादिना शक्यमपवदितुम्।

न च नभसि समीपे नैल्यानुपलम्भाद् दूरे तद्धीर्दूरत्वदोषजन्येति निश्चयेन तद्बाधः। दूरे

---

बोधयन् धर्मात् श्रेयःसाधनभूतात् न प्रच्यवते इत्यर्थः। आत्मनः श्रुत्युक्तं साक्षित्वमनुपपन्नं तस्य बोद्धृत्वेऽपि कर्त्तृत्वेनोदासीनत्वाभावादिति पूर्वपक्षे प्राप्ते अहङ्करोमीति प्रत्यक्षमात्रेणात्मनि कर्तृत्वं वास्तवमिति सहसा विश्वासो न कर्त्तव्यः। लोके प्रत्यक्षदृष्टस्यापि बाधदर्शनादतः प्रत्यक्षदृष्टमप्यात्मनि कर्तृत्वं किं चैतन्यवद्वास्तवं किं वा कल्पितमिति सम्यग्विचार्य्य श्रुतिन्यायाभ्यां कल्पितमेव तदतो न साक्षित्वस्यानुपपत्तिरिति शिष्यान् प्रति बोधयन्नाचार्य्यो धर्मान्न परिहीयत इति एतत् विषयकं नारदवचनद्वयमिति सूचयति साक्षिप्रकरण इति एवं प्रत्यक्षदृष्टमपि प्रपञ्चसत्त्वं किं तस्य वास्तवं किं वा काल्पनिकमिति परीक्षा युक्तेत्याशयेन नारदवचनस्य प्रकृतसाधारणं तात्पर्य्यं कथयति प्रत्यक्षदृष्टस्यापीति प्रमाणपदमागमपरमनुमानार्थापत्त्यादय आदिपदग्राह्याः। प्रतिपादनाच्च प्रत्यक्षापेक्षया श्रुतिरेव बलीयसीति सम्बन्धः।

प्रत्यक्षस्य दोषशङ्काकलङ्कितत्वं प्रदर्श्य तस्यागमेन बाधं प्रकृतोपयोगितया प्रतिपादयति न हि इत्यादिना नभोनैल्यप्रत्यक्षं प्रत्यक्षादिना न हि शक्यमपवदितुमिति सम्बन्धः।

आगमं विनापि नीलं नभ इति प्रत्यक्षस्य बाधकमस्तीति शङ्कते न चेति। समीपगगने रूपानुपलम्भेन समीपे रूपा-

नैल्यदर्शनात् समीपे तदनुपलम्भः तुहिनावगुण्ठनानुपलम्भवत् समीपदोषजन्य इत्यपि सम्भवात् । अनुभवबलान्नभोनैल्यमव्याप्यवृत्तीत्युपपत्तेश्च ।

नापि दूरस्थस्य पुंसो यत्र भूसन्निहिते नभःप्रदेशे नैल्यधीस्तत्रैव समीपगतस्य नैल्यबुद्धेरभावप्रत्यक्षेण बाधः उपरि स्थितस्यैव नैल्यस्याभ्रनक्षत्रादेरिव दूरत्वदोषात् भूसन्निधानावभास इत्युपपत्तेः ।

---

भावनिश्चये सति दूरेऽपि तत्र रूपं नास्तीति निश्चीयते रूपस्य व्याप्यवृत्तित्वनियमेन तदेकदेशवृत्तित्वायोगादित्यर्थः । कथं तर्हि दूरे नीलनभ इति धीः तत्राह दूरे तद्धीरिति तद्बाध इति तस्य नभोनैल्यप्रत्यक्षस्य इति निश्चयेन बाधो न च इत्यत्र हेतुमाह दूरे नैल्यदर्शनादिति तुहिनावगुण्ठनं हिमरूपमावरणं तद्धि समीपे सदपि न दृश्यते दूरे तु वृक्षाद्यावरणरूपत्वेन दृश्यते तद्वत् सर्वत्र गगने विद्यमानमपि रूपं समीपे न दृश्यते इत्यर्थः । दोषजन्य इति दोषाधीनस्थितिक इत्यर्थः । यथाश्रुते अनुपलम्भस्य उपलम्भप्रागभावरूपस्य जन्यत्वाभावादसङ्गतं स्यात् सामीप्यदोषेण तदुपलम्भे निरुद्धे तत्प्रागभावस्य नाशाभावाद्दोषाधीनस्थितिकत्वमस्तीति नासङ्गतिरिति मन्तव्यम् । रूपस्य व्याप्यवृत्तित्वनियमसुपेत्य समीपे तदनुपलम्भस्य गतिरुक्ता इदानीं व्याप्यवृत्तित्वनियमस्यासिद्धिमाह अनुभवबलादिति ।

नभोनैल्यप्रत्यक्षस्य यौक्तिकनिश्चयबाध्यत्वं निरस्य प्रत्यक्ष-

पृथिव्यादिषु सङ्कीर्णतया प्रतीयमानानां गन्धादीनामुपलभ्य अप्सु चेत् गन्धं केचिद् ब्रूयुरनैपुणाः पृथिव्यामेव तं विद्यादपो वायुं च संश्रितमित्यादिभिरागमैरेव व्यवस्थाया वक्तव्यत्वेन प्रत्यक्षादागमप्राबल्यस्य निर्विशङ्कत्वाच्च।

न ह्याजानसिद्धं जलोपष्टम्भादिगतं गन्धादिपृथिवीगुण एव गन्धो न जलादिगुण इत्यादिरूपेण अस्मदादिभिः प्रत्यक्षेण शक्यं विवेचयितुम्।

---

बाध्यत्वमाशङ्क्य निराकरोति नापि इत्यादिना भूसन्निहितगगनभागे कुत्रापि नैल्यं नास्त्येव तत्र तत्प्रतीतिस्तु दूरत्वदोषात् सम्भवतीत्याह उपरिस्थितस्येति। तथा च गगननैल्यप्रत्यक्षमागमैकबाध्यमिति स्थितम्।

प्रत्यक्षस्यागमेन बाधे उदाहरणान्तरमाह पृथिव्यादिषु इति। अप्सु वायौ च पृथिव्यामिव गन्धमुपलभ्य केचिदनैपुणाः ब्रूयुस्तयोरपि गन्धः स्वाभाविक इति तन्न तथा ग्राह्यं किन्तु अपो वायुं च संश्रितं गन्धं तदन्तर्गतपृथिव्यामेव स्थितं विद्यादिति वचनार्थः। इत्यादिभिरिति आदिपदेन रसो जलमात्रगुणः रूपं तेजोमात्रगुणं स्पर्शः वायुमात्रगुणः शब्दः आकाशमात्रगुणः पृथिव्यादिषु रसाद्युपलब्धिरपि पृथिव्याद्यन्तर्गतजलाद्याश्रितरसादिविषये अतिव्यवस्थाप्रतिपादकपुराणवचनानि ग्राह्याणि।

ननु जले पुष्पादिरूपपार्थिवांशसंसर्गे सति गन्धोपलब्धिरस्ति

पृथिव्यादीनां प्रायः परस्परसंसृष्टतया अन्यगुणस्यान्यत्राप्यवभासः सम्भवतीति शङ्कितदोषं प्रत्यक्षं तत्रागमेन शिष्यत इति चेत् तर्हीहापि ब्रह्मप्रपञ्चयोरुपादानोपादेयभावेन परस्परसंसृष्टतया अन्यधर्मस्यान्यत्रावभासः सम्भाव्यत इति शङ्कितदोषं प्रत्यक्षम् अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रय ब्रह्मरूपं जगद्रूपं ततो द्वयमिति वृद्धोक्तप्रकारेणागमेन व्यवस्थाप्यतामिति तुल्यम्।

---

नान्यथेत्यन्वयव्यतिरेकाभ्यामेव गन्धस्य पृथिवीमात्रगुणत्वनिर्णयसम्भवात् किमागमेनेति चेत् नेत्याह नहीति। आजानसिद्धो यो जलोपष्टम्भः पार्थिवद्रव्यविशेषस्तदादिगतमित्यर्थः। जल एव गन्धः क्वचित् स्वाभाविकः क्वचिदौपाधिक इति कल्पनोपपत्तेश्चेति भावः।

ननु जलादौ गन्धादिप्रत्यक्षमप्रामाण्यरूपदोषशङ्काकलङ्कितत्वादागमेन शिष्यते इति युक्तं प्रपञ्चसत्त्वग्राहिप्रत्यक्षं तु तच्छङ्काशून्यमिति कथं तस्यागमेन बाध इत्याशयेन शङ्कते पृथिव्यादीनामिति। तस्य तच्छङ्काशून्यत्वमसिद्धमिति तस्याप्यागमबाध्यत्वं युक्तमित्याह तर्हीति संसृष्टतयेति संसर्गस्तादात्म्यम् अन्यधर्मस्येति जगदुपादानत्वेन श्रुतिसिद्धस्य सद्वस्तुनो धर्मः सत्ता तस्या एव प्रपञ्चे प्रतीतिः सम्भाव्यते। अतः प्रपञ्चसत्त्वग्राहिप्रत्यक्षमन्यसत्ताविषयकत्वेन भ्रान्तिरूपं वा प्रपञ्चस्य स्वाभा-

न चैवमुपजीव्यविरोधः आगमप्रमाणेन वर्णपदवाक्यादिस्वरूपांशप्रत्यक्षमुपजीव्यानुपजीव्यविरोधः आगमप्रमाणेन वर्णपदवाक्यादिस्वरूपांशप्रत्यक्षमुपजीव्य तत्सत्यत्वांशोपमर्दनादित्याहुः।

---

विकसत्ताविषयकत्वेन प्रमारूपं वेति शङ्काकलङ्कितमित्यर्थः। प्रत्यक्षबाधकप्रकारं बहुवचनेन दर्शयति अस्तीति। अस्ति घटः भाति घटः प्रियो घट इति घटे सत्त्वचैतन्यानन्दास्तावदनुभूयन्ते प्रियशब्दस्यानन्दे मुख्यत्वात् घटस्यानन्दतादात्म्यप्रतीतिरुपपद्यते एवं पटादिषु अपि द्रष्टव्यम्। नामघटशब्दादि कम्बुग्रीवाद्यात्मकं वस्तुरूपमंशपञ्चकसंज्ञाः पञ्च यस्य जगतस्तदंशपञ्चकमनुभूयते न च क्वत्स्नेऽपि जगति पञ्चात्मकत्वानुभवो नास्ति दुःखं प्रियमित्यनुभवादर्शनादिति वाच्यम्। केषाञ्चित् परकीये दुःखे तदनुभवस्यापि सत्त्वात् तथा च सर्वत्रानुगतसच्चिदानन्दरूपं वस्तु ब्रह्मैव। ब्रह्मणस्तद्रूपतायाः श्रुतिसिद्धत्वात् नामरूपात्मकरूपद्वयं जगत् तस्य नामरूपमात्रतायाः सर्वाणि रूपाणि विचिन्त्य धीर इत्यादिश्रुतिसिद्धत्वादित्यनेन प्रकारेण प्रपञ्चसत्त्वग्राहिप्रत्यक्षं जगतः स्वाभाविकसत्ताविषयकं न भवति किन्तु अधिष्ठानतया जगति अनुगतब्रह्मसत्ताविषयकमेवेति व्यवस्थाप्यते श्रुत्येत्यर्थः।

एवं प्रत्यक्षस्यागमापेक्षया स्वतः प्राबल्यं निरस्य उपजीव्यत्वप्रयुक्तं तन्निरस्यति न च एवमिति प्रत्यक्षस्यागमेन बाधाङ्गीकारे इत्यर्थः। वर्णपदवाक्यात्मकशब्दप्रत्यक्षं हि श्रुतिजन्यमिथ्यात्वबोधं प्रति उपजीव्यं शब्दज्ञानं विना

श्रुतेः प्रत्यक्षाद्बलीयस्त्वस्य व्यवस्थितत्वनिरूपणम्।

ननु आगमस्य प्रत्यक्षाद् बलीयस्त्वे यजमानः प्रस्तर इत्यत्र प्रत्यक्षाविरोधाय यजमानशब्दस्य प्रस्तरे गौणी वृत्तिर्न कल्पनीया। तथा सोमेन यजेत इत्यत्र वैयधिकरण्येन अन्वये यागे इष्टसाधनत्वं सोमलतायां यागसाधनत्वं च बोधनीयमिति व्यापारभेदेन वाक्यभेदापत्तेः सामानाधिकरण्येन अन्वये वक्तव्ये प्रत्यक्षाविरोधाय सोमवता यागेन इति मत्वर्थलक्षणा न कल्प-

---

शाब्दबोधानुदयात्। तथा च श्रुत्या प्रत्यक्षमात्रबाधे शब्दप्रत्यक्षस्यापि बाधः प्रसज्येत तथा च उपजीव्यबाधः स्यात् इत्यर्थः। श्रोत्रेन्द्रियेण जायमानं प्रत्यक्षं शब्दस्वरूपं तस्य सत्त्वं वा विषयीकरोति। श्रुत्या च सत्त्वांशप्रत्यक्षमेव बाध्यते तच्च न श्रुतेरुपजीव्यं कल्पितशब्दस्यापि बोधकत्वसम्भवेन शाब्दबोधार्थं तत्सत्त्वस्यानपेक्षितत्वात् यच्च शब्दस्वरूपांशप्रत्यक्षमुपजीव्यं तन्न बाध्यते विरोधाभावादतो नोपजीव्यविरोध इति परिहरति आगमप्रमाणेनेति।

आगममात्रस्य प्रत्यक्षात् प्राबल्यमुक्तमाक्षिपति। ननु आगमस्येति गौणीति। क्रतुनिवर्त्तकत्वं गुणः तथेति सिद्धान्ते इष्टसाधनत्वं विध्यर्थः। तथा च सोमयजिपदयोः वैयधिकरण्येनान्वये स्वीक्रियमाणे याग इष्टसाधनं सोमो यागरूपेष्टस्य साधनमिति सकृच्छ्रुतस्य विधिप्रत्ययस्य व्यापारभेदापत्त्या तद्घटितवाक्यस्यापि व्यापारभेदापत्तेस्तत्परिहाराय तयोः सामान-

नीया। उभयत्रापि सति अपि प्रत्यक्षविरोधे तदनादृत्यागमेन बलीयसा प्रस्तरे यजमानाभेदस्य च सिद्धिसम्भवादिति चेद् अत्रोक्तं भामतीनिबन्धे।

तात्पर्य्यवती श्रुतिः प्रत्यक्षाद् बलवती न श्रुतिमात्रम् मन्त्रार्थवादानां स्तुतिद्वारभूतेऽर्थे वाक्यार्थद्वारभूते पदार्थे इव न तात्पर्य्यम्।

---

धिकरण्येनान्वयो वक्तव्य इति सिद्धान्ते सति इत्यर्थः। प्रत्यक्षाविरोधायेति सामानाधिकरण्यपक्षे सोमयागयोरभेदो वक्तव्यः। सोऽयमित्यादिस्थले समानाधिकरणपदद्वयस्य पदार्थद्वयाभेदार्थकतायाः क्लृप्तत्वात् स च प्रत्यक्षविरुद्ध इति तत्परिहाराय इत्यर्थः। सोमवतेति सोमपदस्य मत्वर्थे लक्षणा तथाच सोमवता यागेन इष्टं भावयेदिति मीमांसकरीत्या वा वाक्यार्थः। सिद्धान्तरीत्या तु सोमवदभिन्नो याग इष्टसाधनमिति वाक्यार्थो द्रष्टव्यः। सोमस्य यागेन सह मत्वर्थसम्बन्धश्च वस्तुगत्या क्रियाकारकभावलक्षण इति ज्ञापनार्था सोमेन इति तृतीया भामतीति भामतीसंज्ञकग्रन्थे वाचस्पतिमिश्रैरुक्तं इत्यर्थः।

न श्रुतिमात्रमिति तथाच सोमेन यजेत इत्यत्र सोमयागसम्बन्धे श्रुतेस्तात्पर्य्याभावात् श्रुत्यपेक्षया प्रत्यक्षमेव बलवदिति तदविरोधाय लक्षणाकल्पनमुचितम्। तथाच यजमानः प्रस्तर इत्याद्यर्थवादानामपि स्वार्थे तात्पर्य्याभावात् प्रत्यक्षप्राबल्यमिति तत्रापि तदविरोधाय गौण्यादिकल्पनं युक्तम् प्रपञ्चमिथ्यात्वबोधकश्रुतीनान्तु तात्पर्य्यसत्त्वात् प्रत्यक्षापेक्षया प्राबल्यमिति

तात्पर्य्याभावे मानान्तराविरुद्धं देवताविग्रहादि कथं तेभ्यः सिद्ध्येत् तात्पर्य्यवत्येव शब्दस्य प्रामाण्यनियमादिति चेत् न ।

---

तासां तद्बाधकत्वं निष्प्रत्यूहमिति समाधानग्रन्थार्थः। ननु मन्त्रार्थवादानामपि स्वार्थे तात्पर्य्यं किं न स्यात् तत्राह मन्त्रेति तेषां स्वार्थे फलाभावात् गौरवाच्च तात्पर्य्यं न कल्प्यत इति भावः। देवस्य त्वेत्यादिमन्त्रैर्यजमानः प्रस्तर इत्याद्यर्थवादैश्च विधेयगता स्तुतिर्लक्षणीया ततश्च मन्त्रादिवाक्यार्थस्य द्रव्य-देवतादिरूपस्य लक्षणीयया स्तुत्या सह सम्बन्धो वाच्यः। इतरथा मन्त्रादीनां स्वज्ञाप्यसम्बन्धाभावेन स्तुतिलक्षकत्वानुपपत्तेः अतः स्तुतौ लक्षणीयायां मन्त्रादिवाक्यार्थो द्वारभूतः यथा गङ्गा-पदेन तीरे लक्षणीये प्रवाहः अतोऽपि न तत्र तेषां तात्पर्य्यम्। स्तुति-लक्षणास्थले द्वारभूतार्थे तात्पर्य्यादर्शनादित्याशयेनाह स्तुति-द्वारभूत इति तत्र स्वयं दृष्टान्तमाह वाक्यार्थद्वारभूत इति वाक्यार्थतात्पर्य्येण प्रयुक्तानां पदानां वाक्यार्थप्रतिपत्तिद्वारभू-तेषु स्मारितपदार्थेषु यथा तात्पर्य्यं नास्ति तथा इत्यर्थः। विधि-परमन्त्रार्थवादानां स्वार्थे तात्पर्य्याभावे देवताविग्रहादिप्रति-पादकानां वज्रहस्तः पुरन्दर इत्यादीनामपि देवताविग्रहादौ स्वार्थे तात्पर्य्याभावापत्त्या तेषां देवताविग्रहादिप्रमितिजन-कत्वं न स्यात् वेदतात्पर्य्यविषयत्वस्य वेदजन्यप्रमितिविषयत्वं प्रति व्यापकत्वाद्व्यापकनिवृत्त्या तन्निवृत्तेरावश्यकत्वात् तदाहुः यत्परः शब्दः स शब्दार्थ इति।

तथाच देवताधिकरणविरोधस्तत्रान्यपरेभ्योऽपि मन्त्रा-दिभ्यो देवताविग्रहादिसिद्धिप्रतिपादनादित्याशयेन शङ्कते

एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो हि तेन यजेत इति विशिष्टविधे स्तात्पर्य्यागोचरे विशेषणस्वरूपे प्रामाण्यदर्शनेन उक्तनियमासिद्धेः। अत्र हि रेवती ऋगाधारं वारवन्तीयं सामविशेषणम्। न च एतत्सोमा-दिविशेषणवत् लोकसिद्धं येन तद्विशिष्टयागवि-धिमात्रे प्रामाण्यं वाक्यस्य स्यात्।

---

तात्पर्य्याभाव इति। मानान्तराविरुद्धत्वविशेषणं यजमान प्रस्तर इत्यादिवारणाय। इदमुपलक्षणं मानान्तराप्राप्तत्व-स्यापि एतच्च विशेषणमग्निर्हिमस्य भेषजमित्यादिवारणाय अग्नेर्हिमभेषजत्वस्य प्रत्यक्षसिद्धत्वेन तस्यार्थवादतः सिद्ध्यन-पेक्षणात् तथाच मानान्तरेण विरोधप्राप्त्योरभावे सति अन्य-परेभ्योऽपि मन्त्रादिभ्योऽवगम्यमानोऽर्थः सिद्ध्यत्येव। देव-ताविग्रहादिश्च तथाविध इति तत् सिद्धिरप्रत्यूहेति प्रतिपादितं देवताधिकरण इति भावः।

परिहरति नेति एतस्यैवेति इदमेतत्पदं प्रकृताग्निष्टु-द्धर्मातिदेशकं तथाच रेवत्याधारक वारवन्तीयाख्यं साम-अग्निष्टोमसाम कृत्वा प्रकृताग्निष्टुद्धर्मकेणानेन यागेन पशून् भावयेदिति श्रुत्यर्थः। विशिष्टविधेरिति रेवत्याधारकवार-वन्तीयसामादिविशेषणविशिष्टक्रतुभावनाविधिरित्यर्थः। उक्तेति शब्दतात्पर्य्यविषयत्वस्य शाब्दप्रमितिविषयत्वं प्रति व्यापकत्व-रूपनियमासिद्धेरित्यर्थः। उक्तमर्थं विवृणोति अत्र हीति न च एतदिति। यदि वारवन्तीयं साम रेवतीषु ऋक्षु अध्ययन-

नापि विशिष्टविधिना विशेषणाक्षेपः आक्षे-पात् विशेषणप्रतिपत्तौ विशिष्टगोचरो विधि-स्तस्मिंश्च सति तेन विशेषणाक्षेप इति परस्परा-श्रयापत्तेः। अतो विशिष्टविधिपरस्यैव वाक्यस्य विशेषणस्वरूपेऽपि प्रामाण्यं वक्तव्यम्।

---

सिद्धं भवेत् तदा तस्य विशेषणस्य दध्यादिवल्लोकत एव अव-गतत्वाद्वाक्यस्य तद्व्यतिरिक्तार्थ एव प्रमितिजनकत्वरूपं प्रमाण्यं भवेत् न तु एतदस्ति वारवन्तीयसाम्नो ऋगन्तरेष्वेव अध्य-यनसिद्धत्वादतो वाक्यादेव रेवत्याधारकवारवन्तीयाख्यविशे-षणस्य प्रमितिर्वक्तव्येत्यर्थः। ननु विशिष्टविषयको विधि-रप्रसिद्धविशेषणस्वरूपः प्रमितिजनकं रेवन्तीषु वारवन्तीयं साम कुर्यादित्येवमात्मकं विशेषणविधिमाक्षिपति तथाच तस्य विशेषणस्य न एतद्वाक्यप्रमेयत्वमिति।

नेत्याह नापीति विशेषणगोचरविधिकल्पनात् पूर्वं विशिष्टधिना विशेषणस्वरूपं प्रमितं वा न वा आद्ये तत्कल्पनं व्यर्थं द्वितीये विध्याक्षेपो न सिध्यति प्रमितस्यैव द्रव्यदेव-तासम्बन्धस्य यागविध्याक्षेपकत्वदर्शनात्। तथाच विशिष्ट-विधिना न विशेषणविधिराक्षिप्यत इति वदता आक्षेपात् प्राग्विशेषण संप्रमितत्वं वाच्यं तत्प्रमापकश्च कल्पितविधि-रिति वक्तव्यं ततश्च आक्षिप्तविधिना विशेषणस्वरूपे प्रमिते सति प्रकृतविधिर्विशिष्टगोचरः सिध्यति तस्मिंश्च प्रकृतविधौ विशिष्टगोचरे सति तेन विशिष्टविधिना विशेषणविध्याक्षेप इति परस्पराश्रयापत्त्या विशेषणविध्याक्षेपासिद्धेरित्यर्थः

अथ च तत्र न तात्पर्य्यमुभयत्र तात्पर्य्ये वाक्यभेदापत्तेः। एवमर्थवादानामपि विधेयस्तुति-पराणां स्तुतिद्वारभूतेऽर्थे न तात्पर्य्यमिति तेभ्यः प्रत्यक्षस्यैव बलवत्त्वात्तदविरोधाय तेषु वृत्त्यन्तर-कल्पनम्।

सोमेन यजेत इत्यत्र विशिष्टविधिपरे वाक्ये सोमद्रव्याभिन्नयागरूपं विशिष्टं विधेय मित्युपगमे तस्य विधेयस्य दध्ना जुहोति इत्यादौ विधेयस्य दध्यादेरिव लोकसिद्धत्वाभावेन विशिष्टविधिपरात्

---

अत इति रेवत्याधारकवारवन्तीयसामाख्यविशेषणस्य प्रकृत-वाक्यादन्यतः प्रमित्यसम्भवादित्यर्थः।

तर्हि तत्रापि तात्पर्य्यमस्तु नेत्याह अथ च इति गौरवा-दिति भावः। न च यत्परः शब्दः स शब्दार्थ इति न्यायवि रोधः शङ्कनीयः तस्यौत्सर्गिकत्वोपपत्तेः प्रकृते च गौरवलक्षण-बाधकसत्त्वात् न तस्येह प्रवृत्तिः। एवमिति विशिष्टविधेः विशेषणस्वरूप इवेत्यर्थः। न तात्पर्य्यमिति तथा च तात्पर्य्या-विषयेऽपि रेवतीवारवन्तीयविशेषणस्वरूपे श्रुतेः प्रमितिजनकत्व-वत् अन्यपराणामपि मन्त्रादीनां देवताविग्रहादिप्रमितिजनकत्वं सम्भवतीति न देवताधिकरणविरोध इति भावः। प्रकृतमाह तेभ्य इति मन्त्रार्थवादेभ्यः तात्पर्य्यरहितश्रुतिवाक्येभ्य इति यावत्। सोमेन यजेतेत्यत्र सामानाधिकरण्ये नान्वय इति।

सिद्धान्ते कथं प्रत्यक्षविरोधः कथं वा तदविरोधाय लक्षणाक-

वाक्यादेव रेवत्याधारवारवन्तीयादिविशेषणस्यैव विना तात्पर्य्यं सिद्धिरेष्टव्या न च तात्पर्य्यरहितात् आगमाद्‌याग-सोमलता-भेदग्राहि-प्रत्यक्षविरुद्धार्थः सिद्ध्यतीति तत्रापि तदविरोधाय मत्वर्थलक्षणा-श्रयणम् ।

अद्वैतश्रुतिस्तु उपक्रमोपसंहारैकरूप्यादि-षड्‌विध-लिङ्गाव-गमिताद्वैततात्पर्य्या प्रत्यक्षात् बलवतीति ततः प्रत्यक्षस्यैव बाधः न तदविरोधाय श्रुतेरन्यथानयनमिति ।

विवरणवार्त्तिके तु प्रतिपादितं न तात्पर्य्य-वत्त्वेन श्रुतेः प्रत्यक्षात् प्राबल्यं कपालं अपर्येदिति विधेः अपणस्य कपालार्थत्वप्रतिपादने तात्पर्य्ये-

---

ल्पनमित्याकाङ्क्षायामाह सोमेनेति तत्रापीति । यजमानः प्रस्तर इत्यत्रेवेति अपिशब्दार्थः प्रत्यक्षाविरोधाय वृत्त्यन्तरकल्पनमात्रे दृष्टान्तः न तु मत्वर्थलक्षणांशेऽपि इति बोध्यम् ।

ननु द्वैतस्य मिथ्यात्वबोधकाद्वैतश्रुतेरपि न स्वार्थमिथ्यात्वे तात्पर्य्यं मानाभावात् तथा च द्वैतसत्त्वग्राहिप्रत्यक्षविरोधपरि-हाराय अद्वैतश्रुतेरपि अन्यथानयनमेव न्याय्यमिति नेत्याह अद्वैतश्रुतिस्त्विति तात्पर्य्यलिङ्गानि च शास्त्रे व्यक्तानि तत इत्यद्वैतश्रुतेः समाश्रयादित्यर्थः ।

वाचस्पत्युक्तं तात्पर्य्यस्य प्राबल्यप्रयोजकत्वं दूषयति विवरणवा-

ऽपि कृष्णले रूपरसपरावृत्तिप्रादुर्भावपर्य्यन्तमुख्य-श्रपणासम्बन्धः प्रत्यक्षविरुद्ध इति तदविरोधाय श्रपणशब्दस्य उष्णीकरणमात्रे लक्षणाभ्युपगमात् ।

तत्त्वमसीति वाक्यस्य जीवब्रह्माभेदप्रतिपादने तात्पर्य्येऽपि त्वंपदवाच्यस्य तत्पदवाच्याभेदः प्रत्यक्षविरुद्ध इति तदविरोधाय निष्कृष्टचैतन्ये लक्षणाभ्युपगमाच्च । अर्थवादानामपि प्रयाजाद्यङ्ग-विधिवाक्यानामिव स्वार्थप्रमितौ अनन्यार्थतया

---

तर्के त्विति कृष्णलाः सुवर्णविकारभूताः माषाः कृष्णलशेषत्वेन श्रपणं विधीयते इति श्रुतेस्तत्र तात्पर्य्यसिद्धमिति भावः । रूपरसपरावृत्तिप्रादुर्भावो नाम पूर्वरूपरसादिनाशपूर्वकं रूप-रसाद्यन्तरोत्पत्तिस्तत्पर्य्यन्तो योऽधिश्रयणादिव्यापारः स एव श्रपणशब्दस्य मुख्योऽर्थस्तत्सम्बन्ध इत्यर्थः । कृष्णलानामधि-श्रपणज्वालादिसम्पादनरूपे पाके कृतेऽपि रूपरसादिपरावृत्ति-प्रादुर्भावो नास्तीति प्रत्यक्षसिद्धमिति भावः । ननु अत्र श्रपणं विधीयते तच्च न प्रत्यक्षबाधितं ज्वालाधिश्रयणादि-क्रियारूपपाकस्यैव श्रवणशब्दार्थत्वेन तस्य तत्रापि सम्भवात् रूपरसादिपरावृत्तिप्रादुर्भावस्तु न धात्वर्थस्तस्य पाकफलस्य कर्मत्वरूपस्य द्वितीयार्थत्वात् फलस्य विध्ययोग्यत्वेन विधेय-श्रपणरूपत्वायोगाच्च ।

तथा च विधेयश्रपणस्य दृष्टप्रयोजनाभावाददृष्टार्थो विधिः पर्य्यवस्यतीति श्रुतितात्पर्य्यविषयश्रपणस्य प्रत्यक्षबाधा-

प्रमितानामेवार्थानां प्रयोजनवशात् अन्यार्थतेति प्रयाजादिवाक्यवत्तेषामपि अवान्तरसंसर्गे तात्पर्य्यमस्ति एव वाक्यैकवाक्यत्वात्। पदैकवाक्यतायामेव परमवान्तरतात्पर्य्यानभ्युपगमादिति विवरणाचार्य्यैः न्यायनिर्णये व्यवस्थापनेन यजमानः प्रस्तर इत्यादीनामपि मुख्यार्थतात्पर्य्यप्रसक्तौ प्रत्यक्षाविरोधाय एव लक्षणाभ्युपगमाच्च। कथं

---

भावादुष्णीकरणमात्रे अपणशब्दस्य लक्षणा न संप्रतिपन्नेत्यस्वरसादाह तत्त्वमसीति वाक्यस्येति निष्कृष्टेति। निष्कृष्टविशिष्टरूपाद्वाच्यार्थात् पृथक् कृतं विशेष्यमात्रं यच्चैतन्यं तत्रेत्यर्थः। अत्रेदं बोध्यं महावाक्यानामखण्डैकरसचैतन्यरूपवस्तुमात्रबोधने तात्पर्य्यम्। कुतः तमेवैकं जानथ आत्मानं तमेव विदित्वातिमृत्युमेति एकधैवानुद्रष्टव्यमित्यादिश्रुतिसहस्रेण मुक्तिसाधनीभूतमहावाक्यार्थज्ञानं प्रति तादृशवस्तुमात्रस्यैव विषयत्वेन नियमनात् श्रुतीनामिषोऽर्थः। यस्मिन् कृत्स्नं जगदध्यस्तं तमात्मानं जानथ हे मुमुक्षवः! अत्राधेयस्य कृत्स्नस्य जगतः ज्ञेयत्वं निषेधार्थमवधारणमेकपदं चैकरसत्वप्रतिपादनपरं मुमुक्षुज्ञेयस्यात्मनो नानारसत्वे एकपदमनर्थकं स्यादेकत्वसंख्यायोगस्यात्मन एकवचनादेव सिद्धत्वादस्याः श्रुतेरिदं तात्पर्य्यम् द्युभ्वाद्यधिकरणभाष्ये स्फुटं दर्शितम्। तमेव प्रकृतं परमात्मानमेव न तु तद्व्यतिरिक्तमपि इत्येवकारार्थः। विदित्वा साक्षात्कृत्य मृत्युशब्दितं संसारमत्येति। एकधैव एकरूपेणैव शास्त्रे तु आर्योपदेशमनुद्रष्टव्यमिति तच्च अखण्डैकरसवस्तुमात्र-

बोधने तात्पर्य्यम्। महावाक्येषु तत्त्वमस्यादिपदानां लक्षणां विना न निर्वहतीति तेषु तात्पर्य्यानुसारेणैव लक्षणाभ्युपगमः। न तु प्रत्यक्षविरोधपरिहाराय परन्तु तत्त्वम्पदयोश्चैतन्यमात्रे लक्षणां स्वीकृत्य वाक्यार्थबोधाभ्युपगमे प्रत्यक्षविरोधोऽपि परिहृतो भवतीत्येतावन्मात्रेण प्रत्यक्षविरोधपरिहाराय महावाक्येषु लक्षणेति निबन्धनेषु व्यवहारस्तथा च सत्यपि तात्पर्य्ये तदनादृत्य प्रत्यक्षविरोधपरिहारायैव महावाक्येषु लक्षणाभ्युपगमात् तात्पर्य्यस्य प्राबल्यप्रयोजकत्वं नास्तीति प्रतिपादनं मन्दमिति। यत्तु मन्त्रार्थवादानां स्तुतिद्वारभूते स्वार्थे तात्पर्य्यं नास्तीत्युक्तं तद्दूषयति अर्थवादानामपीति। अनन्यार्थता स्वार्थपरतेत्यर्थः। तर्हि अर्थवादानां विधिशेषत्वं न स्यादित्याशङ्क्याह प्रमितानामेवेति। मानान्तरसंवादविसंवादरहितार्थवादादिभिरिति शेषः। तेषां स्वार्थप्रमितिमात्रेण फलाभावाद्विधेयस्तावकत्वेन विध्येकवाक्यत्वं कल्प्यत इत्यर्थः। यथा प्रयाजादिकर्मणां प्रयोजनाकाङ्क्षावशेन प्रयाजादिवाक्यानां फलवद्दर्शपूर्णमासविधिवाक्यैरेकवाक्यत्वं तथेति भावः। अवान्तरसंसर्ग इति अर्थवादानामपि विध्यन्वयात् प्राक् स्वरसतः प्रतीयमाने देवताया विग्रहादिसंसर्गे अवान्तरतात्पर्य्यमस्तीत्यर्थः। प्रयाजादिवाक्यानामर्थवादादिवाक्यानां च स्वार्थप्रमितौ तात्पर्य्ये हेतुमाह वाक्यैकवाक्यत्वादिति वाक्यानां सतामेव तेषां विधिवाक्यैरेकवाक्यत्वाभ्युपगमाद्वाक्यानाञ्च वाक्यार्थे तात्पर्य्यस्य सामान्यतः सिद्धत्वादित्यर्थः। यत्तु वाक्यार्थद्वारभूते पदार्थे इव इति स्तुतिद्वारभूतेऽर्थे तात्पर्य्याभावे दृष्टान्तप्रदर्शनं तद्विघटयति पदैकवाक्यतायामेवेति पदानां सतामेवैकवाक्यार्थबोधनेनैकवाक्यत्वमित्यर्थः। स्तवपदार्थानां वाक्यार्थस्येव अपूर्वत्वाभावात् न तेष्ववान्तरतात्पर्य्यमपि इति

तर्हि श्रुतेः प्राबल्यमुच्यते निर्दोषत्वात्परत्वाच्च श्रुतिमात्रं प्रत्यक्षात् प्रबलमित्युत्सर्गः ।

---

स्वीक्रियत इत्यर्थः। एतेन रेवत्याधारकवारवन्तीयसामान्यविशेषणेऽपि तात्पर्यं व्याख्यातं वाक्यस्य वाक्यार्थे तात्पर्यस्य उत्सर्गतः सिद्धत्वाद्विशिष्टविधेर्विशिष्टभावनायां तात्पर्यवत्त्वाच्च तस्य विशेषणेषु तात्पर्यं सिध्यति विशिष्टविधितात्पर्यविषयत्वस्य विशेष्यमात्रवृत्तित्वेन तत्तात्पर्यस्य विशिष्टविषयकत्वानुपपत्तेः। मीमांसकानां विशिष्टविधेर्विशेषणेषु तात्पर्याभावव्यवहारस्य विशेषणेषु प्रत्येकं तात्पर्याभावपरत्वात् तस्मात्तात्पर्यविषय एव वेदस्य प्रमितिजनकत्वमिति नियमस्य न्यायनिर्णये विवरणाचार्यैर्व्यवस्थापितत्वेन इत्यर्थः। ततः किं तत्राह यजमानः प्रस्तर इत्यादीनामिति। उक्तरीत्या तेषामपि यजमानप्रस्तराभेदादौ तात्पर्यं स्यादेव तच्च प्रत्यक्षेण बाध्यत इति वक्तव्यमतस्तात्पर्यवत्त्वं श्रुतेः प्राबल्यप्रयोजकं न भवति इत्यर्थः। अत्र मन्त्रार्थवादानामपि प्रयाजादिवाक्यानामिव स्तुतिद्वारभूतेऽर्थे यद्यवान्तरतात्पर्यमवश्यं कल्पनीयं तर्हि अस्तु तत्तावत् तात्पर्यस्य न प्राबल्यप्रयोजकत्वक्षतिः महातात्पर्यस्य तत्प्रयोजकत्वसम्भवात् अद्वैतश्रुतीनां प्रपञ्चमिथ्यात्वे महातात्पर्याभ्युपगमेन तत्र प्रपञ्चसत्त्वग्राहिप्रत्यक्षस्य मिथ्यात्वश्रुत्या बाधोपपत्तेः इत्यादिकं आलोचनीयं तर्हीति तात्पर्यस्य प्राबल्यप्रयोजकत्वाभावे सति इत्यर्थः।

ननु श्रुतिमात्रस्य प्राबल्ये सिद्धे तस्यौत्सर्गिकत्वं वक्तव्यं स्यात् तदेव कुत इति चेत् न प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमिति वचनेन श्रुतिमात्रस्य प्रत्यक्षाद्यपेक्षया आगमत्वादेव

किन्तु श्रुतिबाधितमपि प्रत्यक्षं कथञ्चित्स्वोचितविषयोपहारेण सम्भावनीयं निर्विषयज्ञानायोगात्।

अत एव अद्वैतश्रुतिविरोधेन तत्त्वावेदनात् प्रच्यावितं प्रत्यक्षमर्थक्रियासमर्थव्यावहारिकविषयसमर्पणेन उपपाद्यते।

किं बहुना न इदं रजतमिति सर्वसिद्धप्रत्यक्षबाधितमपि शुक्तिरजतप्रत्यक्षमनुभवाविरोधात् पुरोदेशे शुक्तिसम्भिन्नरजतोपगमेन समर्थ्यते न तु तद्विरोधेन व्यवहितमान्तरमसदेव वा रजतं विषय इति कल्प्यते।

---

सिद्धत्वात् तस्मात्तस्य प्राबल्ये अन्यदपि हेतुद्वयं दर्शयति निर्दोषत्वात् परत्वाच्चेति उत्सर्ग इति। श्रुतितदितरप्रमाणयोर्विरोधे श्रुतिरेव बाधिका भवति यत्र च श्रुतिबाधितं प्रत्यक्षादि निरवकाशं भवति तत्र निरवकाशेन तेन श्रुतिरेव बाध्यते सावकाशनिरवकाशयोर्निरवकाशं बलवदिति न्यायादित्यर्थः।

ननु श्रुतिबाधितस्य प्रत्यक्षादेर्निरवकाशत्वस्थले तेन श्रुतेर्बाधः किमर्थमुपेयते तत्राह किन्त्वित्यादिना सम्भावनीयमुपपादनीयमित्यर्थः अतएव इति निर्विषयप्रत्यक्षायोगादेव इत्यर्थः। प्रच्यावितमिति श्रुतिबाधितस्य द्वैतस्य तत्त्वरूपत्वायोगादद्वैतबाधकप्रत्यक्षस्य तत्त्वावेदकत्वरूपात् प्रामाण्यात् प्रच्यावितत्वं बोध्यं उपपाद्यते भाष्यादिष्विति शेषः।

श्रुतिबाधितप्रत्यक्षादीनां सिद्धान्ते व्यावहारिकप्रामाण्योपगमेन प्रत्यक्षज्ञानस्य निर्विषयत्वरूपं निरवकाशत्वं

एवं च प्रस्तरे यजमानभेदग्राहिणो यावद्-ब्रह्मज्ञानमर्थक्रियासंवादेन अनुवर्त्तमानस्य प्रत्यक्षस्य प्रातिभासिकविषयत्वाभ्युपगमेन उपपादनायोगात् यजमानः प्रस्तर इति श्रुतिबाध्यत्वे सर्वथा निर्विषयत्वं स्यादिति तत्परिहारायोत्सर्गमपोद्य श्रुतिरेव तत्सिद्धाधिकरणादिप्रतिपादितप्रकारेण अन्यथा नीयते ।

---

सिद्धान्तसम्मतं न भवति इत्युपपाद्य तत्र कैमुतिकन्यायमाह किं बहुनेति अद्वैतश्रुतिबाधितघटादिप्रत्यक्षस्य निर्विषयत्वोपगमे सर्वव्यवहारोच्छेदप्रसङ्गलक्षणं बाधकं यथा विद्यते न तथा शुक्तिरजतादिप्रत्यक्षस्य निर्विषयत्वोपगमे बाधकमस्ति केश्चिदसतोऽपि रजतादेर्भानोपगमात् तथापि तस्य अतत्कालोत्पन्नरजतादिविषयकत्वं सिद्धान्ते स्वीक्रियते अनुभवस्य निर्विषयत्वायोगात् तस्माच्छ्रुतिबाधितस्य प्रत्यक्षस्य निरवकाशत्वं यत्र प्रसज्यते तत्र तेन श्रुतिबाधो युक्तः सिद्धान्तसम्मतश्चेति श्रुतेः प्राबल्यमौत्सर्गिकमित्येतत् सिद्धमिति भावः । शुक्तिसम्भिन्नेति शुक्तितादात्म्यापन्नेत्यर्थः । व्यवहितमिति बाह्यदेशान्तरस्थमित्यर्थः । आन्तरमिति ज्ञानाकाररूपमित्यर्थः । न कल्प्यत इत्यत्र हेतुस्तद्विरोधेनेति । रजतस्य इदमर्थाभिन्नत्वानुभवविरोधेन इत्यर्थः । व्यवहितरजतादीनामिदमर्थतादात्म्यासम्भवादिति भावः ।

एवञ्चेति विरोधस्थले निरवकाशप्रमानान्तरेण श्रुतिबाधे न्याय्ये सति इत्यर्थः । ननु प्रस्तरयजमानयोरभेदश्रुति-

न च अद्वैतश्रुतिप्रत्यक्षयोरिव इह श्रुति-

---

बाधितस्य तयोर्भेदप्रत्यक्षस्य शुक्तिरजतप्रत्यक्षवत् प्रातिभासिकविषयसम्भवात् न तत्र तेन श्रुतिबाधः कल्पनीय इति न इत्याह प्रातिभासिकविषयत्वाभ्युपगमेनेति। प्रत्यक्षविषयस्य प्रस्तरे यजमानभेदस्य प्रातिभासिकत्वासम्भवे युक्तिं सूचयति यावदिति। यथा शुक्तिरजतस्य ब्रह्मज्ञानात् प्रागेव न इदं रजतमिति प्रत्यक्षेण निवृत्तिः स्वोचितार्थक्रियाभावश्च तस्य प्रातिभासिकत्वे हेतुरस्ति न तथा प्रस्तरे यजमानभेदस्य ब्रह्मज्ञानात् प्राक् बाधः अर्थक्रियासामर्थ्याभावश्च प्रातिभासिकत्वे हेतुरस्तीत्यर्थः। यावद्ब्रह्मज्ञानमनुवर्त्तमानस्येत्यस्य ब्रह्मज्ञानात् प्राक् बाधरहितस्येत्यर्थः। अर्थक्रियासंवादेन इत्यस्य अर्थक्रियासमर्थभेदविषयकत्वेन इत्यर्थः। बाध्यत्व इति प्रस्तरे यजमानभेदग्राहिणः प्रत्यक्षस्येत्यनुषङ्गः। सर्वथेति अयमर्थः प्रातिभासिकभेदविषयकत्वं तस्य प्रत्यक्षस्य न सम्भवति इत्युक्तं तथा व्यावहारिकभेदविषयकत्वं तस्य न सम्भवतीत्यनुपदमेव वक्ष्यते। पारमार्थिकभेदस्य अद्वैतश्रुतिविरोधादेव नाभ्युपगन्तुं शक्यते। तथाच तस्य निर्विषयत्वरूपं निरवकाशत्वं स्यादेवेति श्रुतिरेव अन्यथा नीयत इति सम्बन्धः अन्यथानयनप्रकारमाह तत्सिद्धीति। मुख्यार्थस्याभेदस्य प्रत्यक्षविरोधेनासम्भवात् प्रस्तरे यजमानशब्दस्य गौणवृत्तौ कल्पनीयायां को गुण इत्याकाङ्क्षायां सूत्रकारेण गुणो दर्शितः। तत्सिद्धीति तस्य क्रतोः सिद्धिरुपकारो यजमानप्रस्तरसाध्यो गुणः तयोः क्रतुनिर्वर्त्तकत्वरूपं सादृश्यं गुण इति यावत्। एवमन्येषामप्यर्थवादानां प्रत्यक्षविरोधपरिहाराय यथासम्भवमालम्बनानि जैमिनिना भगवता अधिकरणान्तरेषु कल्पितानि इत्यर्थः।

प्रत्यक्षयोस्तात्त्विकव्यावहारिकत्वविषयोपगमेन प्रत्यक्षोपपादनं कर्त्तुं शक्यम् ।

ब्रह्मातिरिक्तसकलमिथ्यात्वप्रतिपादकषड्विधतात्पर्य्यलिङ्गोपपन्नानेकश्रुतिविरुद्धेनैकेन अर्थवादेन प्रस्तरे यजमानतादात्म्यस्य तात्त्विकस्य प्रतिपादनासम्भवात् ।

---

ननु अद्वैतश्रुतिप्रत्यक्षयोर्विरोधस्थले पारमार्थिकमद्वैतं श्रुतिविषयो व्यावहारिकं द्वैतं प्रत्यक्षविषय इति व्यवस्था यथा कल्प्यते तथा प्रकृतेऽपि यजमानप्रस्तरयोर्वास्तवाभेदः श्रुतिविषयः कल्पितभेदः प्रत्यक्षविषय इति व्यवस्था कल्प्यतामिति नेत्याह। न चेति। इहेति यजमानः प्रस्तर इत्यत्रेत्यर्थः। यजमानः प्रस्तर इत्यर्थवादेन तयोस्तात्त्विकतादात्म्यं प्रतिपादयितुं न शक्यं ब्रह्माद्वैतश्रुतिभिर्विरोधात्। न च अद्वैतश्रुतीनामपि विधिरूपत्वाभावेनार्थवादत्वाविशेषात् विनिगमनाविरह इति वाच्यम्।

तथापि तासां बहुत्वेन विनिगमनाविरहानवतारादित्याशयेनाह अनेकेति। किञ्च यजमानप्रस्तराभेदे तस्यार्थवादस्य तात्पर्य्यं नास्ति तद्ग्राहकलिङ्गाभावात् अद्वैतश्रुतीनाञ्च स्वार्थे तात्पर्य्यग्राहकलिङ्गानि षड्विधान्यपि सन्ति। तथा हि छान्दोग्यस्य षष्ठाध्याये सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयमिति उपक्रम्य ऐतदात्म्यमिदं सर्वमिति सर्वात्मकमद्वितीयं वस्तु उपसंहरति श्रुतिः अत उपक्रमोपसंहारयोः ऐकरूप्यलक्षणेन लिङ्गेन तस्य अध्यायस्य अद्वितीये वस्तुनि तात्पर्य्यं निश्ची-

एवं तत्त्वमसिवाक्येन त्वंपदवाच्यस्य सर्वज्ञत्वाभोक्तृत्वादिविशिष्टब्रह्मरूपत्वबोधने तत्रासर्वज्ञ-

---

यते। हे सौम्य! इदं परिदृश्यमानं जगत् सृष्टेः प्राक् अद्वितीयमेकरूपं ब्रह्मैवासीदिति श्वेतकेतुं पुत्रं प्रति उद्दालकवचनम्। इदं सर्वमेतदात्म्यमेतदात्मकं प्रकृतसद्वस्त्वात्मकमित्यर्थः। भावप्रत्ययोऽविवक्षितः। ऐतदात्म्यमिदं सर्वमिति वाक्यस्यासकृत्पाठादभ्याससिद्धिः। अद्वितीयवस्तुनो मानान्तरायोग्यत्वात् अपूर्वत्वसिद्धिः। आचार्य्यवान् पुरुषो वेदेति वाक्येन प्रकृताद्वैतसद्वस्तुज्ञानं प्रकृत्य सम्प्रति वाक्येन तस्य मुक्तिलक्षणफलश्रवणात् फलमपि तत्र तात्पर्य्यग्राहकमस्ति। पितृपुत्राख्यायिकादिरूपार्थवादश्च तत् तात्पर्य्यग्राहकः तत्रास्ति। मृदादिदृष्टान्तैः प्रपञ्चस्य ब्रह्मकार्य्यत्वप्रतिपादनपूर्वकं ब्रह्मानन्यत्वप्रतिपादनमुपपत्तिस्तत्रास्ति। तथाच षड्विधैः तात्पर्य्यग्राहकलिङ्गैः अद्वितीयवस्तुपरत्वं तस्य अध्यायस्य सिद्धम्। एवम् अध्यायान्तरेषु श्रुत्यन्तरेषु च तात्पर्य्यलिङ्गानि द्रष्टव्यानि। तथाच उक्ततात्पर्य्यलिङ्गैरुपेतत्वात् अद्वैतश्रुतीनां प्राबल्यमित्याशयेनाह षड्विधेति। ननु तर्हि व्यावहारिको यजमानप्रस्तरयोरभेदः श्रुत्यर्थोऽस्तु ततश्च व्यावहारिकतदभेदप्रतिपादकश्रुतिबाधितं तयोर्भेदप्रत्यक्षमपि व्यावहारिकभेदविषयकमस्तु तथा च प्रत्यक्षस्य निरवकाशत्वाभावान्न श्रुतिबाधकत्वमिति चेन्न। समानसत्त्वाकयोः भेदाभेदयोः एकत्र असम्भवेन तथाकल्पनायोगादस्तु तर्हि प्रातिभासिकस्तयोरभेदः श्रुत्यर्थः। न शुक्तौ रजताभेदस्य एव प्रस्तरे यजमानाभेदस्य प्रत्यक्षप्रतिभासाभावादिति भावः।

श्रुतेः प्रत्यक्षात् प्राबल्यमित्युत्सर्गस्य यजमानः प्रस्तर इत्यत्र

त्वभोक्तृत्वादिप्रत्यक्षमत्यन्तनिरालम्बनं स्यादिति तत्परिहाराय अहङ्कारशबलितस्य भोक्तृत्वादि ततो निष्कृष्टस्य शुद्धस्य उदासीनब्रह्मरूपत्वमिति व्यवस्थामाश्रित्य भागत्यागलक्षणा आश्रीयते।

एवं कृष्णलं श्रपयेदित्यादौ अपि प्रत्यक्षस्य अत्यन्तनिर्विषयत्वप्रसक्तौ तत्परिहाराय श्रुतौ

---

अपवादं दर्शयित्वा अपवादस्थलान्तरमाह एवं तत्त्वमसीति। तत्त्वमसीति वाक्येन हि स्वरसतः किञ्चिज्ज्ञत्वकर्तृत्वभोक्तृत्वादिविशिष्टचैतन्यरूपजीवस्य तद्विपरीतेन सर्वज्ञत्वाभोक्तृत्वाकर्तृत्वादिविशिष्टचैतन्यरूपेण ब्रह्मणा सहाभेदः सार्वकालिकः प्रतिपाद्यते। तदनुरोधेन जीवे सदा सर्वज्ञत्वादिधर्माङ्गीकारे जीवे तद्विरुद्धासर्वज्ञत्वकर्तृत्वादिविशिष्टवैरूप्यसंसारावगाहि प्रत्यक्षं निरालम्बनं स्यात्। अतो निरवकाशसंसारप्रत्यक्षेण श्रुतेः बाधः स्वीकर्तव्यः। स च बाधो विशेष्यचैतन्यांशमात्राभेदप्रतिपादकत्वेन श्रुतेः सङ्कोचरूप एव न तु यजमानः प्रस्तर इत्यत्र इव कार्त्स्न्येन मुख्यार्थं त्यक्त्वा गौणार्थकल्पनरूप इति विशेष इत्यर्थः।

अहङ्कारशबलितस्य इति अन्तःकरणविशिष्टचैतन्यस्य इत्यर्थः। भागत्यागेति त्वंपदवाच्यार्थस्य द्वौ भागौ स्तः विशेषणभागो विशेष्यभागश्चेति। तत्र विशेषणरूपस्य भागस्य त्यागपूर्वकं त्वंपदस्य विशेष्यभागे चैतन्यमात्रे लक्षणा स्वीक्रियते एवं तत्पदार्थेऽपि द्रष्टव्यम्।

अपवादस्थलान्तरमाह एवं कृष्णलमिति प्रसक्ताविति।

लक्षणा। नेह नानास्ति किञ्चन इत्यत्र कथञ्चिद्विषयोपपादनसम्भवे तु न प्रबलायाः श्रुतेरन्यथा नयनमिति न कश्चिदपि अव्यवस्थाप्रसङ्गः।

---

श्रुतिबलात् कपालेषु रूपरसपरावृत्तिप्रादुर्भावपर्य्यन्तपाकरूपस्य अपणस्याङ्गीकारे तेषु अपणाभावप्रत्यक्षस्य विषयो न लभ्यते। अद्वैतश्रुतिविरोधेन तेषु पारमार्थिकस्य अपणाभावस्यासम्भवात् श्रुत्युक्तअपणस्य तेषु व्यावहारिकस्यैव वक्तव्यतया तेषु तदभावस्यापि व्यावहारिकस्य असम्भवात् व्यवहारकाले बाधरहितस्य अपणाभावस्य प्रातिभासिकत्वासम्भवाच्च तस्मात् प्रत्यक्षं निर्विषयं स्यादित्यर्थः। एवं सोमेन यजेतेति अत्रापि सोमेन यागेन इष्टं भावयेत् इति वाक्यार्थे स्थिते श्रुतिबलात् सोमयागयोरभेदाङ्गीकारे तयोः भेदग्राहिप्रत्यक्षं निरवकाशं स्यादिति तद्विरोधपरिहाराय सोमपदस्य मत्वर्थलक्षणा स्वीक्रियते इत्यपि द्रष्टव्यम्। एवं निरवकाशप्रत्यक्षेण श्रुतिबाधम् उत्सर्गस्यापवादरूपं दर्शयित्वा औत्सर्गिकं श्रुतिप्राबल्यं प्रकृताभिप्रायेण दर्शयति कथञ्चिदिति। द्वैतमिथ्यात्वश्रुतीनां तत्सत्यत्वग्राहिप्रत्यक्षस्य च विरोधस्थले प्रत्यक्षस्य श्रुतिबाधितस्यापि न निरवकाशत्वं कल्पितद्वैतगतसत्ताजात्यादिविषयकत्वेन सावकाशत्वादतोऽत्र श्रुत्या प्रत्यक्षस्यैव बाध इति भावः। कथञ्चिदित्यस्य कल्पितद्वैतादिसमर्पणेन च इत्यर्थः। कथञ्चिच्छब्दात् पूर्वं प्रत्यक्षस्येति शेषः। न कश्चिदपि इति तात्पर्य्यस्य प्राबल्यप्रयोजकत्वपक्षे यथा तात्पर्य्यविषयस्यापि अपणादेर्बाधदर्शनरूपा व्यवस्था प्रसक्ता न

अथ वा कृष्णलं श्रपयेत् सोमेन यजेत इत्यादौ न प्रत्यक्षानुरोधेन लक्षणाश्रयणं किन्तु अनुष्ठानाशक्त्या। न हि कृष्णले उष्णीकरणमात्रमिव मुख्यः पाकोऽनुष्ठातुं शक्यते न वा सोमद्रव्यकरणको याग इव तद्भिन्नो यागः केनचिदनुष्ठातुं शक्यते। न च अनुष्ठेयत्वाभिमतस्य प्रत्यक्षविरोध एवानुष्ठानाशक्तिरिति शब्दान्तरेण व्यवह्रियत इति वाच्यम्। शशिमण्डलं कान्तिमत्कुर्य्यादिति विधौ अनुष्ठेयत्वाभिमतस्य शशिमण्डले कान्तिमत्त्वस्य प्रत्यक्षाविरोधेऽप्यनुष्ठानाशक्तिदर्शनेन तस्यास्ततो भिन्नत्वात्। तथा च तत एव तत्र लक्षणाश्रयणम्। तस्मादपच्छेदन्यायादिसिद्धस्य श्रुतिबलीयस्त्वस्य न कश्चिद्बाध इति। अथ कथमत्रापच्छेदन्यायप्रवृत्तिः।

---

तथा श्रुतिप्राबल्यस्य औत्सर्गिकत्वपक्षे सा प्रसज्यते अनुपलम्भात् इत्यर्थः।

ननु प्रत्यक्षेण श्रुतिबाधे बहूनि उदाहरणानि दर्शितानि श्रुत्या प्रत्यक्षबाधोदाहरणं तु एकमेव दर्शितम्। तथा च प्रत्यक्षस्य श्रुत्यपेक्षया प्राबल्यमित्युत्सर्ग इति वक्तव्यं न तु वैपरीत्यमिति अस्वरसादाह अथवेति तदभिन्न इति। सोमाभिन्न इत्यर्थः। तस्या इति अनुष्ठानाशक्तेरित्यर्थः। तत इति प्रत्यक्षविरोधादित्यर्थः। तत एवेति अनुष्ठानाशक्तेरेव न तु प्रत्यक्षविरोधादतो न प्रत्यक्षप्राबल्यस्य औत्सर्गिकत्वम् आगमाबाध्यानां

उच्यते। यथा ज्योतिष्टोमे बहिष्पवमानं सर्पतामुद्गातुरपच्छेदे सति यद्युद्गाता अपच्छिद्येत अदक्षिणं यज्ञमिष्ट्वा तेन पुनर्यजेत इति निरीक्षणेन जातोद्गात्रपच्छेदनिमित्तकर्त्तव्यताबुद्धिः पश्चात्प्रतिहर्त्रपच्छेदे सति यदि प्रतिहर्त्ता अपच्छिद्येत सर्ववेदं संदद्यादिति श्रुतिनिरीक्षणेन जातया तद्विरुद्धप्रतिहर्त्रपच्छेदनिमित्तकर्त्तव्यताबुद्ध्या बाध्यते एवं पूर्वं घटादिसत्यत्वप्रत्यक्षं परया तन्मिथ्यात्वश्रुतिजन्यबुद्ध्या बाध्यते।

---

गगने नैल्यप्रत्यक्षादीनां भूयसां प्राक् दर्शितत्वादित्यर्थः। तस्मादिति आगमप्राबल्यस्य औत्सर्गिकत्वसम्भवादित्यर्थः। न कश्चित् बाध इति आगमस्य प्रत्यक्षात् प्राबल्ये यजमानः प्रस्तरः इत्यादौ अपि यजमानप्रस्तराभेदादिसिद्धिप्रसङ्ग इति यो बाध आशङ्कितः पूर्वं स नास्ति तस्य बहुभिः प्रकारैः परिहृतत्वादित्यर्थः। अपच्छेदन्यायं प्रकृते योजयितुमाक्षिपति अथ कथमिति। कथंशब्दसूचितस्याक्षेपस्य विवरणं तन्निराकरणं च यत्तु इत्यादिना भविष्यति।

प्रथमं तं न्यायं प्रकृते योजयति उच्यत इति बहिष्पवमानं स्तोत्रमुद्दिश्य अन्वारब्धतया गच्छतामृत्विजां मध्ये उद्गातुरपच्छेदे सति आरब्धं क्रतुमदक्षिणतया समाप्य पुनः स एव क्रतुरनुष्ठेय इति तदपच्छेदनिमित्तसमारब्धक्रतोरदक्षिणतया समापनं प्रायश्चित्ततया विहितं यथा, तथा

न चोदाहृतस्थले पूर्वनैमित्तिककर्त्तव्यताबुद्धेः परनैमित्तिककर्त्तव्यताबुद्ध्या बाधेऽपि पूर्वनैमित्तिककर्त्तव्यताबुद्धिजनकं शास्त्रं यत्र उद्गात्रमात्रापच्छेद उभयोरपि युगपदपच्छेदो वा उद्गात्रपच्छेदस्य परत्वं वा तत्र सावकाशं प्रत्यक्षं तु अद्वैतश्रुत्या बाधे विषयान्तराभावात् निरालम्बनं स्यादिति वैषम्यं शङ्कनीयम् ।

---

प्रतिहर्त्रपच्छेदनिमित्तकं सर्वस्वदानरूपदक्षिणादानविशिष्टतया आरब्धस्यैव क्रतोः समापनरूपं प्रायश्चित्तं विहितम् । तथा च एकस्मिन् प्रयोगे दैवात् क्रमेणोभयोरपच्छेदे सति विरुद्धयोरुक्तप्रायश्चित्तयोरनुष्ठातुमशक्यत्वादन्यतरस्य अनुष्ठेयत्वे स्थिते सति किं पूर्वनिमित्तकप्रायश्चित्तमनुष्ठेयं किं वा उत्तरनिमित्तकमिति विषये निर्णयमाह उद्गातुरपच्छेद इत्यादिना यत्र प्रयोगे प्रथममुद्गातुरपच्छेदो भवति तत्प्रयोगाभिप्रायोऽयं ग्रन्थः श्रुतिनिरीक्षणेनेति निमित्तो यजमानानन्तरमेव नैमित्तिकशास्त्रस्य बुद्धिस्थत्वादिति भावः। उद्गात्रपच्छेदनिमित्तकर्त्तव्यताबुद्धिरिति उद्गात्रपच्छेदो निमित्तं यस्य प्रायश्चित्तस्य तदुद्गात्रपच्छेदनिमित्तं तस्य कर्त्तव्यताबुद्धिरित्यर्थः। तद्विरुद्धेति उद्गात्रपच्छेदनिमित्तप्रायश्चित्तकर्त्तव्यता तच्छब्दार्थः। तद्विरुद्धत्वं च कर्त्तव्यताविशेषणम्। एवमिति एकस्मिन् प्रयोगे अदक्षिणत्वसर्वस्वदक्षिणाकत्वयोरिव एकत्र घटादिप्रपञ्चे सत्यत्वमिथ्यात्वयोरपि विरुद्धत्वात् तद्बुद्ध्या बोध्यबोधकभाव इति भावः।

न च उदाहृतस्थल इति यत्र प्रथममुद्गात्रपच्छेदस्तत्रेत्यर्थः।

यत्र घटादौ श्रुतिबाध्यं प्रत्यक्षं प्रवर्त्तते तत्रैव व्यावहारिकं विषयं लब्ध्वा कृतार्थस्य तस्य परापच्छेदस्थले सर्वथा बाधितस्य पूर्वापच्छेदशास्त्रस्येव विषयान्तरान्वेषणाभावादिहापि सर्वप्रत्ययवेद्यब्रह्मसत्तायां सावकाशं प्रत्यक्षमिति वक्तुं शक्यत्वाच्च।

---

शास्त्रमिति यदि उद्गाता अपच्छिद्येतेति शास्त्रमित्यर्थः। युगपदिति उद्गातृप्रतिहर्त्रपच्छेदयोर्यौगपद्यस्थले उद्गात्रपच्छेदनिमित्तकमेव प्रायश्चित्तमनुष्ठेयमित्यापस्तम्बाचार्य्यैरुक्तत्वादिति भावः। प्रत्यक्षन्त्विति द्वैतसत्यत्वप्रत्यक्षमित्यर्थः। अद्वैतश्रुत्येति द्वैतमिथ्यात्वश्रुत्येत्यर्थः। विषयान्तराभावादिति द्वैतप्रपञ्चे प्रतीयमानसत्त्वस्य श्रुत्या बाधे सति तत्र सत्त्वान्तराभावात् सत्त्वप्रत्यक्षं निर्विषयं स्यात्। न चैतद् युज्यते प्रत्यक्षज्ञानस्य निर्विषयत्वादर्शनात् तदनुपगमाच्चेति भावः।

द्वैतप्रपञ्चे पारमार्थिकस्य सत्त्वस्य श्रुत्या अपह्नुतत्वेऽपि व्यावहारिकस्य तत्सत्त्वस्य तथा न ह्नुतत्वात् सत्त्वप्रत्यक्षस्य न निरवकाशत्वमिति परिहरति तत्रेति विषयमिति सत्त्वरूपमिति शेषः। ननु ब्रह्मणि सत्त्वं पारमार्थिकं घटादिप्रपञ्चे सत्त्वं व्यावहारिकं शुक्तिरजतादौ सत्त्वं प्रातिभासिकमिति सत्तात्रैविध्यपक्षे घटादिसत्त्वप्रत्यक्षस्य विषयान्तरं न अन्वेषणीयं व्यावहारिकसत्त्वस्य घटादौ विद्यमानस्यैव तद्विषयस्य लाभात् एकैव सर्वत्र सत्तेति पक्षे व्यावहारिकसत्त्वप्रातिभासिकसत्त्वयोरभावात् सत्त्वप्रत्यक्षस्य विषयान्तरमन्वेष-

यत्तु एकस्मिन्नपि प्रयोगे क्रमिकाभ्यां निमित्ताभ्यां क्रतौ तत्तन्नैमित्तिककर्त्तव्यतयोः वदरफले श्यामरक्तरूपयोरिव क्रमेणोत्पादाद्रूपद्वयज्ञानवत् कर्त्तव्यताज्ञानद्वयमपि प्रमाणमेवेति न परेण पूर्वज्ञानबाधे अपच्छेदन्याय उदाहरणम् ।

---

णीयमेव। यथा उत्तरभाविविरुद्धापच्छेदस्थले सर्वथा बाधितस्य पूर्वापच्छेदनिमित्तकप्रायश्चित्तशास्त्रस्येत्याशङ्क्याह इहापीति। द्वैतसत्त्वप्रत्यक्षं घटादिद्वैते सत्तामलभमानमपि न निरवकाशं पूर्वापच्छेदनिमित्तकप्रायश्चित्तशास्त्रस्य प्रयोगान्तरे सावकाशत्ववदिहापि घटादिद्वैतादन्यत्र तदधिष्ठानभूतब्रह्मसत्तायां सावकाशत्वसम्भवादित्यर्थः। ब्रह्मस्वरूपसत्त्वायाः प्रत्यक्षविषयत्वे कैमुतिकन्यायमभिप्रेत्याह सर्वेति सर्वप्रत्ययवेद्यत्वं सत्ताविशेषणं लोके हि यद्यद्वस्तु मनसि स्फुरति तत्सर्वं सदित्येव प्रतीयते अतः सर्वस्य जगतः सत्ता सर्वप्रत्ययवेद्या सा च सर्वाधिष्ठानब्रह्मसत्तैव न तु तदतिरिक्ता कल्पनागौरवादिति भावः।

पूर्वं कथं शब्दसूचितमाक्षेपमिदानीमुद्भावयति यत्त्विति। वदरफल इति। यथा तत्र पूर्वं श्यामरूपमुत्पद्यते तत्रैव पश्चात् पूर्वरूपनाशपूर्वकं रक्तरूपमुत्पद्यते तथा पूर्वनिमित्तेन जातमात्रेण पूर्वनैमित्तिककर्त्तव्यता जायते पाश्चात्त्येन च निमित्तेन पूर्वकर्त्तव्यतानाशपूर्वकमुत्तरनैमित्तिककर्त्तव्यता उत्पद्यत इत्यर्थः। ततः किं तत्राह। रूपद्वयज्ञानवदिति तथाच उत्तरभाविविरुद्धापच्छेदवत्यपि क्रतौ पूर्वनैमित्तिकशास्त्रस्य न अप्रामाण्यमिति तत्प्रामाण्यसंरक्षणमेव तथा कल्पकमिति भावः।

अत एव अपच्छेदाधिकरणे नैमित्तिकशास्त्रस्य ह्ययमर्थः निमित्तोपजननात्प्राक् अन्यथाकर्त्तव्योऽपि क्रतुर्निमित्ते सति अन्यथा कर्त्तव्य इति शास्त्रदीपिकावचनमिति।

तन्न। अङ्गस्य सतः कर्त्तव्यत्वं न च पश्चाद्भाविप्रतिहर्त्रपच्छेदवति क्रतौ पूर्वप्रवृत्तोद्गात्रपच्छेदनिमित्तकस्य प्रायश्चित्तस्याङ्गत्वमस्ति आहवनीयशास्त्रस्य पदहोमातिरिक्तहोमविषयत्ववत् यदि उद्गातेति शास्त्रस्य पश्चाद्भाविप्रतिहर्त्रपच्छेदरहितक्रतुविषयत्वात्।

---

उत्तरनिमित्तोपजननात् प्राक् पूर्वनैमित्तिककर्त्तव्यता वस्तुत आसीदित्यत्र सम्मतिमाह अतएवेति। पूर्वं वस्तुतस्तदभ्युपगमादेवेत्यर्थः। उत्तरभाविप्रतिहर्त्रपच्छेदजननात् प्रागन्यथा अदक्षिणतया वस्तुतः कर्त्तव्योऽपि क्रतुः पश्चात् प्रतिहर्त्रपच्छेदरूपे निमित्ते सति अन्यथा सर्ववेदसदक्षिणतया कर्त्तव्य इति ग्रन्थाभिप्रायानुसारेण वचनार्थः। क्रमेण विरुद्धापच्छेदद्वयवति क्रतौ पूर्वनैमित्तिकस्य कर्त्तव्यतानिष्पत्तौ मानं नास्तीति तत्र पूर्वप्रायश्चित्तस्यानङ्गत्वादनङ्गत्वञ्च तद्बोधकमानाभावात्।

न च पूर्वनैमित्तिकशास्त्रं तत्र मानं तस्य प्रयोगान्तरेषु सावकाशत्वेन तत्राप्यङ्गत्वबोधकत्वाभावादित्याशयेन दूषयति तन्नेति आहवनीयेति। आहवनीये जुहोतीति होमसात्रे

उक्तं हि न्यायरत्नमालायाम्। साधारणस्य शास्त्रस्य विशेषविषयादिना सङ्कोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयत इत्युक्तं लक्षणप्राप्तबाध-विवेचने।

तत्रैवं सति शास्त्रार्थो भवति पश्चाद्भाव्युद्गात्र-पच्छेदविधुरप्रतिहर्त्तृपच्छेदवतः क्रतोः सर्ववेद-सदानमङ्गमेवमुद्गात्रपच्छेदेऽपि द्रष्टव्यमिति। यत्तु शास्त्रदीपिकावचनमुदाहृतं तदपि तेनोत्पन्नमपि

---

आहवनीयं विधातुं प्रवृत्तस्य सामान्यशास्त्रस्य होमविशेषे पदरूपाधिकरणविधायकविशेषशास्त्रवशेन पदहोमातिरिक्त-होमेषु आहवनीयविधायकत्ववदित्यर्थः। क्रतुविषयत्वादिति तादृशक्रतावेव उद्गात्रपच्छेदनिमित्तकप्रायश्चित्तस्य अङ्गत्वबोध कत्वादित्यर्थः।

उक्तार्थे सम्मतिमाह उक्तं हीति। क्लृप्तरूपस्य प्रत्यक्षसिद्धस्य साधारणस्य होममात्रे प्राप्तस्य आहवनीयो जुहोतीति शास्त्रस्य विशेषशास्त्रेण यः सङ्कोचः संप्राप्तबाधोऽभिधीयते यथा सामा-न्यशास्त्रस्य विशेषशास्त्रं बाधकं तथा सामान्यशास्त्रयोरेव क्वचि-द्विषये विरोधे सति पूर्वप्राप्तस्य पश्चात् प्राप्तं परत्वाद्बाधकं भवति यथा विरुद्धापच्छेदनिमित्तकशास्त्रयोस्तथाच विशेषविषया-दिनेत्यादिपदं परत्वादिसंग्रहार्थमिति श्लोकार्थः।

तत्रैवं सतीति। अपच्छेदस्थले उत्तरज्ञानेन पूर्वज्ञानबाधे सतीत्यर्थः। द्रष्टव्यमिति पश्चाद्भाविप्रतिहर्तृपच्छेदविधुरस्य उद्गात्रपच्छेदवतः क्रतोरदक्षिणतया क्रतुसमापनं अङ्गमिति

पूर्वप्रायश्चित्तज्ञानं मिथ्या भवति बाधितत्वाद् उत्तरस्य तु न किञ्चिद्बाधकमस्तीति पूर्व-कर्त्तव्यताबाध्यत्वप्रतिपादकग्रन्थोपसंहारपठितत्वात् निमित्तोपजननात् प्राङ्निमित्तोपजननं विना निमित्तोपजननाभावे सति अन्यथा कर्त्तव्योऽपि इति कृत्वा चिन्तामात्रपरम्।

न तु उत्तरनिमित्तोपजननात् प्राक् पूर्व-नैमित्तिककर्त्तव्यता वस्तुत आसीदित्येवं परम् पूर्वग्रन्थसन्दर्भविरोधापत्तेः। आस्तां मीमांसक-मर्य्यादा श्यामरक्तरूपन्यायेन क्रमिककर्त्तव्यताद्वयो-

---

ज्ञातव्यमित्यर्थः। शास्त्रदीपिकावचनमपि न त्वदभिमतार्थपरं तत्पूर्वग्रन्थविरोधात् पूर्वग्रन्थार्थनिगमनरूपस्य त्वदुदाहृत-वचनस्य पूर्वग्रन्थानुसारेणैव नेतव्यत्वाच्चेति आह तदपीति। तदपि कृत्वा चिन्तामात्रपरमिति सम्बन्धः कृत्वा चिन्तापरत्वे हेतुमाह। तेन इत्यादिना तेन इत्यस्य क्रमपूर्वप्रवृत्तनै-मित्तिकशास्त्रेण इत्यर्थः। परोदाहृतवचनस्य शास्त्रदीपि-कागतपूर्वग्रन्थानुसारिणमर्थमाह। निमित्तोपजननं विनेति क्रमेण विरुद्धापच्छेदद्वयवति क्रतौ यदि द्वितीयनिमित्तोप-जननं न स्यात् तदा पूर्वनिमित्तवशात् अन्यथा कर्त्तव्यो भवेद-प्ययं क्रतुर्नत्वेतदस्तीत्येतदर्थपरोऽयं ग्रन्थ इत्यर्थः।

पराभिमतं तद्वचनार्थं निषेधयति नात्विति। तिष्ठन्तु मीमांसकाः दर्शितदर्शिनः कुशलैरस्माभिः कल्पितस्य श्रुत्यर्थस्य का अनुप-

त्यभ्युपगमे को विरोधः। उच्यते। किं तत् कर्त्तव्यत्वं यत् परनैमित्तिककर्त्तव्यतोत्पत्त्या निवर्त्तते।

न तावत् पूर्वनैमित्तिकस्य कृतिसाध्यत्वयोग्यत्वं तस्य पश्चादपि अनपायात्।

नापि फलमुखं कृतिसाध्यत्वं तस्य पूर्वमपि अजननात्।

नापि यदननुष्ठाने क्रतोर्वैकल्यं तत्त्वमङ्गत्वं वा अननुष्ठाने क्रतुवैकल्यप्रयोजकत्वस्य नियमविशेष-

---

पत्तिरिति शङ्कते आस्तामिति। उत्तरनैमित्तिककर्त्तव्यतोत्पत्त्या नाश्यत्वेन पराभिमतपूर्वनैमित्तिकस्य कर्त्तव्यत्वमेव तावद्दुर्निरूपम्।

तथाहि तत् किं कृतिसाध्यत्वयोग्यत्वं किं वा फलमुखकृतिसाध्यत्वं क्रतुवैकल्यप्रयोजकाननुष्ठानप्रतियोग्यनुष्ठानशालित्वं वा अङ्गत्वं वा अन्यद्वा किञ्चिदिति विकल्पं मनसि निधाय आद्यं दूषयति न तावदिति। अनपायादिति तथाच उत्तरनैमित्तिककर्त्तव्यताकालेऽप्यनुवर्त्तमानायाः पूर्वकर्त्तव्यतायास्तन्नाश्यत्वायोगेन वदरफलगतश्यामतारक्ततयोरिव तयोः क्रमिकत्वाभ्युपगमविरोध इति भावः।

द्वितीयं दूषयति नापि फलमुखमिति अजननादिति। तथाच पूर्वनैमित्तिककर्त्तव्यताज्ञानस्य मीमांसकमर्य्यादासिद्धं भ्रान्तिमेवायाति न त्वदभिमतं श्यामताज्ञानस्येव प्रमात्वमिति भावः।

तृतीयचतुर्थावनुवदति नापि यदिति। यस्य अनुष्ठाना-

रूपत्वेन कर्माङ्गत्वस्य फलोपकारितया सन्निपातितया वा कारणत्वविशेषरूपत्वेन च तयोः कादाचित्कत्वायोगेन स्वाभाविकत्वनिर्वाहाय पश्चाद्भाविविरुद्धापच्छेदाभाववतः क्रतोः पूर्वापच्छेदनैमित्तिकमङ्गं तत्रैव तदननुष्ठानं क्रतुवैकल्यप्रयोजकम् इति विशेषणीयतया पाश्चात्त्यापच्छेदवति क्रतौ पूर्वापच्छेदनैमित्तिके क्रत्वङ्गत्वस्य तदननुष्ठाने क्रतुवैकल्यप्रयोजकत्वस्य वा पाश्चात्त्यापच्छेदोत्पत्तेः पूर्वमसम्भवात्।

---

भावे क्रतोः वैकल्यं भवति तत् क्रतुवैकल्यप्रयोजकाननुष्ठानप्रतियोग्यनुष्ठानशालि पर्यवस्यति तत्त्वमित्यर्थः। यत्र प्रथमसुद्गात्रपच्छेदः पश्चात् प्रतिहर्त्रपच्छेदः तत्र उद्गात्रपच्छेदप्रायश्चित्ताननुष्ठानं क्रतुवैकल्यप्रयोजकं तत् प्रायश्चित्तं तस्य क्रतोरङ्गमिति च वदता वक्तव्यं पूर्वप्रायश्चित्ताननुष्ठानस्य क्रतुवैकल्यप्रयोजकत्वं किं वैकल्योत्पादकत्वं किं वा तद्व्यापकत्वं तद्व्याप्यत्वं वा? नाद्यः अभावरूपस्याननुष्ठानस्योत्पादकत्वासम्भवात् क्रतुवैकल्यस्यापि क्रतूपकारप्रागभावरूपतया उत्पाद्यत्वायोगाच्च। न द्वितीयः यत्रोद्गातृमात्रापच्छेदवति क्रतौ तत् प्रायश्चित्तं कृतं कारणान्तराद्वैकल्यं च तत्र क्रतुवैकल्यसत्त्वेऽपि उद्गात्रपच्छेदप्रायश्चित्ताननुष्ठानाभावेन व्यभिचारात् तस्मात् तृतीयः परिशिष्यत इत्याशयेनाह नियमविशेषरूपत्वेन इति व्याप्यत्वरूपत्वेन' इत्यर्थः। फलोपकारित्वं

न हि वस्तु किञ्चिद् वस्त्वन्तरं प्रति कञ्चित्

परमापूर्वरूपफलं प्रति अदृष्टद्वारा कारणत्वं यथा प्रयाजादीनां सन्निपत्योपकारकत्वञ्च यागस्वरूपोत्पादकत्वं यथा द्रव्यदेवतादेरस्तु तयोरुक्तरूपत्वमिति चेत् तत्र वक्तव्यं क्रमिकविरुद्धापच्छेदद्वयवति क्रतौ पूर्वप्रायश्चित्ताननुष्ठानगतं क्रतुवैकल्यव्याप्यत्वरूपं क्रतुवैकल्यप्रयोजकत्वं पूर्वप्रायश्चित्तगतमङ्गत्वञ्च द्वितीयनिमित्तजननानन्तरमप्यनुवर्त्तते न वेति आद्ये क्रतुवैकल्यप्रयोजकाननुष्ठानप्रतियोग्यनुष्ठानशालित्वरूपायाः पूर्वप्रायश्चित्तकर्त्तव्यतायाः तत्प्रायश्चित्तगताङ्गत्वरूपकर्त्तव्यतायाश्च उत्तरनैमित्तिककर्त्तव्यतानाश्यत्वाभ्युपगमभङ्गापत्तेः। द्वितीयकल्पे च पूर्वप्रायश्चित्ताननुष्ठानस्य क्रतुवैकल्यव्याप्यत्वं द्वितीयनिमित्तजननात् प्रागेवास्ति तज्जननानन्तरन्तु नास्तीति पर्य्यवस्यति।

तथा पूर्वप्रायश्चित्तगताङ्गत्वरूपा कर्त्तव्यता पूर्वप्रायश्चित्तस्य द्वितीयनिमित्तजननात् प्रागेव अस्ति पश्चात्तु नास्तीति पर्य्यवस्यति। तथा च व्याप्यत्वकारणत्वयोः स्वाश्रये कादाचित्कत्वमभ्युपगतं स्यात् तच्च न सम्भवतीत्यनुपदमेव वक्ष्यति न हि इत्यादिना। तस्मात् तयोर्यावदाश्रयभावित्वरूपस्वाभाविकत्वनिर्वाहाय क्रमिकविरुद्धापच्छेदवत् क्रतुव्यावर्त्तकविशेषणमुभयत्रापि देयमित्याह पश्चाद्भावीति असम्भवादिति। तथा च क्रमिकविरुद्धापच्छेदवति क्रतौ पूर्वनैमित्तिककर्त्तव्यताज्ञानं भ्रान्तिरेवेति भावः।

तयोः कादाचित्कत्वायोगे हेतुमाह नहीति धूमादौ वह्न्यादिव्याप्यताया वह्न्यादौ धूमादिकारणतायाश्च कादाचित्कत्वाद-

कालं व्याप्यं पश्चान्नेति वा क्वचित् कालं कारणं पश्चान्नेति वा क्वचिद् दृष्टं युक्तं वा।

नापि कर्त्तव्यत्वं नाम धर्मान्तरमेव आगमापाययोग्यं कल्पनीयं मानाभावात्। विरुद्धापच्छेदशास्त्रयोः पदाहवनीयशास्त्रवत् व्यवस्थोपपत्तेः। तस्मात् निरालम्बनं क्रमिककर्त्तव्यताद्वयोत्पत्तिवचः।

ननु च उपक्रमाधिकरणन्यायेन असञ्जातविरोधित्वात् प्रत्यक्षमेव आगमाद्बलीयः किं न स्यात्।

---

र्शनादित्यर्थः। ननु अदृष्टमपि युक्तं चेत् संग्राह्यमेव नेत्याह युक्तं वेति वाकारो न जनुकर्षणार्थः। तयोः कादाचित्कत्वपक्षे धूमादौ कदाचित् वह्निव्याप्यत्वाभावापत्त्या तदभावप्रयोजकोपाधिमत्त्वप्रसङ्गः स्यात्। वह्न्यादेः कदाचित् धूमादिकारणत्वाभावापत्त्या धूमादिकार्य्यार्थिनो वह्न्याद्युपादाने तत्कारणत्वाभावशङ्कया निष्कम्पप्रवृत्तिश्च न स्यादतस्तयोः कादाचित्कत्वमयुक्तमित्यर्थः।

पञ्चमं निराकरोति नापीति। प्रथमनिमित्तजननान्तरमेव आगमयोग्यं द्वितीयनिमित्तजननानन्तरमेव अपाययोग्यं च इत्यर्थः। पूर्वनैमित्तिकशास्त्रस्याहवनीयादिशास्त्रवदन्यत्र सावकाशतया उक्तत्वेन तस्यैतादृशधर्मे मानत्वायोगादित्याशयेनाह विरुद्धेति। क्रमिकविरुद्धापच्छेदवति क्रतौ पूर्वनैमित्तिककर्त्तव्यत्वज्ञानस्य प्रमात्वासम्भवात् सति विरोधे उत्तरज्ञानेन पूर्वज्ञानबाधे अपच्छेदन्याय उदाहरणं भवत्येवेत्याशयेनोपसंहरति तस्मादिति।

उच्यते। यत्रैकवाक्यता प्रतीयते तत्रैकस्मिन्नर्थे पर्य्यवसानेन भाव्यम् अर्थभेदे प्रतीतैकवाक्यताभङ्ग प्रसङ्गात्। अतः तत्र प्रथममसञ्जातप्रतिपच्चेण प्रजापतिर्वरुणाय अश्वमनयदित्याद्युपक्रमेण परकृति-सरूपार्थवादेन दातुरिष्टौ बुद्धिमधिरोपितायां तत् विरुद्धं यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणां-श्चतुष्कपालान्निर्वपेदित्युपसंहारगतं पदजातमुपसञ्जा-तप्रतिपच्चत्वात् यथाश्रुतार्थसमर्थनेन तदेकवाक्यता-मप्रतिपद्यमानमेकवाक्यतानिर्वाहाय णिजर्थमन्तर्भाव्य तदानुगुण्येनैव आत्मानं लभत इत्युपक्रमस्य प्राबल्यम्।

---

ननु अपच्छेदन्यायेन श्रुतेः प्रत्यक्षापेक्षया प्राबल्या-वगतिवदुपक्रमाधिकरणन्यायेन प्रत्यक्षस्यापि श्रुत्यपेक्षया प्राबल्यावगमात् तयोर्बाध्यबाधकभावे विनिगमनाविरह इत्या-शयेन शङ्कते ननु चेति असञ्जातेति। यथा उपक्रमवाक्यार्थ-ज्ञानकाले उपसंहारवाक्यार्थज्ञानाभावेन विरोधस्फुरणाभा-वादुपक्रमस्य असञ्जातविरोधित्वं तथा अद्वैतसत्त्वप्रत्यक्ष-प्रवृत्तिकाले द्वैतमिथ्यात्वबोधकश्रुत्यर्थानुभावाभावेन विरोध स्फूर्त्त्यभावात् प्रत्यक्षस्यासञ्जातविरोधित्वमित्यर्थः।

दृष्टान्तवैषम्येण परिहरति उच्यत इति। अश्वमनयदिति अश्वं दत्तवानित्यर्थः। परस्य प्रजापतेः कृतिरनुष्ठानं परकृतिः परकृतिपदं तत्प्रतिपादकवाक्यपरं तत्सदृशार्थवादेनेत्यर्थः।

यत्र तु परस्परमेकवाक्यता न प्रतीयते तत्रैव पूर्वंवृत्तमविगणय्य लब्धात्मकं विरुद्धार्थकं वाक्यं स्वार्थं बोधयत्येव इति न तत्र पूर्वप्रवृत्तस्य प्राबल्यम्। अत एव षोडशिग्रहवाक्यं पूर्ववृत्त-मविगणय्य तदग्रहवाक्यस्यापि स्वार्थबोधकत्वमुपेयते किन्तु उभयोर्विषयान्तराभावादगत्या तत्रैव विकल्पानुष्ठानमिष्यते।

---

प्रजापतेः कर्माधिकाराभावेन वस्तुतस्तत्प्रतिपादकत्वाभावा-दिति सरूपेत्युक्तम्। दातुरिति स एतं वारुणं चतुष्कपालमपश्यत् तन्निरवपदित्युपक्रमणे श्रवणादिति भावः। सद्वृत्यनेन प्रकृतः प्रजापतिः परामृश्यते उपक्रमोपसंहारयोर्वारुणेष्टिरूपैकार्थ-स्पर्शित्वात् तयोरत्रैकवाक्यत्वमवगतं तत्संरक्षणायानयोरेकार्थे पर्य्यवसानं वक्तव्यम्। उपक्रमो दातुरिष्टिं विधत्ते उपसंहारः प्रतिग्रहीतुरिति यथाश्रुतवाक्यार्थाभ्युपगमे प्रतीतैकवाक्यत्वं न स्यादित्यर्थः। णिजर्थमिति प्रतिगृह्णीयादित्यस्य प्रतिग्राह-येदित्यर्थः।

एकवाक्यत्वप्रतीतिस्थल एवोत्तरस्य पूर्वापेक्षेत्युक्तार्थ-दार्ढ्याय एकवाक्यत्वप्रतीत्यभावस्थले उत्तरेण पूर्वं नादर्त्त-व्यमित्याशयेनाह यत्र त्विति। ननु एकस्मिन् अतिरात्रक्रतौ षोड़शीग्रहतदभावयोर्विरुद्धत्वात् वाक्यद्वयं कथं प्रमाणं स्यादिति शङ्कते किन्त्विति। प्रयोगभेदेन विरोधसमाधानमाह उभयोरिति। ननु ग्रहणवाक्यं तन्निषेधवाक्यं च क्रतुभेदेन व्यवस्थितं किं न स्यादित्यत आह विषयान्तराभावादिति।

एवञ्च अद्वैतागमस्य प्रत्यक्षेण एकवाक्यता-शङ्काभावात् पूर्ववृत्तमपि तदविगणय्य स्वार्थबोधकत्वमप्रतिहतम्। तदर्थबोधजनने च पूर्वं परम-जातत्वादबाधित्वैव जायते। परस्य अनन्यथा उत्पादाद्याद्याबाधेन सम्भव इत्यपच्छेदन्यायस्यैव प्रवृत्तिर्न उपक्रमन्यायस्य। अतएव लोकेऽपि प्रथम-प्रवृत्तं शुक्तिरूपि अप्रत्यक्षमाप्तोपदेशेन बाध्यत इति।

श्रुत्युपजीव्यत्वेन प्रत्यक्षाबाधशङ्कापरिहारः।

ननु तथापि उपजीव्यत्वेन प्रत्यक्षस्यैव प्राबल्यं

---

तयोर्वाक्ययोरेकप्रकरणगतत्वादित्यर्थः। अगत्येति समुच्चयस्यापि असम्भवेनेत्यर्थः। तत्रैवेति अतिरात्र एवेत्यर्थः।

एवञ्चेति उपक्रमन्यायस्य प्रतीतैकवाक्यताकग्रन्थविषयत्वे सति इत्यर्थः। शङ्काभावादिति तथा च न प्रत्यक्षस्य श्रुत्यपेक्षया प्राबल्यशङ्केति भावः। अपच्छेदन्यायप्रवृत्तिप्रकृते शङ्कासमाधानाभ्यां निरूप्य निगमयति तदर्थेति पूर्वमिति। क्रमिकविरुद्धापच्छेदवति क्रतौ प्रथमापच्छेदनिमित्तकप्रायश्चित्तकर्त्तव्यताज्ञानं पूर्वशब्दार्थः। उत्तरनैमित्तिककर्त्तव्यताज्ञानं परशब्दार्थः। पूर्वेण परस्य बाधाभावे हेतुमाह अजातत्वादिति परस्यानन्यथा पूर्वज्ञानबाधमन्तरेण उत्पत्तुमयोग्यत्वादाद्यस्य अबाधेन परस्य सम्भवो नास्तीति श्लोकार्थः। पूर्वप्रवृत्तस्य प्रत्यक्षस्यापि परेण शब्देन बाधे उदाहरणमाह अतएवेति। परत्वादेवेत्यर्थः।

नन्विति। यद्यपि इयं शङ्का न च एवमुपजीव्यप्रत्यक्ष-

दुर्वारमपच्छेदशास्त्रयोर्हि न पूर्वं परस्य उपजीव्यमिति युक्तः परेण पूर्वस्य बाध इह तु वर्णपदादिस्वरूपग्राहकतया मिथ्यात्वबोधकमागमं प्रति प्रत्यक्षस्य उपजीव्यत्वादागमस्यैव तद्विरुद्धमिथ्यात्वाबोधकत्वरूपो बाधो युज्यते।

न च मिथ्यात्वश्रुत्या वर्णपदादिसत्यत्वांशोपमर्देऽपि उपजीव्यस्वरूपांशोपमर्दाभावान्न उपजीव्यविरोध इति वाच्यम्। न इह नानास्ति किञ्चनेत्यादिश्रुतिभिः स्वरूपेणैव प्रपञ्चाभावबोधनात्।

---

विरोध इत्यादिना पूर्वं निराकृता तथापि तत्नोक्तपरिहारमाचेप्तुं तच्छङ्कापरिहारौ पुनर्लिखितौ। तथापीति आगमवत् प्रत्यक्षस्य स्वतः प्राबल्याभावेऽपि इत्यर्थः। ननु अपच्छेदन्यायेन श्रुतेरपि प्राबल्यं दुर्वारं तथा च बाध्यबाधकभावे विनिगमनाविरह एवेति शङ्कस्य नेष्टसिद्धिः प्रत्यक्षेण श्रुतिबाधस्य तदिष्टत्वादित्याशङ्क्यापच्छेदन्यायानवतारं शङ्कः प्रकृते दर्शयति अपच्छेदशास्त्रयो र्हीति।

उपजीव्यविरोधशङ्कायां पूर्वोक्तं परिहारं स्मारयति न च मिथ्यात्वश्रुत्येति। श्रुत्या प्रपञ्चसत्यत्वमात्रनिषेधे सति तथा परिहारो युज्यते सा तु प्रपञ्चस्वरूपमेव निषेधति तथा च वर्णपदादिस्वरूपस्यैवाभावादुपजीव्यविरोधो दुर्वार इत्याह नेहेति। इह ब्रह्मणि नाना भिन्नं वस्तु किञ्चिदपि नास्तीत्यर्थः।

अत्र केचिदाहुः। वृषमानय इत्यादिवाक्यं श्रवणदोषात् वृषभमानयेत्यादिरूपेण श्रुतवतोऽपि शाब्दप्रमितिदर्शनेन शाब्दप्रमितौ वर्णपदादि- प्रत्यक्षं प्रमाभ्रमसाधारणमेव अपेक्षितमित्यद्वैता- गमेन वर्णपदादिप्रत्यक्षमात्रम् उपजीव्य स्वरूपो- पमर्देऽपि नोपजीव्यविरोध इति।

अन्ये त्वाहुः। शाब्दप्रमितौ वर्णपदादिस्वरूपांस- द्धानपेक्षायामपि अयोग्यशब्दात् प्रमित्यनुदयाद्यो- ग्यतास्वरूपसिद्ध्यपेक्षास्ति।

---

स्वरूपोपमर्दमुपेत्यैव उपजीव्यविरोधं परिहरति अत्र केचित् आहुरिति। प्रपञ्चसत्यत्वपक्षेऽपि वृषमानयेति उदाहरणानुरो- धेन भ्रमप्रमासाधारणमेव शब्दप्रत्यक्षं शाब्दबोधोपजीव्यमिति वक्तव्यम्। अस्माकन्तु निषेधश्रुतिप्रामाण्यात् सर्वत्र भ्रमरूपमेव प्रत्यक्षं शाब्दबोधे व्यवहारान्तरेषु च कारणमिति विशेष इति नोपजीव्यविरोधः। शब्दस्वरूपस्यानुपजीव्यत्वादित्यर्थः।

उपजीव्यविरोधं प्रकारान्तरेण परिहरति अन्ये तु आहुरिति। प्रथमं पूर्वमते अस्वरसं दर्शयति शाब्दप्रमिताविति अनपेक्षायाम् अपीति। अत्रापिशब्देन वस्तुतोऽपेक्षा अस्तीति सूचितम्। तथा हि पूर्वमते प्रत्यक्षज्ञानमात्रमुपजीव्यं विषयो वर्णपदादिलक्षणो नोपजीव्य इत्युक्तं तदयुक्तं निर्विषयप्रत्यक्षज्ञानायोगादतो वर्ण- पदादिस्वरूपमपि स्वीकर्त्तव्यमेव तथा च उपजीव्यविरोधे पूर्व- समाधानं न साध्विति भावः। अस्तीति तथा च योग्यतायाः

तदपेक्षायामपि न उपजीव्यविरोधः न हीह नानास्तीति श्रुत्या निषेधेऽपि यावद्ब्रह्मज्ञानमनुवर्त्तमानस्य अर्थक्रियासंवादिनोऽसद्विलक्षणस्य प्रपञ्चस्वरूपस्य अङ्गीकारात्। अन्यथा प्रत्यक्षादीनां व्यावहारिकप्रमाणानां निर्विषयत्वप्रसङ्गात्।

न च स्वरूपेण निषेधे कथं प्रपञ्चस्वरूपस्य आत्मलाभः निषेधस्य प्रतियोग्यप्रतिक्षेपरूपत्वे व्याघातादिति वाच्यम्।

---

उपजीव्यत्वम् अवर्जनीयमिति तद्विरोधः पूर्वमते आवश्यकः इति भावः। नचैतावता पूर्ववाद्यभिमतस्य कृत्स्नप्रपञ्चस्य स्वरूपं न सिध्यतीति वाच्यम्। शाब्दप्रमितिलक्षणकार्य्यानुरोधेन ब्रह्मातिरिक्तयोग्यतास्वरूपसिद्धौ तद्वदेव जलाहरणादिकार्य्यानुरोधेन घटादिस्वरूपमपि सिध्यत्येव इत्याशयात्।

ननु यदि चैतन्यव्यतिरिक्तं कृत्स्नं जगदुपेयते तर्हि तद्वत् ग्राहिप्रत्यक्षादेः सविषयस्योपजीव्यत्वात्तद्विरोध इत्यत आह तदपेक्षायामपीति। निषेधश्रुत्यर्थाविरुद्धस्य प्रपञ्चस्वरूपस्यास्माभिरप्यङ्गीकारान्नास्माकं मते उपजीव्यविरोध इति भावः। असद्विलक्षणस्वरूपानङ्गीकारे बाधकं पूर्वमतानुवर्त्तिनं प्रत्याह अन्यथेति।

प्रपञ्चसत्यत्ववादी शङ्कते न च इति। ननु ब्रह्मणि प्रपञ्चस्तन्निषेधश्च युगपदास्तां को दोष इत्याशङ्क्याह निषेधस्येति। भूतलादौ घटाद्यभावस्य प्रतियोगिस्थितिविरोधित्वदर्शनादिति भावः। व्याघातादिति निषेधत्वव्याघातादित्यर्थः। कल्पि-

शुक्तावपि इदं रजतं न इदं रजतमिति प्रतीतिद्वयानुरोधेन अधिष्ठानगताध्यस्ताभावस्य बाधपर्यन्तानुवृत्तिकासहिलक्षण-प्रतियोगि-स्वरूपसहिष्णुत्वाभ्युपगमात्। एतेन प्रपञ्चस्य स्वरूपेण निषेधे शशशृङ्गवदसत्त्वमेव स्यादिति निरस्तम्। ब्रह्मज्ञाननिवर्त्त्यस्वरूपाङ्गीकारेण वैषम्यात्। न च अस्य अध्यस्तस्य अधिष्ठाने स्वरूपेण निषेधेऽन्यत्र तस्य स्वरूपेण निषेधः स्वतः सिद्ध इति तस्य सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्वापत्त्या असत्त्वं दुर्वारम् सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्वमसत्त्वमित्येवासत्त्वनिर्वचनाद् विधान्तरेण तन्निर्वचनायोगादिति वाच्यम्।

---

तत्पदार्थप्रतियोगिकाभावस्याधिष्ठानादन्यत्र सदा प्रतियोगिविरोधित्वेऽप्यधिष्ठाने कञ्चित्कालं प्रतियोगिस्थितिसहिष्णुत्वस्वभावः कल्प्यते न च तथा कल्पकाभावः द्वैतग्राहिप्रत्यक्षादेर्निषेधश्रुतेश्च मानत्वात्।

यथा परमते घटाद्यत्यन्ताभावस्य स्वाधिकरणमात्रे प्रतियोगिप्रतिक्षेपकत्वेऽपि संयोगाद्यत्यन्ताभावस्य क्वचित् स्वाधिकरणे प्रतियोग्यप्रतिक्षेपकताप्रतीतिबलात् स्वीक्रियते तद्वदिति समाधानाभिप्रायं मनसि निधाय स्वमतसिद्धं दृष्टान्तं सोपपत्तिकमाह शुक्ताविति। एतच्छब्दार्थमाह ब्रह्मज्ञानेति वैषम्यादिति। शशशृङ्गादिवैषम्यादित्यर्थः। अन्य-

असतः सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्वमुपगच्छता तस्य तथात्वे प्रत्यक्षस्य सर्वदेशकालयोः प्रत्यक्षीकरणायोगेन आगमस्य तादृशागमानुपलम्भेन च प्रमाणयितुमशक्यत्वात् अनुमानमेव प्रमाणयितव्यमिति तदनुमाने यत् सद्व्यावृत्तलिङ्गं वाच्यं तस्यैव प्रथमप्रतीतस्य असत्त्वनिर्वचनोपपत्तेरित्याहुः।

---

क्वेति अधिष्ठानादन्यत्र देशे काले वेत्यर्थः। ननु प्रकारान्तरेणासत्त्वनिर्वचनमस्तु तथाच प्रपञ्चे तदभावात् न तस्यासत्त्वप्रसक्तिरिति न इत्याह विधान्तरेणेति। प्रसिद्धासतः शशशृङ्गादेरुक्तलक्षणे सिद्धे सति प्रपञ्चेऽपि तल्लक्षणसत्त्वात्तस्याप्यसत्त्वापत्त्या तद्विलक्षणत्वाभ्युपगमपूर्वकवैषम्योक्तिरयुक्तेति शङ्कितुं शक्यं तदेवासिद्धं मानाभावात्।

कथं मानाभाव इति चेत् तत्र वक्तव्यं किमसत उक्तलक्षणायोगे प्रत्यक्षं प्रमाणं किं वा आगमः अथवा अनुमानमिति विकल्पं मनसि निधाय आद्यद्वितीययोर्निराकरणपूर्वकं तृतीयं परिशेषयति असत इत्यादिना। प्रत्यक्षस्यागमस्य च प्रमाणयितुमशक्यतयेति सम्बन्धः। तादृशेति शशशृङ्गादिकं सर्वदेशकालसम्बन्धिनिषेधप्रतियोगीत्येवमाकारकागमानुपलम्भेन च इत्यर्थः। अस्तु तर्हि परिशिष्टमनुमानमेव तत्र मानमिति न इत्याह तदनुमान इति। यदिति निःस्वरूपमित्यर्थः। वाच्यमिति त्वयेति शेषः। विनिगमनाविरहं परिहरति। प्रथमप्रतीतस्येति उपपत्तेरिति। तथाच प्रपञ्चस्य ज्ञानव्यक्तिस्वरूपाङ्गीकारात् निःस्वरूपत्वलक्षणासत्त्वं नास्तीति तस्य शशशृङ्गादिवैषम्योक्तिर्युक्तेति भावः।

अपरे तु न इह नानास्ति इत्यादिश्रुतेः सत्यत्वेन प्रपञ्चनिषेधे एव तात्पर्य्यं न स्वरूपेण। स्वरूपेण निषेधस्य स्वरूपाप्रतिक्षेपकत्वे तस्य तन्निषेधत्वायोगात्। तत्प्रतिक्षेपकत्वे प्रत्यक्षविरोधात्। न च सत्यत्वस्य अपि सन् घट इत्यादिप्रत्यक्षसिद्धत्वान्न तेन अपि रूपेण निषेधो युक्त इति वाच्यम्। प्रत्यक्षस्य श्रुत्यविरोधाय सत्यत्वाभासरूपव्यावहारिकसत्यत्वविषयत्वोपपत्तेः।

---

उपजीव्यविरोधं प्रकारान्तरेण परिहरति अपरे त्विति। अयोगादिति। तथाच अभावाधिकरणमात्रे प्रतियोगिस्थित्ययोगात् प्रपञ्चाधिकरणे ब्रह्मणि तदभावो न निषेधश्रुतिगम्य इति भावः। ननु सत्यत्वेन ब्रह्मणि प्रपञ्चनिषेध इति मतेऽपि किं सत्यत्वविशिष्टप्रपञ्चाभावो ब्रह्मणि विवक्षितः किं वा सत्यत्वधर्मावच्छिन्नप्रतियोगिताकः प्रपञ्चमात्रप्रतियोगिको निषेधो ब्रह्मणि विवक्षितः। नोभयथापि सम्भवति प्रतियोग्यधिकरणे तदभावानङ्गीकारात्। प्रपञ्चे सत्यत्वस्यानङ्गीकारेण तस्य प्रतियोगिकोटिप्रवेशप्रतियोगितावच्छेदकत्वयोः असम्भवाच्चेति चेदुच्यते प्रपञ्चे धर्मिणि सत्यत्वनिषेधे श्रुतेस्तात्पर्य्यमित्येतन्मताभिप्रायम्। ननु यथाश्रुतार्थे तात्पर्य्यमस्य मतस्य अत एव वक्ष्यति सत्यत्वाभासप्रतीतिरेव सत्यत्वप्रसक्तिरिति तन्निषेधोपपत्तेरिति अत्र हि वाक्ये प्रपञ्च एव सत्यत्वनिषेधः स्पष्टं प्रतीयते अतो नास्मिन्मते प्रतियोगितदभावयोरेकाधिकरणत्वशङ्कावकाशः।

न च एवं सति पारमार्थिकसत्यत्वस्य ब्रह्मगतस्य प्रपञ्चे प्रसक्त्यभावात् तेन रूपेण प्रपञ्चनिषेधानुपपत्तिः।

यथा शुक्तौ रजताभासप्रतीतिरेव सत्यरजतप्रसक्तिरिति तन्निषेधः अत एव न इदं रजतं किन्तु तत् न इयं मदीया गौः किन्तु सैव न अत्र वर्त्तमानश्चैत्रः किन्तु अपवरक इति निषिध्यमानस्य अन्यत्र सत्त्वमवगम्यते एवं सत्यत्वाभासप्रतीतिरेव सत्यत्वप्रसक्तिरिति तन्निषेधोपपत्तेः। अतो वर्णपदयोग्यतादिस्वरूपोपमर्दशङ्काभावात् न उपजीव्यविरोध इत्याहुः।

---

ननु ब्रह्मणि प्रपञ्चस्वरूपं यथा प्रत्यक्षादिसिद्धमस्ति तथा प्रपञ्चे सत्यत्वमपि प्रत्यक्षादिसिद्धमस्त्येवेति तन्निषेधेऽपि श्रुतेस्तात्पर्य्यं कल्पयितुं न शक्यमिति शङ्कते न च इति। प्रत्यक्षादिग्राह्यं प्रपञ्चसत्यत्वं ब्रह्मसत्यत्ववत् परमार्थं न भवति तथा सति उपक्रमाद्यवगतस्वार्थतात्पर्य्यवतीनां भूयसीनां निषेधश्रुतीनां निर्विषयत्वप्रसङ्गात् किन्तु व्यावहारिकसत्यत्वादिरूपं तत्कल्प्यते ततो न सत्यत्वनिषेधानुपपत्तिरिति परिहरति प्रत्यक्षस्येति। न चैवं सतीति प्रपञ्चसत्यत्वस्य व्यावहारिकत्वाङ्गीकार इत्यर्थः। दृष्टान्तपूर्वकं प्रसक्तिमाह।

यथा शुक्ताविति न इदं रजतमिति। निषेधप्रत्यक्षस्य सत्यरजतनिषेधविषयकत्वं वक्तव्यं प्रातिभासिकरजताधिकरणे

अन्ये तु ब्रह्मणि पारमार्थिकसत्यत्वं प्रपञ्चे व्यावहारिकसत्यत्वं सत्यत्वाभासरूपं शुक्तिरजतादौ प्रातिभासिकसत्यत्वं ततोऽपि निकृष्टमिति सत्ता-त्रैविध्यं न उपेयते अधिष्ठानब्रह्मगतपारमार्थिक-सत्तानुवेधादेव घटादिसत्त्वाभिमानोपपत्त्या सत्त्वा-भासकल्पनस्य निष्प्रमाणकत्वात् ।

एवं च प्रपञ्चे सत्यत्वप्रतीत्यभावात् तत्तादा-त्म्यापन्ने ब्रह्मणि तत्प्रतीतेरेव अविवेकेन प्रपञ्चे तत्प्रसक्त्युपपत्तेश्च सत्यत्वेन प्रपञ्चनिषेधे न उप-जीव्यविरोधो न वा अप्रसक्तनिषेधता ।

---

शुक्तिशकले कल्पितरजताभावस्यास्मन्मते अनङ्गीकारेण बाधप्रत्ययस्य तद्विषयत्वाभावादिति भावः। शुक्त्यादौ निषिध्यमानस्य देशान्तरस्थत्वे नियामकमाह अतएव इति। प्रपञ्चे पारमार्थिकसत्यत्वस्य प्रसक्त्यभावात् निषेधानुपपत्ति-रिति शङ्कायां सत्तात्रैविध्यमतमालम्ब्य परिहारो दर्शितः।

इदानीं सर्वत्र सत्तैक्यपक्षे प्रसक्त्यभावशङ्कां परिहरति अन्ये त्विति। प्रथमं सत्तात्रैविध्यपक्षं दूषयति ब्रह्मणीत्यादिना ब्रह्मगतेति। पारमार्थिकसत्तायाः ब्रह्मस्वरूपत्वेऽपि भेदकल्प-नया तद्गतत्वोक्तिः अनुवेधादेवेति प्रतीतेरेव इत्यर्थः।

एवञ्चेति सन् घट इत्यादि प्रतीतेर्घटादितादात्म्यापन्ने सन् इति प्रतीयमाने सद्रूपं शरूपे ब्रह्मण्येव सत्ताविषयकत्वं

न च ब्रह्मगतपारमार्थिकसत्तातिरेकेण प्रपञ्च-सत्त्वाभासानुपगमे व्यवहितसत्यरजतातिरेकेण शुक्तौ रजताभासोत्पत्तिः किमर्थमुपेयते इति वाच्यम्। व्यवहितस्य असन्निकृष्टस्य आपरोक्ष्यासम्भवात् तन्निर्वाहाय तदुपगमात्।

---

सद्घट इति प्रतीतेरिव सदंशे सद्विषयकत्वं ब्रह्मणि सत्ताप्रतीतिवशादेव घटादौ सत्त्वव्यवहार इति स्थिते सति इत्यर्थः। यत्तु भेदवादिभिरुच्यते प्रपञ्चे श्रुत्या सत्यत्वनिषेधो न सम्भवति प्रपञ्चे सत्यत्वगोचरप्रत्यक्षप्रतीतिविरोधादिति तत्र द्वैतसिद्धेरित्याह प्रपञ्च इति। तच्चोक्तं तर्हि अप्रसक्तनिषेधेति तत्राह तत्तादात्म्येति तत्पदं घटादिपरं प्रपञ्चब्रह्मणोर्भेदाग्रहेण ब्रह्मणि या सत्ताप्रतीतिः सैव प्रपञ्चे सत्त्वप्रसक्तिर्भवति तन्मूलश्च तत्र सत्त्वव्यवहार इत्यर्थः। न उपजीव्यविरोध इति श्रौतमिथ्यात्वबोधं प्रति उपजीव्यस्य वर्णपदादिप्रत्यक्षस्य सालम्बनत्वाभ्युपगमात् तदबाधाच्चेति भावः।

ननु यदि घटादिप्रपञ्चे ब्रह्मसत्तयैव सत्त्वव्यवहारसिद्धौ न पृथक् सत्त्वं कल्प्यते तत्कल्पने मानाभावाल्लाघवाच्च तर्हि अतिप्रसङ्ग इति शङ्कते न च इति। किमर्थमिति। तत्कल्पने गौरवात् तथा च अनिर्वचनीयरजताद्यसिद्धिरिति शङ्काभिप्रायः। गौरवं प्रामाणिकत्वात् न दोषायेत्याशयेन परिहरति व्यवहितस्येति असन्निकृष्टस्येति अभिव्यक्तचैतन्यतादात्म्यशून्यस्येति यावत्।

प्रतिबिम्बसत्यत्वनिराकरणम् ।

ननु एवं प्रतिबिम्बभ्रमस्थलेऽपि ग्रीवास्थमुखातिरेकेण दर्पणे मुखाभासोत्पत्तिरपेक्षा स्यात् स्वकीये ग्रीवास्थे मुखे नासाद्यवच्छिन्नप्रदेशापरोक्ष्यसम्भवेऽपि नयनगोलकललाटादिप्रदेशापरोक्ष्यायोगात्। प्रतिबिम्बभ्रमे नयनगोलकादिप्रदेशापरोक्ष्यदर्शनात् च ।

न च बिम्बातिरिक्तप्रतिबिम्बाभ्युपगमे दृष्टापत्तिः ब्रह्मप्रतिबिम्बजीवस्यापि ततो भेदेन मिथ्यात्वापत्तेः । अत्र विवरणानुसारिणः प्राहुः ।

---

ननु एवमिति आपरोक्ष्याय रजताभासोत्पत्त्युपगम इत्यर्थः । प्रतिबिम्बस्य बिम्बाभिन्नत्वेऽपि प्रतिबिम्बापरोक्ष्यं सम्भवतीति न सा स्वीकार्य्येत्यत आह स्वकीय इति । मुख इति । प्रतिबिम्बत्वेनोपेत इति शेषः । नासादीति तद्देशे सन्निकर्षसम्भवादित्यर्थः ।

यदि बिम्बप्रतिबिम्बयोरभेदे प्रतिबिम्बापरोक्ष्यं स्वमुखप्रतिबिम्बस्थले न सम्भवति तर्हि प्रतिबिम्बो बिम्बात् भिन्नो मिथ्याभूत एव अस्तु का हानिरद्वैतवादिन इति शङ्कते न चेति । तस्य हानिं पूर्ववादी दर्शयति ब्रह्मप्रतिबिम्बेति जीवो ब्रह्मणः सकाशात् स्वरूपतो भिद्यते ब्रह्मप्रतिबिम्बत्वात् सामान्यव्याप्तौ मुखप्रतिबिम्बवत् ततश्च जीवो मिथ्या ब्रह्मभिन्नत्वात् घटादिवदित्यर्थः । बिम्बप्रतिबिम्बयोः लोके भेदा-

ग्रीवास्थे एव मुखे दर्पणोपाधिसन्निधानदोषात् दर्पणस्थत्वप्रत्यङ्मुखत्वबिम्बभेदानामध्याससम्भवात् न दर्पणे मुखाध्यासः कल्पनीयो गौरवात्।

दर्पणे मुखं नास्तीति संसर्गमात्रबाधात् मिथ्यावस्त्वन्तरत्वे न इदं मुखमिति स्वरूपबाधापत्तेः।

---

भावात् नोक्तदोषः इति परिहरति अत्र विवरणेति। ननु दर्पणे मुखस्यापि अध्यासो न कल्पनीयः गौरवादित्ययुक्तं प्रतिबिम्बमुखे दर्पणे मुखमिति दर्पणस्थत्वानुभवात् ग्रीवास्थमुखस्य दर्पणस्थत्वायोगात् तथा प्रतिबिम्बमुखस्य ग्रीवास्थमुखं प्रति आभिमुख्यानुभवात् मुखप्रतिमुखयोरभेदपक्षे तस्यैव तदाभिमुख्यायोगात् तयोर्भेदस्यैव स्फुटमनुभवाच्च तस्मात् अनुभवत्रयानुरोधेन उपाधावनिर्वचनीयप्रतिबिम्बाध्यास उपेयः।

गौरवञ्च प्रमाणकृतत्वात् न दोषावहमित्याशङ्क्य तदनुभवत्रयस्य अन्यथासिद्धिमाह ग्रीवास्थ एवेति। धर्मिकल्पनापेक्षया बहुधर्मकल्पनमपि लघु इति भावः।

ननु प्रतिबिम्बस्य बाधदर्शनात् मिथ्यात्वमित्याशङ्क्य हेत्वसिद्धिमाह दर्पण इति। मात्रपदं प्रतिबिम्बस्वरूपबाधाभावार्थकं बाधादित्यनन्तरं दर्पणस्थत्वरूपसंसर्गस्य मिथ्यात्वं प्रतिबिम्बस्य सत्यत्वं चेति शेषः। विपक्षे दोषमाह मिथ्यावस्त्वन्तरत्वे इति। ननु एवं भूतले घटो नास्तीति अत्रापि घटसंसर्गाभाव एव प्रतीयेतेति चेत् न इष्टापत्तेः। ननु तर्हि भूतले घटाभावो न सिध्येदिति चेत् न घटाभाववद्भूतलमिति प्रतीत्या तत्सम्भवादिति भावः।

दर्पणे मम मुखं भातीति स्वमुखाभेदप्रत्यभिज्ञानात् च ।

न च ग्रीवास्थमुखस्य अधिष्ठानस्य आपरोक्ष्यासम्भव उपाधिप्रतिहतनयनरश्मीनां परावृत्य बिम्बग्राहकत्वनियमाभ्युपगमात् लतादिवत् ।

---

बिम्बप्रतिबिम्बयोर्भेदमात्रकल्पनायां स्वरूपाभेदप्रत्यभिज्ञानमपि अनुकूलयति दर्पणे ममेति। लाघवसमुच्चयार्थश्चकारः। यद्वा प्रतिबिम्बस्य सत्यत्वे बिम्बाभिन्नत्वं हेतुमभिप्रेत्य तत्र मानमाह दर्पणे ममेति चकारो बाधाभावसमुच्चयार्थः। तथा च प्रतिबिम्बस्य न मिथ्यात्वं बाधाभावात् बिम्बाभिन्नत्वाच्च इत्यर्थः। एवं लोके प्रतिबिम्बस्य बिम्बाभिन्नत्वसत्यत्वयोः प्रसाधनेन ब्रह्मप्रतिबिम्बजीवस्य ब्रह्माभिन्नत्वमिथ्यात्वप्रसङ्गो निरस्तः।

यत्तु तयोरभेदपक्षे ग्रीवास्थमुखस्य नयनगोलकादिप्रदेशेषु स्वचक्षुःसन्निकर्षाभावेन प्रतिबिम्बस्य साकल्येन प्रत्यक्षत्वं न सम्भवतीत्युक्तं तदनूद्य निराकरोति न च इत्यादिना अधिष्ठानस्येति। प्रतिबिम्बत्वप्रत्यङ्मुखत्वदर्पणस्थत्वबिम्बभेदानां कल्पना अधिष्ठानस्येत्यर्थः। असम्भवो न च इत्यत्र हेतुमाह उपाधिप्रतिहतेति। नयनरश्मयश्चक्षुर्गोलकाद्बहिर्निर्गत्य दर्पणाद्युपाधिं प्राप्य तेन प्रतिहताः पुनः परावृत्य ग्रीवास्थमुखतदवयवैः संबध्यन्ते ततश्चाभिमुखपुरुषान्तरमुखसाक्षात्कारवत् साकल्येन स्वग्रीवास्थमुखसाक्षात्कारः सम्भवति। न च परावृत्तनयनरश्मीनां गोलकद्वारा अन्तःप्रवेशस्यैव अन्यत्र क्लृप्तत्वादत्र तथाकल्पनं गौरवग्रस्तमिति वाच्यम्। प्रतिबिम्बोत्प-

तन्नियमानभ्युपगमे परमाणोः कुड्यादिव्यवहितस्थूलस्यापि चाक्षुषप्रतिविम्बभ्रमप्रसङ्गात्।

न च अव्यवहितस्थूलोद्भूतरूपवत एव चाक्षुषप्रतिविम्बो न अन्यस्य इति नियम इति वाच्यम्। विम्बस्थौल्योद्भूतरूपयोः क्लृप्तेन चाक्षुषज्ञानजननेन उपयोगसम्भवे विधान्तरेण उपयोगकल्पनानुपपत्तेः। कुड्यादिव्यवधानस्य प्रतिहतनयनरश्मिसम्बन्धविघटनं विनैव इह प्रतिबन्धकत्वे तथैव घटप्रत्यक्षादिस्थलेऽपि तस्य प्रतिबन्धकत्वसम्भवेन चक्षुःसन्निकर्षमात्रस्य कारणत्वलोपप्रसङ्गाच्च।

---

त्तिवादिनापि चक्षुःसन्निकृष्टस्यैव विम्बताया वक्तव्यत्वेन उक्तनियमस्य तेनापि स्वीकार्य्यत्वात् अतः संप्रतिपन्नत्वात् गौरवं न दोषायेति भावः।

ननु प्रतिविम्बाध्यासवादिना सन्निकृष्टस्यैव विम्बत्वं नाङ्गीक्रियते अतो ग्रीवास्थमुखस्य विम्बत्वनिर्वाहाय स्वचक्षुःसन्निकर्षापेक्षाभावात् नायं नियमस्तेनादर्त्तव्य इत्यत आह तन्नियमानभ्युपगम इति। विम्बसन्निकर्षस्य चाक्षुषप्रतिविम्बाध्यासाहेतुत्वे व्यवहितस्यापि चाक्षुषप्रतिविम्बप्रसङ्गः किमनेन विशेषणेन यस्य कस्यापि प्रतिविम्बापत्त्या परमाणोर्वायोश्च तत्प्रसङ्गादित्यर्थः।

प्रतिविम्बाध्यासे विम्बसन्निकर्षस्य हेतुत्वं विनैव उक्तातिप्रसङ्गं परिहरति प्रतिविम्बाध्यासवादी न च अव्यवहितेति। तथा च कुड्यादिव्यवहितमुखादेः परमाणोर्वायोश्च न चाक्षु-

षप्रतिविम्बापत्तिरिति भावः। द्रव्यचाक्षुषं प्रति द्रव्यगतमहत्त्वोद्भूतरूपयोः कारणत्वं क्लृप्तं तथा कुड्यादेः संनिकर्षविघटनद्वारा बाह्यवस्तुगोचरप्रत्यक्षप्रतिबन्धकत्वं क्लृप्तं तथा च बिम्बप्रतिबिम्बयोरभेदपक्षे बिम्बचाक्षुषस्यैव प्रतिबिम्बचाक्षुषत्वाद्बिम्बभूतमुखादिगतयोः स्थूलत्वोद्भूतरूपयोः क्लृप्तचाक्षुषप्रत्यक्षात् अन्यत्र कारणत्वं न कल्पनीयमिति लाघवं शुक्तिरजतादिवत् साक्षिभास्यप्रतिबिम्बाध्यासोत्पत्तिपक्षे तु बिम्बसंनिकर्षस्य प्रतिबिम्बाध्यासहेतुत्वानुपगमेन वायुपरमाण्वोः चाक्षुषप्रतिबिम्बवारणाय बिम्बभूतद्रव्यगतयोः महत्त्वोद्भूतरूपयोः स्वाश्रयगोचरचाक्षुष इव स्वाश्रयद्रव्यरूपबिम्बहेतुकप्रतिबिम्बाध्यासोत्पत्तावपि हेतुत्वं कल्पनीयमिति गौरवम्। तथा बिम्बप्रतिबिम्बाभेदपक्षे नयनरश्मीनां परावृत्य बिम्बसम्बन्धाभ्युपगमेन प्रतिबिम्बभ्रमस्थलेऽपि बिम्बसंनिकर्षस्य हेतुत्वसत्त्वात् घटादिचाक्षुष इव प्रतिबिम्बचाक्षुषेऽपि कुड्यादेः संनिकर्षविघटनद्वारैव प्रतिबन्धकत्वं न तु अन्यत्र अक्लृप्तसाक्षात्प्रतिबन्धकत्वं कल्प्यमिति लाघवम्। प्रतिबिम्बाध्यासपक्षे तु बिम्बसन्निकर्षस्य हेतुत्वानुपगमेन कुड्यादेः सन्निकर्षविघटकत्वस्य क्लृप्तस्य प्रतिबिम्बभ्रमस्थले वक्तुमशक्यतया प्रतिबिम्बाध्यासं प्रति साक्षादेव प्रतिबन्धकत्वं व्यवहितस्य प्रतिबिम्बवारणाय कल्पनीयमिति गौरवमित्याशयेन दूषयति बिम्बस्यैत्येति विधान्तरेण इति। स्वाश्रयभूतद्रव्यद्वारा प्रतिबिम्बाध्यासोत्पत्तावपि उपयोगकल्पनानुपपत्तेरित्यर्थः। इहेति प्रतिबिम्बभ्रमस्थले इत्यर्थः। न केवलमक्लृप्तकल्पनागौरवं दोषः दोषान्तरमपि प्रसज्यते इत्याह तथैव इति। सन्निकर्षविघटनं विनैवेत्यर्थः। तथा च उक्तगौरवादिदोषपरिहाराय परावृत्येति नियम उपेयो बिम्बसन्निकर्षाय इति भावः।

दर्पणे मिथ्यामुखाध्यासवादिनापि कारणत्रया-न्तर्गतसंस्कारसिद्ध्यर्थं नयनरश्मीनां कदाचित्परा-वृत्त्या स्वमुखग्राहकत्वकल्पनयैव पूर्वानुभवस्य सम-र्थनीयत्वाच्च। न च नासादिप्रदेशावच्छिन्नपूर्वानुभवा-देव संस्कारोपपत्तिः तावता नयनरश्मिगोलकादि-प्रतिबिम्बाध्यासानुपपत्तेः तटाकसलिले तटविटपि-समारूढादृष्टचरपुरुषप्रतिबिम्बाध्यासस्थले कथमपि पूर्वानुभवस्य दुर्वचत्वात्।

एवं च उपाधिप्रतिहतनयनरश्मीनां बिम्बं प्राप्य तद्ग्राहकत्वे अवश्यवक्तव्ये फलबलात् दर्पणा-

---

चाक्षुषप्रतिबिम्बभ्रमस्थले बिम्बसन्निकर्षस्य त्वयापि वाच्यत्वात् परावृत्तेति नियमो न अप्रयोजक इत्याह। दर्पणे मिथ्येति। कारणत्रयेति दोषसंप्रयोगसंस्काररूपकारणत्रये इत्यर्थः। स्वमुखस्य स्वचक्षुःसन्निकर्षानुपगमे दर्पणादावारोप्य प्रतिमुखसजातीयस्वमुखसाक्षात्कारस्य कदापि असम्भवेन अध्यासकारणभूतस्यारोप्यसजातीयगोचरपूर्वानुभवजन्यसंस्कारस्य अलाभात् प्रतिबिम्बरूपाद्यध्यासोत्पत्तिः न स्यात् अतः स्वमुखस्य स्वचक्षुःसन्निकर्षलाभाय उक्तनियम आदर्त्तव्य इति भावः। तावतेति नासादिप्रदेशावच्छिन्नपूर्वानुभवमात्रेण इत्यर्थः। इदमपि क्वचित् दुर्लभमित्याह। तटाकेति अदृष्टचरेति। कदापि अदृष्टे इत्यर्थः।

एवं चेति उक्तप्रकारेण इत्यर्थः। उक्तनियमस्य अतिप्रसङ्गं

द्यभिहतानामेव विम्बं प्राप्य तद्ग्राहकत्वं न शिला-
दिप्रतिहतानामनतिस्वच्छतास्रादिप्रतिहतानां मलि-
नोपाधिसम्बन्धदोषात् मुखसंस्थानविशेषाग्राहकत्वं
साक्षात् सूर्य्यं प्रेप्सूनामिव उपाधिं प्राप्य निवृत्तानां
न तथा सौरतेजसा प्रतिहतिरिति प्रतिविम्बसूर्य्याव-
लोकने साक्षात् तदवलोकन इव न अशक्यत्वम् ।

जलाद्युपाधिसन्निकर्षे केषाञ्चिदुपाधिप्रतिहतानां
विम्बप्राप्तौ अपि केषाञ्चित् तदन्तर्गतसिकतादि-
ग्रहणमित्यादिकल्पनात् न कश्चित् दोष इति ।

---

परिहरति फलबलादिति। दर्पणादौ प्रतिविम्बभ्रमदर्शनलक्ष-
णफलानुरोधादित्यर्थः। एवकारव्यवच्छेद्यमाह न शिलादीति।
शिलादौ प्रतिविम्बादर्शनादिति भावः। ननु अस्वच्छतास्रादेः
प्रतिविम्बग्राहित्वेन शिलादिवैलक्षण्यसत्त्वात् तत्प्रतिहतानां
दर्पणादिप्रतिहतानामिव नयनरश्मीनां साकल्येन मुखादि-
ग्राहकत्वं स्यात् अत आह मलिनोपाधीति। संस्थानविशेषो
नयनगोलकादिः। फलबलानुसारिपदार्थस्वभावकल्पनेन
दोषान्तराण्यपि निरस्तानीत्याह साक्षादित्यादिना साक्षादिति
साक्षात् सूर्य्यावलोकन इत्यर्थः।

ननु प्रतिविम्बोपाधिभूतजलेन प्रतिहतानां नयन-
रश्मीनां विम्बदेशप्राप्त्युपगमे जलान्तर्गतसिकतादिप्रत्यक्षं
न स्यात् सन्निकर्षाभावादिति दूषणमपि निरस्तमित्याह।
जलाद्युपाधीति ननु उपाधिप्रतिहतानां विम्बदेशप्राप्त्युप-

न च प्रेक्षावतामपि स्वमुखविशेषपरिज्ञानाय दर्पणाद्युपादानदर्शनादभेदज्ञानमपि अर्थक्रियापर्य्यन्तमिति वाच्यम्।

---

बालानामिति। बालाः खलु जलाशयादौ भयङ्करं प्रतिविम्बं दृष्ट्वा तं विहाय पलायन्ते सौम्यं प्रीतिकरं प्रतिविम्बं दृष्ट्वा तमुपादातुमिच्छन्ति प्रतिविम्बदेशं गच्छन्ति चेति सर्वानुभवसिद्धम्। तदुक्तं कर्णामृताचार्य्यैः, रत्नस्थले जानुचरः कुमारः संक्रान्तमात्मीयमुखारविन्दम्। आदातुकामस्तदलाभखेदात् विलोक्य धात्रीवदनं रुरोद इति। कुमारः श्रीकृष्णरूपः शिशुरिति निर्मलरत्नमयवेदिकायां जानुभ्यां सञ्चरन् तत्र संक्रान्तं प्रतिविम्बितं विविधैः कुण्डलादिभूषणैः भूषितं निःसीमसौन्दर्य्योपेतं गोपीजनमनोहरं ब्रह्मादिभिरपि सदा स्पृहणीयं स्वकीयमुखारविन्दमुपलभ्य लोकसिद्धां बालचेष्टामनुवर्त्तमानः तदादानेच्छया चिरकालं हस्तव्यापारं कृत्वापि यदा तन्न लब्धवान् तदा तदलाभखेदेन धात्र्याः मुखं दृष्ट्वा त्वया इदं गृहीत्वा मह्यं देयमिति अभिसन्धिमान् मुक्तकण्ठतया रोदनं कृतवान् इत्यर्थः।

अभेदज्ञानस्यापि अर्थक्रियापर्य्यन्तत्वं समानमित्याशङ्क्य निषेधति न च इत्यादिना। यदि विम्बप्रतिविम्बयोर्वस्तुतो भेद एव तदा परीक्षकाणां तद्भेदनिर्णय आवश्यक इति तेषां स्वमुखगतविशेषनिर्णयाय दर्पणाद्यादानं न स्यात् तेषामपि तद्दर्शनादभेदनिश्चयस्तेषां वाच्य इत्यर्थः।

भेदेऽपि प्रतिविम्बस्य विम्बसमानाकारत्व-नियमविशेषपरिज्ञानादेव तदुपादानोपपत्तेः।

---

तेषां प्रवृत्तेरन्यथासिद्धिमाह भेदेऽपीति। विम्बप्रतिविम्बयोः स्वरूपतो भेदे सत्यपि इत्यर्थः। परीक्षकत्वादेव तेषामुक्तोपपत्तिभिर्भेदनिश्चयवत्त्वं नियमविशेषज्ञानवत्त्वञ्च सम्भवतीति भावः। ननु बालानां प्रतिविम्बगोचरहानादिक्रिया विम्बस्य उपाधिस्थत्वभ्रमादेव सम्भवतीत्यन्यथा सिद्धिस्तत्रापि तुल्या तथा च विम्बप्रतिविम्बयोर्भेदाभेदानुभवानां भेदप्रयुक्तार्थक्रियाणाञ्च तुल्यत्वे सति अभेदस्य स्वाभाविकत्वकल्पनमेव युक्तं लाघवाद् विम्बप्रतिविम्बभावापन्नतया श्रुतिसिद्धजीवब्रह्माभेदप्रतिपत्त्युपयोगितया लौकिकविम्बप्रतिविम्बाभेदकल्पनस्याभेदश्रुत्युपोद्बलितत्वाच्च प्रतिविम्बजीवस्य एव ब्रह्माभेदसम्भवे तदतिरिक्तपारमार्थिकावच्छिन्न-जीव-कल्पनायाः गौरवग्रस्तत्वाच्च यथाह्ययं ज्योतिरात्माविवस्वानित्यादिमन्त्रस्य तयोरभेदपक्ष एव स्वारस्याच्च तत्र हि यथा विवस्वदादेर्बहुषु उपाधिषु प्रतिविम्बितत्वप्रयुक्तं नानात्वं स्वत एकत्वं तथा चैतन्यस्य बहुषूपाधिषु प्रतिविम्बितत्वप्रयुक्तं नानात्वं स्वत एकत्वमिति प्रतिपाद्यते। तच्च विम्बप्रतिविम्बयोः भेदपक्षे न सम्भवति तत्पक्षे हि विम्बचैतन्यस्य एकत्वं प्रतिविम्बानां नानात्वमिति पर्य्यवसानेन एकस्य एव औपाधिकनानात्वपर्य्यवसानासम्भवात्। तस्मात् चैतन्यप्रतिविम्बाङ्गीकारपक्षे लोके चैत्रविम्बस्थले च विम्बप्रतिविम्बयोरभेदपक्ष एव विवरणाद्यभिमतः श्रेयानिति चेत् सत्यं सूक्ष्मदृष्ट्या एवमेव अत एव आमतीनिबन्धनादिषु जीवब्रह्मणोरभेदेऽपि लौकिविम्बप्रतिविम्बयो-

अद्वैतविद्याकृतस्तु वस्तुप्रतिबिम्बस्य मिथ्यात्वमभ्युपगच्छतां त्रिविधजीववादिनां विद्यारण्यगुरुप्रभृतीनामेवमभिप्रायमाहुः।

चैत्रमुखाङ्गेदेन तत्सदृशत्वेन पार्श्वस्थितैः स्पष्टं निरीक्ष्यमाणं दर्पणे तत् प्रतिबिम्बं ततो भिन्नं स्वरूपतो मिथ्यैव स्वकरगतादिव रजतात् शुक्तिरजतम्। न च दर्पणे मम मुखं भातीति बिम्बाभेदज्ञानविरोधः स्पष्टभेदद्वित्वप्रत्यङ्मुखत्वादिज्ञानविरोधेन अभेदासम्भवात्।

---

गमे पृष्ठभागव्यवहितपदार्थस्यापि प्रतिबिम्बप्रसङ्ग इति चेन्नायं दोषः फलबलेन शरीरावयवानां सन्निकर्षविघटकत्वकल्पनादित्यभिप्रेत्याह इत्यादिकल्पनादिति। नयनरश्मीनां परावृत्य बिम्बग्राहित्वं सुरेश्वराचार्यैरुक्तम् दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम्। व्याप्नुवत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् इति बिम्बप्रतिबिम्बयोः भेदपक्षनिराकरणपूर्वकं तदभेदपक्षो निरूपितः।

इदानीं तयोरभेदनिराकरणपूर्वकं भेदपक्षं निरूपयति अद्वैतविद्याकृतस्त्विति त्रिविधेति। पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन जीवस्त्रिविध इति पक्षः प्रथमपरिच्छेदे निरूपित इति बोध्यम्। एवमितिवक्ष्यमाणप्रकारेण इत्यर्थः।

चैत्रेति। चैत्रो यदा दर्पणे स्वमुखं पश्यति तदा पार्श्वस्थैः चैत्रग्रीवायाः बिम्बभूतं मुखं दर्पणे चैत्रमुखप्रतिबिम्बस्य

दर्पणं मम मुखमिति व्यपदेशस्य स्वच्छायामुखे स्वमुखव्यपदेशवद् गौणत्वात् च।

न च अभेदज्ञानविरोधात् भेदव्यपदेश एव गौणः किं न स्यादिति शङ्कग्रम्। बालानां प्रतिबिम्बे पुरुषान्तरभ्रमस्य हानोपादित्साद्यर्थक्रियापर्य्यन्तस्य अपलपितुमशक्यत्वात्।

---

परस्परं भिन्नत्वेन परस्परं सदृशत्वेन च असन्दिग्धाविपर्य्यस्तमनुभूयत इत्यर्थः। स्वेति। स्वहस्तमतात् सत्यरजताद्भिन्नत्वेन तत्सदृशत्वेन च अनुभूयमानं शुक्तिरजतं यथा तद्भिन्नं मिथ्या च तद्वदित्यर्थः। अभेदज्ञानमसिद्धमित्याह स्पष्टेति उदाहृतरजतयोः अभेदज्ञानादर्शनादिति भावः। आदिपदं प्राङ्मुखत्वग्रीवास्थत्वदर्पणस्थत्वस्वातन्त्र्यादिसंग्रहार्थम्।

तर्हि सर्वानुभवसिद्धस्याभेदव्यपदेशस्य का गतिर्ज्ञानपूर्वकत्वात् व्यपदेशस्य इत्याशङ्क्य नायमभेदव्यपदेश इत्याह दर्पणे ममेति। स्फुटभेदज्ञाने सत्यभेदव्यपदेशायोगादिति भावः। ननु दर्पणे मम मुखं भाति मम मुखं मलिनं भाति मम मुखं दीर्घं भाति मुखं ग्रीवास्थमेव न दर्पणादाविति अभेदानुभवानामपि स्फुटानां भूयसां सत्त्वादभेदव्यपदेशो मुख्यः अभेदानुभवविरोधेन भेदानुभवस्यैव असम्भवात् भेदव्यपदेशमात्रम् अवशिष्यते तच्च बिम्बप्रतिबिम्बयोः।

वस्तुगत्या भेदाभावेऽपि कल्पितभेदसत्त्वादुपपद्यत इति वैपरीत्यमाशङ्क्य निषेधति न च इत्यादिना प्रतिबिम्बगोचरप्रवृत्त्यादिदर्शने तस्य बिम्बाद्भेदं विना न सिध्यति विनिगमकमाह।

यत्तु न अत्र मुखमिति दर्पणे मुखसंसर्गमात्रस्य बाधो न मुखस्येति तन्न। न इदं रजतमित्यत्रापि इदमर्थे रजततादात्म्यमात्रस्य बाधो न रजतस्य इत्यापत्तेः।

यदि च इदमंशे रजतस्य तादात्म्येन अध्यासात् न इदं रजतमिति तादात्म्येन रजतस्यैव बाधो न

---

रिव कल्पितभेदसत्त्वात् धर्मव्यवस्थेति सार्वत्रिको व्यवहारः। श्रीविद्यारण्यगुरुप्रभृतिभिस्तु मन्दाधिकारिणां तत्त्वे बुद्ध्यारोहाय प्रतिबिम्बोत्पत्तिप्रक्रिया उपपादिता। मन्दाधिकारिणां हि यथा कर्तृत्वभोक्तृत्वादिसंसाराश्रयश्चिदाभासो मिथ्याभूतः सच आत्मा न भवति आत्मा त्वसङ्गचैतन्यरूपो न संसाराश्रय इति प्रक्रियया तत्त्वं बुद्धौ आरोहति न तथा आत्मनो ब्रह्मप्रतिबिम्बस्य स्वतः सिद्धं ब्रह्मत्वम् अन्तःकरणतादात्म्यात् संसाराश्रयत्वमिति प्रक्रियया तत्त्वं बुद्धौ आरोहति। लोके विरुद्धधर्मासाङ्कर्य्यस्य धर्मिभेदस्थले इव धर्म्यभेदस्थले स्फुटत्वाभावादयञ्च तेषामभिप्रायः कूटस्थदीपे यथा यथा भवेत् पुंसामिति वार्त्तिकवचनोदाहरणेन स्पष्टः। तच्च वचनमादौ एव उदाहृत्य व्याख्यातमिति संक्षेपः।

प्रतिबिम्बस्थले दर्पणस्थत्वादिरूपसंसर्गमात्रबाधमुक्तमनूद्य प्रतिबन्द्या प्रतिबिम्बस्वरूपबाधं साधयति यत्त्वित्यादिना आपत्तेरिति। तथाच शुक्तिरजतस्य अनिर्वचनीयत्वं सिद्धान्ताभिमतं न स्यादिति भावः।

अत्र यद्यपि तादात्म्यमात्रस्य बाध्यत्वेऽपि रजतस्य अनि-

तादात्म्यमात्रस्य तदा दर्पणे मुखस्य संसर्गितया अध्यासान्नात्र मुखमिति संसर्गितया मुखस्यैव बाधो न संसर्गमात्रस्येति तुल्यम्। यत्तु धर्मिणोऽपि अध्यासकल्पने गौरवमिति तत् रजताभासकल्पना-गौरववत् प्रामाणिकत्वान्न दोषः।

स्वनेत्रगोलकादिप्रतिबिम्बभ्रमस्थले बिम्बा-परोक्ष्यकल्पनोपायाभावात्। नयनरश्मीनामुपाधि-प्रतिहतानां बिम्बप्राप्तिकल्पने हि दृष्टविरुद्धं बहु आपद्यते।

कथं हि जलसन्निकर्षे केषुचिन्नयनरश्मिषु अप्रतिहतमन्तर्गच्छत्सु अन्ये जलसम्बन्धेनापि प्रति-

---

वचनीयस्य उत्पत्तिरनिवार्य्या देशान्तरस्थरजतादेः संविद-भिन्नत्वाभावेन पुरोवर्त्त्यभिन्नतया प्रत्यक्षत्वानुपपत्तेरिति उक्त-त्वात्। तथापि शुक्तिरजतस्य बाधोऽपि उपपादयितुं शक्यत इति मत्वा बिम्बप्रतिबिम्बाभेदवादी शङ्कते यदि च इति संस-र्गितयेति। आधेयतया इत्यर्थः। प्रामाणिकत्वादितिबाधक-प्रमाणस्य शुक्तिरजत इव प्रतिबिम्बेऽपि सत्त्वेन अध्यासकल्पना-गौरवस्य तन्मूलकत्वाविशेषात् इत्यर्थः।

अभेदपक्षे स्वमुखगतनयनगोलकादिप्रतिबिम्बस्य आप-रोक्ष्यासम्भवाच्च तदध्यासकल्पनागौरवं प्रामाणिकमित्याह स्वनेत्रेति। पूर्वोक्तोपायमनूद्य निराकरोति नयनरश्मीनामिति किरणसमूहमिति सूर्य्यकिरणसमूहमित्यर्थः।

हन्यमाना नितान्तं मृदवः सकलनयनरश्मिप्रतिघातिनं किरणसमूहं विजित्य तन्मध्यगतं सूर्य्यमण्डलं प्रविशेयुः। कथं च चन्द्रालोकन इव तत्प्रतिबिम्बालोकनेऽपि अमृतशीतलतद्बिम्बसन्निकर्षविशेषे लोचनयोः शैत्याभिव्यक्त्याप्यायनं न स्यात्।

कथं च जलसम्बन्धेनापि प्रतिहन्यमानाः शिलादिसम्बन्धेन न प्रतिहन्येरन्। तत् प्रतिहत्य

---

ननु अत्र जलस्य प्रतिघातकत्वं न कल्प्यते किन्तु जलान्तर्गतसिकतादीनामतो न नितान्तमृदुत्वं यथा सूर्य्यकिरणानां स्वतः तृणादिदाहकत्वाभावेऽपि सूर्य्यकान्तमणिप्रतिहतानां तद्दाहकत्वं तथा नयनकिरणानां स्वतः सूर्य्यकिरणप्रतिघातकत्वाभावेऽपि प्रतिबिम्बोपाधिप्रतिहतानां तद्विजये सामर्थ्यातिशयकल्पना उपपद्यते।

तथाच न उक्तदोष इत्यस्वरसादाह कथं चेति। कथं चाप्यायनं न स्यादिति सम्बन्धः। अमृतमिव शीतलं यत् तस्य चन्द्रप्रतिबिम्बस्य बिम्बतत्सन्निकर्षविशेष इत्यर्थः। आप्यायनमौष्ण्यप्रशान्तिः यदा पुमान् अधोमुखः सन् जलाशयादौ चन्द्रमण्डलप्रतिबिम्बं नैरन्तर्य्येण पश्यति तदा लोचनयोः शैत्यादिव्यक्त्यादिकं स्यात् बिम्बप्रतिबिम्बयोरभेदेन प्रतिबिम्बसन्निकर्षस्य एव बिम्बसन्निकर्षत्वादित्यर्थः।

ननु लोचनयोः शैत्याभिव्यक्तिः चन्द्रसन्निकर्षादिकृता न भवति किन्तु तयोः चन्द्रकिरणसंसर्गसन्ततिकृता। तथा

परावृत्तौ वा नयनगोलकादिभिर्न संसृज्येरन्। तत्-संसर्गे वा संसृष्टं किं न साक्षात्कारयेयुः।

दोषेणापि हि विशेषांशग्रहणमात्रं प्रतिबध्यमानं दृश्यते न तु सन्निकृष्टधर्मिस्वरूपग्रहणमपि।

प्रतिमुखाध्यासपक्षे तु न किञ्चिद् दृष्टविरुद्धं कल्पनीयम्। तथा हि। अव्यवहितस्थूलोद्भूत-रूपस्यैव चाक्षुषाध्यासदर्शनात् बिम्बगतस्थौल्योद्भूत-

---

च अधोमुखस्य लोचनयोः तदभावात् चन्द्रसन्निकर्षतद्दर्शन-सत्त्वेऽपि न शैत्याभिव्यक्त्यादिप्रसक्तिरित्यस्वरसादाह कथं च जलेति। कथं च न प्रतिहन्येरन्निति सम्बन्धः प्रति-हन्येरन्नेव इत्यर्थः। ततः किं तत्राह तत् प्रतिहत्येति नयनगोलकादिभिः कथं न संसृज्येरन्निति सम्बन्धः। ततोऽपि किं तत्राह तत्संसर्गे चेति। शिलादिदर्शनकाले शिलादिना प्रतिहताः नयनरश्मयः स्वमुखगतनयनगोलका-दिभिः संसृष्टाश्चेत् संसृष्टं नयनगोलकादिकं कथं न साक्षा-त्कारयेयुः कारयेयुरेव इत्यर्थः।

ननु दोषबलात् संसृष्टमपि न साक्षात्कारयेयुः अतो न उक्तदोष इत्यत आह दोषेणापि हीति दृश्यते इति। शुक्ति-रजतादिभ्रमस्थलेषु इति शेषः। तथाच शिलादिसन्निकर्षकाले मुखत्वादिसामान्यरूपेण वा स्वमुखसाक्षात्कारप्रसङ्ग इति भावः।

वस्तुतस्तु अनन्यथासिद्धफलबलात् स्वच्छद्रव्यस्य तत्संसृष्टस्य वा प्रतिबिम्बोदययोग्यस्यैव प्रतिघातकत्वमुपेयते अतो न उक्त-

रूपयोः स्वाश्रयसाक्षात्कारकारणत्वेन क्लृप्तयोः स्वाश्रयप्रतिबिम्बाध्यासेऽपि कारणत्वम्।

कुड्याद्यावरणद्रव्यस्य त्वगिन्द्रियन्यायेन प्राप्यकारितया अवगतनयनसन्निकर्षविघटनद्वारा व्यवहितवस्तुसाक्षात्कारप्रतिबन्धकत्वेन क्लृप्तस्य व्यवहितप्रतिबिम्बाध्यासेऽपि विनैव द्वारान्तरं प्रतिबन्धकत्वं च कल्पनीयम्। तत्र को विरोधः क्वचित्कारणत्वादिना क्लृप्तस्य फलबलादन्यत्र अपि कारणत्वादिकल्पने।

---

दोष इति बोध्यम्। एवं बिम्बप्रतिबिम्बाभेदपक्षे दृष्टविरोधबाहुल्यमापाततो दर्शयित्वा प्रतिबिम्बाध्यासोत्पत्तिपक्षमुपपादयति प्रतिमुखाध्यासपक्षे तु इति। कारणत्वं प्रतिबन्धकत्वं च कल्पनीयमिति सम्बन्धः। स्वाश्रयेति महत्त्वोद्भूतरूपाश्रयद्रव्यगोचरचाक्षुषत्वावच्छिन्नं प्रति घटादिचाक्षुषे क्लृप्तयोरित्यर्थः। द्वितीयस्वपदमपि स्थौल्योद्भूतरूपपरम्। अध्यासेऽपीति बिम्बभूतमुखादिचाक्षुष इव स्वाश्रयमुखादेः यः प्रतिबिम्बरूपोऽध्यासः तदुत्पत्तावपीत्यर्थः।

यदुक्तं प्रतिबिम्बाध्यासं प्रति कुड्यादेः साक्षात् प्रतिबन्धकत्वस्वीकारे अन्यत्रापि तथात्वापत्त्या सन्निकर्षमात्रविलोपप्रसङ्ग इति। तत्र सन्निकर्षहेतुत्वग्राहकप्रमाणानुसारेण सन्निकर्षविघटनद्वारैव तस्य प्रत्यक्षप्रतिबन्धकत्वाभ्युपगमादित्याशयेन सन्निकर्षस्य हेतुत्वग्राहकप्रमाणं सूचयति त्वगिन्द्रियेति। त्वगिन्द्रियस्य विषयं प्राप्तस्य एव विषयप्रत्यक्षकारित्वदर्शनात् तद्व-

एतेन उपाधिप्रतिहतनयनरश्मीनां बिम्बप्राप्त्यनुपगमे व्यवहितस्य उद्भूतरूपादिरहितस्य च चाक्षुषप्रतिबिम्बभ्रमप्रसङ्ग इति निरस्तम्।

किञ्च तदभ्युपगमे एवोक्तदूषणप्रसङ्गः कथं साक्षात् सूर्य्यावलोकन इव विना चक्षुर्विक्षेपमवनतमौलिना निरीक्ष्यमाणे सलिले ततः प्रतिहतानां नयनरश्मीनामूर्द्धमुत्प्लुत्य बिम्बसूर्य्यग्राहकत्ववत् तिर्य्यक्चक्षुर्विक्षेपं विना ऋजुचक्षुषा दर्पणे विलोक्यमाने तत्प्रतिहतानां पार्श्वस्थमुखग्राहकत्ववच्च वदनसाचीकरणाभावेऽपि उपाधिप्रतिहतानां पृष्ठ-

---

दृष्टान्तेन नयनादेरपि प्राप्यकारित्वम् अवगतमित्यर्थः। व्यवहितेति च्छेदः। व्यवहितप्रतिबिम्बेति कुड्यादिव्यवहितस्य मुखादेः प्रतिबिम्बाध्यासे साक्षात् प्रतिबन्धकत्वं कल्पनीयम् अन्यथा प्रतिबिम्बोत्पत्तिपक्षे बिम्बसन्निकर्षस्य हेतुत्वानुपगमेन व्यवहितस्यापि प्रतिबिम्बप्रसङ्गस्य प्रागदर्शितत्वादित्यर्थः। तत्र कल्पने को विरोध इति सम्बन्धः तस्मिन् कल्पन इत्यर्थः।

अव्यवहितत्वस्थूलत्वोद्भूतरूपाणां मुखादिप्रतिबिम्बाध्यासोपयोगकल्पनस्य प्रयोजनमाह एतेनेति। आदिपदं स्थौल्यसंग्रहार्थम्। उक्तेति व्यवहितादिप्रतिबिम्बप्रसङ्ग इत्यर्थः।

प्रसङ्गप्रकारानभिज्ञः पृच्छति कथमिति तत्राह साक्षादिति। गगनस्थसूर्य्यावलोकने चक्षुर्विक्षेपः स्पृष्टस्तं विनेत्यर्थः। अवनतमौलिना अधोमुखेन। तिर्य्यगिति स्वाभिमुखे दर्पणे स्वप्रतिबिम्बग्रहणकाले स्वपार्श्वस्थितपुरुषप्रतिबिम्बग्रहणमपि

भागव्यवहितग्राहकत्वं तावद्दुर्वारम्। उपाधिप्रतिहतनयनरश्मीनां प्रतिनिवृत्तिनियमं विहाय यत्र बिम्बं तत्रैव गमनोपगमात्।

तथा मलिनदर्पणे श्यामतया गौरमुखप्रतिबिम्बस्थले विद्यमानस्यापि बिम्बगतगौररूपस्य चाक्षुषज्ञानेऽनुपयोगितया पीतशङ्खभ्रमन्यायेन आरोप्यरूपवैशिष्ट्येनैव बिम्बमुखस्य चाक्षुषत्वं निर्वाह्यमिति तथैव नीरूपस्यापि दर्पणोपाधिश्या-मत्ववैशिष्ट्येन चाक्षुषप्रतिबिम्बभ्रमविषयत्वमपि दुर्वारम्।

---

अस्ति प्रतिबिम्बाभावकाले स्वपार्श्वस्थितपुरुषग्रहणाय स्वचक्षुषः तिर्य्यग्विक्षेपोऽस्ति ऋजुचक्षुषा स्वाभिमुखपुरुषस्येव स्वपार्श्वस्थितपुरुषस्य ग्रहणादर्शनात्। तथा च स्वाभिमुखे दर्पणे स्वपार्श्वस्थितपुरुषप्रतिबिम्बग्रहणाय चक्षुषस्तिर्य्यग्विक्षेपं विना दर्पणप्रतिहतानां स्वपार्श्वस्थितपुरुषग्राहकत्ववदित्यर्थः। वदनेति वदनसाचीकरणं नाम चक्षुषा स्वपृष्ठभागव्यवहितपदार्थग्रहणानुकूलो वदनव्यापारः। प्रतिनिवृत्तिनियममिति नयनगोलकाभिमुखविषयप्रतिहतानां पुनर्गोलकद्वारा शरीरान्तःप्रवेशनियममित्यर्थः।

ननु प्रतिनिवृत्तिनियमाभावपक्षेऽपि बिम्बसन्निकर्षघटकव्यवधानाभावापेक्षा अस्ति अवनतमौलिनयनरश्मीनां सूर्य्यप्रासिस्थले ऋजुचक्षुषा दर्पणे विलोक्यमाने दर्पणप्रतिहतानां पार्श्वस्थ-

स्वतो नीरूपस्य अपि नभसोऽध्यस्तनैल्यवै-

---

पुरुषप्राप्तिस्थले च सन्निकर्षविघटकाभावात् तत्प्राप्तिः सम्भवति प्रकृते च शरीरतदवयवानां व्यवधायकानां सत्त्वात् दर्पणप्रतिहतानां पृष्ठभागव्यवहितवस्तुप्राप्तिरीत्या स्वरसादाह तथेति। उपाधिप्रतिहतनयनरश्मीनां प्रतिनिवृत्तिनियमाभावपक्षे पृष्ठभागव्यवहितस्य प्रतिबिम्बापत्तिवत् नीरूपवाय्वादेरपि चाक्षुषप्रतिबिम्बापत्तिरिति दूषणान्तरसमुच्चयार्थः तथाशब्दः। ननु नीरूपस्यापि वाय्वादेर्दर्पणाद्युपाधिगतरूपोपधानेन चाक्षुषप्रतिबिम्बभ्रमविषयत्वं दुर्वारमित्यनुपपन्नम्। द्रव्यस्य चाक्षुषप्रतिबिम्बभ्रमे बिम्बगतस्य महत्त्ववदुद्भूतरूपस्यापि कारणत्वात् इत्याशङ्क्य द्रव्यगोचरचाक्षुषप्रतिबिम्बभ्रमे बिम्बगतरूपस्यानुपयोगान्नैवमित्याह मलिनेति। मलिनदर्पणे गौरमुखस्य प्रतिबिम्बे सति बिम्बं श्यामतया गृह्यते न गौरतया तथाच तत्र गौरमुखे आरोपितेनैव श्यामरूपेणोपहितस्य गौरमुखस्य चाक्षुषत्वं निर्वाह्यमित्यर्थः। आरोप्यरूपेणैव क्वचित् द्रव्यस्य चाक्षुषत्वे दृष्टान्तमाह पीतशङ्खेति। कवितार्किकमतोपपादनावसरे शङ्खस्यारोप्यपीतरूपविशिष्टतया एव भ्रमस्थले चाक्षुषत्वं नान्यथेत्युक्तमिति भावः। वस्तुतस्तु द्रव्यचाक्षुषे द्रव्यगतमेव उद्भूतरूपं कारणमिति न नीरूपद्रव्यस्य चाक्षुषप्रतिबिम्बभ्रमविषयत्वं प्रसज्यते। मलिनदर्पणे गौरमुखप्रतिबिम्बभ्रमस्थले पीतशङ्खादिभ्रमस्थले च श्यामं मुखं पीतः शङ्ख इत्यादि भ्रमः। प्राचीनधर्मिज्ञानेऽध्यासकारणभूते गौरशुक्लादिरूपस्य कारणतया उपयोगाभावासिद्धेः द्रव्यचाक्षुषे रूपाविषयकत्वनियमाभावस्य कवितार्किकग्रन्थव्याख्यानावसरे दर्शितत्वेन पीतशङ्खभ्रमसम्भवाच्च इति बोध्यम्।

शिष्ट्येन चाक्षुषत्वसम्प्रतिपत्तेः। तस्मात् स्वरूपतः प्रतिमुखाध्यासपक्ष एव श्रेयान्। न च तत्रापि पूर्वानुभवसंस्कारदौर्बल्यम्। पुरुषसामान्यानुभवसंस्कारमात्रेण स्वप्नेऽपि अदृष्टचरपुरुषाध्यासवत् मुखसामान्यानुभवसंस्कारमात्रेण दर्पणमुखविशेषाध्यासोपपत्तेः।

इयांस्तु भेदः स्वप्नेषु शुभाशुभहेत्वदृष्टानु-

---

आरोप्यरूपविशिष्टतया एव चाक्षुषत्वे उदाहरणान्तरमाह स्वत इति सम्प्रतिपत्तेरिति। आपाततः गगनस्य चाक्षुषवृत्तिविषयत्वं कतिताकिकमात्रसम्मतम् न तु पूर्वाचार्य्यसम्मतम्। पूर्वाचार्य्याणां मते तु गगनव्यापिसौरालोकादिगोचरचाक्षुषवृत्त्या आलोकाद्यवच्छिन्नचैतन्याभिव्यक्तिकाले आलोकानुगतगगनावच्छिन्नचैतन्यस्यापि अभिव्यक्तिं स्वीकृत्य अभिव्यक्ते गगनावच्छिन्ने साक्षिणि नैल्याद्यध्यासाभ्युपगमेन नैल्यादिविशिष्टगगनस्य साक्षिमात्रभास्यत्वादिति बोध्यम्। तस्मादिति दृष्टविरोधरूपबाधकाभावात् साधकसत्त्वात् च इति भावः। श्रेयानिति। मन्दाधिकारिणः प्रति इति वस्तुगतिः। उपाधिप्रतिहतानां बिम्बप्राप्त्यनुपगमे अध्यस्यमानमुखसजातीयगोचरपूर्वानुभवासम्भवात् अध्यासकारणसंस्कारानुपपत्तिरित्युक्तमनूद्य निराकरोति न च तत्रापीति। प्रतिबिम्बाध्यासपक्षे संस्कारदौर्बल्यमपि न च इत्यर्थः। अदृष्टचरेति कदापि अननुभूतेत्यर्थः।

ननु मुखसामान्यानुभवजन्यसंस्कारस्य प्रतिमुखाध्यास-

रोधेन पुरुषाकृतिविशेषाध्यासः । इह तु बिम्ब-सन्निधानानुरोधेन मुखाकृतिविशेषाध्यास इति । न च प्रतिबिम्बस्य स्वरूपतो मिथ्यात्वे ब्रह्मप्रतिबिम्बस्य जीवस्यापि मिथ्यात्वापत्तिर्दोषः । प्रतिबिम्ब-जीवस्य तथात्वेऽपि अवच्छिन्नजीवस्य सत्यतया मुक्तिभाक्त्वोपपत्तेरिति ।

यत्तु प्रतिबिम्बं दर्पणादिषु मुखच्छायाविशेषरूपतया सत्यमेव इति कस्यचिन्मतम् तन्न । छाया हि नाम शरीरादेस्तत्तदवयवैरालोके कियद्देशव्यापिनि अवरुद्धे तत्तद्देशे लब्धात्मकं तम एव ।

---

हेतुत्वे चैतन्मुखदर्पणयोः सान्निध्ये सति यस्य कस्यापि मुखस्याध्यासप्रसङ्गः स्वप्नवदेव न तु नियमेनाभिमुखाध्यास इत्याशङ्क्य व्यवस्थामाह इयांस्तु भेद इति स्वप्नप्रतिबिम्बाध्यासयोरिति शेषः । आदौ त्रिविधजीववादिनामिति विशेषणेन सूचितं परिहारमाविष्करोति प्रतिबिम्बजीवस्येति मुक्तिभाक्त्वं ब्रह्माभेदः ।

प्रतिबिम्बस्य मिथ्यात्वदार्ढ्याय तत्सत्यत्वमतं दूषयितुमनुभाषते यत्त्विति । ननु वृक्षादिच्छायायाः नैल्यदर्शनात् प्रतिबिम्बेषु प्रायेण नैल्यदर्शनेन छायावैलक्षण्यसत्त्वात् प्रतिबिम्बस्य छायारूपत्वमनुपपन्नमिति शङ्कानिराकरणार्थं विशेषपदम् । तथाच बिम्बभिन्नोऽपि मुखाद्याभासः शुक्तिरजतादिवत् प्राति-

न च मौक्तिकमाणिक्यादिप्रतिबिम्बस्य तमो-विरुद्ध-लोहितादि-रूपवतस्तमो-रूप-च्छायात्वं युक्तम्। न वा तमोरूपच्छायारहिततपनादिप्रतिबिम्बस्य तथात्वमुपपन्नम्। ननु तर्हि प्रतिबिम्बरूपच्छायायास्तमोरूपत्वासम्भवे द्रव्यान्तरत्वमस्तु क्लृप्तद्रव्यानन्तर्भावे तमोवत् द्रव्यान्तरकल्पनोपपत्तेरिति चेत्। किं तद्द्रव्यान्तरं प्रतीयमानरूपपरिमाणसंस्थानविशेषप्रत्यङ्मुखत्वादिधर्मयुक्तं तद्रहितं वा स्यात्। अन्त्ये न तेन द्रव्यान्तरेण रूपविशेषादिघटितप्रतिबिम्बोपलम्भनिर्वाह इति व्यर्थं तत्कल्पनम्। प्रथमे कथमेकस्मिन् अल्पपरिमाणे दर्पणे युगपदसङ्कीर्णतया प्रतीयमानानां महापरिमाणानाम् अनेकमुखप्रतिबिम्बानां सत्यतानिर्वाहः।

---

भासिको न भवति किन्तु बिम्बवत् सत्यः छायाविशेषरूपत्वाभ्युपगमात् तस्य इत्यर्थः। छायाया नीलरूपवत्त्वनियमात्तद्विशेषरूपत्वं प्रतिबिम्बस्य न सम्भवतीति छायास्वरूपकथनपूर्वकं दूषयति तन्नेति। शरीरादेः छाया नाम तम एव नान्यदिति प्रसिद्धमित्यर्थः। कियद्देशव्यापिनि आलोके शरीरतदवयवैर्निरुद्धे सतीति सम्बन्धः।

न च इति मौक्तिकस्फटिकादिप्रतिबिम्बस्य सितरूपवतस्तद्विरुद्धतमोरूपच्छायात्वेन युक्तं तथा माणिक्यकनकादिप्रतिबिम्बस्य लोहितपीतरूपादिमतस्तद्विरुद्धच्छायात्वं

कथञ्च निविडावयवानुस्यूते दर्पणे तथैव अवति-ष्ठमाने तदन्तर्हनुनासिकाद्यनेकनिम्नोन्नतप्रदेशवतो द्रव्यान्तरस्य उत्पत्तिः। किञ्च सितरक्तपीता-द्यनेकवर्णादिमतः प्रतिबिम्बस्य उत्पत्तौ दर्पणमध्ये स्थितं तत्सन्निहितं न तादृशं कारणमस्ति।

---

न युक्तमिति विभज्य योजनीयम्। नयनादेः छाया एव नास्तीति तत्प्रतिबिम्बस्य छायारूपत्वमनुपपन्नमेव इत्यर्थः। तमोवदिति यथा तमसो द्रव्यस्य क्लृप्तद्रव्यानन्तर्भावे सिद्धान्ते दशमद्रव्यत्वं कल्पितं तद्वदित्यर्थः। प्रथमे कथं सत्यतानिर्वाह इति सम्बन्धः। यद्येकमपि दर्पणं विशालं स्यात् तदा अनेकप्रति-बिम्बानामसङ्कीर्णतया तत्रावस्थानं सम्भवेदिति शङ्कावारणा-याह अल्पेति अल्पपरिमाणानामनेकत्वे सति एकैकस्मिन् दर्पणे एकैकं प्रतिबिम्बमसङ्कीर्णतया अवतिष्ठेत तदपि नास्तीत्याह एकस्मिन्निति एकस्मिन्नल्पपरिमाणेऽपि दर्पणे क्रमेणानेकप्रति-बिम्बानामसङ्कीर्णता स्यात् तदपि नास्तीत्याह युगपदिति। प्रतिबिम्बस्य मिथ्यात्वे तु नायं दोषो भवति स्वप्नदशायां स्वल्पे-ऽपि शरीरस्यान्तराकाशे रथगजादिपदार्थानां तदुचितवैशा-ल्यस्य च अध्यासवदल्पपरिमाणेऽपि दर्पणे परस्परमसङ्कीर्णतया अनेकप्रतिबिम्बानां तदुचितवैशाल्यस्य च अध्याससम्भवादिति भावः।

कथं च द्रव्यान्तरस्योत्पत्तिरिति सम्बन्धः सत्यस्य इति शेषः। सामाग्र्यभावाच्च न तस्योत्पत्तिः सम्भवतीत्याह किञ्चेति दर्पणस्य यो वर्णः स एव प्रतिबिम्बस्यापीति नियम-सत्त्वे तद्वर्णयुक्तं किञ्चित्कारणं दर्पणे सम्भाव्येतापि न तु एतदस्ति

यदि उच्येत उपाधिमध्यविश्रान्तियोग्यपरिमाणानामेव प्रतिविम्बानां महापरिमाणत्वानं तादृशनिम्नोन्नतादिज्ञानञ्च भ्रम एव यथापूर्वं दर्पणतद्वयवावस्थानाविरोधेन तादृक्प्रतिविम्बोत्पादनसमर्थञ्च किञ्चित्कारणं परिकल्प्यमिति तर्हि शुक्तिरजतमपि सत्यमस्तु।

---

दर्पणरूपविलक्षणनानारूपवतां प्रतिविम्बानामनुभवादित्याह अनेकेति सितपीतरक्ताद्यनेकवर्णयुक्तानां विम्बानामेव कारणत्वमस्तु न इत्याह दर्पणमध्ये स्थितमिति तेषां निमित्तत्वेऽप्युपादानत्वं न सम्भवति प्रतिविम्बोत्पत्तिदेशे तेषामभावादित्यर्थः। तादृशमिति सितपीतरक्तताद्यनेकवर्णयुक्तं कारणं प्रतिविम्बोदयकाले नियमेन नास्ति अनुपलम्भादित्यर्थः। प्रतिविम्बं हि दर्पणस्यान्तः दर्पणस्य पृष्ठभागे दर्पणसन्निहितमनुभूयते।

ननु दर्पणगतरूपपरिमाणादिवत् दर्पणस्य उपरिभागे ततस्तत्कारणेनापि तत्रैव भवितव्यमिति मत्वा दर्पणमध्ये स्थितं तत्सन्निहितमित्युक्तं मध्यशब्दोऽन्तरार्थकः प्रतिविम्बस्वरूपमात्रं सत्यं तत्र प्रतीयमानधर्मास्तु कल्पिता एव इति तत्सत्यत्वेऽभिनिविशमानः शङ्कते यदि उच्येतेति। वस्तुगत्या उपाधिमध्ये विश्रान्तियोग्यान्येव प्रतिविम्बानि उत्पद्यन्ते तेषु महापरिमाणादिकं भ्रान्त्या भासत इत्यर्थः। कल्प्यमिति नीवारावयवेषु व्रीह्यवयवा यथा मीमांसकैः कल्प्यन्ते तद्वद्दर्पणावयवसंसृष्टाः प्रतिविम्बावयवाः कल्प्या इत्यर्थः। प्रतिवन्दीमाह तर्हीति।

तत्रापि यथापूर्वं स्थितायामेव तत्तादात्म्यापन्नरजतोत्पादनसमर्थं किञ्चित्कारणं परिकल्प्य तस्य रजतस्य दोषत्वाभिमतकारणसहकृतेन्द्रियग्राह्यत्वनियमवर्णनोपपत्तेः किं शुक्तिरजतमसत्यं प्रतिबिम्बः सत्य इत्यर्द्धजरतीन्यायेन।

न च तथा सति रजतमिति दृश्यमानायाः शुक्तेरग्नौ प्रक्षेपे रजतोचितद्रवीभावापत्तिः। अनलकस्तूरिकादि-प्रतिबिम्ब-स्पौष्ण्य-सौरभादि-राहित्यवत् शुक्तिरजतस्य द्रवीभावयोग्यताराहित्योपपत्तेः। अथ उच्येत न इदं रजतं मिथ्यैव रजतमभादिति

---

पूर्वोक्तदृष्टान्तं मनसि निधाय शुक्तिरजतस्यापि कारणं कल्पयति तत्रापीति शुक्तिरजतस्थलेऽपि इत्यर्थः। ननु शुक्तिरजतं सत्यमिति स्वीकारे तस्य शुक्तौ सदा सत्त्वाच्छुक्तिप्रत्यक्षकाले नियमेन तदपि गृह्यते अतो न तस्य सत्यत्वं सम्भवतीत्याशङ्कां परिहरति तस्य इति ततः किं तत्राह। किमिति अर्द्धजरतीन्यायेन इति। जरती वृद्धा तस्या अर्द्धमुखमात्रं कामयते नाधःकायमित्येतद्यथा उपपत्तिशून्यमेवमिदमपि इत्यर्थः।

ननु प्रसिद्धरजतमग्नौ क्षिप्तं द्रवीभवति शुक्तिरजतन्तु न तथा इति तस्य मिथ्यात्वमेव इति मत्वा शङ्कते न च तथा सतीति तस्य सत्यत्वे सतीत्यर्थः। प्रतिबन्दीं समर्थयते अनलेति यद्यप्यत्र इष्टापत्तिरेव प्रतिबिम्बसत्यत्ववादिमते शुक्तिरजतादेरपि सत्यत्वसम्भवात् तथापि प्रतिबन्दीव्याजेन शुक्तिरजतादे-

सर्वसम्प्रतिपन्नबाधात् न शुक्तिरजतं सत्यमिति। तर्हि दर्पणे मुखं नास्ति मिथ्यैव अत्र दर्पणे मुखमभादित्यादिसर्वसिद्धबाधात् प्रतिविम्बमपि न सत्यमिति युक्तम्। तस्मात् असङ्गतः प्रतिविम्बसत्यत्ववादः।

ननु तन्मिथ्यात्ववादोऽपि अयुक्तः शुक्तिरजत

---

रपि मिथ्यात्वनिरूपणे तात्पर्य्यं बोध्यम्। प्रतिवन्द्याः परिहारं शङ्कते प्रतिविम्बसत्यत्ववादी अथोच्येतेति परिहारसाम्यमाह तर्हीति। मिथ्यैव अत्रेति विम्बप्रतिविम्बाभेदपक्षे प्रतिविम्बमिथ्यात्वानुभवः प्रतिविम्बत्वविशिष्टविशेषेण प्रतिविम्बगोचरो न स्वरूपेण इति बोध्यम्। ननु तर्हि शुक्तिरजतमिथ्यात्वानुभवोऽपि इदमर्थतादात्म्यापन्नतया एव रजतगोचरो न स्वरूपेण इति वक्तुं शक्यतया रजतेदमर्थयोस्तादात्म्यमात्रं कल्पितं रजतन्तु अकल्पितमिति प्रसज्येतेति चेत् न। रजतस्य शुक्तावनुत्पत्तौ तस्य संविदभिन्नत्वाभावेन प्रत्यक्षत्वानुपपत्तेस्तस्य तत्र उत्पत्तिरपरिहार्य्या तदुत्पत्तौ चान्वयव्यतिरेकाभ्यामनिर्वचनीयाज्ञानमेव कारणं मान्यदिति प्राक् प्रतिपादितत्वेन तस्य मिथ्यात्वोपपत्तेः। पूर्वोक्तरीत्या विम्बप्रतिविम्बाभेदसाधकप्रमाणसत्त्ववच्छुक्ति-रजत-सत्यत्वसाधकानन्यथा-सिद्ध-प्रमाणा-भावेन शुक्तिरजतमिथ्यात्वानुभवस्य रजतस्वरूपगोचरत्वोपपत्तेश्च तस्य मिथ्यात्वमिति भावः। तस्मादिति विम्बभिन्नस्य प्रतिविम्बस्य सत्यत्वे मानाभावादित्यर्थः।

ननु इति प्रतिविम्बाध्यासपक्षे हि तस्य उपादानमज्ञानं

इव कस्यचिदन्वयव्यतिरेकशालिनः कारणस्य अज्ञानस्य निवर्त्तकस्य ज्ञानस्य च अनिरूपणात्।

अत्र केचित्। यद्यपि सर्वात्मना अधिष्ठानज्ञानानन्तरमपि जायमाने प्रतिविम्बाध्यासे न अधिष्ठानावरणमज्ञानमुपादानम् न वा अधिष्ठानविशेषांशज्ञानं निवर्त्तकम् तथापि अधिष्ठानाज्ञानस्य आवरणशक्त्यंशेन निवृत्तौ अपि विक्षेपशक्त्यंशेनानुवृत्तिसम्भवात् तदेवोपादानम्।

---

वाच्यं तच्च न सम्भवति सर्वात्मना दर्पणादिरूपाधिष्ठानगोचरसाक्षात्कारेण दर्पणाद्यवच्छिन्नचैतन्यनिष्ठाज्ञानस्य निवृत्तत्वात् तादृशसाक्षात्कारे सति एव अनुवर्त्तमानस्य प्रतिविम्बाध्यासस्य तन्निवर्त्त्यत्वायोगात्तन्निवर्त्तकज्ञानान्तरानुपलम्भाच्च ज्ञानैकनिवर्त्त्यत्वं विना तस्य मिथ्यात्वानुपपत्तेः तस्मात् तन्मिथ्यात्ववादोऽप्यसङ्गत इत्याक्षेपाभिप्रायः। यथा शुक्तिरजते शुक्त्यज्ञानस्य तत्कारणस्यान्वयव्यतिरेकसिद्धस्य पूर्वनिरूपणं कृतं तथा प्रतिविम्बाध्यासे दर्पणाद्यज्ञाने सति प्रतिविम्बाध्यासस्तदभावे तदभाव इत्यन्वयव्यतिरेकशालिनस्तत्कारणस्याज्ञानस्य कस्यचिदनिरूपणात् तन्निवर्त्तकज्ञानस्य च अनिरूपणादित्यक्षरार्थः।

परिहरति अत्र केचिदिति आक्षेपाभिप्रायमनुवदति यद्यपीति। सर्वात्मनेति शुक्तौ रजताध्यासात् पूर्वमिदन्त्वात्मनि असाक्षात्कारसत्त्वेऽपि शुक्तित्वादिविशेषात्मना साक्षात्कारो नास्तीति तत्राधिष्ठानविशेषांशावरणमज्ञानमुपादानं लभ्यते। प्रकृते तु चक्षुः-

बिम्बोपाधिसन्निधिनिवृत्तिसचिवं च अधिष्ठानज्ञानं सोपादानस्य तस्य निवर्त्तकमिति।

अन्ये तु ज्ञानस्य विक्षेपशक्त्यंशं विहाय आवरणशक्त्यंशमात्रनिवर्त्तकत्वं न स्वाभाविकम्।

ब्रह्मज्ञानेन मूलाज्ञानस्य शुक्त्यादिज्ञानेन अवस्थाऽज्ञानस्य च आवरणशक्त्यंशमात्रनिवृत्तौ तस्य विक्षेपशक्त्या सर्वदा अनुवृत्तिप्रसङ्गात्।

---

सन्निकृष्टे दर्पणे प्रतिबिम्बाध्यासात् पूर्वमिदन्त्वात्मनेव दर्पणत्वादिविशेषात्मनापि साक्षात्कारसत्त्वेन सर्वात्मना अधिष्ठानसाक्षात्कारोऽस्ति तथाच तेनाधिष्ठानविशेषावरणस्याज्ञानस्य निवृत्तत्वात् न तदुपादानं सम्भवतीत्येतद्युक्तमेव इत्यर्थः। अपिरवधारणे। निवर्त्तकमिति प्रतिबिम्बाध्यासस्येति शेषः। कथं तर्हि उपादानादिलाभस्तत्राह तथापीति तदेव इति। अधिष्ठानज्ञानमेव इत्यर्थः। सर्वात्मना अधिष्ठानसाक्षात्कारेणापि अज्ञानैकदेशस्यैव निवृत्तिर्न तु कार्त्स्न्येनेति फलबलात्कल्प्यत इति भावः।

निवर्त्तकज्ञानञ्च निरूपयति बिम्बेति बिम्बोपाध्योः सन्निधिनिवृत्तिसहकृतं दर्पणे मुखं नास्तीति ज्ञानमेव प्रतिबिम्बाध्यासस्य निवर्त्तकमित्यर्थः।

दर्पणाद्यवच्छिन्नचैतन्ये दर्पणाद्युपादानभूतं मूलाज्ञानमेकमस्ति दर्पणादिज्ञाननिवर्त्त्यमवस्थारूपाज्ञानमपि अपरमस्ति तत्र मूलाज्ञानस्यैव दर्पणाद्युपादानत्ववत् प्रतिबिम्बाध्यासोपादानत्वमपि इति परिहारान्तरमाह अन्ये तु इति।

ननु पूर्वमतोक्तरीत्या शुक्तिरजतादेरिव प्रतिबिम्बाध्या-

न च तत् बिम्बोपाधिसन्निधिरूपविक्षेपशक्त्यंशनिवृत्तिप्रतिबन्धकप्रयुक्तं बिम्बोपाधिसन्निधानात् प्रागेव बिम्बचैत्रमुखे दर्पणसंसर्गाद्यभावे दर्पणे चैत्रमुखाभावे वा प्रत्यक्षतोऽवगम्यमाने विक्षेपशक्त्यंशस्य अपि निवृत्त्यवश्यम्भावेन तत्काले तयोः सन्निधाने सति उपादानाभावेन प्रतिबिम्बभ्रमाभावप्रसङ्गात्। अतो मूलाज्ञानमेव प्रतिबिम्बाध्यासोपादानम्।

---

स्य अपि अवस्थाज्ञानपरिणामत्वसम्भवे किं मूलाज्ञानस्य तत्कल्पनयेति नेत्याह ज्ञानस्य इत्यादिना ज्ञानस्यावरणमात्रनिवर्त्तकत्वं किं स्वाभाविकं किं वा विक्षेपशक्त्यंशनिवृत्तिप्रतिबन्धकसत्त्वप्रयुक्तं नाद्य इति अत्र हेतुमाह ब्रह्मज्ञानेनेति तस्य इति। द्विविधस्य अपि अज्ञानस्य निवर्त्तकाभावेन विक्षेपशक्तिसहकृतस्य विदेहकैवल्येऽपि अनुवृत्तिप्रसङ्गादित्यर्थः।

द्वितीयमनुवदति न चेति तदिति आवरणमात्रनिवर्त्तकत्वमित्यर्थः। विक्षेपशक्तिमदज्ञानांशनिवृत्तिप्रतिबन्धकप्रारब्धनाशे सति ब्रह्मज्ञानं संस्कारविशिष्टचैतन्यमात्रादेव विक्षेपांशनिवृत्तिसम्भवान्न पूर्वोक्तदोष इति मत्वा दोषमाह बिम्बोपाधिसन्निधानात् प्रागिति। बिम्बोपाध्योराभिमुख्यलक्षणसन्निधानात् पूर्वक्षण एव इत्यर्थः। बिम्बप्रतिबिम्बाभेदपक्षे प्रतिबिम्बोत्पत्त्यभावेऽपि चैत्रस्य मुखे बिम्बभूते बिम्बत्वप्रतिबिम्बत्वदर्पणस्थत्वादेरनिर्वचनीयस्य उत्पत्तुरपगमेन तस्य चैत्रमुखावच्छिन्नचैतन्यनिष्ठावस्थाज्ञानमेव कारणं वाच्यं तच्च चैत्रमुखे दर्पणाभिमुख्यात् प्राक्विश्वामित्रेण निरीक्ष्यमाणे सति तदा प्रतिबन्ध-

न च अत्रापि उक्तदोषतौल्यं पराग्विषयवृत्ति-परिणामानां स्वस्वविषयावच्छिन्नचैतन्यप्रदेशे मूलाज्ञानावरणशक्त्यंशाभिभावकत्वेऽपि तदीयविक्षेप-

---

काभावात् चैत्रसुखगोचरेण विष्णुमित्रीयसाक्षात्कारेण विक्षेपशक्त्या सह निवर्त्तते उत्तरक्षण एव चैत्रमुखस्य दर्पणाभिमुख्ये सति विष्णुमित्रस्य दर्पणे चैत्रस्य मुखमिति प्रतिबिम्बभ्रमो भवति तत्र चैत्रमुखे दर्पणस्थत्वादेरुत्पत्तिर्न स्यादुपादानाभावादित्याह बिम्ब इति। दर्पण संसर्गो दर्पणस्थत्वमादिपदं प्रत्यङ्-मुखत्वादिसंग्राहार्थम्। तथा च संसर्गाद्यभावे प्रत्यक्षतोऽवगम्यमान इति सम्बन्धः। चैत्रमुखे दर्पणस्थत्वादिकं नास्तीति अवगतिप्रकारो बोध्यः। दर्पणे प्रतिबिम्बाध्यासोत्पत्तिपक्षे अवगतिप्रकारमाह दर्पण इति प्रतिबिम्बाध्यासपक्षे संसर्गितया प्रतिमुखस्यैवाध्यासोपगमात् दर्पणे चैत्रमुखं नास्तीत्यनेन प्रकारेण दर्पणे चैत्रमुखाभावे प्रत्यक्षतोऽवगम्यमान इत्यर्थः। एवं मतभेदेन अधिष्ठानभेदतत्साक्षात्काराकारभेदयोः प्रदर्शनार्थमेव चैत्रमुखे दर्पणे च पृथक् सप्तमीनिर्देशः कृतः। मतभेदज्ञापनार्थश्च वाकारः। तत्काल इति अधिष्ठानभूते चैत्रमुखे दर्पणे च विक्षेपशक्त्या सह अज्ञाननिवर्त्तकसाक्षात्कारोत्पत्तिद्वितीयक्षण इत्यर्थः। तयोरिति चैत्रमुखदर्पणयोः सन्निधाने सति अधिष्ठानसाक्षात्कारवतो विष्णुमित्रस्य दर्पणे चैत्रमुखमिति यः प्रतिबिम्बभ्रमो भवति तस्य अभावप्रसङ्गात् इत्यत्र हेतुमाह उपादानाभावेन इति। तत्र हेतुमाह विक्षेपशक्त्यंशस्यापि निवृत्त्यवश्यम्भावेन इति। अत इति अवस्थाज्ञानस्य प्रतिबिम्बाध्यासे कारणत्वायोगादित्यर्थः।

शक्तांशानिवर्त्तकत्वात्। अन्यथा तत्प्रदेशस्थित-व्यावहारिकविक्षेपाणामपि विलयापत्तेः।

न च प्रतिबिम्बस्य मूलाज्ञानकार्य्यत्वे व्याव-हारिकत्वापत्तिः अविद्यातिरिक्तदोषाजन्यत्वस्य व्यावहारिकत्वे प्रयोजकत्वात्। प्रकृते च तदति-रिक्तबिम्बोपाधिसन्निधिदोषसद्भावेन प्रातिभासिक-त्वोपपत्तेः।

---

ननु अस्मिन् पक्षेऽपि बिम्बोपाधिसन्निधानात् पूर्वक्षणोत्पन्न-चैत्रमुखाद्यवच्छिन्नचैतन्यावारकमूलाज्ञानस्यापि निवृत्तत्वात् उपादानाज्ञानाभावदोषस्तुल्यस्तेन तदनिवृत्तौ च चैत्रमुखा-द्यनवभासप्रसङ्गः यत्किञ्चिदावरणस्य सत्त्वात् इत्याशङ्क्याह न च अत्रापीति। ब्रह्मज्ञानस्य एव मूलाज्ञाननिवर्त्तकत्वं जड़-विषयकवृत्तिरूपाणामन्तःकरणपरिणामानान्तु स्वस्वविषय-चैतन्यस्थमूलाज्ञानस्य योऽयमावरणांशस्तदभिभावकत्वमात्रं यावद्विषयस्फुरणमङ्गीक्रियते। न तु अवस्थाज्ञानविक्षेपांशनिव-र्त्तकत्ववत् मूलाज्ञानविक्षेपांश निवर्त्तकत्वमपि इत्यर्थः। अन्यथा इति विषयचैतन्यस्थस्य मूलाज्ञानस्य विषयज्ञानेन निवृत्तौ दर्पणादीनां व्यावहारिकाणां विक्षेपशब्दितकार्य्याणां नाश-प्रसङ्गः उपादाननाशादित्यर्थः। प्रातिभासिकविक्षेपाणामिव इत्यपिशब्दार्थः।

ननु मूलाज्ञानकार्य्यस्य दर्पणादेर्व्यावहारिकत्वदर्शनात् प्रतिबिम्बाध्यासस्यापि तत्कार्य्यत्वे तदापत्तिरित्याशङ्क्य निराक-रोति न च इत्यादिना। मूलाज्ञानकार्य्यत्वं व्यावहारिकत्वप्र-

न च एवं सति बिम्बोपाधिसन्निधिनिवृत्तिसहकृतस्यापि अधिष्ठानज्ञानस्य प्रतिबिम्बाध्यासानिवर्त्तकत्व-प्रसङ्गस्तन्मूलाज्ञान-निवर्त्तकत्वाभावादिति वाच्यम्। विरोधाभावात्।

ब्रह्माज्ञानानिवर्त्तकत्वेऽपि तदुपादानकप्रतिबिम्बाध्यासविरोधिविषयकतया अधिष्ठानयाथात्म्यज्ञानस्य प्रतिबन्धकविरहसचिवस्य तन्निवर्त्तकत्वोपपत्तेः।

---

योजकं न भवति अनाद्यविद्यादौ तदभावेऽपि व्यावहारिकत्वसत्त्वात् किन्तु अन्यदेव तत्प्रयोजकमित्याह अविद्यातिरिक्तेति। अनाद्यविद्यादौ अविद्याजन्यत्वाभावेऽपि तदतिरिक्तदोषाजन्यत्वसत्त्वान्नाव्याप्तिरिति भावः। प्रतिबिम्बाध्यासस्य मूलाज्ञानकार्य्यस्य अपि न व्यावहारिकत्वं तत्प्रयोजकाभावादित्याह प्रकृते चेति। प्रतिबिम्बाध्यास इत्यर्थः।

न च एवं सतीति प्रतिबिम्बाध्यासस्य मूलाज्ञानकार्य्यत्वे सति इत्यर्थः। तन्मूलेति शुक्तिरजतादिमूलाविद्यानिवर्त्तकशुक्त्यादिसाक्षात्कारस्य एव रजताद्यध्यासनिवर्त्तकत्वदर्शनादिति भावः। विरोधाभावादिति मूलाज्ञानं ब्रह्मविषयकं प्रतिबिम्बाध्यासाधिष्ठानभूतदर्पणादिज्ञानन्तु दर्पणाद्यवच्छिन्नचैतन्यविषयकमिति तयोः समानविषयकत्वस्य विरोधप्रयोजकस्य अभावेन विरोधाभावात्।

अधिष्ठानयाथात्म्यज्ञानस्य ब्रह्माज्ञानानिवर्त्तकत्वेऽपि इत्यर्थः।

अवस्थाऽज्ञानोपादानत्वपक्षेऽपि तस्य प्राचीनाधिष्ठानज्ञाननिवर्त्तितावरणशक्तिकस्य समानविषयत्वभङ्गेन प्रतिबन्धकाभावकालीनाधिष्ठानज्ञानेन निवर्त्तयितुमशक्यतया प्रतिबिम्बाध्यासमात्रस्यैव तन्निवर्त्त्यत्वस्य उपेयत्वात् ।

---

तत्पदं ब्रह्माज्ञानपरम् । विरोधिविषयकतयेति दर्पणे मुखं नास्तीत्यादिरूपस्य अधिष्ठानयाथात्म्यज्ञानस्य प्रतिबिम्बाध्यासाभावविषयकतया इत्यर्थः । ननु प्रतिबिम्बाध्यासस्य अवस्थाज्ञानोपादानकत्वपक्षे बिम्बोपाधिसन्निधिनिवृत्तिसह कृताधिष्ठानज्ञानस्य तदुपादानाज्ञाननिवर्त्तकत्वं लभ्यते ।

तथा च ज्ञानमज्ञानस्यैव निवर्त्तकमज्ञानकार्य्यस्य तूपादानाज्ञाननिवृत्त्या निवृत्तिरिति पञ्चपादिकाकारोक्तं सङ्गच्छते इत्याशङ्क्याह अवस्थाज्ञानेति । तस्य इति अवस्थाज्ञानस्य इत्यर्थः । प्राचीनेति प्रतिबिम्बाध्यासात् प्राचीनेन अधिष्ठानज्ञानेन दर्पणे मुखं नास्ति इत्याद्याकारेण निवर्त्तिता आवरणशक्तिर्यस्य अवस्थाज्ञानस्य तत्तथा तस्य इत्यर्थः । अज्ञानविषयत्वम् अज्ञानावृतत्वम् । आवरणनाशे च दर्पणाद्यवच्छिन्नचैतन्यस्यावस्थाज्ञानविषयत्वाभावादधिष्ठानज्ञानस्यावस्थाज्ञानसमानविषयकत्वं विरोधप्रयोजकं भग्नमित्यर्थः। प्रतिबन्धकपदं बिम्बोपाध्योः सन्निधिपरं तस्य निवर्त्तयितुमशक्यतयेति सम्बन्धः। तन्निवर्त्त्यत्वस्य इति तत्पदम् अधिष्ठानज्ञानपरम् । अवस्थाज्ञानोपादानत्वपक्षेऽपि प्रतिबिम्बाध्यासमात्रस्य एव तन्निवर्त्त्यत्वस्य उपेयत्वादिति सम्बन्धः । तथा च पञ्चपादिकाविरोधः प्रतिबिम्बाध्यासस्य अवस्थाज्ञानोपादानकत्वपक्षेऽपि तुल्य इति भावः

अथवा स्वोपादानाज्ञाननिवर्त्तकब्रह्मज्ञाननिवर्त्त्य एव अयमध्यासोऽस्तु। व्यावहारिकत्वापत्तिस्तु अविद्यातिरिक्तदोषजन्यत्वेन प्रत्युक्तेत्याहुः।

स्वाप्नपदार्थाधिष्ठाननिरूपणम्।

एवं स्वप्नाध्यासस्यापि अनवच्छिन्नचैतन्येऽहङ्कारोपहितचैतन्ये वा अवस्थारूपाज्ञानशून्येऽध्यासात् सुषुप्त्याख्यं तमोऽज्ञानं यद्बीजं स्वप्नबोधयोरित्याचार्य्याणां स्वप्नजाग्रत्प्रपञ्चयोरेकाज्ञानकार्य्यत्वोक्तेश्च मूलाज्ञानकार्य्यतया स्वोपादाननिवर्त्तकब्रह्मज्ञानैकबाध्यस्य अविद्यातिरिक्तनिद्रादिदोषजन्यतया एव प्रातिभासिकत्वमिति केचित्।

---

तदविरुद्धं प्रकारमाह अथवेति स्वपदं प्रतिबिम्बाध्यासपरम्। निवर्त्त्य एव इति बिम्बोपाध्योः सन्निधिविगमकाले प्रतिबिम्बाध्यासस्य सूक्ष्मावस्थालक्षणनाशे सत्यपि बाधरूपा निवृत्तिस्तदा नास्ति सा तु ब्रह्मज्ञानाधीनैव तस्य एव तदुपादानमूलाज्ञाननिवर्त्तकत्वादिति भावः। ननु ब्रह्मज्ञानबाध्यस्य घटादेरिव तद्बाध्यस्यापि व्यावहारिकत्वापत्तिरिति नेत्याह व्यावहारिकत्वापत्तिस्त्विति। तुशब्दोऽवधारणे प्रत्युक्तैवेति सम्बन्धः।

बिम्बोपाधिसन्निधिर्दोषः उक्तन्यायमन्यत्रापि अतिदिशति एव मिति। एवं स्वप्नाध्यासस्यापि मूलाज्ञानकार्य्यतया अविद्यातिरिक्तनिद्रादिदोषजन्यतयैव प्रातिभासकत्वमिति सम्बन्धः न तु अवस्थाज्ञानकार्य्यतया प्रातिभासकत्वमित्येवकारार्थः। अव-

अन्ये तु बाध्यन्ते च एते रथादयः स्वप्नदृष्टाः प्रबोध इति भाष्योक्तेरविद्यात्मकबन्धप्रत्यनीकत्वात् जाग्रद्बोधवदिति विवरणदर्शनादुत्थितस्य स्वप्नमिथ्यात्वानुभवाच्च जाग्रद्बोधः स्वप्नाध्यासनिवर्त्तक इति ब्रह्मज्ञानेतरज्ञानबाध्यतया एव तस्य प्रातिभासिकत्वम्। न च अधिष्ठानयाथात्म्यागोचरं स्वोपादानाज्ञानानिवर्त्तकं ज्ञानं कथमध्यासनिवर्त्तकं स्यादिति वाच्यम्।

---

स्याज्ञानस्य स्वप्नोपादानत्वाभावे हेतुमाह अवस्थारूपाज्ञानशून्येऽध्यासादिति 'मतभेदेन स्वप्नाध्यासाधिष्ठानभेदमाह अनवच्छिन्नेति। अहङ्कारानवच्छिन्नब्रह्मचैतन्यस्य मूलाज्ञानमात्राश्रयत्वादवस्थाज्ञानशून्यत्वमहङ्कारोपहितस्य साक्षिचैतन्यस्य सुखाधिष्ठानस्य आवरणानङ्गीकारादवस्थाज्ञानशून्यत्वमिति भावः। अत्र अज्ञानकार्य्यस्य स्वप्नाध्यासस्य अवस्थाज्ञानशून्यचैतन्येऽध्यासोक्त्या अर्थान्मूलाज्ञानकार्य्यत्वमुक्तं तत्र हेत्वन्तरमाह सुषुप्ताख्यमिति सुषुप्तेरज्ञानावस्थारूपत्वविवक्षया सुषुप्ताख्यत्वमज्ञानस्योक्तं बीजमुपादानं बोधो जाग्रत्प्रपञ्चस्तस्य शुक्तिरजतादिव्यतिरिक्तस्य मूलाज्ञानकार्य्यत्वं संप्रतिपन्नमिति भावः। आचार्य्याणामुक्तेश्चेति सम्बन्धः। स्वपदं स्वप्नाध्यासपरम्। ब्रह्मज्ञानैकेति प्रबोधकाले स्वप्नप्रपञ्चस्य सूक्ष्मावस्थाप्रतिरूपनाशे सत्यपि बाधरूपा निवृत्तिर्ब्रह्मज्ञानैकसाध्येति बोध्यम्।

अविद्यातिरिक्तदोषजन्यत्वं प्रातिभासिकत्वप्रयोजकमिति मतेन स्वप्नाध्यासस्य निद्रादोषजन्यस्य प्रातिभासिक-

रज्जुसर्पाध्यासस्य स्वोपादानाज्ञाननिवर्त्त-काधिष्ठानयाथात्म्यज्ञानेनैव तत्रैव स्वानन्तरोत्पन्न-दण्डभ्रमेणापि निवृत्तिदर्शनादित्याहुः।

---

त्वमुपपादितम्। व्यवहारकाले बाध्यमानत्वं प्रातिभासिक-त्वप्रयोजकमिति मतेन तस्य तदुपपादयति अन्ये त्विति। भाष्यगतं प्रबोधपदं सप्तम्यन्तम्। बन्धस्याविद्याकार्य्य-त्वादविद्यात्मकत्वं प्रत्यनीकत्वनिर्त्तकत्वं पञ्चम्यनन्तरं ब्रह्म-ज्ञानस्य इति शेषः। यथा जाग्रत्कालीनो घटादिबोधः स्वप्नबन्धनिवर्त्तकस्तद्वदित्यर्थः। उत्थितस्य इति मिथ्यैव मया स्वप्ने महाजनसमागमो दृष्टः। न हि अस्ति महाजनसमागम इति तस्य मिथ्यात्वानुभवादित्यर्थः। यदि स्वप्नप्रपञ्चस्य ब्रह्म-ज्ञानबाध्यत्वप्रयुक्तं मिथ्यात्वं तदा स्वप्नादुत्थितस्य तन्मिथ्यात्वानु-भवो न स्यात् ब्रह्मज्ञानात् पूर्वं तद्बाध्ये घटादौ मिथ्यात्वानुभवा-दर्शनादतो ब्रह्मज्ञानादितरेण जाग्रत्प्रबोधेनैव बाधः स्वप्नप्रप-ञ्चस्य वक्तव्य इति शुक्तिरजतादिवद् व्यवहारकालीनबाधवशा-देव तस्य प्रातिभासिकत्वं व्यवहारकालश्च ब्रह्मतत्त्वज्ञानात् पूर्वकाल इति भावः। ज्ञानमिति ब्रह्मज्ञानेतरज्ञानमित्यर्थः। तस्य स्वप्नाध्यासनिवर्त्तकत्वाभावे हेतुं सूचयति स्वेति। स्वस्य स्वप्नाध्यासस्य उपादानं मूलाज्ञानं तदनिवर्त्तकमित्यर्थः। तद-निवर्त्तकत्वे हेतुं सूचयति अधिष्ठानेति स्वप्नाधिष्ठानस्य पूर्वो-क्तस्य यद्याथात्म्यमनवच्छिन्नब्रह्मचैतन्यादि तदविषयकमि-त्यर्थः। अधिष्ठानयाथात्म्यज्ञानस्यैव अज्ञाननिवृत्तिद्वारा अध्या-सनिवर्त्तकत्वनियमादिति भावः।

उक्तनियमासिध्या दूषयति रज्जुसर्पेति स्वपदं सर्पाध्यास-

अपरे तु जाग्रद्भोगप्रदकर्मोपरमे सति जाग्रत्प्रपञ्चद्रष्टारं प्रतिबिम्बरूपं व्यावहारिकं जीवं तद्दृष्टं जाग्रत्प्रपञ्चमपि आवृत्य जायमानो निद्रारूपो मूलाज्ञानस्य अवस्थाभेदः स्वाप्नप्रपञ्चाध्यासस्योपादानं न मूलाज्ञानम्।

---

परम्। ज्ञानेनैवेति नायं सर्पः रज्जुरेवेति ज्ञानेनैव इत्यर्थः। तत्रैव इति सर्पाध्यासाधिष्ठानरज्जौ एवेत्यर्थः। स्वेति सर्पभ्रमानन्तरोत्पन्नेन नायं सर्पः दण्डोऽयमिति भ्रमेणेत्यर्थः। निवृत्तिदर्शनादिति बाधदर्शनादित्यर्थः।

अधिष्ठानयाथात्म्यज्ञानस्यैव अध्यासनिवर्त्तकत्वनियमेऽपि प्रकृतेनानुपपत्तिरिति मत्वा तदनुगुणमतान्तरमाह अपरे त्विति। अस्मिन् मते व्यवहारिकजीवः स्वप्नप्रपञ्चदृष्टः प्रातिभासिकजीवस्याधिष्ठानं स्वप्नप्रपञ्चस्य च जाग्रत्प्रपञ्च एव अधिष्ठानं न तु अनवच्छिन्नचैतन्यादिकं द्विविधाधिष्ठानावरणद्वारा च निद्रारूपमवस्थाज्ञानं द्रष्टृदृश्यात्मक द्विविधस्वप्नप्रपञ्चोपादानं न तु मूलाज्ञानं तस्य ब्रह्मचैतन्यमात्रावरकत्वेन व्यावहारिकजीवाद्यावारकत्वाभावात्तस्य व्यावहारिकजीवजगद्गोचरस्य प्रबोधस्याधिष्ठानयाथात्म्यज्ञानरूपत्वात्। तेन स्वप्नाध्यासबाधः सम्भवतीति तात्पर्य्यार्थः; कर्मोपरमे सति जायमान इति सम्बन्धः। आवृत्येत्यनेन उपादानमित्यनेन च निद्रायाः आवरणविक्षेपशक्तिमत्त्वरूपमज्ञानलक्षणं उक्तम्। एवमज्ञानत्वे तस्याः सिद्धे सति उत्पत्तिमत्त्वात्तदवस्थारूपत्वं सिध्यति अस्मिन् मते सर्वेषामेव अवस्थाज्ञानानामादिमत्त्वस्य प्रथमपरिच्छेदे उक्तत्वादिति भावः।

न च निद्राया अवस्थाऽज्ञानरूपत्वे मानाभावः मूलाज्ञानेन अनावृतस्य जाग्रत्प्रपञ्चद्रष्टु र्व्यावहारिकजीवस्य मनुष्योऽहं ब्राह्मणोऽहं देवदत्तपुत्रोऽहम् इत्यादिना स्वात्मानमसन्दिग्धाविपर्य्यस्तमभिमन्यमानस्य तदीयचिरपरिचयेन तं प्रति सर्वदा अनावृतैकरूपस्य स्वपितामहाल्ययादिजाग्रत् प्रपञ्चवृत्तान्तस्य च स्वप्नकाले केनचिदावरणाभावे जाग्रद्दशायामिव स्वप्नेऽपि व्याघ्रोऽहं शूद्रोऽहं यज्ञदत्तपुत्रोऽहम् इत्यादिभ्रमस्य स्वपितामहजीवद्दशादिभ्रमस्य च अभावप्रसङ्गेन निद्राया एव तत्कालोत्पन्न-व्यावहारिकजगज्जीवावरका-ज्ञानावस्थाभेदरूपत्वसिद्धेः ।

---

संग्रहेण उक्तमर्थमाशङ्कापूर्वकं प्रपञ्चयति न च निद्राया इत्यादिना। मूलाज्ञानेन अनावृतस्य व्यावहारिकजीवस्य जाग्रत्प्रपञ्चवृत्तान्तस्य च स्वप्नकाले केनचिदावरणाभावे यज्ञदत्तपुत्रोऽहमित्यादिभ्रमस्य स्वपितामहजीवद्दशानुभवस्य च अभावप्रसङ्गेन निद्राया एव भेदरूपत्वसिद्धेरिति सम्बन्धः। जाग्रत्काले ब्राह्मणत्वादिरूपसत्त्वे संशयविपर्य्ययोरभावमाह असन्दिग्धेति, असन्दिग्धाविपर्य्यस्तं यथा भवति तथा अभिमन्यमानस्येति सन्देहविपर्य्यासं भिन्नत्वमभिमानक्रियाविशेषणं स्वपितामहाल्ययादेर्जाग्रत्प्रपञ्चवृत्तान्तस्य तं देवदत्तपुत्रं प्रति सर्वदा अनावृतत्वेनैकरूपतया अवस्थाने हेतुमाह

न च एवं जीवस्यापि आवृतत्वात् स्वप्नप्रपञ्च-द्रष्टृत्वाभावप्रसङ्गः। स्वाप्नप्रपञ्चेन सह द्रष्टुर्जीवस्यापि प्रातिभासिकाध्यासात्। एवं च पुनर्जाग्रद्भोगप्रदकर्मोद्भूतौ बोधे व्यावहारिकजीवस्वरूपज्ञानात् स्वोपादाननिद्रारूपा-ज्ञाननिवर्त्तकादेव स्वाप्नप्रपञ्चबाधः। न च एवं तद्द्रष्टुः प्रातिभासिकजीवस्यापि ततो बाधे स्वप्ने करिणमन्वभूवमित्यनुसन्धानं न स्यादिति वाच्यम्। व्यावहारिकजीवे प्रातिभासिकजीवस्य अध्यस्ततया तदनुभवात् व्यावहारिकजीवस्य अनुसन्धानोपगमेऽपि अतिप्रसङ्गाभावादिति।

---

तदीयेति। देवदत्तपुत्रो हि स्वपितामहादिमरणं प्रथममनुभूय पश्चात् प्रतिमासं प्रतिसंवत्सरे च श्राद्धतर्पणादिकं करोति ततश्च तन्मरणादिगोचरानुभवस्मरणाभ्यासश्चिरपरिचयस्तेन स्वपितामहात्ययादौ संशयादिनिवृत्तिभाक्कालक्षणमनावृतत्वं सदा एकरूपेण वर्त्तते इत्यर्थः। जागरणे यथा देवदत्तपुत्रस्य व्याघ्रादिभ्रमाभावः स्वपितामहजीवद्दशानुभवाभावश्च तथा स्वप्नेऽपि अभावप्रसङ्गेन इत्यर्थः। तत्कालेति। निद्राकाले उत्पन्नो यो व्यावहारिकजगज्जीवयोः आवरको ज्ञानावस्थाभेदः तद्रूपत्वं निद्राया एव सिध्यति नान्यस्य आवरणविक्षेपशक्तिमत्त्वेन तस्या उपस्थितत्वादन्यस्यानुपस्थितत्वात् इत्यर्थः।

न चएवमिति निद्राया व्यावहारिकजीवाद्यावरकाज्ञानावस्थाविशेषरूपत्वसिद्धौ सत्यामित्यर्थः। प्रातिभासिकान्तःकरणे

ननु अनवच्छिन्नचैतन्येऽहङ्कारावच्छिन्नचैतन्ये वा स्वाप्नप्रपञ्चाध्यास इति प्रागुक्तं पक्षद्वयमपि अयुक्तम्। आद्ये स्वाप्नगजादेरहङ्कारोपहित-साक्षिणोऽविच्छिन्नदेशत्वेन सुखादिवत् अन्तःकरण-वृत्तिसंसर्गमनपेक्ष्य तेन प्रकाशनस्य चक्षुरादीनामु-परततया वृत्त्युदयासम्भवेन तत्संसर्गमपेक्ष्य तेन

---

चिप्रतिविम्बरूपस्य जीवान्तरस्य अभ्युपगमान्नैतच्चोद्यावकाश इत्याशयेन आह। स्वाप्नप्रपञ्चेन सह इति। एवं चेति। व्यावहा-रिकजीवगतेरेव स्वाप्नजीवजगदधिष्ठानत्वे सिद्धे सति इत्यर्थः। कर्मोद्भूते बोध इति कर्मजन्ये जागरण इत्यर्थः। जीवस्वरूपाज्ञा-नादिति मनुष्योऽहं ब्राह्मणोऽहं देवदत्तपुत्रोऽहमित्यादिरूपा-दित्यर्थः। उपलक्षणञ्च एतत् स्वपितामहात्ययादिज्ञानाच्च इत्यपि द्रष्टव्यम्। स्वपदं स्वप्नप्रपञ्चपरम्। न च एवमिति एवं शब्दार्थमेव आह। तद्द्रष्टुरिति तस्य स्वप्नप्रपञ्चस्य द्रष्टुर्व्याघ्रोऽहं शूद्रोऽहमि-त्यादिरूपेण स्वात्मानमभिन्यमानस्य इत्यर्थः। तत इति व्याव-हारिकजीवस्वरूपज्ञानादित्यर्थः। न स्यादिति अन्यानुभूतेऽर्थे अन्यस्य स्मरणायोगादिति भावः। अध्यस्ततयेति तथाच व्याव-हारिकप्रातिभासिकजीवयो-रधिष्ठानारोप्ययोस्तादात्म्यसत्त्वात् प्रातिभासिकजीवकर्तृकानुभवात् व्यावहारिकजीवस्य स्वप्नपदा-र्थानुसन्धानं सम्भवति इत्यर्थः। अतिप्रसङ्गेति यज्ञदत्तानुभूतार्थे विष्णुमित्रस्य अपि अनुसन्धानप्रसङ्गरूपातिप्रसङ्गाभावादित्यर्थः। तयोस्तादात्म्याभावादिति भावः।

ननु जीवत्रैविध्यपक्षे द्रष्टृदृश्यात्मकस्वप्नाध्यासाधिष्ठानत्वेन

प्रकाशनस्य च अयोगात्। द्वितीये इदं रजतमिति-वत् अहं गज इति वा अहं सुखीतिवत् अहं गज-वानिति वा अध्यासप्रसङ्गात्। अत्र केचिदाद्यपक्षं समर्थयन्ते।

---

उपगतस्य व्यावहारिकजीवादेर्मिथ्यात्वेन जड़तया स्वप्नप्रपञ्चा-वभासकत्वं न सम्भवति। न च चैतन्यमेव तदवभासकमिति वाच्यं तथा सति तस्यैव अधिष्ठानतया तत्सत्तास्फूर्त्तिरूपत्वास-म्भवे जड़स्य अधिष्ठानत्वाभ्युपगमायोगात् तर्हि तदेव अधिष्ठान-मस्तु इति चेत् न तत्रापि अनुपपत्तिसत्त्वादित्याह। ननु इत्यादिना। अनवच्छिन्नचैतन्यस्य अधिष्ठानत्वपक्षे स्वाप्नग-जादेर्देहात् वाह्यदेशस्थत्वं वक्तव्यं तथाच तस्य किं साक्षि-भास्यत्वमैन्द्रियकत्वं वा नाद्य इत्याह अहङ्कारेति। साक्षिण इति पञ्चमी विच्छेदोक्त्या साक्षिणः स्वाप्नगजादिना सह स्वतः संसर्गाभावो दर्शितः। अन्तःकरणवृत्तिसंसर्गमनपेक्ष्य स्वाप्नगजादेस्तेन प्रकाशनस्य तत्संसर्गमपेक्ष्य तेन प्रकाशनस्य च अयोगादिति सम्बन्धः। तेनेति पदद्वयं साक्षिपरं यथा सुखादेः सुखादिगोचरान्तःकरणवृत्तिसंसर्गमनपेक्ष्य तेन प्रकाशस्तथा तेन स्वाप्नगजादेः प्रकाशायोगादित्यर्थः। द्वितीयं निरस्यति चक्षुरादीनामिति। द्वितीय इति अहमनुभवगोच-राहङ्कारोपहितचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वपक्ष इत्यर्थः। किं गजादेस्तादात्म्येन तत्राध्यासः किं वा आधाराधेयभाव-लक्षणसंसर्गेण आद्यं दूषयति इदं रजतमिति। द्वितीयं निरा-करोति अहं सुखीति वदिति द्वितीयेऽहं गजवानितिवा अध्यास-प्रसङ्गादिति योजना।

अहङ्कारानवच्छिन्नं चैतन्यं न देहात् बहिः स्वाप्नप्रपञ्चस्य अधिष्ठानमुपेयते किन्तु तदन्तरेव।

अतएव दृश्यमानपरिमाणोचितदेशसम्पत्त्य-भावात् स्वाप्नगजादीनां मायामयत्वमुच्यते।

एवं च अन्तःकरणस्य देहात् वहिरस्वातन्त्र्यात् जागरणे वाह्यशुक्तीदमंशादिगोचरवृत्त्युत्पादाय चक्षुराद्यपेक्षायामपि देहान्तःकरणस्य स्वतन्त्रस्य स्वयमेव वृत्तिसम्भवात् देहान्तः अन्तःकरणवृत्त्य-भिव्यक्तस्य अनवच्छिन्नचैतन्यस्य अधिष्ठानत्वे न काचिदनुपपत्तिः।

---

अहङ्कारानवच्छिन्नेति अविद्यायां विम्बभूतमीश्वरचैतन्य-मिहानवच्छिन्नचैतन्यं विवक्षितमीश्वरचैतन्यस्यैव सर्वाधिष्ठान-त्वात् न अविद्याप्रतिविम्बरूपजीवचैतन्यं तस्य अनुपादानत्वा-दिति बोध्यम्। आन्तरचैतन्यस्यैव अधिष्ठानत्वे नियामकमाह।

अतएव इति आन्तरचैतन्यस्य एव अधिष्ठानत्वोपगमादेव इत्यर्थः। स्वप्नकाले दृश्यमानपरिमाणवतां गजादीनां शरीरस्या-न्तः उचितदेशसम्पत्त्यभावात् प्रातिभासिकत्वम् उच्यते सूत्रका-रादिभिः। शरीरात् वाह्यचैतन्यस्य अधिष्ठानत्वे तु जाग्रद्गजादी-नामिव स्वाप्नगजादीनामपि योग्यदेशलाभात् व्यावहारिकत्व-मेव स्यात् तथाच सूत्रादिविरोध इत्यर्थः।

एवञ्च इति आन्तरस्यैव चैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वे प्रमाणसिद्धे सति इत्यर्थः। ननु शरीरान्तर्गतस्य अपि ब्रह्मचैत-

अतएव यथा जागरणे संप्रयोगजन्यवृत्त्यभिव्यक्तशुक्तीदमंशावच्छिन्नचैतन्यस्थिताविद्या रूप्याकारेण विवर्त्तते तथा स्वप्नेऽपि देहस्य अन्तरन्तःकरणवृत्तौ निद्रादिदोषोपेतायामभिव्यक्तचैतन्यस्थाविद्या अदृष्टोद्बोधिता नानाविषयसंस्कारसहिता प्रपञ्चाकारेण विवर्त्ततामिति विवरणोपन्यासे भारतीतीर्थवचनमिति ।

---

न्यस्य आवृतत्वात् तत्र अध्यस्तानां स्वाप्नगजादीनामनवभासप्रसङ्गः । न च अन्तःकरणवृत्त्यावरणनाशे सति तेषामवभासः सम्भवतीति वाच्यम् । स्वप्ने चक्षुरादीनामुपरतत्वेन वृत्त्यसम्भवात् न च स्वयमेव अन्तःकरणवृत्तिस्तदा सम्भवतीति वाच्यं जागरणेऽपि तथा प्रसङ्गेन तदापि चक्षुराद्यपेक्षाभावप्रसङ्गादित्यत आह । अन्तःकरणस्येति स्वयमेव इति चक्षुरादिकमनपेक्ष्यैव इत्यर्थः । न काचिदिति अभिव्यक्तचैतन्यस्यैव अधिष्ठानत्वोपगमेन स्वप्नप्रपञ्चस्य अवभासानुपपत्तिर्वा प्रातिभासिकत्वानुपपत्तिर्वा नास्ति इत्यर्थः ।

अन्तःकरणवृत्त्यभिव्यक्तचैतन्यस्य अधिष्ठानत्वे सम्मतिमाह अतएव इति । अन्तःकरणवृत्त्यभिव्यक्तचैतन्यस्यैव अधिष्ठानत्वोपगमादित्यर्थः । विवर्त्तते परिणमते इत्यर्थः । ननु अन्तःकरणे चक्षुरादिनिरपेक्षाया वृत्तेः सदा सम्भवात् तदभिव्यक्ते चैतन्ये सदा सुलभे सदा स्वप्नाध्यासप्रसङ्ग इत्यत आह निद्रादीति । पित्तोद्रेकादिरादिशब्दार्थः । दोषोपप्लुतायां वृत्तावभिव्यक्तं यच्चैतन्यं तत्र विद्यमाना अविद्या इत्यर्थः । स्वप्नप्रपञ्चवैचित्र्यप्रयोजकमाह नानाविषयेति । जागरणे नाना-

अन्ये तु अनवच्छिन्नचैतन्यं न वृत्त्यभिव्यक्तं सत् स्वाप्नप्रपञ्चस्य अधिष्ठानम् अशब्दमूलकाऽनवच्छिन्नचैतन्यगोचरवृत्त्युदयासम्भवात् अहङ्काराद्यवच्छिन्नचैतन्य एव अहमाकारवृत्त्युदयदर्शनात्। तस्मात् स्वतोऽपरोक्षम् अहङ्काराद्यनवच्छिन्नं चैतन्यं तदधिष्ठानम्। अत एव संक्षेपशारीरके अपरोक्षरूपविषयभ्रमधीरपरोक्षम् आस्पदमपेक्ष्य भवेत्।

---

विधविषयानुभवजनिताः संस्कारा अन्तःकरणे तिष्ठन्ति तैः अदृष्टोद्बोधितैः सहिता अविद्या विचित्रप्रपञ्चाकारेण परिणमत इत्यर्थः।

इदानीमविद्यायां प्रतिविम्बभूतमनवच्छिन्नजीवं चैतन्यमेवाधिष्ठानमिति मतान्तरमाह अन्ये त्विति। पूर्वमते अनुपपत्तिमाह अनवच्छिन्नचैतन्यमिति। विम्बभूतमिति शेषः। अशब्दमूलकेति शुद्धब्रह्मण इव ईश्वरचैतन्यस्यापि शास्त्रैकगम्यत्वादिति भावः।

ननु अनवच्छिन्नेऽपि अविद्याप्रतिविम्बरूपजीवचैतन्ये शब्दनिरपेक्षाहमाकारवृत्त्युदयदर्शनात् ब्रह्मचैतन्येऽपि तथा किं न स्यादिति न इत्याह। अहङ्काराद्यवच्छिन्नचैतन्य इति इयं विषयसप्तमी। आदिपदं शरीरादिसंग्रहार्थं नतु अहङ्काराद्यनवच्छिन्नजीवचैतन्य इत्येवकारार्थः। जीवचैतन्यस्यापि व्यापकत्वं त्वम्पदार्थशोधकश्रुतितदनुकूलन्यायगम्यमेव इति दृष्टान्तासिद्धिरिति भावः। तस्मादिति विम्बभूतानवच्छिन्नब्रह्मचैतन्यस्याधिष्ठानत्वासम्भवादित्यर्थः। स्वत इति वृत्ति-

मनसा स्वतो नयनतो यदि वा स्वप्नभ्रमादिषु तथा प्रथितेः ।

---

मन्तरेणैव अभिव्यक्तमित्यर्थः । चैतन्यमिति पूर्वमत इव अन्तरमेव इति शेषः । अतएव इति स्वतोऽपरोक्षचैतन्यस्यैव स्वप्नाध्यासाधिष्ठानत्वेन स्वीकारादेव इत्यर्थः । अपरोक्षरूपा विषयस्य शुक्तिरजतादेर्या भ्रमरूपा धीः सा अपरोक्षमधिष्ठानमपेक्ष्य भवति । यद्वा अपरोक्षरूपस्य विषयस्य शुक्तिरजतादेर्या भ्रमरूपा धीः सा इत्यर्थः ।

तच्चाधिष्ठानापरोक्ष्यं केन भवति इत्यत आह मनसेत्यादिना । मनसा स्वतो वा यदि वा नयनत इति योजना तत्र प्रमाणमाह । स्वप्नभ्रमादिषु तथा प्रथितेरिति अन्वयादिना तथा प्रतीतेरित्यर्थः । तथा हि शुक्तीदमंशस्य नयनसन्निकर्षे सति तस्य रजताध्यासापेक्षितमापरोक्ष्यं भवति न अन्यथा इति अन्वयव्यतिरेकाभ्यां क्वचिदधिष्ठानापरोक्ष्यं नयनत इति प्रथितेः । तथा गगननैल्याद्यध्यासापेक्षितं गगनावच्छिन्नचैतन्यरूपस्य अधिष्ठानस्य आपरोक्ष्यं मनसा सम्भवतीति गम्यते । मनसा इत्यनेन गगनावच्छिन्नचैतन्यव्यञ्जिका आलोकादिगोचरचाक्षुषवृत्ति र्विवक्षिता । नीरूपगगनगोचरचाक्षुषवृत्तेरसम्भवात् चक्षुरुन्मीलनानन्तरमेव नीलं नभ इत्यादिप्रत्यक्षं न अन्यथा इति अन्वयव्यतिरेकाभ्यां गगनचैतन्याभिव्यक्तौ चाक्षुषवृत्तेरुपयोगावगमाच्च । तथा च फलबलादन्याकारवृत्त्यापि अन्यावच्छिन्नचैतन्याभिव्यक्तिरिष्यते । इदं च अद्वैतदीपिकादौ प्रपञ्चितमिति बोध्यम् । उदाहृतश्लोकस्य तात्पर्य्यमाह ।

इति श्लोकेन अपरोक्षाध्यासापेक्षितमधिष्ठानापरोक्ष्यं क्वचित् स्वतः क्वचिन्मानसवृत्त्या क्वचिद्बहिरिन्द्रियवृत्त्येत्यभिधाय स्वतोऽपरोक्षा चितिरत्र विभ्रमस्तथापि रूपाकृतिरेव जायते। मनो निमित्तं स्वपने मुहुर्मुहुः विनापि चक्षुर्विषयं स्वमास्पदम्। मनोऽवगम्येऽप्यपरोक्षताबलात्तथाम्बरे रूपमुपोल्लिखन् भ्रमः। सितादिभेदे बहुधा समीक्ष्यते यथाक्षगम्ये रजतादिविभ्रम इत्याद्यनन्तरश्लोकेन स्वप्नाध्यासे स्वतोऽधिष्ठानापरोक्ष्यमुदाहृतम्।

न च अहङ्कारानवच्छिन्नचैतन्यमात्रमावृतमिति वृत्तिमन्तरेण न तदभिव्यक्तिरिति वाच्यम्। ब्रह्मचैतन्यमेव आवृतमविद्याप्रतिबिम्बजीवचैतन्यम् अहङ्कारानवच्छिन्नम् अपि अनावृतमित्यभ्युपगमात्।

---

इति श्लोकेन इति अत्रेति प्रकृतेऽपि भ्रमे स्वप्नाध्यासरूपे स्वतोऽपरोक्षचैतन्यमधिष्ठानमित्यर्थः। अतएव संक्षेपशारीरके स्वप्नाध्यासे स्वतोऽधिष्ठानापरोक्ष्यमुदाहृतमिति सम्बन्धः।

स्वप्नाध्यासाधिष्ठानचैतन्यापरोक्ष्यस्य स्वतःसिद्धत्वमाक्षेपसमाधानाभ्यां दर्शयति। न च अहङ्कारावच्छिन्नेति मात्रपदं कार्त्स्न्यार्थकं तथा च शरीरान्तर्गतमपि चैतन्य-

एवं च अहङ्कारानवच्छिन्नचैतन्येऽध्यस्यमाने स्वाप्नगजादौ तत्समनियताधिष्ठानगोचरान्तःकरणादिवृत्तिकृताभेदाभिव्यक्त्या प्रमातृचैतन्यस्यापि इदं पश्यामि इति व्यवहार इत्याहुः ।

अपरे तु द्वितीयपक्षं समर्थयन्ते । अहङ्कारावच्छिन्नचैतन्यमधिष्ठानमिति अहङ्कारस्य विशेषणभावेन अधिष्ठानकोटिप्रवेशो न उपेयते किन्तु अहङ्कारोपहितं तत्प्रतिबिम्बरूपचैतन्यमात्रमधि-

---

मावृतमेव इति भावः। वृत्तिमिति वृत्तिरपि अनवच्छिन्नगोचरा शब्दमन्तरेण न सम्भवतीति प्रागुक्तमिति ध्येयम्। अनावृतमिति तदेव स्वप्नाध्यासाधिष्ठानमिति भावः ।

ननु सर्वगतस्य जीवचैतन्यस्य अनावृतत्वे तस्य घटादिविषयदेशे सदा सत्त्वे न चाक्षुषादिवृत्तिमनपेक्ष्य सदा सर्वविषयावभासप्रसङ्ग इति चेत् न। सर्वत्र विद्यमानस्यापि तस्य अनुपादानतया घटादिविषयैः सह सम्बन्धाभावेन सम्बन्धार्थतया वृत्त्यपेक्षायाः प्रतिकर्मव्यवस्थायामुक्तत्वात् ।

ननु अविद्याप्रतिबिम्बरूपजीवचैतन्ये शरीरान्तर्गते विशेषणत्वेन उपाधित्वेन वा अहङ्कारनिरपेक्षे अनवच्छिन्नशब्दिते स्वप्नाध्यासोपगमे सति तस्यैव स्वप्नकाले द्रष्टृत्वं स्यात् न तु प्रमातुस्तस्य अहङ्कारतादात्म्यापत्त्या तदवच्छिन्नस्य ततो भिन्नत्वात् न चेष्टापत्तिः। स्वप्नकाले अहं श्रीकृष्णं पश्यामि इति प्रमातुः स्वप्नपदार्थद्रष्टृत्वानुभवविरोधापत्तेरित्यत आह। एवं चेति। स्वतोऽपरोक्षजीवचैतन्यस्य अधिष्ठानत्वे सति इत्यर्थः। तत्-

ष्ठानमित्यतो न अहं गज इत्याद्यनुभवप्रसङ्ग इति एवं शुक्तिरजतमपि शुक्तीदमंशावच्छिन्नचैतन्य-प्रतिबिम्बे वृत्तिमदन्तःकरणगतेऽध्यस्यते शुक्तीद-मंशावच्छिन्नबिम्बचैतन्ये सर्वसाधारणे तस्य अध्यासे सुखादिवदनन्यवेद्यत्वाभावप्रसङ्गादिति केचित्।

---

समनियतेति यदा गजादिरध्यस्यते तदेव तदधिष्ठानगोच-रान्तःकरणवृत्तिरविद्यावृत्तिर्वा जायते। तथा च स्वाप्नगजाद्यधि-ष्ठानचैतन्यस्य वृत्तिद्वारा वृत्तिमदन्तःकरणसम्बन्धेन प्रमातृत्व-प्राप्तौ सत्यां प्रमातुस्तद्द्रष्टृत्वसम्भवे च इत्यर्थः। अभेदाभिव्यक्त्येति उक्तप्रकारेण प्रमातृविषयचैतन्ययोरभेदाभिव्यक्त्या इत्यर्थः।

द्वितीयमिति अवच्छिन्नचैतन्यं स्वप्नाध्यासाधिष्ठानमिति पच-मित्यर्थः। अयं गज इति प्रत्ययस्थाने अहं गज इत्यादिप्रत्यय-प्रसङ्गवारणाय अहङ्कारांशस्याधिष्ठानत्वं नाङ्गीक्रियते चेत् तर्हि अनवच्छिन्नस्य अधिष्ठानत्वमागतमिति पूर्वमताभेदप्रसक्ति-रिति शङ्कते किन्तु इति। अन्तःकरणचैतन्यप्रतिबिम्बभूतं यज्जीवचैतन्यं तन्मात्रमधिष्ठानमुपेयते तच्च परिच्छिन्नमेव उपाधेः परिच्छिन्नत्वादिति परिहरति।

अहङ्कारोपहितमिति अत इति अहमुल्लेखप्रयोजकस्य अहङ्कारात्मकान्तःकरणस्य अधिष्ठानकोटावननुप्रवेशादित्यर्थः। अविद्यायां बिम्बभूतब्रह्मचैतन्यस्य तस्यां प्रतिबिम्बभूतजी-वचैतन्यस्य वा स्वप्नप्रपञ्चाध्यासाधिष्ठानत्वमते तयोः सर्व-प्रमातृसाधारणत्वात् स्वप्नप्रपञ्चस्यापि साधारण्यं स्यात् अन्तःकरणप्रतिबिम्बचैतन्यस्य तदधिष्ठानत्वे तु साधारण्यप्रसङ्ग-दोषो नास्ति इत्याशयेन अस्य द्वितीयपचस्य प्रवृत्तिरिति

केचित्तु बिम्बचैतन्य एव तदध्यासमुपेत्य यदीयाज्ञानोपादानकं यत् तत् तस्यैव प्रत्यक्षं न जीवान्तरस्येति अनन्यवेद्यत्वमुपपादयन्ति ।

---

बोध्यम् । ननु एवं शुक्तिरजतादेरसाधारण्यं न स्यात् तदधिष्ठानचैतन्यस्य साधारणत्वादित्याशङ्क्य हेत्वसिद्धिमाह । एवमिति वृत्तिमदन्तःकरणगत इति शुक्तीदमंशसंसृष्टायां वृत्तौ शुक्तीदमंशावच्छिन्नब्रह्मचैतन्यस्य यः प्रतिविम्बस्तस्मिन् अध्यस्यते स च प्रतिबिम्बो वृत्तिगत एव तस्य वृत्तिवृत्तिमतोरभेदोपचारात् । वृत्तिमदन्तःकरणगतत्वोक्तिरनन्यवेद्यत्वस्फुटीकरणाय इति बोध्यम् । वृत्तिगतस्य ब्रह्मप्रतिबिम्बस्य शुक्तिरजताधिष्ठानत्वानुपगमेन साधारण्यप्रसङ्गतादवस्थ्यमभिप्रेत्याह शुक्तीदमंशावच्छिन्नेति । सुखादेरिव शुक्तिरजतादेर्यदनन्यवेद्यत्वं तस्य अभावप्रसङ्गादित्यर्थः । देवदत्तसुखदुःखरागद्वेषादिकं देवदत्तादन्यस्य वेद्यं प्रत्यक्षं न भवति इति अनन्यवेद्यं तत् इत्यर्थः ।

अधिष्ठानचैतन्यस्य साधारणत्वेऽपि शुक्तिरजताद्युपादानाज्ञानस्य असाधारण्यात् शुक्तिरजतादेरसाधारण्यमित्याह । केचित्त्विति बिम्बचैतन्य एव इति वृत्तिगतप्रतिबिम्बं प्रतिबिम्बचैतन्य इत्यर्थः । यद्वा अविद्याप्रतिबिम्बं प्रतिबिम्बभूते ब्रह्मचैतन्ये शुक्तीदमंशावच्छिन्न इत्यर्थः । नत्वसाधारणे वृत्तिप्रतिबिम्ब इत्येवकारार्थः । यदीयेति यत् रजतं यत्पुरुषीयाज्ञानोपादानकं तत् रजतं तस्यैव पुरुषस्य प्रत्यक्षं नान्यस्येति कल्पनोपपत्तेर्न शुक्तिरजतादेः साधारण्यप्रसङ्ग इत्यर्थः ।

स्वाप्नपदार्थानुभवप्रकारनिरूपणम्।

ननु शुक्तिरजताध्यासे चाक्षुषत्वानुभवः साक्षात् वा अधिष्ठानज्ञानद्वारा तदपेक्षणात् वा समर्थ्यते स्वाप्नगजादिचाक्षुषत्वानुभवः कथं समर्थनीयः।

उच्यते। न तावत् तत्समर्थनाय स्वाप्नदेहवद्विषयवत् च इन्द्रियाणामपि प्रातिभासिको विवर्त्तः शक्यते वक्तुं प्रातिभासिकस्य अज्ञातसत्त्वाभावात्। इन्द्रियाणां च अतीन्द्रियाणां सत्त्वे अज्ञातसत्त्वस्य वाच्यत्वात्।

---

एवं स्वप्नप्रपञ्चाध्यासस्य अधिष्ठानं निरूप्य स्वाप्नपदार्थानुभवः किमैन्द्रियकः किं वा साक्षिरूप इति संशये निर्णयाय आक्षेपमवतारयति। ननु इति साक्षाद्वेति इदं च शुक्तिरजतादेरैन्द्रियकत्वमिति कवितार्किकमतानुसारेणेति बोध्यम्। शुक्तिरजतादेः साक्षिभास्यत्वमतानुसारेण आह। अधिष्ठानज्ञानद्वारेति। धर्मिज्ञानद्वारा चक्षुरपेक्षत्वात् शुक्तिरजतादेरित्यर्थः। कथमिति स्वाप्नगजादिचाक्षुषत्वानुभवो हि वासनामयैरिन्द्रियैर्व्यावहारिकेन्द्रियैर्वा सूक्ष्मेन्द्रियैर्वा आरोपरूपतया वा समर्थनीयतया सम्भाव्यते। तथा च स केन प्रकारेण समर्थनीय इति प्रश्नार्थः।

चतुर्थप्रकारेण तत्समर्थनं प्रतिजानीते उच्यत इति। आद्यं प्रकारत्रयं निराकरोति न तावदित्यादिना। वासनामयैः प्रातिभासिकैरिन्द्रियैश्चाक्षुषत्वानुभवसमर्थनप्रकारं प्रथमं दूषयति स्वाप्नदेहवदिति। स्वाप्नदेहः स्वाप्नाश्च विषयाः प्रातिभासिकाश्चैतन्यविवर्त्तरूपा अभ्युपगम्यन्ते न तथा इन्द्रियाणां स्वरूप-

नापि व्यावहारिकाणामेव इन्द्रियाणां स्वस्वगोलकेभ्यो निष्क्रम्य स्वाप्नदेहमाश्रित्य स्वस्वविषयग्राहकत्वं वक्तुं शक्यते स्वप्नसमये तेषां व्यापाराहित्यरूपोपरतिश्रवणात् ।

व्यावहारिकस्य स्पर्शनेन्द्रियस्य स्वोचितव्यावहारिकदेशसम्प्रत्तिविधुरेऽन्तःशरीरे स्वाधिकपरिमाणकृत्स्नस्वाप्नशरीरव्यापित्वायोगाच्च ।

---

भूतचैतन्यविवर्त्तः प्रातिभासिकोऽभ्युपगन्तुं शक्यते इत्यर्थः । वाच्यत्वादिति तेषाम् अज्ञातसत्त्वनियमस्य दर्शनाद्दृष्टानुसारित्वाच्च कल्पनाया इति भावः ।

द्वितीयं प्रकारं निराकरोति न अपीति । ननु व्यावहारिकेन्द्रियैः स्वाप्नगजादीनां चाक्षुषत्वानुभवसमर्थनप्रकारस्य उपपत्तिरेव नास्ति तेषां जाग्रद्देहस्थत्वेन स्वप्नदेहस्थत्वाभावादित्याशङ्क्याह । स्वस्वेति श्रवणादिति य एष सुप्तेषु जागर्तीत्यादिश्रुतिषु इति शेषः । श्रुतौ सुप्तेषु इति अनन्तरं करणेषु इति शेषः । करणानां स्वापो नाम उपरतिः सा च स्वप्नसमये व्यापाराहित्यरूपैव नतु तेषां स्वरूपोपरतिः तस्याः सुषुप्तावेव श्रवणादिति बोध्यम् ।

त्वगिन्द्रियमात्रे दोषान्तरमाह व्यावहारिकस्येति । स्वस्य स्पर्शनेन्द्रियस्य उचितो यो व्यावहारिकदेशस्तत्सम्पत्तिविधुरं शरीरस्यान्तःप्रदेशे स्थितं व्यावहारिकत्वगिन्द्रियपरिमाणापेक्षया कदाचिदधिकपरिमाणवत् स्वप्नदेहं कृत्स्नं न व्याप्नुयात् त्वगिन्द्रियमित्यर्थः । व्यावहारिकस्पर्शनेन्द्रियस्य

तदेकदेशाश्रयत्वे च तस्य स्वाप्नजलावगाहन-जन्यसर्वाङ्गीणशीतस्पर्शानिर्वाहात् अत एव स्वप्ने जाग्रदिन्द्रियाणामुपरतौ अपि तैजसव्यवहारोपयुक्तानि सूक्ष्मशरीरावयवभूतानि सूक्ष्मेन्द्रियाणि सन्ति इति तैः स्वाप्नपदार्थानामैन्द्रियकत्वमित्युपपादनशङ्कापि निरस्ता। जाग्रदिन्द्रियव्यतिरिक्त-सूक्ष्मेन्द्रियाप्रसिद्धेः।

किं च अत्र अयं पुरुषः स्वयंज्योतिरिति जागरे आदित्यादिज्योतिर्व्यतिकरात् चक्षुरादिवृत्तिसञ्चाराच्च दुर्विवेकमात्मनः स्वयंज्योतिष्ट्वमिति स्वप्ना-

---

उचितदेशकालसम्पत्तिवैधुर्यविशेषणेन तस्य स्वाप्नदेहप्रवेशाय अन्तःशरीरे गमनमेव न सम्भवतीति सूचितम्।

यदि व्यावहारिकस्पर्शनेन्द्रियस्य कृत्स्नस्वाप्नदेहव्यापित्वायोगस्तर्हि स्वाप्नदेहैकदेशाश्रयत्वमेव अस्तु को दोषस्तत्राह तदेकदेशेति तस्येति स्पर्शनेन्द्रियस्य इत्यर्थः। तृतीयं प्रकारं निराकरोति अतएवेति। व्यावहारिकस्पर्शनेन्द्रियस्यैव स्वाधिकपरिमाणकृत्स्नस्वप्नशरीरव्यापित्वायोगे सति तदवयवभूत-सूक्ष्मस्पर्शनेन्द्रियस्य सुतरां स्वप्नदेहव्यापित्वायोगादेव इत्यर्थः। तैजसः स्वप्नावस्थागतो जीवः सूक्ष्मशरीरशब्देन व्यावहारिकाणि एकादशेन्द्रियाणि उच्यन्ते स्पर्शनेन्द्रियमात्रे दोषमतिदेशेन दर्शयित्वा साधारणदोषमाह जाग्रदिन्द्रियेति।

ननु अप्रसिद्धान्यपि स्वप्नकाले पदार्थानां चाक्षुषत्वाद्यनुभवानुरोधेन कल्प्यन्त इत्याशङ्क्य श्रुतिविरोधश्चैवमित्याह

वस्थामधिकृत्य तत्र आत्मनः स्वयंज्योतिष्ट्वं प्रतिपादयति। अन्यथा तस्य सर्वदा स्वयंज्योतिष्ट्वे अत्रेति वैयर्थ्यात्।

---

किञ्च अत्रेति। श्रुतौ अत्र इति पदेन स्वप्नावस्थाग्रहणस्य तात्पर्य्यमाह जागर इति। जागरे कार्य्यकरणसङ्घातानामासनगमनागमनादिलक्षणव्यवहारसाधनत्वेन आदित्यादिज्योतींषि व्यवह्रियमाणपदार्थैः सह सङ्कीर्णानि तिष्ठन्ति तथा व्यवहारसाधनत्वेनैव चक्षुरादिजन्या वृत्तयो विषयदेशं प्रति गच्छन्ति इत्यर्थः। व्यतिकरः सम्पर्कः संसर्ग इति यावत्। जागरे दुर्विवेकमिति सम्बन्धः दुःखेन विवेको निर्णयो यस्य तद्दुर्विवेकमनायासेन निर्णेतुमशक्यमिति यावत्। आत्मनः स्वयं ज्योतिः सामान्यानवभास्यत्वे सति स्वव्यतिरिक्तसकलावभासकत्वयोग्यत्वं तच्च जागरे ग्रहीतुमशक्यं तथा हि आत्मव्यतिरिक्तस्य सर्वस्य आत्ममात्रावभास्यत्वं वक्तुं न शक्यते। आदित्यादिज्योतिषां चक्षुरादिजन्यवृत्तिज्ञानानाञ्च लोके जगदवभासकत्वेन प्रसिद्धानां सत्त्वात् आत्मनोऽप्यहमितिज्ञानप्रकाश्यत्वेन तस्यान्यानवभास्यत्वस्य वक्तुमशक्यत्वाच्चेति शङ्कायां जागरे परिहर्त्तुमशक्यत्वेन जागरे स्वयं ज्योतिष्ट्वनिर्णयायोगात् स्वप्नावस्थायान्तु जागरणे प्रसिद्धानामादित्यादिज्योतिषां चक्षुरादिजन्यज्ञानानाञ्च अभावादात्मचैतन्यमात्रावभास्यं स्वाप्नगजादीति निर्णयः सम्भवति। तथा अहमिति ज्ञानं वृत्तिरूपमात्मनः प्रकाशकं न भवतीति वक्ष्यते तथा च अन्यानवभास्यत्वे सति सकलजगदवभासकत्वयोग्यत्वरूपं स्वयं ज्योतिष्ट्वमात्मनः स्वप्नावस्थासाक्षित्वेन निर्णेतुं शक्यमित्यर्थः।

ननु स्वप्नदशायामेव तस्य स्वयं ज्योतिष्ट्वं नतु अवस्थान्तर

तत्र यदि स्वप्नेऽपि चक्षुरादिवृत्तिसंस्कारः कल्प्येत तदा तत्र अपि जागरे इव तस्य स्वयंज्योतिष्ट्वं दुर्विवेकं स्याद् इत्युदाहृता श्रुतिः पीड्येत ।

ननु स्वप्ने चक्षुराद्युपरमकल्पनेऽपि अन्तःकरणमनुपरतमास्ते इति परिशेषासिद्धेर्न स्वयंज्योतिष्ट्वविवेकः ।

मैवम् । कर्त्ता शास्त्रार्थवत्त्वादित्यधिकरणे

---

यथाश्रुतार्थ एव श्रुतेस्तात्पर्य्यं किं न स्यादिति न इत्याह । अन्यथा इति । श्रुतिः स्वप्नावस्थामाश्रित्य अतत्साक्षित्वेन स्वयंज्योतिष्ट्वमात्मनः सुविवेकमिति तात्पर्य्यात्मकस्पन इत्यर्थः । सर्वदा इति तमेव भान्तमनुभाति सर्वमित्यादिश्रुतिपर्य्यालोचनया तस्य सर्वदा स्वयंज्योतिष्टनिश्चयादिति भावः । अत्रेति इति अत्रेति विशेषणस्य व्यावर्त्तकत्वासम्भवेन व्यर्थत्वं स्यादतो न यथाश्रुतार्थे तात्पर्य्यं किन्तु उक्तार्थे तात्पर्य्यमिति भावः ।

एवं श्रुतितात्पर्य्यं निरूप्य स्वप्नकाले चक्षुरादिव्यापारकल्पनं तद्बाधितमित्याह तत्रेति । स्वयं ज्योतिष्ट्वं स्वप्नावस्थासाक्षित्वेन सुगममित्यत्र श्रुतितात्पर्य्ये सिद्धे सति इत्यर्थः ।

ननु स्वाप्नजगतोऽवभासकान्तराभावादात्ममात्रभास्यत्वम् इत्युक्तमयुक्तमिति शङ्कते । ननु इति । अनुपरतमास्ते इतीति तथाच मनस एव स्वाप्नजगदवभासकत्वसम्भवादवभासकान्तराभावरूपपरिशेषासिद्धिरित्यर्थः । स्वप्नावस्थायां मनसो ज्ञानकारणत्वमसिद्धमतस्तस्य स्वाप्नजगदवभासकत्वासम्भवात् परिशेषसिद्धिरिति परिहरति मैवम् इति ।

[ व्या० सू० अ० २ पा० ३ सू० ३३ ] न्यायनिर्णयोक्तरीत्या अन्तःकरणस्य चक्षुरादिकरणान्तरनिरपेक्षस्य ज्ञानासाधनत्वात् वा तत्त्वप्रदीपिकोक्तरीत्या स्वप्ने तस्यैव गजाद्याकारेण परिणामेन ज्ञानकर्मतया अवस्थितत्वेन तदानीं ज्ञानसाधनत्वायोगाद् वा परिशेषोपपत्तेः ।

न च स्वप्ने अन्तःकरणवृत्त्यभावे उत्थितस्य स्वप्नदृष्टगजाद्यनुसन्धानानुपपत्तिः । सुषुप्तिकृप्तया अविद्यावृत्त्या तदुपपत्तेः ।

सुषुप्तौ तदवस्थोपहितमेव स्वरूपचैतन्य मज्ञा-

---

आत्मा कर्त्ता भवितुमर्हति तथा सति कर्त्ता विज्ञानात्मा पुरुष इत्यादिशास्त्रस्यार्थवत्त्वोपपत्तेरिति सूत्रार्थः । उक्तरीत्येति मनस उपादानत्वेन स्वतो ज्ञानकरणत्वं नास्ति इत्युक्तरीत्येत्यर्थः । तत्त्वप्रदीपिकोक्तरीत्येति स्वप्ने मनस एव विविधसंस्कारविशिष्टस्य स्वप्नप्रपञ्चाकारेण परिणामित्वं नतु अविद्यायास्तस्याः संस्काराश्रयत्वाभावेन विचित्रपदार्थपरिणामित्वायोगादित्युक्तरीत्या इत्यर्थः । कर्मतयेति विषयत्वेनैव उपक्षीणस्य विषयित्वरूपप्रकाशकत्वाभावादित्यर्थः । तदानीमित्यनेन अस्तु वा जागरणे ज्ञानकारणत्वं, तथापि स्वप्ने तन्नोपेयते तस्य विषयत्वेनैव अवस्थितत्वादिति सूचितम् अनुपपत्तिरिति संस्काराभावादिति भावः ।

नसुखादिप्रकाशः उत्थितस्य अनुसन्धानमुपाधिभूतावस्थाविनाशजन्यसंस्कारेणेति वेदान्तकौमुदीग्रभिमते सुषुप्तौ अविद्यावृत्त्यभावपक्षे इह अपि स्वाप्नगजादिभासकचैतन्योपाधि-भूत-स्वप्नावस्थाविनाशजन्यसंस्कारात् अनुसन्धानोपपत्तेश्च।

अथ वा तदेतत् सत्त्वं येन स्वप्नं पश्यति इत्यादिश्रुतेरस्तु स्वप्नेऽपि कल्पतरूक्तरीत्या स्वाप्नगजादिगोचरान्तःकरणवृत्तिः।

न च तावता परिशेषासिद्धिः अन्तःकरणस्य

---

ननु सुषुप्तावपि अविद्यावृत्ति र्न कल्पनीया सुषुप्त्यादिसाक्षिचैतन्यस्य नित्यत्वेऽपि साक्षिभास्याया: सुषुप्त्यवस्थाया विनाशित्वेन विषयभूतसुषुप्त्यवस्थाविशिष्टवेषेण तत्साक्षिणो नाशलक्षणसंस्कारसम्भवात् सुषुप्तिसुखादीनाम् अनुसन्धानोपपत्तिरिति चेत् तर्हि स्वप्नसाक्षिणोऽपि प्रातिभासिकविषयविशिष्टवेषेण नाशलक्षणसंस्कारसम्भवात् स्वाप्नदृष्टगजाद्यनुसन्धानोपपत्तिरिति आह सुषुप्ताविति। तत्पदं सुषुप्तिपरं अज्ञानसुखादिप्रकाश इति अज्ञानाद्यनुभव इत्यर्थः। इह अपीति स्वाप्नावस्थायामपि इत्यर्थः। उपाधिभूतेति विषयतया उपाधिभूत इत्यर्थः। जाग्रत इव स्वप्नेऽपि गजादिगोचरान्तःकरणवृत्तिरेव उपेयते अतो न संस्काराभावशङ्कावकाशः। न च तदा अन्तःकरणवृत्तिसत्त्वे परिशेषासिद्धिरिति वाच्यम्।

परिशेषस्यापि लोकदृष्ट्या उपपत्तेरिति मतान्तरमाह

अहमिति गृह्यमाणस्य सर्वात्मना जीवैक्येन अध्यस्ततया लोकदृष्ट्या तस्य तद्व्यतिरेकाप्रसिद्धेः परिशेषार्थं चक्षुरादिव्यापाराभावमात्रस्यैव अपेक्षितत्वात् ।

प्रसिद्धदृश्यमात्रं दृगवभासयोग्यमिति निश्चयसत्त्वेन परिशेषार्थमन्यानपेक्षणात् । तस्मात् स्वप्ने सर्वथापि चक्षुरादिव्यापारासम्भवात् स्वाप्नगजादौ चाक्षुषत्वाद्यनुभवो भ्रम एव ।

ननु स्वप्न ऽपि चक्षुरुन्मीलने गजाद्यनुभवस्तन्निमी-

---

अथवा इति । सत्त्वादिशब्दितान्तःकरणस्य तृतीया श्रुत्या स्वाप्नगजादिगोचरज्ञानकरणत्वं भाति । तथा च श्रुतिप्रामाण्यात् स्वप्ने चक्षुरादिजन्यवृत्त्यभावेऽपि मानसवृत्तिरस्ति अतो न संस्कारानुपपत्तिरिति कल्पतरूक्तरीत्या इत्यर्थः । तावता इत्यस्यान्तःकरणवृत्तिसद्भावमात्रेण इत्यर्थः । अन्तःकरणस्य सर्वात्मना जीवचैतन्यैक्येन अध्यस्ततया अहं पश्यामि इत्यादिरूपेण द्रष्टृतया गृह्यमाणस्य अज्ञदृष्ट्या तस्मात् चिदात्मनः सकाशादन्तःकरणस्य भेदाप्रसिद्ध्या परिशेषार्थं लोकप्रसिद्धद्रष्टृव्यतिरिक्तकरणादिव्यापाराभावस्यैव अपेक्षितत्वात् तावता परिशेषासिद्धिर्न च इत्यर्थः । एतदुक्तं भवति अन्तःकरणवृत्तिलक्षणो व्यापारो वस्तुतः करणव्यापारोऽपि प्रतीतितो द्रष्टृव्यापारो भवति ।

अन्तःकरणस्य द्रष्टृत्वेन गृहीतत्वात् लोकैरिति स्वयंज्योतिष्ट्वनिर्णयप्रकारं दर्शयति प्रसिद्धेति । पूर्वमुच्यत इत्य-

लभे नेति जागर इव गजाद्यनुभवस्य चक्षुरुन्मीलनाद्यनुविधानं प्रतीयत इति चेच्चक्षुषा रजतं पश्यामि इत्यनुभववदयमपि कश्चित् स्वाप्नभ्रमो भविष्यति। यत् केवलसाक्षिरूपे स्वाप्नगजाद्यनुभवे चक्षुराद्यनुविधानं तदनुविधायिनी वृत्तिर्वा अध्यस्यते।

किमिव हि दुर्घटमपि भ्रमं माया न करोति विशेषतो निद्रारूपेण परिणता यस्या माहात्म्यात् स्वप्ने रथः प्रतीतः क्षणेन मनुष्यः प्रतीयते स च

---

नेन सूचितां स्वाप्नपदार्थेषु चाक्षुषत्वाद्यनुभवस्य गतिमिदानीं प्रपञ्चयति तस्मादिति पञ्चमीं व्याचष्टे सर्वथा इति पूर्वोक्तसर्वप्रकारैरपि इत्यर्थः। स्वप्नानुभवस्य साक्षिरूपत्वे चक्षुराद्यनुविधानविरोधमाशङ्क्य दृष्टान्तेन समाधत्ते स्वप्नेऽपि इत्यादिना तदनुविधायिनी इति जागरे चक्षुराद्यनुविधायिनी या प्रसिद्धा वृत्तिः सा स्वप्नसाक्षिणि अध्यस्यत इति यथाश्रुतार्थो न ग्राह्यः। अन्यथाख्यातिप्रसङ्गात् किन्तु तदेतत् सत्त्वं येन स्वप्नं पश्यति इति श्रुत्यनुसारेण कल्पतरुकारैर्या गजादिगोचरमानसवृत्तिरुपेता तस्यां तदनुविधायित्वमेव अध्यस्यत इत्यर्थः। तथा च केवलसाक्षिरूपे स्वाप्नगजाद्यनुभवे चक्षुराद्यनुविधानं तदनुविधायिनी वृत्तिर्वा तत्राध्यस्यते इति यत् तच्च भ्रममात्रमित्यर्थः।

ननु एतावान् भ्रमो दुर्घट इत्याशङ्क्याह। किमिव हीति। दुर्घटमपि भ्रमं माया किमिव न करोति इति सम्बन्धः।

त्वेन मार्जारः स्वप्नद्रष्टुश्च न पूर्वापरविरोधानुसन्धानम् ।

तस्मात् अन्वयाद्यनुविधानप्रतीतितौल्येऽपि जाग्रद्गजाद्यनुभव एव चक्षुरादिजन्यो न स्वाप्नगजाद्यनुभवः ।

दृष्टिसृष्टिवादिनस्तु कल्पितस्य अज्ञातसत्त्वमनुपपन्नमिति कृत्स्नस्य जाग्रत्प्रपञ्चस्य दृष्टिसमसमयां सृष्टिमुपेत्य घटादिदृष्टेश्चक्षुःसन्निकर्षानुविधानप्रतीतिं दृष्टेः पूर्वं घटाद्यभावेन असङ्गच्छमानां

---

किमिव केन दृष्टान्ते एव करोति। दुर्घटाकरणे मायाया दृष्टान्तो नास्ति इत्यर्थः। प्रत्युत तस्यास्तत्कारित्वम् ऐन्द्रजालकमायादौ प्रसिद्धमिति हिशब्दार्थः। वियदादिप्रपञ्चभ्रमहेतुभूता माया दुर्घटमपि प्रपञ्चभ्रमं च उपस्थितरूपं घटयति निद्रारूपेण परिणता सा ततो विलक्षणमेव भ्रमं कारयतीति मत्वा विशेषत इत्युक्तं यस्या इति निद्रारूपेण परिणताया इत्यर्थः।

स्वप्ने चाक्षुषत्वाद्यनुभवस्य मतिनिरूपणमुपसंहरति तस्मादिति। स्वप्ने चक्षुरादिव्यापारासम्भवादित्यर्थः। ये तु अधिकारिणो बहुविधज्ञानकर्मानुष्ठानासादितनिरतिशयपरमेश्वरप्रसादमहिम्ना नितान्तनिर्मलीकृतान्तःकरणाः सन्तो जागरेऽपि स्वप्नादिविशेषं न पश्यन्ति तान् ब्रह्मविद्याकामान् अधिकृत्य प्रवृत्ताः कृत्स्नस्य जगतः प्रबोधस्वप्नावस्थयोः

स्वप्नवदेव समर्थयमाना जाग्रद्घटाद्यनुभवोऽपि न चाक्षुष इत्याहुः।

सृष्टिकल्पकनिरूपणम्।

ननु दृष्टिसृष्टिमवलम्ब्य कृत्स्नस्य जाग्रत्-प्रपञ्चस्य कल्पितत्वोपगमे कः कल्पको निरुपाधि-रात्मा वा अविद्योपहितो वा। नाद्यः। मोक्षे-ऽपि साधनान्तरनिरपेक्षस्य कल्पकस्य सत्त्वेन प्रप-ञ्चानुवृत्त्या संसाराविशेषप्रसङ्गात्। न द्वितीयः। अविद्याया अपि कल्पनीयत्वेन तत्कल्पनात् प्रागेव कल्पकसिद्धेर्वक्तव्यत्वात्।

---

प्रभवप्रलयप्रतिपादिकां श्रुतिमनुसृत्य दृष्टिसृष्टिवादः पूर्वा-चार्य्यैर्निरूपितस्तं स्वप्नविचारेण बुद्धिमागतं दर्शयति दृष्टि-स्थितिवादिनस्त्विति। दृष्ट्या सह समः समयो यस्याः सा तां सृष्टिं कृत्स्नस्य जाग्रत्प्रपञ्चस्य उपेत्य इत्यत्र पूर्ववाक्येन हेतुमाह। कल्पितस्येति स्वाप्नप्रपञ्चस्येव इत्यर्थः। घटादिदृष्टे-र्या अनुविधानप्रतीतिस्तामसङ्गच्छमानां स्वप्नवदेव भ्रममात्र-रूपां समर्थयमाना इति सम्बन्धः। असङ्गच्छमानत्वे हेतुर्दृष्टेः पूर्वं घटाद्यभावेन इति। तत्र च हेतुर्दृष्टिसमसमया सृष्टिः न चाक्षुष इति किन्तु स्वप्नानुभववदेव केवलसाक्षिरूप इत्यर्थः।

कल्पितत्वोपगम इति प्रातिभासिकत्वोपगम इत्यर्थः। किं-शब्दसूचितं विकल्पं दर्शयति निरुपाधिरिति निरपेक्षचिदा-त्मैव संसारकल्पक इति प्रथमं कल्पं दूषयति मोक्षेऽपि इति अनुवृत्तेरिति अनुवृत्त्यापत्तेरित्यर्थः। अविद्याया अपि इति तस्याः

अत्र केचिदाहुः । पूर्वपूर्वकल्पिताविद्योपहित उत्तरोत्तराविद्याकल्पकः । अनिदंप्रथमत्वाच्च कल्पककल्पनाप्रवाहस्य नानवस्थादोषः ।

न च अविद्याया अनादित्वोपगमात् शुक्तिरजतवत् कल्पितत्वं न युज्यते अन्यथा साद्यनादिविभागानुपपत्तेरिति वाच्यम् ।

---

अपि कादाचित्कत्वाभ्युपगमे अविद्यासृष्टेः पूर्वमेव अविद्योपहितस्य चिदात्मनोऽविद्यादिकल्पकस्य वक्तव्यत्वात् तदभावात् अविद्यादिसृष्टिर्न सम्भवति तथा च सदा संसारानुपलम्भप्रसङ्ग इति भावः ।

ननु एवमपि प्रथमाविद्यायाः कः कल्पकः तत्राह अनिदमिति । इदं प्रथमत्वाभावात् । प्रथमा अविद्यैव काचित् नास्ति अतो न चोद्यावकाश इति भावस्तर्हि अनवस्थेत्याशङ्क्य सा न दोषाय अविद्योपहितात्मनः प्रपञ्चकल्पकत्वेन श्रुतिसिद्धस्य पूर्वपूर्वाविद्यां विना तत्कल्पकत्वनिर्वाहाभावादित्याशयेन आह न अनवस्थादोष इति ।

ननु जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा अविद्यातच्चितोर्योगः षट् अस्माकमनादय इति सिद्धान्तविरुद्धमविद्यायाः प्रवाहानादित्वकल्पनं तस्याः स्वरूपानादित्वस्यैव सिद्धान्तसंग्रहश्लोके चैतन्यवत् प्रतीतेरिति शङ्कते न चेति सिद्धान्तमुल्लङ्घ्य प्रवृत्तावपि दोषमाह । अन्यथा इति । अविद्यादीनां स्वरूपानादित्वानुपगम इत्यर्थः । अनुपपत्तेरिति उक्तविभागस्य लोकशास्त्रसिद्धत्वादिति भावः ।

यथा स्वप्ने कल्प्यमानं गोपुरादि किञ्चित् पूर्वसिद्धत्वेन कल्प्यते किञ्चित् तदानीमुत्पाद्यत्वेन एवं जागरेऽपि किञ्चित् कल्प्यमानं सादित्वेन कल्प्यते किञ्चिदन्यथा इत्येतावता साद्यनादिविभागोपपत्तेः ।

एतेन कार्य्यकारणविभागोऽपि व्याख्यात इति ।

अन्ये तु वस्तुतोऽनाद्येवाविद्यादि तत्र दृष्टि-सृष्टिर्नोपेयते किन्तु ततोऽन्यत्र प्रपञ्चमात्र इत्याहुः ।

---

श्रुत्येकसमधिगम्यविशुद्धचैतन्यव्यतिरिक्तमात्रे दृष्टि-सृष्टिमुपेत्यैव साद्यनादिविभागबोधकलौकिकवैदिकप्रमाणानां सिद्धान्तप्रवादस्य च आलम्बनत्वेन भ्रमविशेषं सदृष्टान्तमाह । यथा इत्यादिना किञ्चिदन्यथा इति किञ्चिदविद्यादिकमन्यथा अनादित्वेन कल्पने पूर्वपूर्वाविद्योपहितेन आत्मना इत्यर्थः । तावता कल्पनामात्रेणेत्यर्थः ।

ननु प्रत्यक्षे विषयस्य कारणतया घटादिदृष्टेः पूर्वमज्ञातो घटादिर्वाच्यः अन्यथा कारणविभागो न स्यात् । तथा अविद्योपहितस्य चिदात्मन एकस्यैव स्वस्मिन् संसारकल्पकत्वे संसारवतो जीवस्यैकत्वेन गुरुशिष्यविभागो देवतिर्य्यङ्मनुष्यादिविभागश्च न स्यादित्यत आह एतेन इति । साद्यनादिविभागोपपत्तिकथनेन इत्यर्थः । व्याख्यात इति वस्तुतः प्रत्यक्षे विषयस्य अकारणत्वेऽपि स तत्कारणत्वेन कल्प्यते । तथा अन्यदपि स्वप्नभ्रमवदेव सर्वमूह्यमित्यर्थः ।

कल्पकस्य अविद्योपहितस्य आनन्त्यपरिहाराय साद्य-

ननु एवमपि श्रुतिमात्रप्रतीतस्य वियदादि-सर्गतत्क्रमादेः कः कल्पकः। न कोऽपि। किमा-लम्बना तर्हि आत्मन आकाशः सम्भूत इत्यादि-श्रुतिः।

---

नादिविभागाश्रयाय च दृष्टिसृष्टेः सङ्कोचमाह। अन्ये तु इति। वस्तुत इति स्वरूपत इत्यर्थः। तर्हि दृष्टिसृष्टिः कुत्रापि न उपेया मानाभावादिति शङ्कते किन्तु इति। स्वाप्नबोधयोः कार्यप्रपञ्चमात्रस्य प्रलयप्रभवप्रतिपादकबहुश्रुतिसिद्धत्वान्नै-वमिति परिहरति ततोऽन्यत्र इति। अविद्यादेः सका-शादिति शेषः मात्रपदं कार्त्स्न्यार्थकम्।

ननु दृष्टिसमय एव प्रपञ्चसृष्टिरितिमतेऽपि दृष्टिशब्देन प्रत्यक्षप्रतीतिरेव विवक्षिता न परोक्षप्रतीतिः अपरोक्षप्रतीते-रेव विषयाविनाभूतत्वेन प्रातिभासिकविषयसाधकत्वात् परोक्ष-प्रतीतेश्चातथात्वात् तथा स्थिते सति बाधकमाशङ्कते ननु एवमपि इति। अविद्योपहितस्य आत्मनः प्रत्यक्षवस्तुकल्पकत्वेऽपि इत्यर्थः। यदि वियदादिसर्गः श्रुत्या प्रत्यक्षेण च प्रतीतो भवेत्तदा प्रत्यक्षबलाद्घटादेरिव तस्यापि प्रातिभासिकस्य सिद्धिः सम्भवेत् न तु एतदस्ति इत्याशयेन मात्रपदं दत्तम्। वाय्वादिसंग्रहार्थं प्रथमादिपदं वियदादिप्रलयतत्क्रमसंग्रहार्थं द्वितीयादिपदं कः इति कल्पको न सम्भवत्येव इत्यर्थः। कल्पकाभावे इष्टा-पत्तिमाह दृष्टिसृष्टिवादी न कोऽपि इति तर्हि सृष्ट्यादि-श्रुतिप्रतिपाद्यस्य वियदादिसृष्टितत्क्रमादेः शशशृङ्गायमाण-तया श्रुतेरालम्बनाभावादप्रामाण्यं स्यादिति शङ्कते किमिति।

निष्प्रपञ्चब्रह्मात्मैक्यावलम्बनेत्यवेहि ।

अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्ति-र्भवतीति तत्प्रतिपत्त्युपायतया श्रुतिषु सृष्टिप्रल-योपन्यासो न तात्पर्य्येण इति भाष्याद्युद्घोषः ।

---

तात्पर्य्यविषयीभूतार्थस्य सत्त्वात् न अप्रामाण्यापत्तिरिति परिहरति निष्प्रपञ्चेति ।

ननु सृष्ट्यादिवाक्यानां श्रुतार्थपरित्यागेन अश्रुतार्थे तात्पर्य्यकल्पनमयुक्तं किन्तु श्रुत्यनुसारेण वियदादि-सर्गस्य तत्कल्पकस्य च कल्पनमेव युक्तमित्यत आह अध्यारोपेति । यथा लोके गगनतत्त्वबोधनाय प्रवृत्तः कश्चित् प्रथमं नैल्यवैशाल्याद्यध्यारोपितं गगनं ग्राहयित्वा पश्चात् न इदं वस्तुतो नैल्यादियुक्तमिति तदपवादेन नीरूपं व्याप-कमुदासीनं गगनतत्त्वमिति बोधयति तथा वेदान्ता अपि प्रथमं यद्वियदादिसर्गप्रलयादिकारणे सृष्ट्यादिवाक्यैः प्रतीयते तद्ब्रह्मेत्यध्यारोपितसर्गादियुक्ततया ब्रह्म ग्राहयित्वा पश्चात् निषेधवाक्यैरध्यारोपितसर्गाद्यपवादेन निष्प्रपञ्चब्रह्मात्मैक्यं प्रतिपादयन्ति तथा च सृष्ट्यादिवाक्यानां निषेधवाक्यापे-क्षितनिषेध्यसमर्पकतया तदेकवाक्यतापन्नानां निष्प्रपञ्चब्रह्म-प्रतिपत्तिप्रयोजनकत्वमेव नतु स्वार्थस्य सृष्ट्यादिप्रतिपादनमात्रेण चारितार्थ्यमर्थवादिनामिव तेषां स्वार्थप्रतिपादने फलाभावात् निष्फलेऽर्थे वेदतात्पर्य्यायोगात् अतो युक्तमेव स्वार्थत्यागेन निष्प्रपञ्चब्रह्मात्मैक्ये तात्पर्य्यकल्पनं तज्ज्ञानस्य मुक्तिफल-कतायाः श्रुतिसिद्धत्वादेवञ्च प्रथममध्यारोपेण सप्रपञ्चब्रह्म-प्रतिपत्तिर्भवति पश्चात् प्रपञ्चापवादेन तस्यैव ब्रह्मणो

व्यर्थस्तर्हि तात्पर्य्याभावेऽपि वियत्प्राणपादयो-र्वियदादिसर्गतत्क्रमादिविषयश्रुतीनां परस्परवि-रोधपरिहाराय यत्नः। न व्यर्थः न्यायव्युत्पत्त्यर्थम-भ्युपेत्य तत्प्रवृत्तेः। उक्तं हि शास्त्रदर्पणे। श्रुतीनां सृष्टितात्पर्य्यं स्वीकृत्येदमिहेरितम्। ब्रह्मात्मैक्यपर-त्वात् तु तासां तन्नैव विद्यत इति।

---

निष्प्रपञ्चत्वप्रतिपत्तिर्भवति पूर्वप्रतिपत्तिश्चोत्तरप्रतिपत्तेः शेष एव न स्वतन्त्रेति निष्कर्षः। प्रपञ्चस्तु भाष्यादिष्वेव द्रष्टव्य इत्यर्थः।

प्रकृते व्यर्थ इति तर्हि इत्यस्य व्याख्या तात्पर्य्याभावे इति वियदादिसर्गतत्क्रमादाविति शेषः। यत्नो व्यर्थः सूत्रकारभाष्य-कारयोरिति शेषः। तात्पर्य्याविषये विद्यमानस्यापि श्रुति-विरोधस्य अकिञ्चित्करत्वादिति भावः। परिहरति न व्यर्थ इति न्यायेति। वियत्प्राणपादद्वयगताधिकरणेषु निरूपिता ये सिद्धान्तन्यायास्तेषां बोधार्थमित्यर्थः। तेषां न्यायानां सृष्ट्यादिवाक्यार्थाविरोधनिर्णयाय अनपेक्षितानामपि श्रुति-तात्पर्य्यविषये क्वचित् एवंविधप्रसक्तौ तत्समाधानायोप-योगः। तेषां सम्भविष्यति इत्याशयेन प्रवृत्तः सूत्रकारादियत्नो-ऽर्थवानित्यर्थः। तत्प्रवृत्तेरिति वियत्प्राणपादयोः प्रवृत्तेरित्यर्थः। सृष्ट्यादिश्रुतीनां स्वार्थे तात्पर्य्यमभ्युपेत्यैव वियत्पादादिप्रवृत्ति-रित्यत्र कल्पतरुकारसम्मतिमाह। उक्तं हि इति। इदमिति विरोधसमाधानम् इत्यर्थः। इहेति वियत्प्राणपादयोरित्यर्थः। तुशब्दोऽवधारणे तासां सृष्ट्यादिश्रुतीनां ब्रह्मात्मैक्यपरत्वादेव

ज्योतिष्टोमादिश्रुतिबोधितानुष्ठानात् फलसिद्धिः स्वाप्नश्रुतिबोधितानुष्ठानप्रयुक्तफलसंवादतुल्या।

ज्योतिष्टोमादिश्रुतीनां च सत्त्वशुद्धिद्वारा ब्रह्मणि तात्पर्य्यान्न अप्रामाण्यमित्यादिदृष्टिसृष्टिवादव्युत्पादनप्रक्रिया। प्रपञ्चस्तु आकरे एव द्रष्टव्यः। अयमेको दृष्टिसमसमया विश्वसृष्टिरिति दृष्टिसृष्टिवादः।

---

तत्तात्पर्य्यं नास्त्येव तासां स्वार्थेऽपि तात्पर्य्ये वाक्यभेदप्रसङ्गात् स्वार्थे फलाभावाच्च इत्यर्थः।

एवं दृष्टिसृष्टिवादे सृष्ट्यादिश्रुतीनां निरालम्बनत्वं परिहृत्य कर्मोपासनावाक्यानामपि निरालम्बनत्वं परिहरति ज्योतिष्टोमादीत्यादिना। ज्योतिष्टोमादि श्रुत्या स्वर्गादिसाधनत्वेन बोधितस्य यागादेरनुष्ठानात् स्वर्गादिफलसिद्धिः इत्यर्थः। स्वप्नेति स्वप्ने हि कश्चित् कदाचित् ज्योतिष्टोमादिश्रुतिं कल्पयित्वा ततः साधनविशेषमुपलभ्य तदनुष्ठानात् फलं लभते तत्तुल्यं जागरणेऽपि स्वर्गादिफललम्भनम् इत्यर्थः।

वस्तुतस्तु श्रुतिमात्रप्रतीतवियदादिसर्गतत्क्रमादेरिव श्रुतिमात्रप्रतीतस्वर्गादिफलस्यापि असत्त्वमेव अभिप्रेतं कल्पकाभावस्य तुल्यत्वादिति बोध्यं तर्हि तासाम् अप्रामाण्यं स्यादिति न इत्याह ज्योतिष्टोमादिश्रुतीनां चेति। कर्मवाक्यैरुपासनावाक्यैश्च विहितानि कर्मोपासनान्यनुतिष्ठतः सत्त्वशुद्धिर्भवति शुद्धसत्त्वस्य च अधिकारिणो वेदान्तशास्त्रं ब्रह्मप्रमितिं जनयति। तथाच कर्मोपासनाकाण्डयोरधिकारि-

अन्यस्तु दृष्टिरेव विश्वसृष्टिः दृश्यस्य दृष्टिभेदे प्रमाणाभावात् । ज्ञानस्वरूपमेवाहुर्जगदेतद्वि-चक्षणाः अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टय इति स्मृतेश्च इति सिद्धान्तमुक्तावल्यादि-दर्शितो दृष्टिसृष्ट्यादिवादः ।

द्विविधेऽपि दृष्टिसृष्टिवादे मनःप्रत्ययमलभ-मानाः केचिद् आचार्य्याः सृष्टेदृष्टिवादं रोचयन्ते । श्रुतिदर्शितेन क्रमेण परमेश्वरसृष्टमज्ञातसत्तायुक्त-मेव विश्वं तत्तद्विषयप्रमाणावतरणे तस्य तस्य दृष्टिसिद्धिरिति ।

---

सम्पादनद्वारा ब्रह्मप्रमितिशेषत्वात् तयोस्तत्रैव तात्पर्य्यं न स्वार्थे स्वर्गसाधनत्वादाविति न अप्रामाण्यप्रसङ्ग इति भावः ।

ननु न च वेदानामशेषतो ब्रह्मप्रतिपत्तिपरत्वेनास्ति मानमिति वाच्यं सर्वे वेदा यत्पदमामनन्ति तमेतं वेदानु-वचनेन ब्राह्मणा विविदिषन्ति इत्यादिश्रुतिसहस्रस्य तत्र मानत्वादित्यादिकमभिप्रेत्याह इत्यादिदृष्टिसृष्टिव्युत्पादन-प्रक्रियाप्रपञ्चस्त्विति अयमेको दृष्टिसृष्टिवाद इति सम्बन्धः । अन्यस्तु सिद्धान्तमुक्तावल्यादिदर्शितो दृष्टिसृष्टिवाद इति सम्बन्धः ।

द्वितीयं निरूपयति दृष्टिरेव इति दृष्टिर्दर्शनं स्वप्र-काशज्ञानस्वरूपम् इत्यर्थः । एतदुक्तं भवति दृश्यप्रपञ्चतादा-त्म्यापन्नं ज्ञानस्वरूपमेव प्रपञ्चस्य आद्यक्षणावच्छिन्नं सत् तस्य

न च एवं प्रपञ्चस्य कल्पितत्वाभावे श्रुत्या-दिप्रतिपन्नसृष्टिप्रलयादिमतः प्रत्यक्षादिप्रतिपन्नार्थ-क्रियाकारिणश्च तस्य सत्यत्वमेव अभ्युपगतं स्यादिति वाच्यम्।

---

सृष्टिरिति इत्युच्यत इति। ननु दृक्दृश्ययोर्भिन्नयोरभिन्नयो-रभिन्नसत्ताकत्वरूपं तादात्म्यमसिद्धमित्याशङ्क्याह दृश्यस्येति दृष्टिर्ज्ञानं तस्मात् भेदे भिन्नसत्ताकत्व इत्यर्थः। अन्यथा सन् घट इत्यादिरूपेण सद्रूपस्य ज्ञानस्य घटादेश्च सामानाधि-करण्यप्रत्ययो न स्यादिति भावः। स्मृतावेतदिति प्रत्यक्ष-सिद्धमित्यर्थः। अर्थस्वरूपमिति अर्थपदं स्वतन्त्रपरं कुदृष्टय इति कुतर्कदूषितज्ञानाः पुरुषाः इत्यर्थः। तथाच एतज्जगदन्ये कुदृष्टयो भ्रान्ताः ज्ञानस्वरूपसत्तापेक्षया भिन्नसत्ताकं पश्यन्ति इत्युत्तरार्द्धेन भेददृष्ट्यपवादाच्च तयोरभिन्नसत्ताकत्वसिद्धि-रित्यर्थः। स्मृतेश्च इति चकारात् श्रुतेश्च इत्यर्थः। चैद्धेदं सर्वमित्यादिश्रुतिरुदाहर्त्तव्या मनःप्रत्ययो मनसो विश्वासः प्रामाणिकत्वनिश्चयः तमलभमाना इत्यर्थः। तदलाभे च हेतु-र्जाग्रत्प्रपञ्चस्यापि प्रातिभासिकत्वाभ्युपगमो वियदादिसर्गा-द्यपलापः कर्मोपासनाकाण्डार्थोऽनुष्ठानाधीनस्वर्गलोकब्रह्म-लोकाद्यपलापो जाग्रति चक्षुराद्यनुविधानप्रतीते भ्रममात्र-त्वाभ्युपगम इत्यादिरिति द्रष्टव्यम्। सृष्टिदृष्टिपदे व्याचष्टे श्रुतिदर्शितेन इत्यादिना।

अपसिद्धान्तं शङ्कते न च एवमिति उक्तरीत्या प्रामाणि-कत्वे प्रपञ्चस्य स्वीकृते [illegible]त इत्यर्थः। कल्पितत्वाभावे

शुक्तिरजतादिवत् संप्रयोगसंस्कारदोषरूपेण अधिष्ठानज्ञानसंस्कारदोषरूपेण वा कारणत्रयेण अजन्यतया कल्पनासमसमयत्वाभावेऽपि ज्ञानैक-निवर्त्त्यत्वरूपस्य सदसद्विलक्षणत्वरूपस्य प्रतिपन्नो-पाधिगतत्रैकालिकनिषेधप्रतियोगित्वरूपस्य वा मिथ्यात्वस्य अभ्युपगमात्। सत्यत्वपक्षे प्रपञ्चे उक्त-रूपमिथ्यात्वाभावेन ततो भेदात्।

---

सत्यत्वमेव अभ्युपगतं स्यादिति सम्बन्धः। प्रपञ्चः सत्यः श्रुतिसिद्धत्वात् ब्रह्मवत्। न च तस्य प्रत्यक्षसिद्धस्य श्रुतिसिद्ध-त्वमसिद्धमिति वाच्यम्। तस्य स्वरूपेण प्रत्यक्षसिद्धत्वेऽपि सृष्टि-प्रलयादिविशिष्टतया श्रुतिस्मृत्यादिसिद्धत्वात्। तथा सत्यः प्रपञ्चः अर्थक्रियाकारित्वात् स्वप्नाद्यर्थक्रियाकारि ब्रह्मवत्। न च हेत्वसिद्धिः पृथिवीजलादौ तस्य प्रत्यक्षादिसिद्धत्वादिति भावः।

प्रपञ्चस्य ब्रह्मवत्परमार्थसत्यत्वे हेतुद्वयमप्रयोजकम् अतो न अपसिद्धान्तापत्तिरित्याशयेन परिहरति शुक्तिरजतादि-वदिति। वियदादिप्रपञ्चे शुक्तिरजतादाविव कल्पनासमयत्वस्य दृष्टिसृष्टिवाद्यभिमतस्य अभावेऽपि पारमार्थिकसत्यत्वविरुद्धस्य मिथ्यात्वस्य अभ्युपगमादिति सम्बन्धः। वियदादिप्रपञ्चे कल्पना-समसमयत्वाभावे कारणत्रयाजन्यहेतुः संप्रयोगस्य स्वप्नधर्म-व्यापित्वाभावात् संप्रयोगस्थाने अधिष्ठानसामान्यज्ञानं निक्षि-पति अधिष्ठानज्ञानेति। मिथ्यात्वनिर्वचनं त्रेधा दर्शयति ज्ञानैकेत्यादिना। अधिष्ठानतत्त्वज्ञानमात्रनिवर्त्त्यत्वरूपस्य इत्यर्थः। सद्विलक्षणत्वमात्रम् असति अतिव्याप्तम् अस-

ननु एवम् अहङ्कारतद्धर्माणामपि उक्तरूप-
मिथ्यात्वं वियदादिवत् कल्पितत्वाभावेऽपि सिध्य-
तीति भाष्यटीकाविवरणेषु तदध्यासे कारणावित-
यसम्पादनादिश्रमो व्यर्थ इति चेद् अहङ्कारादीना-

---

द्विलक्षणत्वमात्रं सति ब्रह्मणि अतिव्याप्तम् अत उभयोपादानं
प्रपञ्चस्य तु उभयविलक्षणत्वं प्रमाणसिद्धमिति भावः। प्रति-
पन्नेति ब्रह्मणि प्रतिपन्नस्य प्रतीतस्य आरोपितस्य इति यावत्
ब्रह्मोपाधिरधिष्ठानं तत्र ब्रह्मणि तस्य त्रैकालिको निषेधः।
श्रुतिगम्योऽत्यन्ताभावोऽस्ति तत्प्रतियोगित्वं तस्य अक्षतमिति
भावः। तत्र आद्यलक्षणे घटादेः सत्यत्वपक्षेऽपि घटादिकं
नाशयामि इत्यादिज्ञाननिवर्त्त्यत्वसत्त्वादेकपदं दत्तं ज्ञानमात्र-
निवर्त्त्यत्वस्य च सत्यत्ववादिभिरनङ्गीकारात् न सत्यत्वपक्षावि-
शेषस्तथा प्रपञ्चे परैः सद्रूपत्वाङ्गीकारेण सद्विलक्षणत्वानङ्गीका-
रात् द्वितीयलक्षणेऽपि न सत्यत्वपक्षाविशेषः। प्रपञ्चस्य तदुपा-
दाने ब्रह्मणि सिद्धान्त इव घटाद्युपादाने वस्तुनि घटादेः त्रैका-
लिकनिषेधस्य परैरनङ्गीकारात् न तृतीयलक्षणेऽपि परमता-
विशेष इत्याशयेन आह।

सत्यत्वपक्ष इति दृष्टिसृष्टिवाद्येव शङ्कते।

ननु एवमिति ज्ञानैकनिवर्त्त्यत्वादेर्मिथ्यात्वस्वरूपत्वे सति
इत्यर्थः। अहङ्कारतद्धर्माणामपि उक्तरूपमिथ्यात्वं वियदादि-
वत् सिध्यति इति सम्बन्धः। कल्पितत्वाभावेऽपि इति प्राति-
भासिकत्वाभावेऽपि इत्यर्थः। तत्पदमहङ्कारादिपरं चिदात्मनोऽ

मपि केवलसाक्षिवेद्यतया शुक्तिरजतवत् प्रातिभा-
सिकत्वमभिमतमिति चित्सुखाचार्य्याः ।

अभ्युपेत्य वादमात्रं तदद्वितीयाधिष्ठान-
ब्रह्मात्मप्रमाणस्य चैतन्यस्य इत्यादितत्त्वत्रयकारण-
वितयसम्पादनग्रन्थस्य चैतन्यस्य प्रमाकरणत्वे
वेदान्तकरणत्वादिकल्पनाभङ्गप्रसङ्गेन प्रौढ़िवादस्य
स्फुटत्वादिति रामाद्वयाचार्य्याः ।

---

धिष्ठानत्वादिसमर्थनमादिपदार्थः । अभिमतमिति भाष्य-
कारादीनामिति शेषः । तथा च तत् सम्पादनादि यत्नः सफल
इति भावः । अहङ्कारतद्धर्माणां केवलसाक्षिवेद्यत्वेऽपि शुक्ति-
रजतादिवत् प्रातिभासिकत्वं वक्तुमयुक्तं व्यवहारकाले बाधा-
नुपलम्भादतो वस्तुगत्या तेषां प्रातिभासिकत्वाभावेऽपि तदभ्यु-
पेत्य कारणत्रयसम्पादनादियत्नस्तैः कृत इति ।

परिहारान्तरमाह अभ्युपेत्येति। तद्भाष्यादिप्रातिभासिकमभ्यु-
पेत्य वचनमेव न वस्तुगतिमनुरुध्येत्यर्थः । अद्वितीयाधिष्ठानब्रह्मा-
त्मनि प्रमाणचैतन्यमिति प्रतिपादयतः टीकाविवरणादिगतस्य
ग्रन्थस्य प्रौढ़िवादत्वस्य स्पष्टत्वादिति सम्बन्धः । प्रौढ़िवादत्वे
उपपत्तिमाह । चैतन्यस्य प्रमाकरणत्व इति ब्रह्मप्रमाकरणत्व
इत्यर्थः । औपनिषदत्वश्रुत्यनुसारेण वेदान्तानामेव ब्रह्मप्रमाकर-
णत्वकल्पन इत्यर्थः । वेदान्तजन्यब्रह्मप्रमाया अपरोक्षत्वकल्पन-
मादिपदार्थः ।

मिथ्यापदार्थस्य अपि अर्थक्रियाकारित्वोपपादनम्।

ननु दृष्टिसृष्टिवादे सृष्टिदृष्टिवादे च मिथ्यात्व-सम्प्रतिपत्तेः कथं मिथ्याभूतस्य अर्थक्रियाकारित्वम्? स्वप्नवदिति ब्रूमः।

ननु स्वाप्नजलादिसाध्यावगाहनादिरूपार्थक्रिया असत्यैव किन्तु जाग्रज्जलादिसाध्या सा सत्या अविशिष्टमुभयत्र अपि स्वसमानसत्ताकार्थक्रिया-कारित्वमिति केचित्।

अद्वैतविद्याचार्य्यास्त्वाहुः। स्वाप्नपदार्थानां न केवलं प्रबोधबाध्यार्थक्रियामात्रकारित्वं स्वाप्नाङ्ग-

---

प्रपञ्चस्य परमार्थत्वे पूर्वमर्थक्रियाकारित्वमप्रयोजक-मिति सूचितं तदयुक्तं मिथ्याभूतस्य शुक्तिरूप्यादेः कट-काद्यर्थक्रियाकारित्वादर्शनादिति मत्वा शङ्कते ननु इति। अर्थक्रियाकारित्वं सत्यत्वव्यभिचारि इति परिहरति। स्वप्न-वत् इति। स्वाप्नजलादाववगाहनादिरूपार्थक्रियाकारित्वमस्ति तत्र सत्यत्वं न अस्ति इति व्यभिचार इत्यर्थः।

ननु अर्थक्रियाकारित्वमात्रं न हेतुः किन्तु सत्यार्थक्रिया-कारित्वं तच्च स्वाप्नजलादौ नास्ति इति व्यभिचार इति शङ्कते ननु इति। असति एव नतु सति इत्यर्थः। असत्यैव इति पाठे असत्या नतु सत्येत्यर्थः। तर्हि प्रपञ्चः सत्यः सत्यार्थक्रिया-कारित्वादित्यत्र हेत्वसिद्धिमाह सिद्धान्ती किन्तु इति। जाग्रज्जलादिसाध्या सार्थक्रिया सत्या किमिति सम्बन्धः। तुशब्दोऽवधारणे किंशब्दः आक्षेपार्थः सा सत्या न भवत्येव

नाभुजङ्गमादीनां तद्बाध्यसुखभयादिजनकत्वस्य अपि दर्शनात्। स्वाप्नविषयजन्यस्यापि हि सुखभयादेः प्रबोधानन्तरं न बाधोऽनुभूयते प्रत्युत प्रबोधानन्तरमपि मनःप्रसादशरीरकम्पादिना सह तदनुवृत्तिदर्शनात् प्रागपि सत्त्वमेव अवसीयते। अत एव प्राणिनां पुनरपि सुखजनकविषयगोचरस्वप्ने वाञ्छा अतादृशे स्वप्ने च प्रद्वेषः। सम्भवति च स्वप्ने ज्ञानवत् अन्तःकरणवृत्तिरूपस्य सुखभयादेरुदयः। न च स्वप्नाङ्गनादिज्ञानमेव सुखादिजनकं तच्च सदेव इति वाच्यम्। तस्यापि दर्शनस्पर्शनादिरूपस्य स्वप्नप्रपञ्चसाक्षिणि अध्यस्तस्य कल्पनामात्रसिद्धत्वात्। न हि उपरतेन्द्रियस्य चक्षुरादि-

---

इत्यर्थः। अतो हेत्वसम्प्रतिपत्तिपरिहाराय अर्थक्रियाकारित्वमात्रं सत्यत्वप्रयोजकं वाच्यं तच्च स्वाप्नजलादावस्ति एव इति व्यभिचारतादवस्थ्यमिति भावः।

ननु स्वाप्नजलादौ सत्यार्थक्रियाकारित्वाभावेऽपि स्वसमानसत्ताकार्थक्रियाकारित्वमस्त्येव तर्हि जाग्रत्प्रपञ्चस्य अपि तदस्तु न एतावता त्वदभिमतपरमार्थसत्त्वं सिध्यति इत्याशयेन परिहरति अविशिष्टमिति। उभयत्रापि इति जाग्रत्स्वप्नावस्थाद्वयेऽपि इत्यर्थः। स्वपदमर्थक्रियाहेतुभूतवस्तुपरं स्वप्नवदिति ब्रूम इति समाधाने स्वप्ने तावदर्थक्रिया सत्या-

वृत्तयः सत्या भवन्ति। न च तद्विषयापरोक्ष्यमात्रं सुखजनकं तच्च साक्षिरूपं सदैव इति वाच्यम्। दर्शनात् स्पर्शने कामिन्याः पदा स्पर्शनात् पाणिना स्पर्शने भुजङ्गस्य अमर्मस्थले स्पर्शनात् मर्मस्थले स्पर्शनेन च सुखविशेषस्य भयविशेषस्य च अनुभवसिद्धत्वेन स्वप्नेऽपि तत्तत्सुखभयादि-विषशेस्य कल्पितदर्शनस्पर्शनादिविशेषजन्यत्वस्य वक्तव्यत्वादिति। तथा जागरे घटादिप्रकाशन-क्षमतत्रत्यपुरुषान्तर-निरीक्ष्यमाणा-लोकवति अप-वरके सद्यः प्रविष्टेन कल्पितस्य सन्तमसस्य प्रसिद्ध-सन्तमसोचितार्थक्रियाकारित्वं दृष्टं तेनतं प्रति

---

नुभवे अतिजागरे तु सा सत्येति वैषम्यशङ्कायां प्रतिवन्द्या केषा-ञ्चित् समाधानं दर्शितमिदानीं स्वप्नादिपदार्थानामपि सत्यार्थ-क्रियाकारित्वदर्शनात् न दृष्टान्तवैषम्यमिति परिहारान्तर-माह।

अद्वैतेति प्रबोधबाध्या अर्थक्रिया प्रातिभासिकी प्रबो-ध्यार्थक्रिया स्वप्नकालीनापि व्यावहारिकसत्यैव इति विभागः। तथा च स्वाप्नपदार्थानां प्रातिभासिकार्थक्रियाकारित्वमात्रं केवलं न भवति किन्तु व्यावहारिकार्थक्रियाकारित्वमपि अस्ति स्वप्नाङ्गनादीनां प्रबोधाबाध्यसुखजनकत्वस्य स्वप्नभुज-ङ्गमादीनां प्रबोधाबाध्यभयकम्पादिजनकत्वस्य च दर्शनादेवं

घटाद्यावरणं दीपाद्यानयने तदपसरणं तन्नयने पुन-रावरणमित्यादिदर्शनादित्यपि केचित्।

अन्ये तु पानावगाहनाद्यर्थक्रियायां जलादि-स्वरूपमात्रमुपयोगि न तद्गतं सत्यत्वं तस्य कारण-त्वतदवच्छेदकत्वयोरभावादिति किं तेन। न च एवं सति मरुमरीचिकोदकशुक्तिरजतादेरपि प्रसिद्धोदकाद्युचितार्थक्रियाकारित्वप्रसङ्गः। मरी-

च व्यावहारिकजाग्रत्पदार्थानां व्यावहारिकार्थक्रियाकारित्वं कै-मुतिकन्यायसिद्धमिति मिथ्यात्वपक्षे नार्थक्रियाकारित्वानुप-पत्तिरिति भावः। ननु स्वाप्नभुजङ्गमाङ्गनादिरूपविषयाणां प्रबोधबाध्यत्वदर्शनात् तत्कार्य्यभयसुखादीनां कथं प्रबोधा-बाध्यत्वमित्याशङ्क्याह स्वाप्नविषयेति न हि प्रबोधानन्तरं स्वप्न-काले सुखभयादिकं मम न अभूदिति सुखभयादेर्बाधोऽनु-भूत इत्यर्थः। प्रत्युतेति वर्त्तमानसुखानुभवकार्य्यं मनःप्रसादः वर्त्तमानभयदुःखानुभवकार्य्यं भयकम्पादिः ततश्च प्रबोधानन्तरम् अनुवर्त्तमानत्वे गमकं मनःप्रसादादि तथाच तदनन्तरम् अनु-वर्त्तमानस्य भयादेः सत्यत्वात् प्रबोधात् प्रागपि तस्य सत्यत्वं निश्चीयत इत्यर्थः। स्वप्नकालीनमपि सुखभयादिकं जाग्रत्-सुखादिवत् व्यावहारिकसत्यमेव न प्रातिभासिकं प्रबोधान-न्तरं बाधाभावात् तदनन्तरमपि अनुवर्त्तमानाच्चेति निष्कर्षः स्वाप्नसुखभयादेः सत्यत्वे गमकान्तरमाह अतएव इति। स्वाप्न-भयादेः अप्रातिभासिकत्वादेव इत्यर्थः। रागद्वेषयोः सत्यसुख-दुःखगोचरत्वनियमादिति भावः।

चित्रोदकादौ उदकत्वादिजातिर्नास्तीति तद्विषय-भ्रमस्य उदकशब्दोल्लेखित्वं तदुल्लेखिपूर्वानुभव-संस्कारजन्यत्वप्रयुक्तमिति तत्त्वशुद्धिकारादिमते

---

ननु स्वप्ने सर्वस्य वासनामात्रत्वात् कथं सत्यस्य भयादेः सम्भव इत्यत आह सम्भवति चेति। तदेतत् सत्त्वं येन स्वप्नं पश्यतीति श्रुत्यनुसारेण कल्पतरुकारैर्मानसवृत्तिरूपज्ञानस्य स्वीकारात् तद्वदन्तःकरणपरिणामरूपभयादेर्व्यावहारिकस्य सम्भवः तदतिरिक्तपदार्थानामेव वासनापरिणामत्वेन प्रातिभासिकत्वाभ्युपगमादिति भावः।

ननु स्वाप्नभयादिकं न भुजङ्गमाङ्गनादिजन्यं किन्तु तद्गोचरज्ञानजन्यं तथा च ज्ञानस्य सत्यत्वादसत्यात् सत्यस्यापि कार्य्यस्य जन्म स्वप्ने दृष्टमित्यनुपपन्नमिति शङ्कते न चेति। तच्च सदेवेति वदता वक्तव्यं किं तन्मनोमात्रजन्यवृत्तिरूपं किं वा चक्षुरादिजन्यवृत्तिरूपं केवलसाक्षिरूपं वा। आद्येऽपि किं वृत्तिमात्रं भयादिहेतुः उत स्वाप्नभुजङ्गमादिरूपविषयविशेषितम्। नाद्यः। यत्किञ्चिद्गोचरवृत्तिज्ञानादपि भयादिप्रसङ्गात्। न द्वितीयः। वृत्तिमात्रस्य सत्यत्वेऽपि विषयस्य असत्यतया तद्विशिष्टस्यापि प्रातिभासिकत्वात्। तथा च प्रातिभासिकज्ञानात् व्यावहारिकार्थक्रियोत्पत्तौ तदुदाहरणं भवत्येव इति मत्वा प्रथमविकल्पत्रयमध्ये द्वितीयं दूषयति तस्यापि इति ज्ञानस्यापि इत्यर्थः।

ननु चक्षुरादिजन्यमेव दर्शनस्पर्शनादिवृत्तिरूपं सत्यज्ञानं कुतो न उपेयते तत्राह न ह्येति। तृतीयं शङ्कते न च तदिति। दूषयति दर्शनादित्यादिना। कामिन्याः दर्शनात् तस्याः स्पर्शने

तत्तदर्थक्रियाप्रयोजकोदकत्वादिजात्यभावादेव तदु-प्रसङ्गात् ।

---

तस्या एव पदा स्पर्शनात् पाणिना स्पर्शने सुखविशेषस्य अनुभव-सिद्धत्वेन इति सम्बन्धः । भुजङ्गमस्य मर्मस्थलपुच्छादौ स्पर्शनात् मर्मस्थले शिरसि स्पर्शने च भयविशेषस्य अनुभवसिद्धत्वेनेति सम्बन्धः । स्वप्नेऽपीति यथा जागरे सुखविशेषभयविशेषादेर्दर्शना-दिरूपवृत्तिविशेषविशिष्टविषयापरोक्ष्यजन्यत्वम् न तु विषया-परोक्ष्यमात्रजन्यत्वं तन्मात्रस्य एकरूपत्वेन कार्य्यविशेषप्रयो-जकत्वात् तथा स्वप्नेऽपि तथाच तद्विषयापरोक्ष्यमात्रस्य साक्षि-रूपस्य सत्यत्वेऽपि सुखभयादिजनकस्य प्रातिभासिकदर्शन-स्पर्शनादिवृत्तिविशेषविशिष्टस्य तत्तद्विषयापरोक्ष्यस्य प्राति-भासिकत्वात् प्रातिभासिकात् व्यावहारिकसुखभयादिसम्भव इत्यर्थः ।

एवं स्वप्नावस्थायामसत्यात् सत्यार्थक्रियामुदाहृत्य जागरेऽपि तामुदाहरति । तथेति प्रकाशनक्षमो यस्तत्रत्यैरपव-रकस्थैः पुरुषान्तरैर्निरीक्ष्यमाणालोकस्तद्वति क्वापि इत्यर्थः । अप-वरकं स्वल्पगृहं तत्रत्यालोकासत्त्वशङ्काव्यावृत्तये पुरुषान्तर-निरीक्ष्यमाणत्वविशेषणं दृष्टमित्येतत् प्रपञ्चयति तेनेति । सन्त-मसेन इत्यर्थः । अपिशब्दस्य तथा जागरेऽपि इति सम्बन्धः ।

अन्ये त्विति । जगत्सत्यत्ववादिभिरपि हि अर्थक्रियाकारित्वमेव सत्यत्वमिति वक्तुं न शक्यते अर्थक्रियानुत्पत्तिदशायां घटादे-रसत्यत्वप्रसङ्गात् किन्तु सत्त्वमर्थक्रियाप्रयोजकमिति वक्तव्यम् । तथा च किं स्वप्नमर्थक्रियाकारणमभिप्रेतं किं वा कारणताव-च्छेदकं न उभयथापि इत्याह । पानेत्यादिपदं जलत्वादेरपि

तत्रापि उदकत्वादिजातिरस्ति अन्यथा तद्दै-शिष्ट्योल्लेखिभ्रमविरोधादुदकाद्यर्थिनस्तत्र प्रवृत्त्य-

---

संग्राहकं बोध्यम्। उपयोगीति जलादिस्वरूपं कारणतया जलत्वादिस्वरूपं कारणतावच्छेदकतयेति भावः। मात्रपदव्यव-च्छेदमाह न तद्गतमिति। सत्यत्वस्य जलादिस्वरूपातिरिक्ततया कारणत्वाभावादतिप्रसक्ततया कारणतावच्छेदकत्वाभावाच्च इत्यर्थः। किं तेन इति सत्यत्वेन इत्यर्थः। तथा च सत्यत्वा-भावेऽपि प्रपञ्चस्य अर्थक्रियाकारित्वसम्भवात् न मिथ्यात्वविरोध इति भावः।

ननु सत्त्वस्य तत्तदर्थक्रियाकारितायामतिप्रसक्तत्वेऽपि अर्थक्रि-याकारित्वसामान्ये सत्त्वमनतिप्रसक्तत्वादवच्छेदकमेव। अन्यथा बाधकमाशङ्कते न च एवं सतीति सत्त्वस्य कारणतासामान्या-नवच्छेदकत्वे सति इत्यर्थः।

एवं सति प्रसङ्ग इति न च इत्यत्र हेतुमाह। मरीचिको-दकादाविति मरुभूमिसंसृष्टासु मरीचिकासु समारोपितं तोयं मरीचिकोदकं तस्य तोयाभासत्वात् तत्र तोयत्वं नास्ति कथं तर्हि तोयमिदमुदकमिदमिति शब्दोल्लेखि-प्रत्यय इत्याशङ्क्य तस्य अन्यथासिद्धिमाह तद्विषयकभ्रम-स्येति। मरीचिकोदकविषयकभ्रमस्य इत्यर्थः। उदकशब्दो-ल्लेखी यः पूर्वानुभवः सत्योदकविषयस्तज्जन्यसंस्कारजन्यत्वात् मरीचिकोदकस्य तत्प्रयुक्तं तच्छब्दोल्लेखित्वम् इत्यर्थः। प्रयो-जकेति प्रसिद्धोदकस्य उचितार्थक्रिया पानादिरूपा तस्यामुदक-त्वजातिः प्रयोजिका उदकादन्यत्र पानादेरदर्शनात्। तथा प्रसिद्धरजतादेरुचितार्थक्रिया कटकादिलक्षणा तत्र च रजत-

भावप्रसङ्गाच्च इति प्रातिभासिके पूर्वदृष्टसजातीयव्यवहारानुरोधिनां मते क्वचिदधिष्ठानविशेषज्ञाने समूलाध्यासनाशात् क्वचिदधिष्ठानसामान्यज्ञानोपरमेण केवलाध्यासनाशात् क्वचिद् गुञ्जादौ चक्षुषा वह्न्याद्यध्यासस्थले दाहपाकत्वादिप्रयोजकस्य उष्णस्पर्शादेरनध्यासाच्च तत्र तत्र अर्थक्रियाभावोपपत्तेः ।

---

त्वादिकं प्रयोजकं मृदादौ कटकाद्यर्थक्रियादर्शनादिति भावः । तदप्रसङ्गादिति प्रसिद्धोदकाद्युचितार्थक्रियाकारित्वप्रसङ्गाभावात् इत्यर्थः ।

मरीचिकोदकार्थक्रियाकारित्वप्रयोजकजातिमभ्युपगम्यापि उक्तातिप्रसङ्गं परिहरति तत्रापि इत्यादिना मरीचिकोदकादावपि इत्यर्थः । अन्यथा इति तत्र जलत्वादिजात्यभावे सति इत्यर्थः । तत्रेति मरीचिकोदकादौ इष्टतावच्छेदकजलत्वादिवैशिष्ट्यभानं विना तदर्थिनस्तत्र प्रवृत्तिर्न सम्भवतीति भावः । किञ्च शुक्तिरजतादौ सत्यरजतादौ च रजतत्वादिजातेरेकस्य अभावे प्रातिभासिकाध्यासेषु पूर्वदृष्टसाजात्यव्यवहारो भाष्यादिगतो न स्यात् तदनुरोधेन अपि तत्र जातिरङ्गीकर्त्तव्या इत्याशयेन आह प्रातिभासिक इति । क्वचिदिति । दूरे मरीचिकोदकभ्रमानन्तरं स्नानाद्यर्थं समीपं गतस्य न इदं जलं मरीचिकामात्रमिदमिति विशेषदर्शने सति जलाध्यासस्य समूलाज्ञानेन सहैव नाशान्न ततोऽर्थक्रियोत्पत्तिरापादयितुं शक्येत्यर्थः । क्वचिदधिष्ठानेति शुक्त्यादौ

क्वचित् कासञ्चिदर्थक्रियाणामिष्यमाणत्वाच्च।

मरीचिकोदकादिव्यावर्त्तकस्य अर्थक्रियोपयोगिरूपस्य वक्तव्यत्वे च श्रुतिविरुद्धं प्रत्यक्षादिना दुर्ग्रहं त्रिकालाबाध्यत्वं विहाय दोषविशेषाजन्यरजतत्वादेरेव रजताद्युचितार्थक्रियोपयोगिरूपस्य वक्तुं शक्यत्वाच्च। तस्मात् मिथ्यात्वेऽपि अर्थक्रियाकारित्वसम्भवात् मिथ्यैव प्रपञ्चो न सत्य इति।

---

रजताद्यध्यासानन्तरं यत्र विशेषदर्शनमस्ति तत्र पूर्वोक्ता रीतिर्यत्र तन्नास्ति तत्राधिष्ठानसामान्यज्ञानरूपकारणनाशेन रजताद्यध्यासमात्रनाशसम्भवात् तत्रापि न अर्थक्रियोत्पत्तिरापादयितुं शक्येत्यर्थः।

स्वप्नवदिति ब्रूम इत्यादिपूर्वग्रन्थे प्रातिभासिकपदार्थानामपि अर्थक्रियाकारित्वस्य दर्शितत्वादुक्तातिप्रसङ्गे इष्टापत्तिरपि इत्याह क्वचित् कासाञ्चिदिति।

इदानीं प्रातिभासिकेषु अर्थक्रियाकारित्वराहित्यमुपेत्यापि सत्यत्वे कारणतावच्छेदकं न वक्तव्यमित्याह मरीचिकोदकादीति। चशब्दोऽप्यर्थकः। श्रुतेति मिथ्यात्वश्रुतीत्यर्थः।

सद्रूपाद्रजतात् कटकादिकार्य्यं सम्भवति तद्विलक्षणात् शुक्तिरजतात् तन्न सम्भवति इत्यन्वयव्यतिरेकसहकृतप्रत्यक्षेण हि त्वया सत्त्वमर्थक्रियाकारितायामवच्छेदकतया ग्राह्यम्। तादृशञ्च सत्त्वं मिथ्यात्वविरुद्धकालत्रयाबाध्यत्वरूपं न भवति तस्य प्रत्यक्षायोग्यत्वादतोऽन्यदेव किञ्चित् तदवच्छेदकं वाच्यमित्या-

ननु मिथ्यात्वस्य प्रपञ्चधर्मस्य असत्यत्वे ब्रह्माद्वैतक्षतिस्तदपि मिथ्यैव वक्तव्यमिति कुतः प्रपञ्चस्य सत्यत्वक्षतिः। मिथ्याभूतं ब्रह्मणः सप्रपञ्चत्वं न निष्प्रपञ्चत्वविरोधीति त्वदुक्तरीत्या मिथ्याभूतमिथ्यात्वस्य सत्यत्वाविरोधित्वात्। अत्रोक्तमद्वैतदीपिकायाम्। वियदादिप्रपञ्चसमानस्वभावं मिथ्यात्वम्।

---

शयेन आह प्रत्यक्षादिनेति। अत्रादिपदमनुमानादिसंग्रहार्थम्। प्रत्यक्षश्रुतिविरोधेन अनुमानादेरपि प्रपञ्चे कालत्रयाबाध्यत्वरूपसत्त्वसाधकस्यानुदयादेव तस्यानुमानादिनापि दुर्ग्रहत्वमुक्तमिति बोध्यम्। रजतत्वादेरिति व्यवहारकालीनबाधरहितरजतत्वादिकमादिपदार्थः। तस्मादिति सत्यत्वस्य अर्थक्रियां प्रति अप्रयोजकत्वादित्यर्थः।

प्रकारान्तरेण प्रपञ्चस्य सत्यत्वं शङ्कते ननु इति। वक्तव्यमिति सिद्धान्तिनेति शेषः। ननु मिथ्याभूतस्यापि मिथ्यात्वस्य स्वाश्रये प्रपञ्चे स्वविरोधिसत्यत्वप्रतिक्षेपकत्वात् तस्य सत्यत्वक्षतिरपरिहार्य्या इत्याशङ्क्य सिद्धान्तिसम्मतदृष्टान्तेन परिहरति मिथ्याभूतमिति। सप्रपञ्चत्वं प्रपञ्चतादात्म्यं निष्प्रपञ्चत्वञ्च प्रपञ्चात्यन्ताभाववत्त्वं तच्च वास्तवं व्यावहारिकप्रपञ्चात्यन्ताभावस्य ब्रह्मणि परमार्थत्वाभ्युपगमादतः सप्रपञ्चत्वनिष्प्रपञ्चत्वयोर्यथा एकत्राविरोधस्तथा मिथ्यात्वसत्यत्वयोरपि अविरोध इति भावः।

तच्च धर्मिणः सत्यत्वप्रतिक्षेपकं धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे हि उभयवादिसिद्धं धर्मिसमसत्त्वं तन्त्रं न पारमार्थिकत्वम्। अघटत्वादिप्रतिक्षेपके घटत्वादौ अस्माकं पारमार्थिकत्वासम्प्रतिपत्तेः।

ब्रह्मणः सप्रपञ्चत्वं न धर्मिसमसत्ताकमिति न निष्प्रपञ्चत्वप्रतिक्षेपकम्।

अत एव मिथ्यात्वस्य व्यावहारिकत्वे तद्विरोधिनोऽप्रातिभासिकस्य प्रपञ्चसत्यत्वस्य पारमार्थिकत्वं

---

ननु आरोपितघटत्वादेरारोपाधिष्ठानभूते स्वाश्रये स्वविरुद्धाघटत्वादिप्रतिक्षेपकत्वादर्शनात् सत्यमेव घटत्वादि स्वाश्रये स्वविरुद्धधर्मप्रतिक्षेपकत्वेन कल्पनीयमिति कथं मिथ्याभूतं मिथ्यात्वं सधर्मिणि प्रपञ्चे सत्यत्वप्रतिक्षेपकं भवेदित्याशङ्क्याह। धर्मस्येति। घटत्वादौ परमतरीत्या पारमार्थिकत्वरूपं सत्यत्वमस्ति तथा धर्मिसमानसत्ताकत्वं मतद्वयसम्मतमस्ति। तथा च घटत्वादिधर्मस्य स्वाभाविकाश्रये स्वविरुद्धधर्मप्रतिक्षेपकत्वे प्रयोजकाकाङ्क्षायां सम्प्रतिपन्नमेव प्रयोजकं कल्पनीयं न विप्रतिपन्नमित्यर्थः।

दृष्टान्तं विघटयति ब्रह्मण इति न धर्मीति। ब्रह्मणः पारमार्थिकत्वात् सप्रपञ्चकत्वस्य च व्यावहारिकत्वादिति भावः।

ननु प्रपञ्चगतमिथ्यात्वस्य मिथ्यात्वपक्षे तद्व्यावहारिकमेव वाच्यं ब्रह्मज्ञानैकनिवर्त्यस्य मिथ्यात्वधर्मस्य प्रातिभासिकत्वपारमार्थि-

स्यादिति निरस्तम्। धर्मिसमसत्ताकस्य मिथ्यात्वस्य व्यावहारिकत्वे धर्मिणोऽपि व्यावहारिकत्वनियमात्।

अथ वा यो यस्य स्वविषयसाक्षात्कारानिवर्त्यो धर्मः स तत्र स्वविरुद्धधर्मप्रतिक्षेपकः शुक्तौ शुक्ति-

---

कत्वयोरयोगात्तस्य व्यावहारिकत्वे तु प्रपञ्चगतं सत्यत्वं पारमार्थिकं सिध्यति तस्यापि सन् घट इत्यादिप्रत्यक्षसिद्धस्य यावत् तत्त्वज्ञानमनुवर्त्तमानस्य प्रातिभासिकत्वायोगात् व्यावहारिकमिथ्यात्वधर्मवति प्रपञ्चे तत्सत्यत्वस्य व्यावहारिकस्य अयोगाच्च। तथा च प्रपञ्चगतस्य सत्यत्वधर्मस्य पारमार्थिकत्वसिद्धौ धर्मिणः प्रपञ्चस्य अपि पारमार्थिकत्वमनिवार्य्यमिति ब्रह्माद्वैतक्षतिरिति कस्यचिच्चोद्यं वक्ष्यमाणहेतुना निरस्तमित्याह। अतएवेति नियमादिति। मिथ्यात्वधर्मस्य धर्मिसमानसत्ताकत्वप्रयुक्तं व्यावहारिकत्वमुपेत्य मिथ्यात्वधर्मिणि प्रपञ्चे सत्यत्वपर्य्यवसायिनः प्रपञ्चसत्यत्वे पारमार्थिकत्वापादानस्य विरोधेन असम्भवादित्यर्थः। न च प्रपञ्चे पारमार्थिकस्य सत्यत्वस्य अभावे प्रातिभासिकव्यावहारिकसत्यत्वयोरपि प्राङ्निरस्तत्वात् तत्र सत्त्वानुभवविरोध इति वाच्यम्। व्यावहारिकस्यैव सत्यत्वस्य प्रपञ्चे स्वीकारेण अनुभवविरोधाभावात्। न च मिथ्यात्वसत्यत्वयोर्व्यावहारिकत्वेन समानसत्ताकयोरेकत्र विरोध इति वाच्यम्। मिथ्यात्वाविरुद्धस्य यावत् तत्त्वज्ञानं बाधरहितस्वरूपत्वलक्षणसत्त्वस्य प्रत्यक्षादिविषयस्य असकृदुक्तत्वादिति भावः।

तादात्म्यं तद्विषयसाक्षात्कारानिवर्त्त्यमशुक्तित्ववि-रोधि तत्रैव रजततादात्म्यं तन्निवर्त्त्यं रजतभेदावि-रोधीति व्यवस्थादर्शनात्।

एवञ्च मिथ्यात्वं कल्पितमपि प्रपञ्चसाक्षा-त्कारानिवर्त्त्यमिति सत्यत्वप्रतिक्षेपकमेव। ब्रह्मणः सप्रपञ्चत्वं तु ब्रह्मसाक्षात्कारनिवर्त्त्यमिति न निष्प्र-पञ्चत्वप्रतिक्षेपकमिति।

---

सर्वत्र ब्रह्मसत्तैव प्रतीयते न तदतिरिकेण व्यावहा-रिकं प्रातिभासिकं सत्त्वमस्तीतिमते धर्मिसमसत्त्वं तन्त्र-मिति समाधानं न सम्भवति इति मत्वा समाधानान्तरमाह अथवा इति। धर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वे हि स्वाश्रय-साक्षात्कारानिवर्त्त्यत्वं प्रयोजकं कल्प्यते सम्प्रतिपन्नत्वात् न तु पारमार्थिकत्वं तस्य अस्माकमसम्प्रतिपत्तेरिति भावः। यो धर्मो यस्य धर्मिणो धर्मिगोचरसाक्षात्कारानिवर्त्त्यः स धर्मस्तत्र धर्मिणीत्यक्षरार्थः। उक्तप्रयोजके हेत्वन्तरमाह शुक्ताविति। तत्पदं शुक्तिपरं अशुक्तित्वविरोधीति अशुक्तित्वस्य प्रतिक्षेपकमित्यर्थः। तत्रैव इति शुक्तावेव रजततादात्म्यरूपो धर्मो वर्त्तते स च स्वविरुद्धस्य तरजतत्वस्य रजतभिन्नत्वस्य शुक्तिगतस्य विरोधी प्रतिक्षेपको न भवतीत्यत्र हेतुगर्भं विशे-षणं तन्निवर्त्त्यमिति शुक्तिसाक्षात्कारनिवर्त्त्यमित्यर्थः।

एवञ्चेति स्वाश्रयसाक्षात्कारानिवर्त्त्यधर्मस्य स्वाश्रये स्वविरुद्ध-धर्मस्थितिविरोधित्वे प्रमाणेन निश्चिते सति इत्यर्थः। अनिवर्त्त्य-मिति यथा शुक्तिसाक्षात्कारे सति शुक्तितादात्म्यं न निवर्त्तते

एतेन शब्दगम्यस्य ब्रह्मणः सत्यत्वे शब्दयोग्यतायाः शाब्दधीप्रामाण्यस्य च सत्यत्वं वक्तव्यम् प्रातिभासिकयोग्यतावता अनाप्तवाक्येन व्यावहारिकार्थस्य व्यावहारिकयोग्यतावता अग्निहोत्रादिवाक्येन तात्त्विकार्थस्य वा सिद्ध्यभावेन योग्यतासमानसत्ताकस्यैव शब्दार्थस्य सिद्धिनियमात् ।

अर्थाबाधरूपप्रामाण्यस्य असत्यत्वे अर्थस्य सत्यत्वायोगाच्च ।

तथा च ब्रह्मातिरिक्तसत्यवस्तुसत्त्वेन द्वैतावश्यम्भाव इति वियदादिप्रपञ्चोऽपि सत्योऽस्तीति निरस्तम् ।

---

तथा घटादिरूपप्रपञ्चसाक्षात्कारे सति श्रुतिन्यायसिद्धं मिथ्यात्वं न निवर्त्तत इत्यर्थः ।

चोद्यान्तरमपि वक्ष्यमाणहेतुना निरस्तमित्याह एतेन इति । शब्दगम्यस्य ब्रह्मणः सत्यत्वे शब्दनिष्ठयोग्यतायाः सत्यत्वं वक्तव्यमित्यत्र हेतुमाह योग्यतासमानसत्ताकस्यैवेति । वाक्यार्थवाक्यनिष्ठयोग्यतयोः समानसत्ताकत्वनियमं साधयति प्रातिभासिकयोग्यतावतेति व्यावहारिकार्थस्य सिद्ध्यभावेन इति सम्बन्धः ।

शब्दगम्यस्य ब्रह्मणः सत्यत्वे ब्रह्मगोचरशाब्दज्ञाननिष्ठस्य प्रामाण्यस्य सत्यत्वं वक्तव्यमित्यत्र हेतुमाह अर्थाबाधरूपेति । तथाच वेदान्तार्थस्य ब्रह्मणः सत्यत्वसंरक्षणाय तद्धि प्रामाण्यस्य सत्यत्वं वक्तव्यमिति भावः ।

व्यावहारिकस्य अर्थक्रियाकारित्वस्य व्यवस्थापितत्वेन व्यावहारिकयोग्यताया अपि सत्यब्रह्मसिद्धिसम्भवात्। ब्रह्मपरे वेदान्ते सत्यादिपदसत्त्वाद् ब्रह्मसत्यत्वसिद्धेः। अग्निहोत्रादिवाक्ये तादृशपदाभावात् तत्सत्वेऽपि प्रबलब्रह्माद्वैतश्रुतिविरोधात् तदसिद्धिरित्येव वैषम्योपपत्तेः।

---

ननु ब्रह्मव्यतिरिक्तस्य निरुक्तयोग्यतादेः सत्यत्वसिद्धावपि पूर्ववाद्यभिमतं निखिलद्वैतसत्यत्वं कथं सिध्यति तत्राह तथा च इति द्वैतावश्यम्भाव इति अद्वैतभङ्गावश्यम्भाव इत्यर्थः।

वेदान्तशब्दनिष्ठयोग्यतायाः सत्यत्वं किं तस्याः शाब्दबोधरूपार्थक्रियाकारित्वसिद्ध्यर्थमपेक्ष्यते किं वा ब्रह्मणः सत्यत्वसिद्ध्यर्थं नाद्य इत्याह व्यावहारिकस्येति प्रपञ्चस्येति शेषः। योग्यताया इति पञ्चमी। सत्यस्य ब्रह्मणः सिद्धिः शाब्दबोधः द्वितीये योग्यतायाः सत्यत्वाभावेऽपि ब्रह्मणस्तत्सिध्यतीत्याह ब्रह्मपर इति। अत्रादिपदं चित्पदादिसंग्रहार्थम्। तर्हि अग्निहोत्रादिधर्मस्यापि सत्यादिपदात् सत्यत्वसिद्धिः स्यादिति न इत्याह अग्निहोत्रादीति। ननु यो वै स धर्मः सत्यञ्च एतदिति धर्मेऽपि सत्यपदं श्रुतौ प्रयुक्तमस्ति तत्राह तत्सत्त्वेऽपीति तदसिद्धिरिति यो वै स धर्म इति वाक्यस्याग्निहोत्रादौ परमार्थत्वप्रतिपादने तात्पर्यलिङ्गानामभावेन अतत्परस्य तस्य तत्परत्वेन प्रबलया द्वैतश्रुत्या बाधाद्धर्मस्य न ब्रह्मवत् परमार्थत्वसिद्धिरित्यर्थः। श्रुतावग्निहोत्रादेरवगत्यवश्यत्वेन सत्यत्वमनुष्ठीयमानावश्यत्वेन धर्म-

शब्दार्थयोग्यतयोः समानसत्ताकत्वनियमस्य निष्प्रमाणकत्वात् ।

घटज्ञानप्रामाण्यस्य अघटत्ववत् सत्यभूतब्रह्मज्ञानप्रामाण्यस्य अपि तदतिरिक्तघटितत्वेन मिथ्यात्वोपपत्तेश्च । तस्मात् आरम्भणाधिकरणोक्तन्यायेन कृत्स्नस्य वियदादिप्रपञ्चस्य मिथ्यात्वं वज्रलेपायते ।

जीवोपाधिभेदसम्भावना आत्माभेदेऽपि उपाधिभेदेन सुखदुःखादिव्यवस्था ।

ननु आरम्भणशब्दादिभिरचेतनस्य वियदादिप्रपञ्चस्य मिथ्यात्वसिद्धौ अपि चेतनानाम् अपवर्गभाजां मिथ्यात्वायोगात् अद्वितीयब्रह्मणि समन्वयो न युक्तः ।

---

त्वञ्च विवक्षित्वा यो वै स धर्मः सत्यं चैतदिति सत्यधर्मयोरभेद उक्त इति मन्तव्यम् ।

व्यावहारिकयोग्यतावता वेदान्तवाक्येन सत्यस्य ब्रह्मणः सिद्धौ फलितमाह । शब्दार्थयोग्यतयोरिति ।

ब्रह्मणः सत्यत्वेऽपि तज्ज्ञाननिष्ठप्रामाण्यस्य न सत्यत्वं सिध्यति तस्य ब्रह्ममात्रत्वाभावादित्याह घटज्ञानेति तदतिरिक्तेति ब्रह्मत्ववति ब्रह्मत्वप्रकारकानुभवत्वरूपतत्प्रामाण्यस्यापि ब्रह्मातिरिक्तब्रह्मत्ववैशिष्ट्यघटितत्वेन इत्यर्थः । यदि च ब्रह्मज्ञानगतं प्रामाण्यमबाधितार्थानुभवत्वरूपं तच्च विवक्षितविवेकेन अबाधतोग्यविषयस्वरूपमात्रं पर्य्यवस्यति तन्मात्रपर्य्यवसितप्रामाण्यस्य च अखण्डार्थपरवेदान्तेषु ब्रह्ममात्रत्वमेव न तदतिरिक्तघटितत्वमिति ब्रह्मज्ञानप्रामाण्यस्य सत्यत्वं सम्भव-

न च तेषां ब्रह्माभेदः प्रागुक्तो युक्तः परस्पर-भिन्नानां तेषाम् एकेन ब्रह्मणा भेदासम्भवात्। न च तद्भेदासिद्धिः सुखदुःखादिव्यवस्थया तत्सिद्धेरिति चेत् न। तेषामभेदेऽपि उपाधिभेदादेव तद्व्यवस्थोपपत्तेः।

जीवोपाधिभेदसम्भावनोपपत्तिनिरूपणम् मनसां भेदात् तस्यैव सुखाद्याश्रयत्वम्।

ननु उपाधिभेदेऽपि तदभेदानपायात् कथं

---

तीति उच्यते तर्हि ब्रह्मगोचरशाब्दधीप्रामाण्यस्य सत्यत्वेऽपि न तव इष्टसिद्धिस्तस्य ब्रह्ममात्रत्वेन ब्रह्मातिरिक्तसत्यवस्त्वसिद्धेरिति भावः। तस्मादिति विरोधाभावादित्यर्थः।

प्रपञ्चस्य मिथ्यात्वपक्षे प्रत्यक्षादिविरोधाभावो निरूपितः इदानीं सर्वेषु शरीरेषु आत्मन एकत्वपक्षे सुखदुःखादिव्यवस्था-विरोधमाशङ्क्य तां निरूपयितुं प्रसङ्गमाह ननु इत्यादिना। अप-वर्गेति जीवानां स्वरूपेण मिथ्यात्वे तत्त्वज्ञानेन निवृत्त्यापत्त्या तेषां मुक्तिभाक्त्वं न स्यादित्यर्थः। ननु जीवानां ब्रह्माभेदस्य वेदा-न्तप्रमाणकस्य प्रथमपरिच्छेदावसाने उक्तत्वात् ब्रह्मणो नाद्वि-तीयत्वानुपपत्तिरित्याशङ्क्य निराकरोति न च तेषामिति। जीवानां परस्परभेदासिद्धिमाशङ्क्याह न च तदिति। एकस्य यदा दुःखं भवति तदा जीवान्तरस्य सुखं भवतीति सुखदुःख-व्यवस्था। एवं रागद्वेषादिव्यवस्थापि अनुभवसिद्धा द्रष्टव्या। तया तेषां परस्परभेदः सिध्यतीत्याह सुखेति। ननु आरम्भणेत्यादिना प्राप्तं प्रतिशरीरमात्मभेदपक्षं प्रतिक्षिपति नेति उपपत्तेरिति। नात्मभेदः प्रमाणिक इत्यर्थः।

व्यवस्था । न हि आश्रयभेदेन उपपादनीयो विरुद्ध-धर्मासङ्करस्तदतिरिक्तस्य कस्यचिद्भेदोपगमेन सिध्यति ।

अत्र केचिदाहुः । सिध्यत्येव अन्तःकरणो-पाधिभेदेन सुखदुःखादिव्यवस्था कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव विज्ञानं यज्ञं तनुत इत्यादिभिः श्रुतिभिस्तस्यैव निखिलानर्थाश्रयत्वप्रतिपादनाद-सङ्गो हि अयं पुरुषः असङ्गो न हि सज्जत इत्यादिश्रुतिभिश्चेतनस्य सर्वात्मना औदासीन्यप्रति-पादनाच्च ।

---

तदभेदेति आत्माभेदेत्यर्थः । कथंशब्दसूचितामनुपपत्तिमाह नहीति तदतिरिक्तस्येति । विरुद्धसुखदुःखाद्याश्रयातिरिक्तस्य कस्यचिदहमनुभवागोचरस्य इत्यर्थः । अन्तःकरणमेव बन्धा-श्रयोऽहमनुभवगोचरश्च न तु आत्मा तस्य कूटस्थत्वात् । तथा च आश्रयभेदादेव धर्मव्यवस्थेति समाधत्ते अत्र केचिदा-हुरिति मन एवेति। मनोऽन्तःकरणं कामसङ्कल्पादीनां तत्परि-णामत्वात् सामानाधिकरण्यं विज्ञानमन्तःकरणं तनुते करोति यज्ञं शास्त्रीयं कर्म आदिपदेन कामा येऽस्य हृदि स्थिता इत्या-दिश्रुतिर्ग्राह्या । चिदात्मनः कूटस्थत्वे प्रमाणमाह असङ्ग इति न हि सज्जते इति सङ्गायोग्यत्वादित्यर्थः। आदिपदेन साक्षी चेता केवलो निर्गुणश्च अनश्नन्नन्योऽभिचाकशीत्यादिश्रुति-संग्रहः।

न च एवं सति कर्त्तृत्वादिबन्धस्य चैतन्यसामानाधिकरण्यानुभवविरोधः अन्तःकरणस्य चेतनतादात्म्येन अध्यस्ततया तद्धर्माणां चैतन्यसामानाधिकरण्यानुभवोपपत्तेः। न च अन्तःकरणस्य कर्त्तृत्वादिबन्धाश्रयत्वे चेतनः संसारी न स्यादिति वाच्यम्।

कर्त्तृत्वादिबन्धाश्रयाहङ्कारग्रन्थितादात्म्याध्यासाधिष्ठानभाव एव तस्य संसार इत्युपगमात्।

---

न च एवं सतीति अन्तःकरणस्यैव बन्धाश्रयत्वे सतीत्यर्थः। अहं करोमि अहं सुखी अहं दुःखी अहमुपलभे इत्यादिरूपेणोपलब्धिरूपचैतन्यस्य कर्त्तृत्वसुखदुःखात्मकं बन्धसामानाधिकरण्यमनुभूयते तद्विरोध इत्यर्थः। यथा इदमंशतादात्म्येन अध्यस्ते रजते रजतत्वस्य इदन्त्वसामानाधिकरण्यानुभवस्तद्दिति समाधत्ते अन्तःकरणस्येति। तद्धर्माणामित्यत्र तत्पदमन्तःकरणपरम्। एतदुक्तं भवति आत्मनश्चैतन्यस्वरूपत्वेऽपि भेदकल्पनया चैतन्यमात्मधर्मस्तथा च आत्मान्तःकरणयोरैक्याध्यासे सति तयोर्धर्माणां चैतन्यकर्त्तृत्वादीनां सामानाधिकरण्यं सम्पद्यत इति न तदनुभवविरोध इति। चेतन इति चैतन्याश्रय आत्मा संसारिकर्त्तृत्वादिधर्मवत् न स्यादित्यर्थः। चेतनस्य स्वतः संसाराश्रयत्वाभावेऽपि बुद्धिनिष्ठस्य संसाराश्रयत्वस्य साक्षिणा अनुभूयमानस्य आत्मन्यारोपोपपत्तेः।

आरोपितसंसाराश्रयत्वमस्तीति परिहरति कर्त्तृत्वादीति। अहङ्कारस्य चेतनेन सह ग्रन्थितुल्यो यस्तादात्म्यरूपोऽध्यास-

तावतैव भीषणत्वाश्रयसर्पतादात्म्याध्यासाधिष्ठाने रज्ज्वादौ अयं भीषण इत्यभिमानवदात्मनोऽनर्थाश्रयवत्त्वाभिमानोपपत्तेः। एतदभिप्रायेणैव ध्यायतीव लेलायतीव अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यत इत्यादिश्रुतिस्मृतिदर्शनाच्च।

न च एकस्मिन्नेव आत्मनि विचित्रसुखदुःखाश्रयतत्तदन्तःकरणानामध्यासादात्मनि अभि-

---

स्तदधिष्ठानत्वमेव इत्यर्थः। तस्य चेतनस्य इत्यर्थः। संसार इति संसाराश्रयत्वभ्रान्तिप्रयोजक इत्युपगमादित्यर्थः।

तावतैवेति उपाधेः संसाराश्रयत्वमात्रेण इत्यर्थः। भीषणत्वं भयहेतुत्वं तच्च सर्पधर्मः अभिमानो भ्रान्तिः। न चान्यनिष्ठसंसाराश्रयत्वस्यात्मन्यारोपेऽन्यथाख्यातिप्रसङ्ग इति वाच्यम्। अनुभूयमानारोप्यस्थले आरोप्याधिष्ठानयोः संसर्गस्य अनिर्वचनीयस्योत्पत्त्युपगमेन तदप्रसङ्गादिति भावः। एतदिति बुद्धिनिष्ठसंसारस्यात्मन्यारोपाभिप्रायेण एव इत्यर्थः। बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव भाति तस्यामेव लेलायन्त्यां चलन्त्यामात्मा चलतीव न तु वस्तुतो ध्यानाद्याश्रय इति इवशब्दार्थः। ध्यानादिग्रहणमशेषबुद्धिधर्माणामुपलक्षणार्थम्। अहङ्कारेण कर्तृत्वाश्रयेण सह विमोहं तादात्म्याध्यासमापन्नः सन्नात्मा स्वात्मानमहं कर्त्तेतिमन्यते। कर्तृत्वमननमशेषसंसारमननोपलक्षणार्थम्। ननु बुद्धेः स्वतः संसाराश्रयत्वं चिदात्मनस्तु भ्रान्तिसिद्धं संसाराश्रयत्वमिति विभागाभ्युपगमे प्रतिशरीरं बुद्धिभेदात्तद्धर्म-

मानिकसुखदुःखादिव्यवस्थैवमपि न सिध्यतीति वाच्यम्।

आध्यासिकतादात्म्यापन्नान्तःकरणगतानर्थजातस्यैव तद्गतपरस्परभेदस्यापि अभिमानत आत्मीयतया आत्मनो यादृशमनर्थभाक्त्वं तादृशेन भेदेन तद्व्यवस्थोपपत्तेः।

एतेन सुखदुःखादीनामन्तःकरणधर्मत्वेऽपि तदनुभवः साक्षिरूप इति तस्यैकत्वात् सुखदुःखानुभवरूपभोगव्यवस्था न सिध्यतीति निरस्तम्।

---

व्यवस्थासिद्धावपि प्रतिशरीरमात्मभेदाभावात् तद्गतस्य बन्धस्य व्यवस्था न सिध्यतीति शङ्कते न च एकस्मिन् एव इति। विचित्राणां सुखदुःखानामाश्रयभूतानि तत्तदन्तःकरणानि तेषामेकस्मिन्नेव आत्मन्यध्यासाद्धेतोर्यं आत्मन्याभिमानिकः सुखदुःखादिस्तस्य व्यवस्था न सिध्यतीत्यर्थः। एवमपीति बुद्धिस्थधर्मव्यवस्थासिद्धावपि इत्यर्थः।

बन्धाश्रयत्वस्येव बुद्धिगतस्य परभेदाश्रयत्वस्यापि आत्मन्यारोपाभ्युपगमान्नाव्यवस्थेति परिहरति आध्यासिकेति। ननु आरोपितेन भेदेन कथं व्यवस्थेत्याशङ्क्य व्यवस्थापनीयस्यापि आत्मन्यारोपितत्वात् न व्यवस्थापकत्वं तादृशभेदस्य इत्याह यादृशमिति। आत्मसाक्षिचैतन्ययोः अभेदेऽपि भेदं कल्पयित्वा कल्पितबन्धाश्रयस्य आत्मन एकत्वप्रयुक्तो दोषो निरस्तः।

इदानीं साक्षिचैतन्यस्य सर्वशरीरेषु एकत्वप्रयुक्तं

तत्तदन्तःकरणतादात्म्यापत्त्या तदन्तःकरणभेदेन भेदवत एव साक्षिणः तदन्तःकरणसुखदुःखाद्यनुभवरूपत्वेन तत्तद्व्यवस्थाया अपि उपपत्तेरिति ।

अन्ये तु जडस्य कर्तृत्वादिबन्धाश्रयत्वानुपपत्तेः कर्त्ता शास्त्रार्थवत्त्वादिति चेतनस्यैव तदाश्रयत्वप्रतिपादकसूत्रेण अन्तःकरणे चिदाभासोबन्धाश्रयः तस्य च असत्यस्य बिम्बाद्भिन्नस्य प्रत्यन्तःकरणभेदात् विद्वदविद्वत्सुखिदुःखित्वं कर्त्रादिव्यवस्था ।

---

दोषमाशङ्क्य निराकरोति एतेन इति वक्ष्यमाणहेतुना इत्यर्थः । तदनुभव इति सुखाद्यनुभव इत्यर्थः । सुखेति देवदत्तस्य यः सुखानुभवः स एव चेद्यज्ञदत्तस्यापि तदा देवदत्तस्य सुखानुभवकाले तमेव सुखानुभवमादाय यज्ञदत्तस्यापि अहं सुखीति भोगप्रसङ्ग इत्यर्थः ।

यथा अन्तःकरणगतभेदस्य आत्मन्यारोपस्तथा साक्षिचैतन्यरूपसुखाद्यनुभवेऽपि तद्गतभेदारोपाभ्युपगमान्न भोगाव्यवस्थेति परिहरति तत्तदिति भेदेन इति । तत्तदन्तःकरणभेदेन साक्षिण्यारोपितेन भेदविशिष्टस्य इत्यर्थः । धान्येन धनवानित्यत्रेव तृतीया । साक्षिण्यन्तःकरणभेदारोपे हेतुः तादात्म्यापत्त्येति ।

सर्वशरीरेष्वात्मनः एकत्वे सुखादिव्यवस्था न स्यादिति पूर्ववाद्याक्षेपे अन्यत्समाधानमाह अन्ये त्विति । पूर्वोक्तं बुद्धेर्बन्धाश्रयत्वं दूषयति जडस्येति अनुपपत्तेरिति । बन्धस्य

न चैवमसत्यस्य बन्धाश्रयत्वे बन्धमोक्षयोः वैयधिकरण्यापत्तिः। अस्य चिदाभासस्य अन्तःकरणावच्छिन्ने स्वरूपतः सत्यतया मुक्त्यन्वयिनि पारमार्थिकजीवे अध्यस्ततया कर्त्तृत्वाश्रयचिदाभासतादात्म्याध्यासाधिष्ठानभावः तस्य बन्ध इत्युपगमादिति आहुः।

---

चेतनधर्मत्वप्रसिद्धिविरोधादिति भावः। बुद्धेरेवाकर्त्तृत्वं न चेतनस्य तस्य कूटस्थत्वादिति साङ्ख्यमतनिराकरणपूर्वकचेतनस्यैव कर्त्तृत्वव्यवस्थापकसूत्रानुसाराच्चेत्याह कर्त्तेति। चेतनः कर्त्ता भवितुमर्हति तथा सत्येव चेतनस्य कर्त्तृत्वप्रतिपादके कर्त्ता विज्ञानात्मा पुरुष एति शास्त्रमर्थवद्भवति अन्यथा तदनर्थकं स्यादिति सूत्रार्थः। चिदाभास इति न तु साक्षाच्चिदात्मैव तस्य कूटस्थत्वेन सम्बन्धपरिणामित्वायोगादिति भावः। चिदाभासस्य बन्धाश्रयत्वेऽपि कथं व्यवस्थासिद्धिस्तत्राह तस्य चेति। बिम्बप्रतिबिम्बयोरभेदेऽपि प्रत्यन्तःकरणप्रतिबिम्बभेदो लभ्यते उपाधिभेदेन तन्निरूपितप्रतिबिम्बानामपि कल्पितभेदाभ्युपगमात् तथापि प्रतिबिम्बमिथ्यात्वमत एव तस्य बन्धाश्रयत्वं स्वाभाविकं सम्भवतीति तन्मिथ्यात्वमतमाश्रितम्।

न च एवमिति बिम्बप्रतिबिम्बयोर्भेदाङ्गीकार इत्यर्थः। सत्यस्य बिम्बचेतनस्य ब्रह्मभावलक्षणमोक्षाश्रयत्वे च सतीति शेषः। मुक्त्यन्वयिनो बिम्बभूतावच्छिन्नचेतन्यस्य स्वतः संसाराश्रयत्वाभावेऽपि भ्रान्तिसिद्धस्य तदाश्रयत्वस्य सम्भवान्न वैयधिकरण्यदोष इत्याह अस्येति। चिदाभासगतबन्धस्य चिदात्मन्यध्यासे

अपरे तु आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति सहकारित्वेन देहेन्द्रियैः तादात्म्येन मनसा च युक्तस्य चेतनस्य भोक्तृत्वश्रवणात् अन्तःकरणभेदेन तद्विशिष्टभेदाद् व्यवस्था। न च एवं विशिष्टस्य बन्धः शुद्धस्य मोक्ष इति वैयधिकरण्यं विशिष्टगतस्य बन्धस्य विशेष्ये अनन्वयाभावाद् विशिष्टस्य अनतिरेकादिति आहुः।

---

चिदात्मचिदाभासयोस्तादात्म्याध्यासहेतुमाह अध्यस्ततयेति अस्य चिदाभासस्य परमार्थजीवे अध्यस्ततयेति सम्बन्धः। तस्य-बन्ध इति सम्बन्धः। बन्धारोपे हेतुरित्युपगमादित्यर्थः।

यथाश्रुतस्याध्यासाधिष्ठानत्वस्य बन्धरूपत्वाभावात् सुखादेरिव बन्धरूपत्वाच्चेति बोध्यम्। सर्वशरीरेषु चिदात्मन एकत्वेऽपि तस्य केवलस्य बन्धाश्रयत्वं नोपेयते किन्तु बुद्धिविशिष्टस्य चिदात्मनस्तथाच बन्धाश्रयविशिष्टस्य प्रतिशरीरं भेदात् न सुखदुःखादिसाङ्कर्यमिति मतान्तरमाह अपरे त्विति। विशिष्टस्य भोक्तृत्वे मानमाह आत्मेति आत्मशब्दो देहपरः श्रुतावात्मानमित्यध्याहारः। इतिशब्दो द्वितीयासमानार्थकः। ततश्च देहेन्द्रियान्तःकरणयुक्तमात्मानं भोक्तारमाहुर्विद्वांस इत्यर्थः। ननु देहस्य विशेषणतया भोक्तृकोटौ निवेशो न सम्भवति तस्यात्मनि भोगं प्रति अवच्छेदकतया उपकरणत्वात् इन्द्रियाणामपि भोक्तृकोटौनिवेशो न सम्भवति तेषामुपकरणमात्रत्वात् स्वप्ने तेषामभावेऽपि भोगदर्शनाच्च तस्मात् देहेन्द्रियैर्युक्तस्यात्मनो भोक्तृत्वश्रुतिरनुपपन्नेत्याशङ्क्य युक्तपदो-

इतरे तु अस्तु केवलः चेतनः कर्त्तृत्वादिवन्धाश्रयः स्फटिकलौहित्यन्यायेन अन्तःकरणस्य तद्विशिष्टस्य वा कर्त्तृत्वाद्याश्रयस्य सन्निधानात् चेतनेऽपि कर्त्तृत्वाद्यन्तराध्यासोपगमात्। न च तस्य एकत्वाद् व्यवस्थानुपपत्तिः। उपाधिभेदात् एव तदुपपत्तेः। न च अन्यभेदात् अन्यत्र विरुद्धधर्मव्यवस्था न युज्यते इति वाच्यम्।

---

दितं योगं यथायोग्यं दर्शयति सहकारित्वेन चेति। आत्मनि तावत्कामसङ्कल्पादयोऽनुभूयन्ते ते च मनोधर्मत्वेन श्रुतिसिद्धास्तथाच कामादिमन्मनस्तादात्म्यं विना आत्मनः कामाद्याश्रयत्वानुपपत्तेस्तादात्म्येन तद्विशिष्टस्य भोक्तृत्वं युक्तमित्याशयेनाह तादात्म्येन इति। ननु बुद्धिविशिष्टात्मा केवलात्मनः सकाशाद्भिन्नः विशिष्टः केवलं न भवतीति प्रतीतेर्विशिष्टवृत्तिकेवलप्रतियोगिकभेदस्य विशेष्यवृत्तित्वनियमात् तथाच विशिष्टात्मगतबन्धस्य विशेष्यान्वयित्वेऽपि मुक्तान्वयिकेवलचैतन्ये बन्धानन्वयाद् वैयधिकरण्यं तादवस्थ्यमिति न इत्याह। विशिष्टस्येति विशिष्टान्तर्गतविशेष्यस्य केवलादनतिरेकादित्यर्थः।

अयं भावः लोके दण्डविशिष्टपुरुषे केवलपुरुषाभेदस्य प्रत्यभिज्ञायमानत्वात् तत्प्रत्यभिज्ञाया बाधकाभावाच्च विशिष्टान्तर्गतविशेष्यस्य केवलस्य च स्वाभाविकमैकत्वं विशिष्टत्वाविशिष्टत्वरूपभेदेन काल्पनिको भेदश्च कल्प्यते तथाच विशिष्टगतबन्धस्य विशेष्यान्वयिनः केवलात्मन्यपि अन्वयसिद्ध इति अञ्जसा बन्धमोक्षयोः सामानाधिकरण्यमाह इतरे त्विति। स्फटि-

मूलाग्ररूपोपाधिभावे वा वृत्ते संयोगतदभावव्य-वस्थादर्शनात्। तत्तत्पुरुषकर्णपुटोपाधिभेदेन श्रोत्रभावमुपगतस्य आकाशस्य तत्र तत्र शब्दोप-लम्भकत्वतारतम्येष्टानिष्टशब्दोपलम्भकत्वादिवैचि-त्र्यादर्शनाच्च इत्याहुः।

---

केति। यथा लौहित्याश्रयस्य जपाकुसुमादेः सन्निधानात् स्फटिके उपाधिगतलौहित्यापेक्षया तत्प्रतिबिम्बभूतस्य लौहित्यान्तर-स्योत्पत्तिस्तथा चिदात्मनि बुद्ध्यादिगतबन्धापेक्षया अन्यस्य कर्त्तृ-त्वादिबन्धस्याध्यासात्मकस्योपगमादित्यर्थः। न च बुद्ध्यादौ साक्षिणा अनुभूयमानस्य बन्धस्य चिदात्मनि संसर्गमात्राध्यासो-पगमेन वैयधिकरण्यशङ्कापरिहारसम्भवात् तत्र बुद्ध्यादिनिष्ठ-कर्त्तृत्वादिसदृशकर्त्तृत्वप्रमुखबन्धोत्पत्तिकल्पनं न प्रामाणिक-मिति वाच्यम्। बुद्धेर्गुणेनारागमात्रो ह्यवर इति श्रुतावबर-शब्दितजीवस्य आराग्रमात्रशब्दितमल्पपरिमाणबुद्धिगुणशब्दित-बुद्धिपरिमाणहेतुकमितिप्रतिपादनेन तुल्यन्यायतया कर्त्तृ-त्वादिकमपि बुद्धिधर्मसदृशमात्मनि उत्पद्यते इत्यस्यार्थस्य श्रुतिसम्मतत्वेन प्रामाणिकत्वात् न च तस्येति कर्त्तृत्वाद्यध्या-साधिष्ठानस्यात्मन इत्यर्थः।

मूलेति परमतेनेदं दृष्टान्तद्वयं सिद्धान्ते मूलावच्छिन्नवृक्षस्य अग्रावच्छिन्नवृक्षस्य च काल्पनिकभेदाभ्युपगमेन एव संयोगतद-भावस्योपगमात् श्रोत्रेन्द्रियस्य दिगारब्धत्वोपगमाच्चेति बोध्यम्। तारेति तारशब्दोपलम्भकत्वमन्दशब्दोपलम्भकत्वेष्टशब्दोपल-म्भकत्वानिष्टशब्दोपलम्भकत्वादिलक्षणस्य वैचित्र्यस्य दर्शनादि-त्यर्थः।

एके तु यदि आश्रयभेदादेव विरुद्धधर्मव्यवस्था उपपादनीया तदा चेतने निष्कृष्टे एव उपाधिवशाद्भेदकल्पना अस्तु अकल्पिताश्रयभेद एव व्यवस्थाप्रयोजक इति क्वापि असंप्रतिपत्तेः।

मणिमुकुरकृपाणाद्युपाधिकल्पितेन भेदेन मुखे श्यामावदातवर्त्तुलदीर्घभावादिधर्माणाम् अङ्गुल्युपष्टम्भोपाधिकल्पितेन भेदेन दीपे पश्चात्पौरस्त्यरूपभावादिधर्माणाञ्च व्यवस्थासंप्रतिपत्तेरित्याहुः।

---

यदि दृष्टान्तयोरुपाधिभेदेन तदुपहितत्वचादिभेदं परो ब्रूयात् तदा प्रकृतेऽपि तथा अस्तु इत्याशयेनाह एके त्विति निष्कृष्ट इति। अन्तःकरणविशिष्टवेशान्निष्कृष्टे तदुपहिते चिदात्मनीत्यर्थः। ननु सत्यभेद एव व्यवस्थाप्रयोजक इति नेत्याह कल्पितेति घटादिभेदस्यापि सत्यत्वस्य अस्माकमसम्मतत्वादित्यर्थः।

ननु स्वाभाविकभेद एव व्यवस्थाप्रयोजको न तु औपाधिकभेद इत्याशङ्क्याह मणीति। मुखे हि मलिनमणिदर्पणीकृतेन भेदेन श्यामत्वावदातत्वव्यवस्थासंप्रतिपत्तेः कृपाणमणिमयस्तम्भादिकृतेन भेदेन वर्त्तुलत्वदीर्घत्वभावादिव्यवस्थासम्प्रतिपत्तेरित्यर्थः। न च बिम्बप्रतिबिम्बयोरभेदे स्वाभाविके खलु भेद औपाधिक इति सिध्यति तद्वशात् व्यवस्था च सिध्यति तयोरभेद एव कथं सिद्ध इति वाच्यम्। तस्य प्रागेव साधितत्वादिति भावः। अवच्छेदपक्षे औपाधिकभेदस्य व्यवस्थापकत्वसंप्रतिपत्तिं

शरीरस्य उपाधित्वम् ।

एवं उपाधिवशाद्व्यवस्थोपपादने सम्भाविते जीवानां परस्परसुखाद्यननुसन्धानप्रयोजक उपाधिः क इति निरूपणीयम् ।

अत्र केचिदाहुः । भोगायतनाभेदतद्भेदावनुसन्धानाननुसन्धानप्रयोजक उपाधिः शरीराव-च्छिन्नवेदनायास्तदवच्छिन्ने नानुसन्धानात् चरणाव-च्छिन्नवेदनाया हस्तावच्छिन्नेन अननुसन्धानाच्च । हस्तावच्छिन्नोऽहं पादावच्छिन्नवेदनामनुभवामी-त्यप्रत्ययात् ।

---

दर्शयति अङ्गुलीति । जीवानामुपाधिभेदाद्वा औपाधिकभेदाद्वा सुखदुःखादिव्यवस्थासिद्धौ तेषां वस्तुतः परस्परभेदे प्रमाणाभा-वादेकब्रह्माभेदः सिध्यति तत्सिद्धौ च जीवाभिन्ने निष्प्रपञ्चे ब्रह्मणि वेदान्तसमन्वयः सिद्ध इति प्रतिपादितम् ।

संप्रति विचारान्तरमारभ्यते एवमिति उक्तप्रकारेणेत्यर्थः । क इति अनुसन्धानाननुसन्धानयोः किं भोगायतनाभेदतद्भेदौ प्रयो-जकौ किं वा श्लिष्टभोगायतनाभेदतद्भेदौ अथवा शरीराभेदतद्भे-दौ अन्तःकरणभेदतद्भेदौ वा अज्ञानाभेदतद्भेदौ वेति प्रश्ने प्रतिव-चनं निरूपणीयमित्यर्थः ।

तत्राद्यं पक्षमादाय प्रतिवचनं निरूपयति अत्र केचि-दाहुरिति । तत्रान्वयव्यतिरेकौ प्रमाणयति शरीरावच्छिन्नेति भोगायतनं हि अवच्छेदकतासम्बन्धेन भोगाश्रयः स च

कथं तर्हि चरणलग्नकण्टकोद्धाराय हस्त-व्यापारः। नायं हस्तव्यापारो हस्तावच्छिन्नानुसन्धा-तात् किन्तु अवयवावयविनोश्चरणशरीरयोरभेद-सत्त्वेन चरणावच्छिन्नवेदना शरीरावच्छिन्नेन अहं चरणे वेदनावानित्यनुसन्धीयत इति तदनुसन्धा-नात्।

एवं चैत्रमैत्रशरीयोरभेदाभावाच्चैत्रशरीरा-वच्छिन्नवेदना मैत्रशरीरावच्छिन्नेन नानुसन्धीयते

---

देहस्तदवयवहस्तादिश्च भवतीत्याशयेनाह चरणेति। अननुस-न्धानमेव दर्शयति हस्तावच्छिन्न इति।

हस्तावच्छिन्नात्मनः पादावच्छिन्नात्मगतदुःखानुसन्धातृत्वा-भावे बाधकं शङ्कते कथं तर्हीति। अयं हस्तव्यापारो हस्ताव-च्छिन्नस्यानुसन्धानात् न भवति किन्तु तदनुसन्धानादिति सम्बन्धः। तस्य शरीरावच्छिन्नस्य यच्चरणावच्छिन्नगतवेदनानु-सन्धानं तस्मादित्यर्थः। ननु चरणावच्छिन्नगता वेदना कथं शरीरावच्छिन्नेनानुसन्धीयते अवयवावयविनोर्भेदाद्भेदेऽप्यनु-सन्धानोपगमे चैत्रशरीरावच्छिन्ना मैत्रशरीरावच्छिन्नेनापि अनुसन्धीयेत भेदाविशेषात्। तथा च चैत्रशरीरलग्नकण्टको-द्धाराय मैत्रशरीरस्य स्वारसिको व्यापारः प्रसज्येत अत आह अवयवावयविनोरिति। अवयवानां परस्परभेदेऽपि शरीरतद-वयवयोस्तादात्म्योपगमादित्यर्थः।

एवञ्चेति। शरीरावच्छिन्नस्य चरणावच्छिन्नवेदनानुसन्धानं

नाप्युभयशरीरानुस्यूतावयव्यन्तरावच्छिन्ने नानुसन्धी-यते उभयानुस्यूतस्यावयविनो भोगायतनस्याभावादिति न चैत्रशरीरलग्नकण्टकोद्धाराय मैत्र-शरीरव्यापारप्रसङ्ग इति ।

अन्ये तु विश्लिष्टोपाधिभेदोऽननुसन्धानप्रयोजकः । तथा च हस्तावच्छिन्नस्य चरणावच्छिन्न-वेदनानुसन्धानाभ्युपगमेऽपि न दोषः ।

---

प्रतिशरीरचरणयोस्तादात्म्यस्य नियामकत्वे सतीत्यर्थः । ननु हस्तावच्छिन्नस्य चरणावच्छिन्नगतवेदनानुसन्धातृत्वाभावेऽपि चरणलग्नकण्टकोद्धाराय हस्तव्यापारवत् मैत्रशरीराव-च्छिन्नस्य चैत्रशरीरावच्छिन्नगतवेदनानुसन्धातृत्वाभावेऽपि चैत्रशरीरलग्नकण्टकोद्धाराय मैत्रशरीरव्यापारप्रसङ्गः परि-हर्तुं न शक्यते तत्राह नापीति चैत्रमैत्रशरीरद्वयानुस्यूते-त्यर्थः । चैत्रशरीरावच्छिन्नवेदना उभयानुस्यूतावयव्यन्तरा-वच्छिन्नापि न अनुसन्धीयत इति सम्बन्धः । अतो न दृष्टान्तसाम्यमिति भावः । चरणलग्नकण्टकोद्धाराय हस्तव्या-पारानुरोधेन हस्तावच्छिन्नस्यैव चरणावच्छिन्नवेदनानुसन्धा-तृत्वमुपेयते । न च तथा सति भोगायतनभेदस्याननुसन्धानप्र-योजकत्वं न स्यात् चरणहस्तभेदे व्यभिचारादिति वाच्यम् ।

तद्वारणाय विशेषणदानोपपत्तेरिति मत्वा द्वितीयमुपाधिं निरूपयति अन्ये त्विति । उपाधिपदं भोगायतनपरम् । न दोष इति भोगायतनयोर्हस्तचरणयोर्भेदे सत्यपि तयोर्विश्लिष्टत्वाभा-वेन विश्लिष्टभोगायतनभेदस्याननुसन्धानप्रयोजकस्याभावात् न तत्र व्यभिचारदोष इत्यर्थः ।

न चैवं सति गर्भस्थस्य मातृसुखानुसन्धानप्रसङ्गः।

एकस्मिन् अवयविनि अवयवभावेनाऽननुप्रविष्टयोर्विश्लिष्टशब्देन विवक्षितत्वात्। मातृगर्भशरीरयोस्तथात्वादित्याहुः।

न च उद्यदायुधदोर्दण्डाः पतितस्वशिरोऽक्षिभिः। पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीनिहेति भारतोक्त्या विश्लेषेऽपि अनुसन्धानमवगतमिति वाच्यम्।

तत्रापि शिरःकबन्धयोरेकस्मिन् अवयविनि

---

न च एवं सतीति विश्लिष्टत्वविशेषणदाने सतीत्यर्थः। गर्भस्थजीवस्य यद्भोगायतनं तस्य मातृशरीरस्य च विश्लेषाभावादिति भावः।

विश्लिष्टपदार्थानभिज्ञस्य इदं बोध्यमिति परिहरति एकस्मिन्निति तथात्वादिति। एकस्मिन् अवयविनि अवयवभावेनाननुप्रविष्टत्वादित्यर्थः। तथा च विश्लिष्टोपाधिभेदसत्त्वात् न गर्भस्थजीवस्य मातृसुखानुसन्धानप्रसङ्ग इति भावः।

निरुक्तानुसन्धानप्रयोजकस्य व्यभिचारं शङ्कते न चेति। दोर्दण्डाः बाहुदण्डाः कबन्धाः छिन्नशिरस्काः देहाः इह युद्धे भूमौ वा। अत्र वचने चैत्रमैत्रशरीरयोरिव विश्लिष्टयोः कबन्धशिरसी भेदे सत्यपि शिरोऽवच्छिन्नस्य कबन्धावच्छिन्नगतयोर्दुःखानुसन्धातृत्वमवगम्यत इति व्यभिचार इत्यर्थः।

अवयवभावेनानुप्रविष्टचरत्वात् शिरश्छेदानन्तरं मूर्च्छामरणयोरन्यतरावश्यम्भावेन दृष्टविरुद्धार्थस्य तादृशवचनस्य कैमुत्यन्यायेन योधोत्साहातिशय-प्रशंसापरत्वात् ।

तादृक्प्रभावयुक्तपुरुषविशेषविषयत्वेन भूतार्थ-वादत्वेऽपि निरुक्तस्योत्सर्गतोऽननुसन्धानतन्त्व-त्वाविघाताच्च।

अत एव उक्तवक्ष्यमाणपक्षेषु योगिनां जाति-

---

तत्रानुसन्धानमुपेत्य चैत्रमैत्रशरीरवैलक्षण्येन समाधत्ते तत्रा पीति चरत्वादिति पूर्वमनुप्रविष्टत्वादित्यर्थः। अस्य वचनस्य स्वार्थे मानत्वाभावात् व्यभिचारशङ्कैव अयुक्तेत्याशयेनाभ्युपगमं परित्यजति शिरश्छेदानन्तरमिति। कबन्धा अपि पातयन्ति किमुतान्ये इति। योद्धृणामुत्साहातिशयं प्रशंसत्येतद्वचन-मित्यर्थः।

ननु शिरश्छेदानन्तरमपि युद्धानुसन्धानादिकं योग-महिम्ना तपोमहिम्ना वा वरदानमहिम्ना वा केषाञ्चित् सम्भवति ततो विद्यमानार्थकमेव इदं वचनमित्याशङ्कायां पुनरनुसन्धानमुपेत्य व्यभिचारं परिहरति तादृगिति। विश्लिष्ट-भोगायतनभेदोऽननुसन्धानप्रयोजक इत्युत्सर्ग इत्युपगमादुदा-हृतानुसन्धानस्थलस्य तदपवादस्थलत्वाभ्युपगमात् तत्र व्यभि-चारो न दोषायेति भावः।

अतएवेति उत्सर्गरूपत्वाभ्युपगमादेव इत्यर्थः। न दोष-

स्मराणां च शरीरान्तरवृत्तान्तानुसन्धाने न दोष-प्रसक्तिः।

अपरे तु शरीरैक्यभेदौ अनुसन्धानतदभाव-प्रयोजकोपाधी बाल्यभवान्तरानुभूतयोरनुसन्धान-तदभावदृष्टेः। न च बाल्ययौवनयोरपि शरीर-भेदः शङ्कनीयः प्रत्यभिज्ञानात्। न च परिमाण-भेदात् तद्भेदावगमः। एकस्मिन् वृक्षे मूलाग्र-भेदेनेव कालभेदेनैकस्मिन् अनेकपरिमाणान्व-योपपत्तेः।

---

प्रसक्तिरिति भोगायतनभेदादेरननुसन्धानप्रयोजकत्वनियमा-भ्युपगमे हि योगिषु जातिस्मरेषु च भोगायतनभेदादिप्रयो-जकचतुष्टयस्य सत्त्वेऽपि अननुसन्धानाभावेन व्यभिचाररूप-दोषप्रसक्तिर्न भवेदित्यर्थः। अदृष्टविशेषासहकृतस्य भोगाय-तनभेदादेरननुसन्धानप्रमोजकत्वस्य विवक्षितत्वात् न योग्या-दिषु व्यभिचार इति तात्पर्य्यम्।

तृतीयपक्षमादाय प्रतिवचनं निरूपयति अपरे त्विति। तत्र मानमाह बाल्येति। बाल्येऽनुभूतस्य वार्द्धकेऽनुसन्धानं दृश्यते बाल्यवार्द्धक्ययोः शरीरभेदात् तद्भेदादेव भवान्तरानुभूतस्यास्मिन् जन्मनि अनुसन्धानं न दृश्यते इत्यर्थः। शङ्कनीय इति परिमाण-भेदादिति भावः। बाल्याद्यवस्थाभेदेऽपि तदेव इदं शरीरमिति प्रत्यभिज्ञादर्शनात् न शरीरभेद इति परिहरति प्रत्यभिज्ञाना-दिति। शङ्काबीजमनूद्य अन्यथासिद्धिमाह न च इत्यादिना।

ननु अवयवोपचयमन्तरेण न परिमाणभेदः अवयवाश्च पश्चादापतन्तो न पूर्वसिद्धशरीरं परियुज्यन्त इति परिमाणभेदे शरीरभेद आवश्यक इति चेन्न। प्रदीपारोपणसमसमयसौधोदरव्यापिप्रभावमण्डलविकासतत्पिधानसमयतत्सङ्कोचाद्यननुरोधिनः परमाणुप्रक्रियारम्भवादस्यानभ्युपगमात्। विवर्त्तवादे चैन्द्रजालिकदर्शितशरीरवद्विनैव अवयवोपचयं मायया शरीरस्य वृद्ध्युपपत्तेरित्याहुः।

---

आरम्भवादमाश्रित्य शङ्कते ननु इति न पूर्वसिद्धमिति। पूर्वसिद्धे शरीरे उपादानत्वायोगात् पूर्वसिद्धशरीरनाशपूर्वं तदवयवैरुपचितावयवैश्च मिलित्वा शरीरान्तरं द्व्यणुकाणुकादिक्रमेण आरब्धव्यमिति परिमाणभेदे शरीरभेद आवश्यकः। प्रत्यभिज्ञा च शरीरत्वसामान्यविषया भविष्यतीत्यर्थः। समसमयकत्वं विकासविशेषणम्। समयश्च क्षणरूपो बोध्यः। तत्पदं दीपपरम्। उपादानोपादेययोः सामानाधिकरण्यानुभवादेरादिपदार्थः। अननुरोधिन इति द्व्यणुकादिक्रमेण स्थूलावयव्युत्पत्तिपक्षे विलम्बापत्तेः समसमयत्वानुभवविरोधात् परमाणुसंयोगनाशक्रमेण प्रभादिनाशेऽपि विलम्बापत्तेः आरम्भवादे उपादानोपादेययोः अत्यन्तभेदाभ्युपगमेन सामानाधिकरण्यानुभवविरोधाच्च तद्वादस्य हेयत्वमेव इत्यर्थः। अवयवोपचयक्रमेण शरीरारम्भानुपगमे कथमेकस्मिन् शरीरे विरुद्धपरिमाणयोग इत्यत आह विवर्त्तवादेचेति।

इतरे तु अन्तःकरणाभेदतद्भेदाभ्यामनुसन्धानानुसन्धानव्यवस्थामाहुः। अयञ्च पक्षः प्रागुपपादितः।

केचित्तु अज्ञानानि जीवभेदोपाधिभूतानि नानेति स्वीकृत्य तद्भेदाभेदाभ्यामनुसन्धानाननुसन्धानव्यवस्थामाहुः।

उपाधिभेदेऽपि सुखाद्यनुसन्धानसाङ्कर्य्यापादनम्।

अत्र केचित्। अंशो नानाव्यपदेशादित्यधिकरणे अदृष्टानियमात् अभिसन्ध्यादिष्वपि चैवं प्रदेशादिति चेन्नान्तर्भावादिति सूत्रतद्भाष्यरीतिमनुसृत्य एकस्मिन् आत्मनि उपाधिभेदेन व्यवस्थानुपगमे कणभुगादिरीत्यात्मभेदवादेऽपि व्यवस्थानुपपत्तितौल्यमाहुः। तथा हि। चैत्रचरणलग्नकण्टकेन चैत्रस्य वेदनोत्पादसमये अन्येषामप्या-

---

चतुर्थपक्षमादाय प्रतिवचनं ददाति। इतरेत्विति। प्रागिति सुखदुःखादिव्यवस्थोपपादनग्रन्थ इत्यर्थः।

पञ्चमं पक्षमाह केचित्तु इति। प्रतिजीवमज्ञानभेदे प्रमाणं ब्रह्मलक्षणविचारावसरे दर्शितम्।

एवमैकात्म्यवादे व्यवस्थामुपपाद्य तन्नानात्ववादे व्यवस्थानुपपत्तिमाह अत्रेति। अंशो ब्रह्मणोजीवः। श्रुतिषु जीवब्रह्मणो र्नानात्वव्यपदेशात्। न च ब्रह्मणो निरंशस्य कथं जीवः अंश इति वाच्यम्। अवच्छिन्नाकाशो महाकाशस्य यथा

त्मनां कुतो वेदना न जायते सर्वात्मनां सर्वगतत्वेन चैत्रशरीरान्तर्भावाविशेषात्। न च यस्य शरीरे कण्टकवेधादि तस्यैव वेदना नान्येषामिति व्यवस्था।

सर्वात्मसन्निधौ उत्पद्यमानं शरीरं कस्यचिदेव नान्येषामिति नियन्तुमशक्यत्वात्। न च यददृष्टो-त्पादितं यच्छरीरं तत्तदीयमिति नियमः अदृष्ट-स्यापि नियमासिद्धेः।

यदा हि तददृष्टोत्पादाय केनचिदात्मना

---

अंशस्तथा अवच्छिन्नचैतन्यमनवच्छिन्नचैतन्यरूपस्य ब्रह्मणोऽंश इत्युपगमादिति सूत्रभागार्थः। अदृष्टानियमादित्यादिसूत्रत्रयस्य व्याख्यानं भविष्यति। कणभुगादिभिर्हि प्रतिशरीरमात्मभेदा-भावे व्यवस्था न सम्भवतीत्यात्मभेद आश्रितः। न च आत्मन एकत्वेऽप्युपाधिकृता व्यवस्था सम्भवतीति तद्भेदाश्रयणं तेषां व्यर्थमिति वाच्यम्। उपाधिकृतव्यवस्थायाः क्लिष्टत्वादतोऽञ्जसा व्यवस्थासिद्धये आत्मभेदः तैराश्रितः। तदेतं मतं दूषयति कण-भुगादिरीत्येति व्यवस्थेति। व्यवस्थाञ्जस्याभावस्य तुल्यत्वमाहुरि-त्यर्थः। यथा चैत्रस्य तथान्येषामपीत्यर्थः कण्टकवेधादीत्यादि-पदं खड्गघातादिसंग्रहार्थम्।

शरीरस्यात्मविशेषं प्रति असाधारण्यमसिद्धमिति दूषयति सर्वात्मसन्निधाविति अदृष्टानियमादिति सूत्रमवतारयति यददृष्टेति सूत्रं व्याचष्टे अदृष्टस्यापीति।

संयुज्यते मनः संयुज्यत एव तदा अन्यैरपि कथं कारणसाधारण्ये क्वचिदेव तददृष्टमुत्पद्येत।

ननु मनःसंयोगमात्रसाधारण्येऽप्यहमिदं फलमाप्नुयाम् इत्यभिसन्धिः अदृष्टोत्पादककर्मानुकूलकृतिरित्येवमादि व्यवस्थितमिति तत एव अदृष्टनियमो भविष्यतीति चेन्न। अभिसन्ध्यादीनामपि साधारणमनःसंयोगादिनिष्पाद्यतया व्यवस्थित्यसिद्धेः।

ननु स्वकीयमनःसंयोगोऽभिसन्ध्यादिकारणमिति मनःसंयोग एव साधारणो भविष्यतीति न। नित्यं सर्वात्मसंयुक्तं मनः कस्यचिदेव स्वमिति नियन्तुमशक्यत्वात्। न च अदृष्ट-

---

अनियमं साधयति यदाहेति। तदा अन्यैरप्यात्मभिः संयुज्यत इत्यर्थः। ततः किं तत्राह कथमिति। आत्ममनःसंयोगरूपासमवायिकारणस्य समवायिकारणरूपस्यात्मनश्च साधारणत्वादित्यर्थः।

संयोगमात्रेति मात्रपदमभिसन्ध्यादिसाधारण्यव्यवच्छेदार्थम्। न तु समवायिकारणस्य तदव्यवच्छेदार्थमिति बोध्यम्। अभिसन्धिः फलेच्छा आदिपदेन कृतिजनककार्य्यताज्ञानचिकीर्षयोः संग्रहः। अभिसन्ध्यादिष्वपि चैवमिति सूत्रं योजयन् उत्तरमाह न इत्यादिना।

मनसोऽसाधारण्यमाशङ्क्य निराकरोति ननु स्वकीयेति।

विशेषादात्मविशेषेण मनसः स्वस्वामिभावसिद्धिः तस्याप्यदृष्टस्य पूर्ववद्व्यवस्थित्यसिद्धेः।

ननु आत्मनां विभुत्वेऽपि तेषां प्रदेशविशेषा एव बन्धभाज इत्यात्मान्तराणां चैत्रशरीरे तत्प्रदेश-विशेषाभावात् सुखादिव्यवस्था भविष्यतीति न।

यस्मिन् प्रदेशे चैत्रः सुखाद्यनुभूय तस्मात् प्रदेशादपक्रान्तस्तस्मिन्नेव मैत्रे समागते तस्यापि तत्र सुखदुःखादिदर्शनेन शरीरान्तरे आत्मा-न्तरप्रदेशविशेषस्याप्यन्तर्भावात्।

---

तथाच तत्संयोगासमवायिकारणकं सर्वमसाधारणं भविष्य-तीति भावः।

प्रादेशादिति चेन्नान्तर्भावादिति सूत्रं व्याचक्षाण एव प्रदेशकृतां व्यवस्थामाशङ्क्य निराकरोति ननु आत्मनामिति। बन्धः सुखदुःखादिः। तत्तदात्मासाधारणत्वात् प्रदेशविशेषा-द्व्यवस्थेति चेदिति सौत्रशङ्काभागार्थः।

एकस्मिन् शरीरे एकस्यैवात्मनः प्रदेशो नात्मान्तराणामिति नियमोऽसिद्ध इति दूषयति न यस्मिन्निति। अदृष्टदुःखादेरव्या-प्यवृत्तित्वादात्मनो यः प्रदेशो दृष्टाद्याश्रयः स एवात्र प्रदेश-शब्दार्थः तथाच यस्मिन्नासनादिप्रदेशे चैत्रशरीरं स्थितं सत् चैत्रस्य सुखाद्यायतनं भवति तस्मिन्नेव प्रदेशे चैत्रशरी-रापक्रमणानन्तरं मैत्रशरीरमागत्य स्थितं सत् मैत्रस्य सुखा-द्यायतनं दृश्यते अतस्तत्र पश्चादागतमैत्रमैत्रात्मप्रदेशयोरदृष्टा-

तस्मादात्मभेदेऽपि व्यवस्था दुरुपपादैव। कथञ्चित्त-दुपपादने च श्रुत्यनुरोधाल्लाघवाच्चैकात्म्यमङ्गीकृत्य तत्रैव तदुपपादनं कर्त्तुं युक्तमिति।

जीवाणुत्वनिराकरणम्।

सन्तु तर्हि अणव एवात्मानो यदि विभुत्वे व्यवस्था न सुवचा। मैवम्। आत्मनामणुत्वे कदाचित् सर्वाङ्गीनसुखोदयस्य करशिरश्चरणाधिष्ठानस्य चानुपपत्तेः। यदत्र अर्वाचीनकल्पनमुत्क्रान्तिग-

---

अण्वयोः प्रविशात्तच्छरीरे चैत्रमैत्रयोः उभयोरपि भोगप्रसङ्गः। न च पूर्वशरीरापक्रमणसमये तच्छरीरगतस्य चैत्रात्मप्रदेशस्यापि अपक्रमणमेवास्तु इति वाच्यम्। प्रदेशवत आत्मनः स्थिरत्वेन प्रदेशस्य चलनानुपपत्तेः। एवमन्येषामपि आत्मनां प्रदेशान्तर्भावप्रयुक्तं भोगसाङ्कर्य्यमूह्यम् तस्मादिति आत्मनां व्यापकत्वाभ्युपगमादित्यर्थः। ननु आत्मैक्यमत इव नानात्वमतेऽपि कथञ्चिद्व्यवस्था स्वीक्रियत इत्याशङ्क्याह श्रुतीति आत्मैक्यश्रुतीत्यर्थः। तत्रैवेति एकस्मिन्नेवात्मनीत्यर्थः।

जीवाणुत्वगमकश्रुतियुक्त्यवष्टम्भेन पुनर्जीवब्रह्माभेदमाक्षिपति सन्त्विति। निराकरोति मैवमिति अधिष्ठानस्य चेति। युगपत्करादिप्रेरणस्येत्यर्थः। जीवस्याणुत्वेऽपि सर्वशरीरव्यापिसुखादिकं सम्भवतीति शङ्कते यदत्रेति। कल्पनाप्रकारस्तेषामणुत्वेऽपि इत्यादिना भविष्यति आदौ तस्याणुत्वे मानमाह उत्क्रान्तीति तमुत्क्रामन्तमित्यादि श्रुतिषु उत्क्रान्त्यादिकं श्रूयत इति भावः।

त्यागतिश्रवणान्यथानुपपत्त्या अणुर्ह्येवैष आत्मा यं वा एते सिनीतः पुण्यं च पापं च बालाग्रशतभागस्येत्यादिश्रुतिषु साक्षादणुत्वश्रवणेन चाणव एव जीवाः ।

तेषामणुत्वेऽपि ज्ञानसुखादीनां प्रदीपप्रभान्यायेनाश्रयातिरिक्तप्रदेशविशेषव्यापिगुणतया सर्वाङ्गीनसुखाद्युपलम्भः ।

द्रोणं बृहस्पतेर्भागमित्यादिस्मृत्यनुरोधेन जीवानामंशसत्त्वात् । करशिरश्चरणाद्यनुगतेषु

---

ननु असध्यमपरिमाणस्य जीवस्योत्क्रान्त्याद्यन्यथानुपपत्त्या चेदणुत्वं कल्प्यते तर्हि जीवस्य ब्रह्मभावश्रवणानुपपत्त्या तस्य विभुत्वं कल्प्यते श्रुतार्थापत्तेरविशेषादित्याशङ्क्य श्रुतिमप्याह अणुर्हीति यमात्मानमेते सिनीतः बध्नीतः । के ते तत्राह पुण्यञ्च पापञ्च एष आत्मा अणुर्हीत्यर्थः । बालः केशः शतधा कल्पितस्य च भागो जीवः स विज्ञेय इतिवाक्यं आदिपदेन गृह्यते । बालाग्रस्य यः शततमो भागस्तस्यापि शतधा विभक्तस्य यो भागस्तत्तुल्यपरिमाणो जीव इत्यर्थः ।

जीवस्याणुत्वसाधकप्रमाणानुसारिणामर्वाचीनकल्पनाप्रकारं दर्शयति तेषामणुत्वेऽपि इति । यथा प्रभायाः स्वाश्रयं प्रदीपं विहाय प्रदेशान्तरव्यापित्वं तथा ज्ञानादीनां स्वाश्रयमणुमात्मानं विहाय कदाचिच्छरीरव्यापित्वं कल्प्यत इत्यर्थः ।

ननु आत्मनः शरीरव्यापित्वे सति युगपत् सुखदुःखप्रयत्नादय उत्पद्यमानास्तस्मिन्नवच्छेदकभेदेन सम्भवन्ति तस्या-

सुखदुःखादियौगपद्यं कायव्यूहगतेषु योगिनां भोगवैचित्र्यं चेति न काचिदनुपपत्तिः।

एवं जीवानामणुत्वेनासङ्करात् सुखदुःखादिव्यवस्था विभोरीश्वराद्भेदश्चेति।

अत्रोक्तमद्वैतदीपिकायाम्। एवमपि कथं व्यवस्थासिद्धिः चैत्रस्य पादे वेदना शिरसि सुखमिति स्वांशभेदगतसुखदुःखानुसन्धानवन्मैत्रगतसुखदुःखानुसन्धानस्यापि दुर्वारत्वात्। अविशेषो हि चैत्रजीवात् तदंशयोः मैत्रस्य च भेदः।

---

णुत्वे तु कथं तेषां यौगपद्यनिर्वाहस्तत्राह द्रोणमिति अनुगतेष्वित्यनन्तरं जीवांशेषु इति शेषः। व्यूहः समूहः कायव्यूहगतेष्वित्यनन्तरमपि जीवांशेष्विति शेषः। भोगानां भुज्यमानसुखादीनां वैचित्र्यं युगपन्नानाविधत्वं युगपदेनेकशरीराधिष्ठानञ्च योगिनां स्वांशैः सम्भवतीत्यर्थः।

जीवाणुत्वपक्षे न केवलमनुपपत्तिसामान्याभावः किन्तु लाभोऽप्यस्तीत्याह एवमिति जीवस्याणुत्वे सतीत्यर्थः। असङ्करादिति एकस्मिन् शरीरे सर्वेषां जीवानां प्रवेशाभावादित्यर्थः। विभोरिति जीवस्यापि विभुत्वे लक्षणभेदाभावादीशात् भेदो न सिध्येदणुत्वे तु अत्यन्तवैलक्षण्यात् भेदः सुगम इति भावः।

अर्वाचीनकल्पनं दूषयति अत्रोक्तमिति एवमपीति। जीवस्याणुत्वसांशत्वकल्पनेऽपि इत्यर्थः। जीवस्य स्वांशगतसुखाद्यनुसन्धानं जीवान्तर्गतसुखाद्यनुसन्धानं च अभ्युप-

कायव्यूहस्थले वियुज्यान्यत्र संसरणासमर्था-नामंशानां जीवात् भेदावश्यम्भावादंशांशिनोस्त्वया भेदाभेदाभ्युपगमाच्च ।

न च शुद्धभेदोऽननुसन्धानप्रयोजक इति वाच्यम् । शुद्धत्वं हि भेदस्यांशांशिभावासह-चरितत्वम् अभेदासहचरितत्वं वा स्यात् । नाद्यः अंशो ह्येष परमस्य ममैवांशो जीवलोके अंशो नानाव्यपदेशादिति श्रुतिस्मृतिसूत्रैः जीवस्य ब्रह्मां-शत्वप्रतिपादनेन ब्रह्मजीवयोर्भोगसाङ्कर्य्यप्रसङ्गात् ।

---

गच्छता त्वया भेदोऽननुसन्धानप्रयोजकः अभेदश्च तदनुसन्धान-प्रयोजक इति वक्तव्यम् । तत्राननुसन्धानप्रयोजकभेदो भेदमात्रं वा शुद्धभेदो वा आद्ये चैत्रः स्वांशगतं सुखादिकं नानुसन्दध्यात् अननुसन्धानप्रयोजकभेदस्य सत्त्वाद् । यदि सत्यपि भेदे स्वांश-गतमनुसन्दध्यात्तदा चैत्रो मैत्रगतसुखादिकमपि अनुसन्दध्यादि-त्याह चैत्रस्येति ।

अंशांशिनोरननुसन्धानप्रयोजकभेदासिद्धिमाशङ्क्य तं साधयति कायव्यूहेति वियुज्येति । अंशिनः सकाशाद्विभागं प्राप्येत्यर्थः । अन्यत्रेति योगिनो निजशरीरादन्यत्र कायव्यूह इत्यर्थः । तयोर्भेदो नास्माभिः साधनीय इत्याशयेनाह अंशा-शिनोरिति । ननु भेदमात्रमननुसन्धानप्रयोजकतया नेष्यते येन जीवः स्वांशगतमपि सुखादिकं नानुसन्दध्याद् यदि अनुसन्दध्यात् तदा जीवान्तरगतमपि तदनुसन्दध्यादिति दोषः प्रसज्येत । किन्तु विशेषतो भेद इति द्वितीयं शङ्कते न च इति ।

ननु जीवांशानां जीवं प्रतीव जीवस्य ब्रह्म प्रति न अंशत्वं किन्तु चन्द्रबिम्बस्य गुरुबिम्बः शतांश इतिवत् सदृशत्वे सति ततो न्यूनत्वमात्रमौपचारिकांशत्वमिति चेत्।

किं तद्व्यतिरेकेण मुख्यमंशत्वं जीवांशानां जीवं प्रति यत्त्वाननुसन्धानप्रयोजकशरीरे निवेश्यते।

---

आद्यकल्पे जीवेश्वरभेदस्यांशांशिभावसहचरितत्वेन शुद्धभेदत्वाभावात्तयोः परस्परं सुखाद्यनुसन्धानं स्यादित्याह नाद्य इति। जीवेश्वरयोरंशांशिभावे मानमाह अंशो हीति। परस्परस्य परमात्मनः जीवलक्षणो लोको जीवलोकः।

ननु भेदस्यांशांशिभावमात्रासहचरितत्वं न शुद्धत्वं भवति किन्तु मुख्यांशांशिभावासहचरितत्वं जीवेश्वरयोरंशांशित्वं तु न मुख्यमतस्तयोर्भेदे मुख्यांशांशिभावासहचरितत्वरूपशुद्धत्वस्य सत्त्वान्नोक्तदोष इति शङ्कते ननु इति जीवं प्रतीति। तथाच जीवतदंशयोर्भेदे मुख्यांशांशिभावसहचरितत्वस्यैव सत्त्वेन तदसहचरितत्वरूपशुद्धत्वाभावादननुसन्धानोपपत्तिरिति भावः। नांशत्वमित्यनन्तरं मुख्यमिति शेषः।

कान्तिमत्त्वं सादृश्यं मुख्यांशांशिभावासहचरितभेदोऽननुसन्धानप्रयोजक इत्यत्र मुख्यांशांशिभावो दुर्निरूप इत्याह किन्तदिति। यन्मुख्यमंशत्वमत्र प्रयोजकशरीरे निवेश्यते तदेतद्व्यतिरेकेण किमिति योजना। मुख्यमंशत्वप्रारम्भकावयवत्वं वा प्रादेशत्वं वा खण्डत्वं वा भिन्नाभिन्नद्रव्यत्वं वेति किंशब्दार्थः।

न तावत्पटं प्रति तन्तूनामिवारम्भकत्वं जीव-स्थानादित्वात्। नापि महाकाशं प्रति घटाकाशादीनामिव प्रदेशत्वं टङ्कच्छिन्नपाषाणशकलादीनामिव खण्डत्वं वा। अणुत्वेन निष्प्रदेशत्वात् अच्छेद्यत्वाच्च।

भिन्नाभिन्नद्रव्यत्वम् अंशत्वम् अभिमतमिति चेन्न।

तथा सति जीवेश्वरयोः जीवानाञ्च भोग-साङ्कर्य्यप्रसङ्गात्। स्वतो भिन्नानां तेषां चेतनत्वादिना अभेदस्यापि त्वया अङ्गीकारात्।

---

तत्राद्यं निराकरोति न तावदिति। द्वितीयतृतीयौ क्रमेणानूद्य दूषयति नापीत्यादिना। जीवस्याणुत्वेन प्रदेशासम्भवादणुत्वेनैव द्वैधीभावायोग्यत्वाच्च इत्यर्थः।

चतुर्थं शङ्कते भिन्नाभिन्नेति। जीवांशानां जीवेन सह भिन्नत्वे सति अभिन्नद्रव्यत्वं मुख्यमंशत्वमभिमतं तदेव चाननुसन्धानप्रयोजकशरीरे निविशते। तथाच भिन्नाभिन्नद्रव्यत्वासहचरितभेदः शुद्धभेदः स चाननुसन्धानप्रयोजक इति निष्कर्षः।

तत्र दूषणमाह तथा सतीति। जीवेश्वरयोस्त्वया भिन्नाभिन्नद्रव्यत्वाभ्युपगमात्तयोर्भेदः शुद्धभेदो न भवति तथा जीवांशानां परस्परं भिन्नाभिन्नद्रव्यत्वस्य त्वया स्वीकारात् तेषां भेदोऽपि शुद्धभेदो न भवति। तथाच अननुसन्धानप्रयोजकाभावात् जीवेश्वरयोर्जीवांशानां च भोगसाङ्कर्य्यप्रसङ्ग इत्यर्थः। चेतनत्वादिनेति सत्त्वद्रव्यत्वसंग्रहार्थमादिपदम्।

समूहसमूहिनोः भेदाभेदवादिनस्तव मते एकसमूहान्तर्गतानां परस्परमपि अभेदसत्त्वाच्च।

स्वाभिन्नसमूहाभिन्नेन स्वस्यापि अभेदस्य दुर्वारत्वात्।

यदि संयोगादीनां जातेश्च अनेकाश्रितत्वं स्यात् तदा गुणगुण्यादेरभेदाद् घटाभिन्नसंयोगाभिन्नपटादेरपि घटाभेदः प्रसज्येत इत्यादि वदता त्वया तदभिन्नाभिन्नस्य तदभेदनियमाभ्युपगमात्।

---

दूषणान्तरमाह समूहेति। समूहस्य समूहिनाञ्च परस्परं भिन्नत्वे सति अभिन्नत्वमङ्गीकुर्वतस्तव मते समूहिनामपि परस्परमभिन्नत्वमावश्यकम्। तथा च उत्सवादावेकत्र मिलितानां जीवानां परस्परमभिन्नद्रव्यत्वस्यापि सत्त्वात् तेषां परस्परभेदः शुद्धभेदो न भवति भिन्नाभिन्नद्रव्यत्वसहचरितत्वात् तथा च परस्परं तेषां सुखाद्यनुसन्धानप्रसङ्ग इत्यर्थः।

ननु समूहिनां समूहाभिन्नत्वेऽपि तेषां परस्परभिन्नत्वमस्मिन् मतेऽस्ति अतो नोक्तदोष इत्याशङ्क्याह स्वाभिन्नेति। स्वमेकः समूही देवदत्तः तदभिन्नः समूहस्तदभिन्नो यज्ञदत्तस्तेन सह स्वस्यापि देवदत्तस्यापि अभेदस्य तव मते दुर्वारत्वात् त्वया तदभिन्नाभिन्नस्य तदभिन्नत्वनियमाभ्युपगमादित्यर्थः।

परं प्रति उक्तनियमाभ्युपगमं साधयति यदि इत्यादिना। गुणगुणिनोर्जातिव्यक्त्योश्चाभेदवादिनं प्रति दूषणपरोऽयं

न च जीवान्तरसाधारणचेतनत्वादिधर्मैकरू-प्यैकसमूहान्तर्गत्यादिप्रयुक्ताभेदविलक्षणम् अभे-दान्तरमंशांशिनोरस्ति भेदेऽपि अनुसन्धानप्रयो-जकं यदत्र अनतिप्रसङ्गाय विवक्ष्येत।

---

जीवाणुत्ववादिग्रन्थो यदि इत्यादिः। गुणगुणिनोरभेदमङ्गीकृत्य यदि गुणस्य संयोगविभागद्वित्वादेरनेकाश्रितत्वमभ्युपगम्येत तथा जातिव्यक्त्योरभेदमुपेत्य यदि जातेरनेकाश्रितत्वमभ्युपगम्येत तदा पटादेरपि घटाभेदप्रसङ्ग इत्यत्र हेतुगर्भं विशेषणमाह घटाभिन्नेति। घटाभिन्नसंयोगस्तदभिन्नत्वात् पटादेरित्यर्थः।

ननु जीवेश्वरयोर्जीवांशानां समूहाभिन्नजीवानां च योऽयं चेतनत्वादिधर्मप्रयुक्ताभेद एकसमूहाभेदप्रयुक्ताभेदश्च तदपेक्षया अन्य एव अभेदो जीवतदंशयोरस्ति अतः तयोर्भेदे सत्यपि परस्परमनुसन्धानं जीवेश्वरयोर्जीवांशानां समूहिजीवानां च तादृशाभेदाभावात् चेतनत्वादिप्रयुक्ताभेदे सत्यपि न परस्परमनुसन्धानमिति व्यवस्था। तथा च भिन्नाभिन्नद्रव्यत्वासहचरितः भेदः शुद्धभेदः स च अननुसन्धानप्रयोजक इत्यत्र जीवतदंशयोः परस्परानुसन्धानप्रयोजकत्वाभिमतो विलक्षणाभेद एव प्रविष्ट इति जीवेश्वरादौ तादृशाभेदघटितभिन्नाभिन्नद्रव्यत्वासहचरितभेदसत्त्वात् नोक्तातिप्रसङ्ग इति शङ्कां निराकरोति न चेति। जीवतदंशयोरिव जीवान्तराणामपि साधारणो यश्चेतनत्वादिधर्मैकरूप्यप्रयुक्त एकसमूहान्तर्गत्यादिप्रयुक्तश्चाभेदस्तद्विलक्षणमित्यर्थः। जीवेश्वरगतस्या-

तथा सति तस्यैव विशिष्य निर्वक्तव्यत्वापत्तेः। धर्मैकरूप्याद्यप्रयुक्तत्वमंशांशिनोरभेदे विशेष इति चेन्न।

जीवतदंशयोश्चेतनत्वादिधर्मैकरूप्यसत्त्वेन एकशरीरावच्छेदे कायव्यूहमेलने च समूहसत्त्वेन च तयोरभेदे धर्मैकरूप्यादिप्रयुक्तत्वस्यापि सम्भवात्। धर्मैकरूप्यादिप्रयुक्ताभेदान्तरसत्त्वेऽपि जीवतदंशयोरंशांशिभावप्रयोजकाभेदो न तत्प्रयुक्त इति चेत्

---

मुख्यांशांशिभावस्य संग्रहार्थमादिपदम्। अंशांशिनोर्भेदे सत्यपि तयोरनुत्थानप्रयोजकभेदान्तरं न चास्ति यदभेदान्तरं जीवेश्वरादावतिप्रसङ्गपरिहाराय भिन्नाभिन्नद्रव्यत्वशरीरप्रविष्टतया विवक्ष्येतेति योजना।

नन्वभेदान्तरं कुतो नास्तीत्याशङ्क्याह तथा सतीति विलक्षणाभेदस्यांशांशिनोः सत्त्वे इत्यर्थः। जीवेश्वराद्यभेदापेक्षया जीवतदंशयोरभेदस्य विशेषं विशेषतो निर्वक्ति धर्मैकरूप्याद्यप्रयुक्तत्वमिति।

विशेषासिद्धिमाह न जीवेति। जीवस्य तदंशानां चेतनत्वसत्त्वद्रव्यत्वादिधर्मैरैकरूप्यमस्ति तथा जीवस्य तदवयवानां च एकशरीरानुप्रवेशकाले तच्छरीरावच्छेदेन समूहोऽप्यस्ति तथा योगिजीवावयवानां कायव्यूहशब्दितानेकशरीरेषु प्रविष्टानां कदाचित् तेषां शरीराणां मेलने सति योगिजीवेनांशिना सह समूहोऽस्ति। तथा च जीवतदंशयोरभेदे धर्मैकरूप्यादिप्रयुक्तत्वसम्भवात् तदप्रयुक्तत्वमप्रसिद्धमित्यर्थः।

न, तयोरभेदद्वयाभावात् त्वन्मतेऽधिकरणैक्ये सति भेदस्याभेदस्य वा प्रतियोगिभेदेन तदाकारभेदेन वा अनेकत्वानभ्युपगमात्। तस्मादाद्यपक्षे सुस्थोऽतिप्रसङ्गः।

एतेनैव द्वितीयपक्षोऽपि निरस्तः। अभेदासहचरितभेदस्य अननुसन्धानप्रयोजकत्वे उक्तरीत्या त्वन्मते जीवब्रह्मणो र्जीवानां चाभेदस्यापि सत्त्वेनातिप्रसङ्गस्य दुर्वारत्वात्।

---

ननु जीवानां चेतनत्वादिधर्मैकरूप्यादिप्रयुक्ताभेदसत्त्वेऽपि तेषामंशांशिभावाभावादंशांशिभावप्रयोजकाभेदोऽन्य एव स च न धर्मैकरूप्यादिप्रयुक्त इति शङ्कते धर्मैकरूप्यादीति। जीवान्तरसाधारणाभेदस्य धर्मैकरूप्यादिप्रयुक्तस्याप्यपरिहार्यत्वात् तस्याप्यभ्युपगमे सति जीवतदंशयोरभेदद्वयमभ्युपगतं परस्य मते प्रसज्यते।

ओमिति वदन्तं परं प्रत्याह न तयोरिति अंशांशिनोरित्यर्थः। तदाकारेति प्रतियोग्याकारेत्यर्थः। प्रतियोगितावच्छेदकेति यावत्। भेदस्य अनेकत्वानभ्युपगमोप न्यासो दृष्टान्तार्थः। तस्मादिति जीवेश्वरयोर्यः पूर्वमंशांशिभावो निरूपितस्तदतिरेकेण जीवतदंशयोर्मुख्यस्यांशांशिभावस्य दुर्निरूपत्वादित्यर्थः। तथा च जीवेश्वरयोर्भेदस्य निरूपितांशांशिभावसहचरितत्वेन तदसहचरितत्वरूपशबलत्वाभावे सति अननुसन्धानप्रयोजकशबलभेदाभावात् जीवेश्वरयोः परस्परं भोगसाङ्कर्यप्रसक्तिरूपो दोषः स्थिर इत्यर्थः। आद्यपक्ष इति अंशांशिभावासहचरितत्वं शबलत्वमिति पक्ष इत्यर्थः।

ननु अभेदप्रत्यक्षमनुसन्धाने प्रयोजकमिति तदभावे अननुसन्धानं स्वस्य स्वाभेदः स्वांशाभेदश्च प्रत्यक्ष इति तद्द्रष्टुर्दुःखाद्यनुसन्धानम्। जीवान्तरेण अभेदसत्त्वेऽपि तस्याप्रत्यक्षत्वान्न तद्दुःखाद्यनुसन्धानम्।

जातिस्मरस्य प्राग्भवीयात्मनापि अभेदस्य प्रत्यक्षसत्त्वात् तद्वृत्तान्तानुसन्धानमन्येषां तदभावान्नेत्यादि सर्वं सङ्गच्छते इति चेत् तर्हि ऐकात्म्यवादेऽपि सर्वात्मत्वावरकाज्ञानावरणाच्चैत्रस्य न मैत्रात्माद्यभेदप्रत्यक्षमिति तत एव सर्वव्यवस्थोपपत्तेर्व्यर्थः श्रुतिविरुद्धात्मभेदाभ्युपगमः।

---

अभेदासहचरितत्वं गुरुत्वं भेदस्येति पक्षं वक्ष्यमाणहेतुना निराकरोति एतेनैवेति उक्तरीत्येति।

चेतनत्वादिधर्मैकरूप्यमुक्तरीतिः जीवतदंशयोरिव जीवब्रह्मणोर्जीवानां च अभेदमुपेत्यापि पूर्वोक्तातिप्रसङ्गपरिहारं शङ्कते ननु इति स्वस्येति। अंशिनो जीवस्येत्यर्थः। जीवान्तरेणेति स्वस्येत्यनुषङ्गः।

जातिस्मरस्येति पूर्वजन्मस्मरणवत इत्यर्थः। सर्वेति सर्वात्मतावारकं यदज्ञानं तत्प्रयुक्तावरणादित्यर्थः। तत एवेति चैत्रमैत्रादीनां सर्वेषां परस्परमभेदप्रत्यक्षाभावादेव व्यवस्थिततया सुखाद्यनुसन्धानोपपत्तेरित्यर्थः।

न च इत्थमपि प्रपञ्चतत्त्ववादिनस्तव व्यवस्थानिर्वाहः सर्वज्ञस्येश्वरस्य वस्तुसज्जीवान्तराभेदप्रत्यक्षावश्यम्भावेन जीवेषु दुःखवत्सु अहं दुःखीत्यनुभवापत्तेः।

अस्मन्मते तु ईश्वरः स्वाभिन्ने जीवे संसारं प्रतिमुखे मालिन्यमिव पश्यन्नपि मिथ्यातन्निश्चयान्न शोचतीति नैष प्रसङ्गः।

---

अभेदप्रत्यक्षस्यानुसन्धानप्रयोजकत्वमुपेत्य परमते आत्मभेदकल्पनागौरवं श्रुतिविरोधश्च दर्शयित्वा परमते तस्य प्रयोजकत्वमपि न सम्भवत्यतिप्रसङ्गादित्याह न च इत्थमपीति। अभेदप्रत्यक्षमनुसन्धानप्रयोजकमिति कल्पनयापि इत्यर्थः। वस्तुसत् परमार्थो यो जीवान्तराभेदस्तत्प्रत्यक्षमीश्वरस्य आवश्यकमन्यथा सर्वज्ञत्वप्रसङ्गादित्यर्थः।

ननु सिद्धान्तेऽपि ब्रह्मणः सर्वज्ञत्वजीवाभिन्नत्वयोः सत्त्वादुक्तदोषप्रसङ्ग इति नेत्याह अस्मन्मत इति। यत्तु जीवानां सांशत्वात्परमेश्वरणानुगतेषु जीवांशेषु सुखदुःखादियौगपद्यं सम्भवति योगिनां कायव्यूहगतेषु योगिजीवावयवेषु युगपत् सुखदुःखादिभोगवैचित्र्यञ्च सम्भवतीति न काचिदनुपपत्तिरिति। तत्र जीवं प्रति जीवांशानां मुख्यांशत्वस्य निरस्तत्वात् जीवं प्रति तदंशानां जीवसदृशत्वे सति जीवापेक्षया न्यूनपरिमाणत्वरूपौपचारिकांशत्वस्यापि जीवाणुत्वपक्षे बाधितत्वाच्च अणुपरिमाणस्यैव सर्षपरिमाणापेक्षया न्यूनपरिमाणत्वेन ततोऽपि न्यूनपरिमाणाभावात् सदृशत्वे सति ततो न्यूनत्वरूपांशत्वस्य चन्द्रबिम्बांशगुरुबिम्बांशवज्जीवांशानां

स्यादेतत् माभूदंशभेदः करशिरश्चरणादीनां कायव्यूहस्य चाधिष्ठानमात्मदीपस्यानपायिनी ज्ञानप्रभा अस्ति व्यापिनीति तयैव सर्वाधिष्ठानं भविष्यतीति चेन्न।

ज्ञानवदात्मधर्मस्य सुखदुःखभोगस्य ज्ञानमाश्रित्य उत्पत्त्यसम्भवेन करचरणाद्यवयवभेदेन कायव्यूहवतः कायभेदेन च भोगवैचित्र्याभावप्रसङ्गात्।

---

जीवापेक्षया अत्यन्तभेदप्रयोजकत्वेन जीवस्य स्वांशगतसुखाद्यनुसन्धानत्वासम्भवाच्च। तथा योगिजीवांशानां कायव्यूहाधिष्ठातृत्वेऽपि तेभ्योऽत्यन्तभिन्नस्य योगिजीवस्य कायव्यूहाधिष्ठातृत्वाभावप्रसङ्गात्। तथा शरीराधिष्ठातुर्जीवस्य शरीरावयवकरशिरश्चरणाद्यधिष्ठातॄणां जीवांशानां च अत्यन्तभिन्नत्वेन एकस्मिन् शरीरे भोक्तृनानात्वप्रसङ्गात्। जीवस्य सांशत्वे मानाभावाच्च द्रोणो बृहस्पतेर्भागमित्यादिवचनस्य वर्णितरीत्या उक्तांशपरत्वासम्भवेन बृहस्पत्यादेर्योगप्रभावेण भूभारहरणादिदेवकार्य्यार्थं शरीरान्तरपरिग्रहमात्रपरत्वात्। एतेन श्रीरामकृष्णादेर्विष्णूंशत्वव्यवहारोऽपि व्याख्यातः।

तस्माज्जीवांशविशेषस्य करशिरश्चरणाद्यधिष्ठातृत्वं कायव्यूहाधिष्ठातृत्वञ्च न सम्भवतीति पूर्वग्रन्थाशये स्थिते शङ्कते स्यादेतदिति अधिष्ठानमिति प्रेरक इत्यर्थः। भविष्यतीति जीवः स्वयमणुतया शरीरैकदेशस्थोऽपि स्वसमवेतेन व्यापिज्ञानेन करशिरश्चरणादीन् कायव्यूहं चाधितिष्ठतीति निरंशस्याप्यणोर्जीवस्य कृत्स्नशरीराधिष्ठातृत्वादिकं नानुपपन्नमिति भावः।

सुखदुःखभोगादि ज्ञानधर्म एव नात्मधर्म इत्युपगमे तद्वैचित्र्या आत्मगुणस्य ज्ञानस्य भेदसिद्धावपि आत्मनो भेदासिद्ध्या भोगवैचित्र्या-दिना आत्मभेदप्रतिक्षेपायोगाद् भोगाद्याश्रयस्या-त्मनोऽणुत्वेन प्रतिशरीरं विच्छिन्नतया तद्व्यापित्व-वादइव तदभेदवादइव च न धर्मसङ्करापत्तिरिति मतहानेश्च ।

---

ज्ञानमाश्रित्येति ज्ञानधर्मत्वे सुखादेः ज्ञाने उत्पत्तिसम्भवे ततश्च ज्ञानस्य व्यापकता तदाश्रितसुखादिरूपभोगस्यापि करशिरश्चरणादौ कायव्यूहे च युगपदुदयः सम्भवेत् न तु त्वया सुखादेर्ज्ञानधर्मत्वमिष्यते तस्य ज्ञानवदेव आत्मधर्मत्वाभ्युपगमात् ऐशिज्ञानस्य व्यापित्वेऽपि न करशिरश्चरणादौ कायव्यूहे च युगपद्भोगवैचित्र्यं सम्भवति इत्यर्थः। कायव्यूहवत इति योगिन इति शेषः तस्य च भोगवैचित्र्यं स्मर्य्यते ।

आत्मनां च सहस्राणि बहूनि भरतर्षभ ! ।
योगी कुर्य्यात् बलं प्राप्य तैश्च सर्वां मही चरेत्।
प्राप्नुयाद्विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् ।
संक्षिपेच्च पुनस्तानि सूर्य्यो रश्मिगणानिव ॥

इति आत्मवादिनां अत्यन्तयोगजनितं सामर्थ्यं तर्हि ज्ञानधर्मत्वमेव सुखादेरस्तु यदि तद्धर्मत्वे भोगवैचित्र्यं सम्भवेत् । तत्राह सुखदुःखभोगादीति असिद्धेरिति। आत्मगुणज्ञाननिष्ठस्य भोगवैचित्र्यस्य व्यभिचारतया आत्मभेदसाधकत्वासम्भवादि-त्यर्थः। सुखादेर्व्यापिज्ञानधर्मत्वं स्वमतविरुद्धञ्च इत्याह भोगा-द्याश्रयस्येति नैयायिकादिमत इव अद्वैतमत इव च इत्यर्थः ।

तस्माज्जीवस्याणुत्वोपगमेन व्यवस्थोपपादनं न युक्तम्। नापि तेन तस्येश्वराद्भेदसाधनं युक्तम्।

उत्क्रान्त्यादिश्रवणात् साक्षादणुत्वश्रवणाच्च अणुर्जीव इति वदतस्तव मते तत् सृष्ट्वा तदेवानुप्राविशत् अन्तः प्रविष्टः शास्ता जनानां गुहां प्रविष्टौ परमे परार्द्धे इत्यादिश्रुतिषु प्रवेशादिश्रवणात् स एषोऽणिमा एष म आत्मा अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वेति श्रुतेः साक्षादणुत्वश्रवणाच्च परोऽप्यणुरेव सिध्यतीति कुतः परजीवयोर्विभुत्वाणुत्वाभ्यां भेदसिद्धिः।

---

तस्मादिति आत्मगुणस्य ज्ञानसुखादेर्व्यापित्वकल्पनायोगादित्यर्थः। जीवाणुत्वाभ्युपगमस्य पराभिमतं प्रयोजनान्तरं दूषयति नापि तेन तस्येति जीवस्याणुत्वेन इत्यर्थः।

श्रुतितदर्थापत्तिभ्यां जीवस्याणुत्वं वदतस्तव मते ताभ्यामेव ईश्वराणुत्वस्यापि दुर्वारत्वात् न ईश्वरस्य विभुत्वसिद्धिस्तदसिद्धौ च न तवेष्टसिद्धिरिति दूषयति उत्क्रान्त्यादीति वदतस्तव परोऽप्यणुरेव सिध्येदिति सम्बन्धः। तत् सृष्ट्वेत्यत्र तत्पदद्वयं जगत्परम्। प्रकृतः परमात्मा सृष्ट्यादिकर्त्ता अन्तरिति शरीरेषु इति शेषः। शास्ता नियन्ता परस्यार्द्धस्थानमर्हतीति परार्द्ध्यं परमसुत्कृष्टं हार्दाकाशं तस्मिन् वा बुद्धिलक्षणा गुहा तां प्रविष्टौ जीवेश्वरावित्यर्थः। प्रवेशादीति शरीरान्तस्थत्वादिकमादिपदार्थः स उपक्रमे प्रकृत एषः सन्निहितः अणिमा अणुभाव-

ननु आकाशवत्सर्वगतश्च नित्यः ज्यायान् दिवो ज्यायानन्तरिक्षादित्यादिश्रवणात् सर्वप्रपञ्चोपादानत्वाच्च परस्य सर्वगतत्वसिद्धेः तदणुत्वश्रुतयः उपासनार्था दुर्ग्रहत्वाभिप्राया वा उन्नेयाः प्रवेशश्रुतयश्च शरीराद्युपाधिना निर्वाह्याः ।

न च जीवोत्क्रान्त्यादिश्रुतयोऽपि बुद्ध्या उपाधिना निर्वोढुं शक्या इति शङ्क्यम् । तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति प्राणाख्यबुद्ध्युत्क्रान्तेः प्रागेव जीवोत्क्रान्तिवचनात् ।

---

प्रत्ययो न विवक्षितः । मे हृदयेऽन्तरेषः प्रकृतो भावरूपत्वादिगुणक आत्मा वर्त्तते स च व्रीह्याद्यपेक्षया अणुतर इत्यर्थः ।

अनन्यथासिद्धश्रुत्यादिवशेन विभुत्वमीश्वरस्य शङ्कते ननु इति । ज्यायान् महत्तरः परस्य विभुत्वे लिङ्गमाह सर्वेति । परमाणुत्वश्रुतीनामन्यथासिद्धिमाह तदणुत्वेति । उपासनार्था इति अणीयान् व्रीहेर्वेत्यादिश्रुतय इत्यर्थः । दुर्ग्रहत्वेति स एषोऽणिमेत्यादिश्रुतय इत्यर्थः । आसामुपासनाप्रकरणगतत्वाभावादिति भावः । व्यवस्थितविकल्पवाची वाकारः । प्रवेशादिश्रवणस्यान्यथासिद्धिमाह प्रवेशश्रुतयश्चेति परमेश्वरस्य स्वेच्छापरिगृहीतशरीरेन्द्रियप्रवेशोपाधिकः शरीरेषु अन्तःप्रवेश इत्यर्थः ।

ननु जीवाणुत्वश्रुतिलिङ्गानामपि अन्यथानयनसम्भवात् जीवस्यापि स्वाभाविकं विभुत्वं किं न स्यात् तथा च

तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुष-मुपैति दिव्यमिति नामरूपमोक्षानन्तरमपि गतिश्रवणाच्च।

तद्यथाऽनः सुसमाहितमुत्सर्जयन् यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जयन् यातीति स्वाभाविकगत्याश्रयशकटदृष्टान्तोक्तेश्चेति चेन्नैतत् सारम्।

---

न तस्याणुत्वसिद्धिरिति सिद्धान्तिनः शङ्कामनूद्य निराकरोति जीवाणुत्ववादो न च इत्यादिना तमुत्क्रामन्तमिति। न चात्र श्रुतौ प्राणोत्क्रान्तेः प्रागेव जीवस्योत्क्रान्तिश्रवणेऽपि न केवलस्य तस्योत्क्रान्तिसिद्धिः बुद्धिविशिष्टस्य तस्योत्क्रान्तिसम्भवादिति वाच्यम्। बुद्धिप्राणयोर्भेदासिद्धेस्तयोरभेदस्यैव श्रुतिसिद्धत्वाच्च। तथाच श्रुतिः यो वै प्राणः स प्रज्ञा या वा प्रज्ञा स प्राण इति प्रज्ञा बुद्धिरित्याशयेनाह प्राणाख्यबुद्धिरुत्क्रान्तेरिति। नामरूपशब्दितोपाधिनिवृत्त्यनन्तरमपि जीवस्य ब्रह्म प्रति गतिः श्रूयते।

तथाच यथा उत्क्रान्तेरौपाधिकत्वं न सम्भवति तथा गतेरप्यौपाधिकत्वं न सम्भवतीत्यमध्यमपरिमाणस्य जीवस्य स्वाभाविकमणुत्वं स्वीकर्त्तव्यमित्याशयेनाह तथा विद्वानिति।

पराद्धिरण्यगर्भात् जीवस्य स्वाभाविके गत्याश्रयत्वे सत्येव दृष्टान्तविशेषः सङ्गच्छते अन्यथा तद्वैरूप्यं स्यादित्याशयेनाह तद्यथेति। तत्र जीवस्य परलोकं प्रति गमने दृष्टान्त उच्यते। अनः शकटं सुसमाहितं गृहोपकरणैः पूर्णमुत्सर्जयन् शब्दं कुर्वन्

स वा एष महानज आत्मा योऽयं विज्ञानमयः घटसंवृतमाकाशं नीयमाने घटे यथा। घटो नीयेत नाकाशं तद्वज्जीवो नभोपम इत्यादिश्रुतिषु जीवस्यापि विभुत्वश्रवणात्।

त्वन्मते प्रकृतेरेव जगदुपादानत्वेन ब्रह्मणो जगदुपादानत्वाभावात्। जीवस्य कायव्यूहगतसुख-दुःखोपादानत्ववदणुत्वेऽपि जगदुपादानत्वसम्भवाच्च ततस्तस्य सर्वगतत्वासिद्धेः।

---

यायात् गच्छेद् यथा एवं जीव ईश्वरेणान्वारूढ़ः प्रेरितो गच्छति परलोकं इत्यर्थः। तथाच जीवस्याणुत्वे स्वाभाविके सिद्धे सति अणुत्वविभुत्वाभ्यां जीवेश्वरयोर्भेदसिद्धिरिति भावः। सिद्धान्ती दूषयति न एतत् सारमिति।

यथा परमात्मप्रकरणे श्रुतं परस्य विभुत्वमन्यथा नेतुमयुक्तं तथा जीवप्रकरणे श्रुतं जीवस्य विभुत्वमपि अन्यथा नेतुमयुक्त-मित्याशयेन कतम आत्मेत्यादिजीवप्रकरणगतं वाक्यजात-मुदाहरति स वा इत्यादिना। विज्ञानमयो जीवो महान् व्यापक आत्मेति जीवस्य व्यापकत्वश्रवणादित्यर्थः। नभोपम इत्यनेन स्वतो जीवस्य विभुत्वमुच्यत इत्यर्थः। इयं श्रुतिः प्रागेव व्याख्याता विभुत्वे त्वन्यथासिद्धश्रुतिसाम्यमुक्तम्।

परस्परोक्तविभुत्वलिङ्गं विघटयति त्वन्मत इति। प्रकृति-र्माया परस्य ब्रह्मणः सर्वप्रपञ्चोपादानत्वमुपेत्यापि न तद्वि-भुत्वसाधकमित्याह जीवस्येति अणोरिति शेषः। ततः सर्वोपादानत्वात् तस्येश्वरस्य इत्यर्थः।

तत्प्रवेशश्रुतीनां शरीरोपाधिकत्वकल्पने जीवोत्क्रान्त्यादिश्रुतीनामपि बुद्ध्युपाधिकत्वोपगमसम्भवात् । पञ्चवृत्तिर्मनोवद्व्यपदिश्यत इति सूत्रभाष्ये बुद्धिप्राणयोः कार्यभेदाद् भेदस्य प्रतिपादितत्वेन बुद्ध्युपाधिके जीवे प्रथममुत्क्रामति प्राणस्यानूत्क्रमणोपपत्तेः नामरूपमोक्षानन्तरं ब्रह्मप्राप्तिश्रवणस्य प्राप्तरि जीवे इव प्राप्ये ब्रह्मण्यपि विभुत्वविरोधित्वात् ।

---

जीवाणुत्वश्रुतिलिङ्गानामन्यथानयनमपि तुल्यमेवेत्याह तत्प्रवेशश्रुतीति ब्रह्मप्रवेश इत्यर्थः । पञ्च प्राणापानादिलक्षणा वृत्तयो यस्य मुख्यप्राणस्य स पञ्चवृत्तिः प्राणः श्रुतिषु व्यपदिश्यते । बहुवृत्तिमत्त्वमाने च दृष्टान्तः मनोवदिति । प्राणापानादिवृत्तीनाञ्च उच्छ्वासादिकं प्रत्येककार्य्यमिति द्रष्टव्यम् । तथाच दृष्टान्तदार्ष्टान्तिकभावेन सूत्रे मनःशब्दितः बुद्धेः प्राणस्य च भेदो निर्दिष्टः । स च बुद्धीन्द्रियकार्य्यविषयालोचनापेक्षया विलक्षणस्योच्छ्वासादिक्रियारूपकार्य्यस्य प्राणे दर्शनात् । प्राणो बुद्ध्यादिभ्यो भिन्न इत्यादिप्रकारेण भाष्ये साधित इत्यर्थः । यो वै प्राणः स प्रज्ञेति श्रुतौ प्रज्ञाप्राणयोर्भेदे सत्यपि प्रज्ञाप्राणोपहितस्य प्रत्यगात्मन एकत्वादुपहितात्मप्राधान्येन तयोरेकीकरणमविरुद्धमिति प्रतर्दनाधिकरणभाष्ये प्रतिपादितत्वान्न श्रुतिविरोधोऽपीति भावः । यत्तु नामरूपोपाधिनिवृत्त्यनन्तरं जीवस्य ब्रह्मप्रतिगतिश्रवणं जीवस्य विभुत्वविरोधीति तदयुक्तं तस्य ब्रह्मण्यपि विभुत्वविरोधित्वेन ब्रह्म-

प्राकृतनामरूपविमोचानन्तरमपि अप्राकृतलोकविग्रहाद्युपधानेन ब्रह्मणः प्राप्तव्यत्ववादिमते तद्प्राप्तुर्जीवस्यापि अप्राकृतदेहेन्द्रियादिसत्त्वेन तदुपधानेन ब्रह्मप्राप्तिश्रवणाविरोधात्। स्वाभाविकगत्याश्रयशकटदृष्टान्तश्रवणमात्राज्जीवस्य स्वाभाविकगतिसिद्धौ गुहां प्रविष्टाविति स्वाभाविकप्रवेशाश्रयजीवसमभिव्याहारेण ब्रह्मणोऽपि स्वाभाविकप्रवेशसिद्धिसम्भवात्।

ब्रह्मजीवोभयान्वयिन एकस्य प्रवेशपदस्य एकरूपप्रवेशपरत्वस्य वक्तव्यत्वात्।

---

णोऽपि तदसिद्धिप्रसङ्गात् लोके परिच्छिन्नस्यैव गन्तव्यत्वनियमदर्शनादित्याह नामरूपेति।

ननु परमते ब्रह्मणो व्यापकस्वरूपेण न मुक्तप्राप्यत्वं किन्तु लोकविशेषाद्युपहितत्वेन उपहितरूपेण प्राप्तव्यत्वञ्च न ब्रह्मणः स्वरूपेण व्यापकत्वविरोधीत्याशङ्क्य तुल्यमेतत्तव मते जीवस्यापीत्याह प्राकृतेति। विद्वान्नामरूपाद्विमुक्त इति श्रुतौ प्राकृतनामरूपाद्विमुक्त इत्यर्थं कल्पयता त्वया विदुषो जीवस्यापि अप्राकृतनामरूपस्वीकारेण स्वतो विभोरपि जीवस्य अप्राकृतनामरूपोपाधिपरिच्छिन्नस्य ब्रह्मप्रतिगन्तृत्वसम्भवात् न विभुत्वश्रुतयो जीवविषया बाधनीया इत्यर्थः।

ननु प्रविष्टावित्यत्र प्रविष्टपदं जीवे स्वाभाविकप्रवेशार्थकं ब्रह्मणि तु शरीराद्युपाधिकृतप्रवेशार्थकमिति आशङ्क्य तथा

अस्मन्मते ब्रह्मात्मैक्यपरमहावाक्यानुरोधेनावान्तरवाक्यानां नेयत्वात् स्वरूपेण जीवस्य विभुत्वमौपाधिकरूपेण परिच्छेद इत्यादिप्रकारेण जीवब्रह्मभेदप्रापकश्रुतीनामुपपादनं भाष्यादिषु व्यक्तम्।

---

इति सकृच्छ्रुतस्य प्रविष्टपदस्यार्थवैरूप्यं प्रसज्येतेति मत्वाह ब्रह्मजीवोभयेति यदि च ब्रह्मणो विभुत्वश्रुत्याद्यनुरोधेन प्रवेशसामान्यपरत्वमेव प्रविष्टपदस्य कल्प्यते न तु तद्गतविशेषपरत्वमपि। तर्हि जीवस्यापि विभुत्वश्रुत्यनुरोधेन शकटदृष्टान्ते गमनादिसाम्यमात्रं विवक्ष्यते न तु स्वाभाविकगत्याश्रयत्वादिकमपीति न जीवस्य स्वाभाविकाणुत्वसिद्धिः। तस्य तत्सिद्धौ वा ब्रह्मणोऽप्यणुत्वं दुर्वारं विनिगमनाविरहादिति भावः। तत इति उक्तव्यवस्थितेरित्यर्थः।

ननु परमते जीवेश्वरयोरपि विभुत्वाणुत्वश्रुतिलिङ्गानामविशेषादुभयाणुत्वश्रुतिलिङ्गानामन्यथासिद्ध्यविशेषाच्च तयोरणुत्वं विभुत्वं वा समानतयैव सिध्येन्नत्वेकस्य विभुत्वमपरस्याणुत्वमिति व्यवस्था सिध्येदिति यथा दोषः प्रसज्यते तथा सिद्धान्तेऽपि जीवस्य परिच्छिन्नत्वविभुत्वश्रुतिलिङ्गानामविशेषात् तस्य स्वाभाविकं विभुत्वं परिच्छिन्नत्वमौपाधिकमिति व्यवस्था न सिध्येदिति दोषः प्रसज्यत एवेति नेत्याह अस्मिन्मत इति। ब्रह्मात्मैक्यज्ञानस्य मुक्तिसाधनत्वात् तज्ज्ञानजनकानि तत्त्वमस्यादिवाक्यानि महावाक्यार्थज्ञानकारणीभूततत्त्वंपदार्थज्ञानं प्रति साधनभूतानि जीवस्वरूपप्रतिपादकवाक्यानि ईश्वरस्वरूपप्रतिपादकवाक्यानि च अवान्तरवाक्यानि महावाक्यशेषत्वात् पदार्थप्रतिपादकवाक्याना-

तस्मादचेतनप्रपञ्चस्य मिथ्यात्वाच्चेतनप्रपञ्चस्य ब्रह्माभेदाच्च न वेदान्तानामद्वितीये ब्रह्मणि विद्यैकप्राप्ये समन्वयस्य कश्चिद्विरोध इति ।

इति द्वितीयः परिच्छेदः ।

---

# तृतीयः परिच्छेदः ।

भामतीमते कर्मणां विविदिषोत्पादनोपयोगित्वम् ।

ननु कथं विद्ययैव ब्रह्मप्राप्तिर्यावता कर्मणामपि तत्प्राप्तिहेतुत्वं स्मर्य्यते तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने । इति । सत्यम् ।

---

मिति प्रधानवाक्यानुरोधेन गुणभूतवाक्यानां नेयत्वादित्यर्थः । स्वरूपेणेति जीवस्य स्वरूपेणाणुत्वे महावाक्यप्रतिपाद्यब्रह्माभेदानुपपत्तेः ब्रह्मणश्च स्वरूपेण पूर्णत्वाभावे बहुश्रुत्यादिविरोधादिति भावः ।

अद्वितीये ब्रह्मणि वेदान्तसमन्वयाविरोधसमर्थनरूपपरिच्छेदार्थमुपसंहरति तस्मादिति पञ्चम्यन्तं पञ्चमीभ्यां विप्रणीति अचेतनस्येति ।

---

पूर्वपरिच्छेदान्ते ब्रह्मप्राप्तिरूपमोक्षस्य विद्यैकप्राप्यत्वमुक्तं तत्र विद्याप्राप्यत्वमुपेत्य मोक्षस्यैकपदलभ्यं साधनान्तरव्यव-

नान्यः पन्था इतिश्रुतेर्नित्यसिद्धब्रह्मावाप्तौ कण्ठगतविस्मृतकनकमालावाप्तितुल्यायां विद्यातिरिक्तस्य साधनत्वासम्भवाच्च। ब्रह्मावाप्तौ परम्परया कर्मापेक्षामात्रपरा तादृशी स्मृतिः।

क्व तर्हि कर्मणामुपयोगः। अत्र भामतीमतानुवर्त्तिन आहुः। तमेतं वेदानुवचनेन ब्राह्मणा

---

च्छेदमसहमानः समुच्चयवादी प्रत्यवतिष्ठते ननु कथमिति यावतेति यस्मादित्यर्थः। स्मृतौ तत्पदं ब्रह्मपरम् उक्तमिति तेनेति ब्रह्मवित्पुण्यकृदित्यादिश्रुत्येति शेषः। तेन ब्रह्मवेदनपुण्ययोः समुच्चयेन एति ब्रह्म प्राप्नोतीति श्रुत्यर्थः। ज्ञानकर्मणोः समुच्चयस्य ब्रह्मप्राप्तिहेतुत्वश्रवणमनुमोदते सत्यमिति।

ब्रह्मप्राप्तिर्विद्यासाध्यत्वप्रतिपादकश्रुत्यन्तरेणोपपत्तिसहितेन विरोधात् समुच्चयश्रवणं तन्मूलकस्मृतिवचनञ्च क्रमसमुच्चयपरतया नेतव्यमित्याशयेनाह नान्यः पन्था इति। ब्रह्मज्ञानापेक्षया अन्यः ज्ञानकर्मसमुच्चयरूपः केवलकर्मरूपो वा पन्था उपायो मोक्षं प्रति नास्तीति श्रुत्यर्थः। नित्यमालास्वरूपतया सिद्धस्य ब्रह्मणोऽवाप्तिरप्राप्तत्वभ्रमादिनिवृत्तिरूपा अप्राप्तत्वभ्रमादिनिवृत्तिश्च ज्ञानमात्रसाध्यत्वेन लोके दृष्टा। यथा कण्ठगतायामेव कनकमालायां विस्मृतायां सत्यां तस्यामप्राप्तत्वभ्रमेण बहुविधविक्षेपप्राप्तस्याप्तोपदेशजन्यज्ञानमात्रेणाप्राप्तत्वभ्रमनिवृत्तिरूपा पूर्वंसिद्धकनकमालाप्राप्तिः तत्तुल्यायां नित्यसिद्धब्रह्मावाप्तौ विद्यातिरिक्तसाधनापेक्षाभावात्। तदतिरिक्तस्य भ्रमादिनिवृत्तौ सामर्थ्याभावाच्च इत्यर्थः।

विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेर्विद्यासम्पादनद्वारा ब्रह्मावाप्त्युपायभूतायां विविदिषायामुपयोगः।

ननु दृश्यमाणायां विद्यायामुपयोगः किं न स्यात्। न स्यात् प्रत्ययार्थस्य प्राधान्यात्।

---

परम्परया मुक्तौ कर्मणामुपयोगं प्रपञ्चयितुं पृच्छति क्वेति तर्हीति तर्हि ज्ञानवत् साक्षान्मुक्तिहेतुत्वाभावे सति क्व विविदिषायां विद्यायां वा साधनत्वं तेषामित्यर्थः। तमेतमिति तच्छब्दः प्रकृतपरमात्मपरः एतच्छब्दो नित्यापरोक्षजीवपरः। तथा च जीवाभिन्नं परमात्मानं वेदानुवचनादिभिर्वेदितुमिच्छन्तीत्यर्थः। अनशनादिलक्षणतपोव्यावृत्तये तपसो विशेषणं अनाशकेनेति। तथा च हितमितमेध्याशनादिरूपं तप इह विवक्षितमिति लभ्यते। ननु विविदिषायामपुमर्थभूतायां कथं विनियोगस्तत्राह विद्यासम्पादनद्वारेति ततश्च गौणपुरुषार्थत्वं तस्याः सम्भवतीत्यर्थः।

ननु मुक्तिं प्रति प्रत्यासन्नत्वात् विद्यायास्तस्यामेव विनियोगः कुतो न कल्प्यते श्रुतत्वाविशेषाच्च कामनाविषयत्वेन अश्रुतस्वर्गादेरिव कर्मफलतया अन्यत्र स्वीकाराच्चेति मत्वा शङ्कते नन्विति। स्वर्गकामादिवाक्येषु यागादेर्विधिप्रत्ययेन इष्टसाधनत्वे बोधिते किं तदिष्टमिति विशेषाकाङ्क्षायां सत्यां पुरुषविशेषणत्वेन श्रुतयोः कामनास्वर्गयोरन्यतरस्यापि शब्दतः प्राधान्याभावेन तत्रार्थतः प्राधान्यस्यैवाश्रयणीयत्वे स्वतः पुरुषार्थतया स्वर्गस्यैव फलत्वेनान्वयः स्वीकृतः। यागः स्वर्गसाधनमिति

विद्यासम्प्रयोगात् प्रत्यासन्नानि विद्यासाधनानि शमदमादीनि विविदिषासम्प्रयोगात्तु बाह्यतराणि यज्ञादीनीति सर्वापेक्षाधिकरणभाष्याच्च।

ननु विविदिषार्थं यज्ञाद्यनुष्ठातुर्वेदनगोचरेच्छावत्त्वे विविदिषायाः सिद्धत्वेन तदभावे वेदनोपाये विविदिषायां कामनासम्भवेन च विविद्-

---

न तु कामनायाः इह तु वेदनकामनाया एव फलत्वेनान्वय उचितः शब्दतः प्रधानत्वादतः फलप्रत्यासत्त्यादिकमपि अकिञ्चित्करमिति मत्वा समाधत्ते न स्यादिति। सन् प्रत्ययः प्रत्ययशब्दार्थः।

विविदिषायामेव विनियोग इत्यत्र भाष्यसम्मतिमाह विद्यासंप्रयोगादिति विद्यासाधनत्वादित्यर्थः। प्रत्यासन्नानीति यावत् विद्योदयमनुष्ठेयानीत्यर्थः। शमादिवैषम्यं कर्मसु दर्शयति विविदिषासंप्रयोगात्त्विति तत्साधनत्वादेव इत्यर्थः। बाह्यतराणीति विविदिषोदयपर्यन्तमेव अनुष्ठेयानीति यावत्। सर्वापेक्षाधिकरणेति विद्योत्पत्तौ सर्वाणि कर्माणि अपेक्षितव्यानीति प्रतिपादिकाधिकरणेत्यर्थः।

विविदिषाविनियोगं प्रकारान्तरेणाक्षिपति ननु इति। वेदनेच्छायाः यज्ञादिफलत्वे वेदनेच्छागोचरेच्छया यज्ञाद्यनुष्ठानं वाच्यम्। वेदनेच्छायाश्च स्वतः फलत्वाभावात् वेदनद्वारा मुक्तिफलकत्वं वाच्यम्। तथा च अयं क्रमः प्रथमं मुक्तौ स्वतः पुरुषार्थत्वज्ञानादिच्छा ततो वेदने मुक्तिसाधनत्वज्ञानादिच्छा ततो वेदनेच्छायां वेदनसाधनत्वज्ञानादिच्छा तया च यज्ञाद्यनुष्ठानमिति तथा च वेदनेच्छारूप-

षार्थं यज्ञाद्यनुष्ठानायोगात् न यज्ञादीनां विविदिषायां विनियोगो युक्त इति चेन्न।

अन्नद्वेषेण कार्श्यं प्राप्तस्य तत्परिहाराय अन्नविषयौत्कण्ठ्यलक्षणायामिच्छायां सत्यामपि उत्कटाजीर्णादिप्रयुक्तधातुवैषम्यदोषात्तत्र प्रवृत्तिपर्य्यन्ता रुचिर्न जायते इति तद्रोचकौषधविधिवन्निरतिश-

---

विविदिषोद्देशेन यज्ञाद्यनुष्ठाने प्रवर्त्तमानस्य ब्रह्मवेदने विविदिषाफले किमिच्छास्ति न वा आद्ये यज्ञाद्यनुष्ठानवैयर्थ्यमभिप्रेत्याह वेदनगोचरेति। वेदनगोचरेच्छाया एव विविदिषात्वादिति भावः। सिद्धत्वेन विविदिषार्थं यज्ञाद्यनुष्ठानायोगादिति सम्बन्धः। न द्वितीयः विविदिषाफले वेदने कामनाया असत्त्वे विविदिषायामपि कामनाया अभावाद्विविदिषोद्देशेन यज्ञाद्यनुष्ठानायोग इत्याह तदभाव इति वेदनगोचरेच्छाया अभाव इत्यर्थः। विविदिषार्थं यज्ञाद्यनुष्ठातुरस्त्येव वेदनगोचरेच्छा न तावता तदनुष्ठानवैयर्थ्यं विविदिषायाः द्वैविध्योपपत्तेः। तथा हि वेदनेच्छा द्विविधा विद्यायामौन्मुख्यलक्षणा रुचिलक्षणा च तत्र आद्या यज्ञाद्यनुष्ठानात् प्रागपि वेदने वर्त्तत इति तामादाय वेदनसाधनभूतायां विविदिषायां कामना सम्भवतीति विविदिषार्थं यज्ञाद्यनुष्ठानमुपपन्नं द्वितीया तु यज्ञादिफलभूता तदनुष्ठानानन्तरभाविनीति युक्त एव विविदिषायां यज्ञादिविनियोग इति समाधानमभिप्रेत्याह नेति।

वेदनेच्छाया द्वैविध्ये च यज्ञाद्यनुष्ठानादौ च दृष्टान्त-

यानन्दरूपं ब्रह्म तत्प्राप्तौ विद्या साधनमित्यर्थे प्राचीनबहुजन्मानुष्ठितानभिसंहित-फलनित्यनैमित्तिककर्मोपार्जितचित्तप्रसादमहिम्ना सम्पन्नविश्वासस्य पुरुषस्य ब्रह्मावाप्तौ विद्यायां च तदौत्कण्ठालक्षणायामिच्छायां सत्यामपि अनादिभव-सञ्चितानेकदुरितदोषेण आस्तिककामुकस्य हेय-कर्मणीव विषयभोगे प्रावण्यं सम्पादयता प्रति-

---

माह अन्नद्वेषेणेति तत्परिहारायेति। कार्श्यपरिहाराय अन्नभक्षणविषयकोत्कटेच्छायां सत्यामपीत्यर्थः। उत्कटेति अधिकेत्यर्थः। धातुवैषम्यप्रयोजकात्यन्तानशनादिसंग्रहार्थम् आदिपदम्। तत्रेति अन्नभक्षण इत्यर्थः। जायत इति एतच्चानुभव-सिद्धमिति भावः। अधीतस्वाङ्गस्वाध्यायः पुरुषो वेदान्तैः ब्रह्मणो निरतिशयानन्दरूपत्वं विद्यायाः तत्प्राप्तिसाधनत्वञ्च ज्ञात्वा तस्मिन्नर्थे सम्पन्नविश्वासो भवतीत्ययुक्तम्। तथाविधानामपि पुरुषाणां बहूनां तस्मिन्नर्थे विश्वाससम्पत्तेरदर्शनादित्याशङ्क्याह प्राचीनेति। प्राचीनेषु बहुजन्मसु अनुष्ठितानि फलाभि-सन्धिरहितानि च यानि नित्यनैमित्तिककर्माणि तैरुपार्जितो यश्चित्तप्रसादः शुद्धिविशेषस्तस्य महिम्नेत्यर्थः। तथाच स्मृतिः मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये इति कश्चिदिति उक्त-चित्तप्रसादवानित्यर्थः। सिद्धये विद्यालाभाय न सर्वं इति भावः।

ननु ब्रह्मप्राप्तितत्साधनविद्यागोचरोत्कटेच्छायां सत्यां तत्साधनश्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्भवेदेवेति कृतं तस्य यत्ना-

बन्धाद्विद्यासाधने श्रवणादौ प्रवृत्तिपर्य्यन्ता रुचिर्नं जायतइति प्रतिबन्धनिरासपूर्वं तत्सम्पादक-यज्ञादिविधानोपपत्तेरिति ।

विवरणानुसारिणस्त्वाहुः । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति सामान्यन्यायादिच्छावि-षयतया शब्दबोध्यएव शाब्दसाधनतान्वय इति स्वर्गकामादिवाक्ये क्लृप्तविशेषन्यायस्य बलीयस्त्वाद-श्वेन जिगमिषति असिना जिघांसतीत्यादि-

---

अनुष्ठानेन तत्राह अनादीति । दुरितदोषेण प्रतिबन्धात् रुचिर्नं जायत इति सम्बन्धः । ननु पूर्वोक्तचित्तप्रसादमहिम्ना ब्रह्म-विद्यादौ सम्पन्नविश्वासस्यास्तिकतमस्यानर्थबहुले विषय-भोगे प्रावण्यं कथं सम्भवतीत्याशङ्क्य अनुभवसिद्धदृष्टान्तेन तत् सम्भावयति आस्तिककामुकस्येति । विहितानुष्ठानादवश्यं श्रेयो भवति निषिद्धकरणादितस्त्ववश्यं महाननर्थो भवति शास्त्र-प्रामाण्यादिति निश्चयवानास्तिकस्तस्यापि कस्यचित् कामो-द्रेको निन्दितागम्यागमनादौ प्रावण्यञ्च यथा पापविशेषात् सम्भवति तथा यथोक्तमुमुक्षोरपीत्यर्थः । प्रतिबन्धेति अनादि-भवसञ्चितानेकदुरितदोषकृतप्रतिबन्धेत्यर्थः । तत्सम्पादकेति । विविदिषाशब्दिता या श्रवणादौ प्रवृत्तिपर्य्यन्ता रुचिस्तत्सम्पा-दकेत्यर्थः ।

क तर्हि कर्मणामुपयोग इत्यत्र प्रश्ने विद्यायां विनियोग इति प्रतिवचनान्तरमवतारयति विवरणेति । पूर्वत्र यज्ञादीनां तृतीयाश्रुत्या साधनत्वेनावगतानां साध्याकाङ्क्षायां

लौकिकप्रयोगेऽश्वादिरूपसाधनस्य तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं निदिध्यासितव्य इत्यादि-वैदिकप्रयोगे तव्यार्थभूतविधेश्च सन्प्रत्ययाभिहितेच्छाविषयएव गमनादावन्वयस्य व्युत्पन्नत्वाच्च प्रकृत्यभिहितायां विद्यायां यज्ञादीनां विनियोगः ।

---

विविदिषैव साध्यत्वेनान्वेति । तस्याः शब्दतः प्रधानत्वात् शब्दतः प्रधानस्यैव पदार्थस्य राजपुरुषमानयेत्यादौ सर्वत्र समभिव्याहृतपदार्थान्तरेणान्वयस्य व्युत्पत्तिसिद्धत्वादित्याशयेन यज्ञादीनां विविदिषायां विनियोग उक्तः । तत्रास्वरसं दर्शयन् विद्यायां तेषां विनियोगमुपपादयति प्रकृतीति । प्रकृतिप्रत्ययार्थयोर्वेदनतदिच्छयोर्मध्ये प्रत्ययार्थस्य विविदिषालक्षणस्य प्रत्ययार्थत्वात् शब्दतः प्राधान्यं ततश्च विविदिषाया एव यज्ञादिफलत्वेनान्वय इत्यत्र हेतुभूतो यः सामान्यन्यायो राजपुरुषमानयेत्यादौ प्रसिद्धः शब्दतः प्रधानस्यैव समभिव्याहृतक्रियाकारकान्वय इत्येवंरूपस्तस्मादित्यर्थः । विधिप्रत्ययेन इष्टसाधनत्वेन अवगतयागादेरिष्टविशेषाकाङ्क्षायां सत्यां शब्दतःप्राधान्याभावेऽपि स्वर्गस्य फलत्वेनान्वयः लृप्त इत्यर्थः । शाब्दप्राधान्याभावाविशेषे कामनाया एव यागादिफलत्वेनान्वयः कुतो न कल्पितस्तत्राह इच्छाविषयतयेति । इच्छाविषयत्वस्य फलत्वं व्यञ्जकत्वात् पुरुषार्थत्वेन प्रतीतस्य स्वर्गस्यैव फलत्वं न कामनाया इत्यर्थः । ननु कामनाविषयत्वस्य मुक्तिसाधारणत्वात् तस्यैव यागादिफलं कस्मात् न कल्प्यते तत्राह शब्दबोध्य इति । शाब्दी हि आकाङ्क्षा शब्देनैव पूर्य्यत इति न्याया-

ननु तथा सति यावद्विद्योदयं कर्मानुष्ठानाप्तेस्त्यजेतैव हि तज्ज्ञेयमित्यादिश्रुतिसिद्धं कर्मत्यागरूपस्य सन्न्यासस्य विद्यार्थत्वं पीडेतेति चेत् ।

---

न्नातिप्रसङ्गः । तथा च इच्छेत्यसाणसमभिव्याहारे दृश्यमाणस्यैव प्राधान्यं न तु इच्छाया इति विशेषन्यायेन उक्तसामान्यन्यायबाधस्य कामोपबन्धवाक्येषु क्लृप्तत्वाद्विविदिषन्तीत्यत्रापि प्रत्ययार्थत्वप्रयुक्तं विविदिषायाः शाब्दप्राधान्यं त्यक्त्वा वेदनप्राधान्यमेवादरणीयमित्यर्थः । इच्छावाचिसन्प्रत्ययसमभिव्याहृतेषु एव लौकिकवैदिकप्रयोगेषु प्रत्ययार्थतया प्रधानभूतामपि इच्छामुल्लङ्घ्य तद्विषयेषु एव समभिव्याहृतपदार्थान्तरान्वयदर्शनाच्च इत्याह अश्वेनेति तदन्वेष्टव्यमिति । तद्दहराकाशाख्यं ब्रह्म विचार्यमित्यर्थः । विजिज्ञासितव्यमिति तदेव ब्रह्म ध्यातव्यमित्यर्थः । निदिध्यासितव्य इति आत्मा ध्यातव्य इत्यर्थः । ननु उदाहृतप्रयोगेषु इच्छाया अश्वादिसाधनाद्यन्वयायोग्यत्वात् तस्याः परित्याग इति चेत् तर्हि प्रकृतेऽपि वेदनेच्छायाः तदयोग्यत्वात् ब्रह्मवेदनस्य च ब्रह्मानन्दसाक्षात्काररूपतया फलत्वेनान्वेतुं योग्यत्वात् वेदन एव यज्ञाद्यन्वयो न विविदिषायामिति तुल्यमिति भावः ।

विद्याविनियोगपक्षे विध्यन्तरविरोधं शङ्कते नन्विति । कर्माणि त्यजतैव मुमुक्षुणा त्यक्तुः स्वस्य प्रत्यगात्मस्वरूपं पदं ब्रह्म साक्षात्कर्त्तव्यम् । न तु अत्यजतेति श्रुत्यर्थः । अथ परिव्राडित्युपक्रम्य ब्रह्मभूयाय कल्पत इत्यन्तेन श्रुत्यन्तरेण अपि परिव्राट्शब्दोपात्तसन्न्यासस्य ब्रह्मभूयशब्दित-

न प्राग्बीजावापात् कर्षणं तदनन्तरमकर्षणमिति कर्षणाकर्षणाभ्यां व्रीह्यादिनिष्पत्तिवत् आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यत इत्यादिवचनानुसारेण चेतसः शुद्धौ विविदिषादिरूपप्रत्यक्प्रावण्योदयपर्य्यन्तं कर्मानुष्ठानं ततः सन्न्यास इति कर्मतत्सन्न्यासाभ्यां विद्यानिष्पत्त्युपगमात्।

उक्तं हि नैष्कर्म्यसिद्धौ प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः। कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इवेति। कर्मणां विद्यार्थत्वपक्षेऽपि विविदिषापर्य्यन्तमेव कर्मानुष्ठाने विविदिषार्थत्वपक्षात् को भेद इति चेद् अयं भेदः।

---

ब्रह्मसाक्षात्कारहेतुत्वमुक्तम् एवं श्रुत्यन्तरेषु अपि इत्यभिप्रेत्यादिपदं द्रष्टव्यम्।

विविदिषावाक्यसन्न्यासविध्योरविरोधं सदृष्टान्तं सप्रमाणं दर्शयति। न प्रागिति। वचने कारणपदद्वयं कर्त्तव्यार्थकम्। शमः सन्न्यासः चित्तशुद्धिविविदिषारूपप्रत्यक्प्रावण्येत्येतत् गीतावचनगतयोगपदव्याख्यानमिति बोध्यम्।

रागादिराहित्यरूपचित्तशुद्धिविविदिषावैराग्यगुरुदेवतादिभक्तिलक्षणप्रत्यक्प्रावण्यजन्मपर्य्यन्तं कर्मानुष्ठानमित्यत्र सुरेश्वराचार्य्यसम्मतिमाह उक्तं हीति शुद्धित इति शुद्धिद्वारेत्यर्थः।

कर्मणां विद्यार्थत्वपक्षे द्वारभूतविविदिषा-सिद्ध्यनन्तरमुपरतावपि फलपर्य्यन्तानि विशिष्टगुरु-लाभात् निर्विघ्नश्रवणमनननिदिध्यासनसाधनानि निवृत्तिप्रमुखानि सम्पाद्य विद्योत्पादकत्वनियमो-ऽस्ति। विविदिषार्थत्वपक्षे तु श्रवणादिप्रवृत्ति-जननसमर्थोत्कटेच्छासम्पादनमात्रेण कृतार्थतेति नावश्यं विद्योत्पादकत्वनियमः।

---

अस्तमायान्तीति त्यागमायान्ति त्यक्तव्यान्येव भवन्ति कृतप्रयो-जनत्वादित्यर्थः। कृतप्रयोजनानां निवृत्तौ दृष्टान्तमाह प्रावृडन्त इति। वर्षाकालावसान इत्यर्थः। विविदिषाया विनियोग-पक्षे विविदिषोदयपर्य्यन्तमेव यज्ञाद्यनुष्ठानमित्यविवादम्।

विद्यायां विनियोगपक्षेऽप्येवं चेत् कस्तयोर्भेद इति शङ्कते कर्मणामिति। अनुष्ठाने विशेषाभावेऽपि फलतो विशेषोऽस्ती-त्याह अयं भेद इति वक्ष्यमाण इत्यर्थः। उपरताविति त्यागे-ऽपीत्यर्थः। अदृष्टद्वारेति शेषः। विविदिषाविनियोगपक्षे हि यज्ञादिकर्मजनितादृष्टं श्रवणादिषु प्रवृत्तिपर्य्यन्तां विविदि-षाशब्दितां रुचिमुत्पाद्य नश्यति फलैकनाश्यत्वाददृष्टस्य। विवि-दिषोत्पत्त्यनन्तरञ्च श्रवणादिप्रतिबन्धकदुरिताभावे सति विवि-दिषाबलादेव श्रवणादिकं सम्पाद्य विद्यां लभते श्रवणादिप्रतिब-न्धकदुरितसत्त्वे तु तत्सत्त्वं यत्ने कृतेऽपि श्रवणाद्यलाभेन निश्चित्य तन्निवृत्त्युपायमनुतिष्ठति। प्रायेण तन्निवर्त्तकोपायाननुष्ठाने वा तदनुष्ठानस्यापि विघ्नबाहुल्ये वा श्रवणाद्यसम्भवात् न ज्ञानोदयः। यथा औषधवीर्य्येणान्नभक्षणे रुच्युत्पत्तौ सत्यामपि अप्रतिबन्धे-

यस्यैतेऽष्टाचत्वारिंशत् संस्कारा इति स्मृतिमूले कर्मणामात्मज्ञानयोग्यतापादकमलापकर्षणगुणाधानलक्षणसंस्कारार्थत्वपक्ष इवेति वदन्ति।

---

नान्नलाभे तद्भक्षणेन कार्श्यनिवृत्तिं लभते। तदलाभे तु तल्लाभाय यतते यत्ने कृतेऽपि यद्यन्नं लभते तदा न कार्श्यनिवृत्तिं लभते। एवमिहापीत्यभिप्रेत्याह नावश्यमिति।

विविदिषाविनियोगपक्षस्य संस्कारे कर्मणां विनियोगपक्षं दृष्टान्तयति यस्यैत इति। यस्य पुरुषस्य एते श्रौतस्मार्त्ता धर्मा अष्टाचत्वारिंशत्संख्यकाः संस्काराः सन्ति शमादिसम्पत्तिश्च वर्त्तते तस्य कर्मभिः संस्कृतस्य विद्याधिकारिणः श्रवणादिसम्पत्तौ सत्यां तत्त्वज्ञानद्वारा परब्रह्मप्राप्तिर्भवति तदसम्पत्तौ च पुण्यलोकावाप्तिरिति कर्मणां संस्कारकत्वपक्षे यथा ज्ञानोत्पादकत्वनियमो नास्ति संस्कारजननमात्रेण सच्चरितार्थानां कर्मणां विद्योत्पत्तिपर्यन्तव्यापाराभावात् तथा तेषां विविदिषार्थत्वपक्षेऽपीत्यर्थः। आत्मज्ञानयोग्यताकार्य्यकरणसङ्घातनिष्ठा तदापादकौ यौ मलापकर्षणगुणाधानलक्षणौ संस्कारौ तदर्थत्वपक्ष इत्यर्थः। कर्मणां विविदिषार्थत्वपक्षे संस्कारार्थत्वपक्षे च ज्ञानोत्पत्त्यनियमे समानेऽपि विविदिषार्थत्वपक्षे प्रापिका ज्ञानोत्पत्तिस्तीव्रबुभुक्षाया इव दृढविविदिषायाः सर्वप्रयत्नेन विद्यासम्पादनसमर्थत्वात् संस्कारार्थत्वपक्षे तु ब्रह्मज्ञानयोग्यतामात्रसिद्धावपि विविदिषाया अप्यनियतत्वेन विद्योत्पत्तिः प्रापिकापि न भवतीति विविदिषासंस्कारार्थत्वपक्षयोरपि भेद ऊहनीय इति भावः। ननु केषामिति किमाश्रमकर्मणामेव किं वा अन्येषामपि इत्यर्थः।

कर्मणां ज्ञानोत्पत्तौ उपयोगनिरूपणम्।

ननु केषां कर्मणामयमुदाहृतश्रुत्या विनियोगो बोध्यते।

अत्र केश्चिदुक्तं वेदानुवचनेनेति ब्रह्मचारिधर्माणां यज्ञेन दानेनेति गृहस्थधर्माणां तपसाऽनाशकेनेति वानप्रस्थधर्माणां चोपलक्षणमित्याश्रमधर्माणामेव विद्योपयोगः। अत एव विहितत्वाच्च आश्रमकर्मापीति शारीरकसूत्रे विद्यार्थकर्मसु आश्रमकर्मपदप्रयोग इति।

---

ननु आश्रमधर्माणामपि सर्वेषां विविदिषावाक्ये श्रवणाभावात् तेषामपि न सर्वेषां विनियोगो लभ्यते तत्राह वेदानुवचनेनेति। वेदस्य गुरुवचनमनुशिष्य वचनं वेदाध्ययनं तच्च ब्रह्मचारिधर्माणां मध्ये प्रधानं तेन तद्धर्माः सर्वे गृह्यन्त इत्यर्थः। एवम् उत्तरत्रापि प्राधान्यं द्रष्टव्यम्। तपः कृच्छ्रचान्द्रायणादिरूपं वानप्रस्थासाधारणमिह तपःशब्दरूढ्या भातीति भावः। अनाश्रितः कर्मफलं कार्यं कर्म करोति य इत्यादिस्मृतिषु नित्यमाश्रमिणां कार्यं कर्त्तव्यं यद्यत् कर्मास्ति तत्सर्वफलाभिसन्धिं त्यक्त्वा यः करोति स योगपदोदितं पूर्वोक्तचित्तशुद्धिविविदिषादिरूपं प्रत्यक्प्रावण्यं लभते इति प्रतिपादनात् तन्मूलभूते विविदिषावाक्येऽपि सर्वेषामाश्रमकर्मणामुपलक्षणं युक्तमिति मन्तव्यम्। आश्रमकर्मणामेव विनियोग इत्यत्र सौत्रं लिङ्गमाह अत एवेति। आश्रमकर्मणामेव विनियोगाभ्युपगमादेव इत्यर्थः। आश्रमकर्मणां विविदिषावाक्येन विद्यादौ विनियुक्तत्वात्

कल्पतरौ तु नाश्रमधर्माणामेव विद्योपयोगः। अन्तरा चापि तु तद्दृष्टेरित्यधिकरणे आश्रमरहितविधुराद्यनुष्ठितकर्मणामपि विद्योपयोगनिरूपणात्।

---

तत्कामनारहितेनाश्रमिणा स्वाश्रमविहितं कर्म अननुष्ठेयमिति शङ्कायामुत्तरं सूत्रं तेनापि कर्त्तव्यमेव तं प्रति विहितत्वादन्यथा प्रत्यवायप्रसङ्गादिति सूत्रार्थो बोध्यः।

अन्येषामपि विनियोग इति पक्षं नित्यकर्ममात्रविषयतया प्रथमं दर्शयति कल्पतरौ त्विति। कल्पतरौ तु उक्तमिति सम्बन्धः। आश्रमधर्मव्यतिरिक्तानामप्यस्ति विद्योपयोग इति कल्पतरुकारमतमयुक्तं सूत्रे विद्यार्थकर्मसु आश्रमकर्मपदप्रयोगविरोधात्। न च सौत्राश्रमकर्मपदस्य वर्णधर्मेष्वपि अजहल्लक्षणोपपत्तेर्न तद्विरोध इति वाच्यम्। लक्षणायामेव प्रमाणाभावादित्याशङ्क्य तत्र नियामकं दर्शयति नाश्रमधर्माणामेव विद्योपयोग इति।

आश्रमधर्मव्यतिरिक्तानां वर्णधर्माणामप्यस्ति विद्योपयोग इत्येवकारार्थे हेतुमाह अन्तरा चापि त्विति। विद्यां प्रति बहिरङ्गसाधनेषु कर्मसु अन्तरङ्गसाधनेषु श्रवणादिषु च अनाश्रमिणामधिकारोऽस्ति न वेति सन्देहे सति नास्त्यधिकार इति पूर्वपक्षः। आश्रमकर्मणामेव विद्यायां विनियुक्तत्वात् तेषामाश्रमकर्माभावात् साधनचतुष्टयसम्पन्नस्यैव श्रवणादिषु अधिकाराच्च अनाश्रमिणां च साधनचतुष्टयान्तर्गतस्योपरतिशब्दितसन्न्यासस्याभावेन तत्सम्पत्त्यभावादिति। सिद्धान्तस्तु सूत्रे तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। अन्तराशब्दः आश्रमाणामन्तरालमनाश्रमित्वमाह तदा च

न च विधुरादीनामनाश्रमिणां प्राग्जन्मा-द्यनुष्ठितयज्ञाद्युत्पादितविविदिषाणां विद्यासाधनश्रवणादौ अधिकारनिरूपणमात्रपरं तदधिकरणं न तु तदनुष्ठितकर्मणां विद्योपयोगनिरूपणपरमिति शङ्क्यम् ।

---

अनाश्रमित्वे वर्त्तमानोऽपि पुरुषः श्रवणादिषु विद्यार्थकर्मसु चाधिक्रियते कुतः श्रुतिस्मृतिषु रैक्कवाचक्नवीप्रभृतीनामनाश्रमिणामपि विद्यावत्त्वोपलब्धेः। परिव्राजकस्य श्रवणादिषु मुख्याधिकारेऽपि गृहस्थादीनामिव अनाश्रमिणां गौणाधिकारोपपत्तेः। तथा च तदधिकरणे भाष्यं दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणार्थिनमधिकरोति श्रवणादिषु इति अविद्यानिवृत्तिर्विद्याया दृष्टं फलम् अर्थिनमविद्यानिवर्त्तकसाक्षात्कारार्थिनमधिकारित्वेन स्वीकरोति शूद्रस्यैव वेदान्तश्रवणादिषु अनाश्रमिणां प्रतिषेधाभावात् गौणाधिकारे सन्न्यासापेक्षा नास्तीति मत्वा मात्रपदमिति भाष्यार्थः। अन्तरा चापि त्वित्यधिकरणमनाश्रमिणां श्रवणाद्यधिकारमात्रनिरूपणपरं न तु अनाश्रमिकर्मणामपि विद्योपयोगनिरूपणपरम्।

तथा च सीत्राश्रमकर्मपदस्य वर्णधर्मोपलक्षकत्वं न सिध्यतीति मत्वा शङ्कते न च विधुरादीनामिति। ननु तेषां विद्यार्थकर्माभावे विविदिषोदयासम्भवादनाश्रमिणां श्रवणाधिकारनिरूपणमयुक्तमित्याशङ्क्याह प्राग्जन्मेति। अनाश्रमिणोऽपि ये जन्मान्तरीयाश्रमकर्मानुष्ठानजनितविविदिषावन्तः सन्न्यासहेतुतीव्रवैराग्याभावात् मुख्याधिकारात् प्रच्यु-

विशेषानुग्रहश्चेति तदधिकरणसूत्रतद्भाष्ययोः तदनुष्ठितानां जपादिरूपवर्णमात्रधर्माणामपि विद्योपयोगस्य कण्ठोक्तं विहितत्वाच्च आश्रमकर्मापीतिसूत्रे आश्रमपदस्य वर्णधर्माणामप्युपलक्षणत्वादित्यभिसन्धायोक्तमाश्रमधर्मातिरिक्तानामप्यस्ति विद्योपयोगः।

---

ताश्च तेषां श्रवणाधिकारनिरूपणपरं तदधिकरणं न तु अनाश्रमिमात्रविषयमविविदिषूणां श्रवणादौ प्रवृत्त्यसम्भवादेव इत्यर्थ इति न च शङ्क्यमिति सम्बन्धः।

ननु अन्तरा चापि त्विति सूत्रे विद्यार्थकर्मसु विधुरादीनामधिकारे श्रुत्यादिषु अनाश्रमिणां रैक्वावाचक्नवीप्रभृतीनां विद्यावत्त्वदर्शनं हेतुत्वेनोक्तं तदयुक्तं रैक्ववाचक्नवीविदुरप्रभृतीनां जन्मान्तरीयविद्यासाधनानुष्ठानबलादेव विद्या जातेति शङ्कासम्भवादतोऽनाश्रमिकर्मणां विद्योपयोग इत्यत्र तेषां विद्यावत्त्वदर्शनमनन्यथासिद्धं लिङ्गं न भवतीत्यस्वरसादनन्यथासिद्धहेतुमन्यमभिप्रेत्योक्तं विशेषानुग्रहश्चेति। विशेषैर्धर्मविशेषैर्जपादिलक्षणैः ब्राह्मणत्वादिवर्णमात्रसम्बन्धिभिरपि चित्तशुद्धिविविदिषादिद्वारा आश्रमधर्मैरिव विद्यायां अनुग्रहः उपकारः सम्भवत्येव कुतः। जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः। गङ्गायां स्नानमात्रेण मुच्यते नात्र संशयः। यस्य स्मरणमात्रेणेत्यादिवचनैर्जपतीर्थस्नानदेवताध्यानादिधर्माणां शुद्ध्यादिद्वारा विद्यादिसाधनत्वस्य प्रतिपादनादिति सूत्रार्थः। तदनुष्ठितानामिति अनाश्रमिणस्तच्छब्दार्थः। एवमनाश्रमिधर्मा-

किन्तु नित्यानामेव तेषां हि फलं दुरितक्षयं विद्या अपेक्षते न काम्यानां फलं स्वर्गादि ।

तत्र यथा प्रकृतौ क्लृप्तोपकाराणामङ्गानामतिदेशे सति न प्रकृतोपकारातिरिक्तोपकारकल्पन-

---

णामपि सूत्रकारेणैव स्पष्टं विद्योपयोगस्य साधितत्वात् तदविरोधाय सौत्रमाश्रमकर्मपदं वर्णधर्माणामप्युपलक्षणकं वाच्यमित्याशयेनाह सूत्र इति। एवं कल्पतरुकाराणामभिप्रायमुपवर्ण्य तन्मतमुपपादयति आश्रमधर्मेत्यादिना ।

ननु यज्ञादीनां विनियोगः कल्प्यमानः किं काम्यसाधारणः कल्प्यते किं वा नित्यानामेव। नाद्यः काम्यकर्मफलस्य स्वर्गादेर्विद्यया अनपेक्षितत्वेन तेषां विद्योपकारकत्वासम्भवात्। न द्वितीयः नित्यकर्मफलस्य दुरितक्षयस्यापि प्रमाणसाध्यविद्यापेक्षितत्वे मानाभावेन तेषामपि विद्याविनियोगानुपपत्तेरिति शङ्कते किन्तु इति। समाधत्ते नित्यानामेवेति। ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मण इत्यादिवचनान्नित्यकर्मफलस्य दुरितक्षयस्य विद्यया अपेक्षितत्वे प्रमाणत्वेन सूचयति हीति। प्रमाणजन्यायामपि विद्यायां दुरितस्य प्रतिबन्धकत्वसम्भवात् दुरितक्षयापेक्षा युक्तेति भावः। काम्यकर्मणां विद्यानुपकारकत्वमङ्गीकरोति नेति। न च काम्यानां नित्यानामिव दुरितक्षयफलकत्वमप्यस्तु तथा च तेषामपि विद्यापेक्षितदुरितक्षयलक्षणोपकारजनकत्वं सम्भवतीति वाच्यम्। तेषां दुरितक्षयफलकत्वे मानाभावेन विद्योपकारत्वस्याक्लृप्तत्वादिति भावः।

कर्मणां विद्यायां विनियोगविधेः क्लृप्तोपकारैर्नित्यकर्मभिरेव

मेवं ज्ञाने विनियुक्तानां यज्ञादीनां क्लृप्तनित्यफल-प्रापक्षयातिरेकेण न नित्यकाम्यसाधारणविद्योपयो-ग्युपकारकल्पनमिति।

संक्षेपशारीरके तु नित्यानां काम्यानाञ्च कर्मणां विनियोग उक्तः यज्ञादिशब्दाविशेषात्।

प्रकृतौ क्लृप्तोपकाराणां पदार्थानां क्लृप्तप्राकृ-तोपकारातिदेशमुखेनैव विकृतिष्वतिदेशेन सम्बन्धो न तु पदार्थानामतिदेशानन्तरमुपकारकल्पनेति न तत्र प्राकृतोपकारातिरिक्तोपकारकल्पनाप्रसक्तिः।

---

चारितार्थ्ये दृष्टान्तमाह तत्र यथेति। यद्वा काम्यानां पापक्षय-फलकत्वस्यान्यतः प्राप्त्यभावेऽपि यज्ञादीनां विनियोगबलादेव तेषां तत्कल्प्यतामिति नेत्याह तत्रेति। काम्यकर्मणां विद्यापे-क्षितोपकारहेतुत्वाक्लृप्तौ सत्यामित्यर्थः। न नित्येति गौरवा-दिति भावः।

आश्रमकर्मव्यतिरिक्तानामपि विनियोग इति पक्षं काम्य-साधारणं दर्शयति संक्षेपेति अविशेषादिति। यज्ञादिशब्दानां नित्ययज्ञादिषु इव काम्ययज्ञादिष्वपि रूढत्वाविशेषात् नित्या-नामिव काम्यानामपि विनियोगः श्रुत्या भातीति तत्साधारण-एव कर्मणामुपकारः कल्प्यत इत्यर्थः।

काम्यसाधारण्येन विद्योपयोग्युपकारकल्पनं न सम्भवति तत्कल्पने पूर्वतन्त्रन्यायविरोधादिति मत्वा विकृतिष्वति-दिष्टान्यङ्गानि दृष्टान्तत्वेन कल्पतरौ उदाहृतानि। न तानि यज्ञादीनां दृष्टान्तत्वेनोदाहरणयोग्यानीत्याह प्रकृताविति।

इह तु प्रत्यक्षश्रुत्या प्रथममेव विनियुक्तानां यज्ञादीनामुपदिष्टानामङ्गानामिव पश्चात् कल्पनीय उपकारः प्रथमावगतविनियोगनिर्वाहायाक्लृप्तोऽपि सामान्यशब्दोपात्तसकलनित्यकाम्यसाधारणः कथं न कल्प्यः ।

अध्वरेषु अध्वरमीमांसकैरपि हि उपकारमुखेन पदार्थान्वय एव क्लृप्तोपकारनियमः ।

---

दर्शपूर्णमासादिषु प्रकृतियागादिषु यः पदार्थानां क्लृप्त उपकारस्तस्य प्रथममतिदेशः तत्पृष्ठभावेन पदार्थानां विकृतिषु सौर्यपश्वयागादिष्वतिदेशः न तु प्राकृतपदार्थानामतिदेशेन विकृतिषु विनियोगानन्तरं पदार्थानामुपकारकल्पनमिति न तत्र क्लृप्तोपकारपरित्यागेनोपकारान्तरप्रसक्तिरस्तीत्यर्थः । एतदुक्तं भवति प्रकृते यज्ञादीनां विनियोगानन्तरमुपकार-कल्पनम् । अतिदेशस्थले तु प्रकृतौ उपकारकल्पनानन्तरं प्राकृत-पदार्थानां विकृतिषु विनियोगः ततो दृष्टान्तो विषम इति ।

इह त्विति दार्ष्टान्तिक इत्यर्थः । प्रकृतानुगुणं दृष्टान्तमाह उपदिष्टानामिति । दर्शपूर्णमासादिप्रकरणेषु अन्यत्र वा श्रुतानां पदार्थानां श्रुतिलिङ्गादिभिर्दर्शपूर्णमासादिषु विनियु-क्तानां प्रथमावगतविनियोगनिर्वाहाय यथायोग्यं दृष्टादृष्ट-लक्षण उपकारः कल्प्यते यथा तथा उपकारोऽत्रापि कल्प्य एव न तु प्रथमावगतविनियोगपरित्याग उचितः । यज्ञाद्यविशेष-श्रुतिबाधप्रसङ्गादित्यर्थः । सामान्यशब्देति नित्यकाम्यसाधा-रणयज्ञादिशब्देत्यर्थः ।

पदार्थान्वयानन्तरमुपकारकल्पने त्वक्लृप्तोऽपि विनियुक्तपदार्थानुगुण एवोपकारः कल्पनीय इति संप्रतिपद्यैव बाधलक्षणारम्भसिद्ध्यर्थमुपकारमुखो विकृतिषु प्राकृतान्वयो दशमाद्ये समर्थितः।

---

यथा क्लृप्तोपकारातिरिक्तोपकाराकल्पनं कल्पतरुकारोक्तं मीमांसकसम्मतं तथा प्रथमावगतविनियोगानुसारेणाक्लृप्तोपकारकल्पनमपि मीमांसकसम्मतमेव इत्याह अध्वरेष्विति कर्ममीमांसकैरपि इत्यर्थः। अध्वरमीमांसकैरपि सम्प्रतिपद्यैव प्राकृतान्वयः समर्थित इति सम्बन्धः। पदार्थान्वय एवेति पदार्थान्वयस्थल एवेत्यर्थः। क्लृप्तोपकारनियमः क्लृप्तोपकारातिरिक्तोपकाराकल्पनमित्यर्थः।

एवकारव्यावर्त्यमाह पदार्थान्वयानन्तरमिति। उपकारकल्पनस्थले तु इत्यर्थः। सम्प्रतिपद्यैवेति स्वीकृत्यैव इत्यर्थः। बाधलक्षणेति बाधाध्यायारम्भसिद्ध्यर्थमित्यर्थः। प्राकृतान्वय इति। प्राकृतयागादौ शेषभूता ये पदार्थास्तेषां विकृतियागादिषु अतिदेशेन प्राप्तिरित्यर्थः। एतदुक्तं भवति पूर्वतन्त्रे दशमाध्याये विकृतावतिदिष्टानामङ्गानां प्रकृतौ क्लृप्तस्योपकारस्य असम्भवे बाधो निरूप्यते। तच्च बाधनिरूपणं विकृतिष्वतिदेशेन पदार्थप्राप्त्यनन्तरमुपकारकल्पनपक्षे न सिध्यति। प्रकृतौ श्रुत्यादिभिर्विनियुक्तपदार्थानां दृष्टोपकारासम्भवे अदृष्टोपकारकल्पनवद्विकृतिष्वप्यतिदेशेन विनियुक्तानां पदार्थानां दृष्टोपकारासम्भवे अदृष्टोपकारकल्पनया तत्सिद्ध्यर्थं सर्वेषामेव अङ्गानामनुष्ठानावश्यम्भावेन केषाञ्चित् अङ्गानामननुष्ठानं तदंशातिदेशप्रामाण्यरूप-

किञ्च क्लृप्तोपकारालाभान्नित्यानामेवायं विनियोग इत्यभ्युपगमे नित्येभ्यो दुरितक्षयस्य तस्माच्च ज्ञानोत्पत्तेरन्यतः सिद्धौ व्यर्थोऽयं विनियोगः।

---

बाधासम्भवादतो बाधनिरूपणसिद्ध्यर्थं प्रकृतिक्लृप्तोपकारमुखेनैव प्राकृतानामन्वयो विकृतिष्विति दशमाध्यायप्रथमाधिकरणे साधितम्। तथा च यत्र पदार्थानां विनियोगानन्तरमुपकारकल्पनं तत्र तत्पदार्थसामर्थ्यानुसारेण प्रथमावगतविनियोगनिर्वाहाय अक्लृप्तोपकारकल्पनं मीमांसकसम्मतमिति प्रतीयते। यदि विनियोगानन्तरमुपकारकल्पनास्थलेऽपि क्लृप्तोपकारासम्भवे विनियुक्तपदार्थपरित्याग एव न त्वक्लृप्तोपकारकल्पनं तत्सम्मतं भवेत् तदा उपकारमुखेनैव पदार्थानामतिदेश इति निरूपणपरमधिकरणं व्यर्थं स्यात्। पदार्थानामिव अवघातादीनामतिदेशेन विनियोगेऽपि विकृतिगतकृष्णलादिषु अवघातादेः विकृतितुषविमोकरूपदृष्टोपकारस्य लोकसिद्धस्याभावादक्लृप्तोपकारकल्पनानङ्गीकाराच्च अवघातादेरननुष्ठानादिलक्षणबाधस्य दशमाध्याये निरूपणीयस्य सम्भवेन तदर्थमुपकारमुखेनैव पदार्थानामतिदेश इति निरूपणस्यानपेक्षितत्वात्।

तस्मात् विविदिषावाक्येनाविशेषेण नित्यकाम्यसाधारणे विनियोगे प्रथममवगते सति तन्निर्वाहायाक्लृप्तोपकारकल्पनं युक्तमेवेति। वस्तुतस्तु नित्यकर्मसु अपि विद्यापेक्षितोपकारजनकत्वक्लृप्तिरसिद्धेत्याह किञ्च इत्यादिना अलाभादिति। काम्येषु इति शेषः। नित्यानां विद्यापेक्षितदुरितक्षयलक्षणो-

अन्यतस्तदसिद्धौ ज्ञानापेक्षितोपकारजनकत्वं नित्येषु न क्लृप्तमित्यविशेषात् नित्यकाम्यसाधारणविनियोगो दुर्वारः।

ननु नित्यानां दुरितक्षयमात्रहेतुत्वस्यान्यतः सिद्धावपि विशिष्य ज्ञानोत्पत्तिप्रतिबन्धकदुरितनिर्वाहकत्वं न सिद्धम् किन्तु अस्मिन् विनियोगे सति ज्ञानोद्देशेन नित्यान्यनुतिष्ठतोऽवश्यं ज्ञानं भवति। इतरथा शुद्धिमात्रमनियता ज्ञानोत्पत्तिरिति सार्थकोऽयं विनियोग इति चेत् तर्हि नित्यानामपि

---

पकारद्वारा विद्याहेतुत्वं विविदिषावाक्यादन्यतः सिद्धमसिद्धं वा। तत्र नाद्यः। विविदिषावाक्यवैयर्थ्यप्रसङ्गादित्याह नित्येभ्य इति विनियोग इति। शेषत्वरूपविनियोगबोधकशब्द इत्यर्थः।

द्वितीये नित्येष्वपि विद्योपकारकत्वमक्लृप्तमेव कल्पनीयमिति नित्यकाम्यसाधारणोपकारकल्पनं युक्तमेव इत्याह अन्यतः तदसिद्धाविति। नित्यानां विद्योपकारकत्वासिद्धावित्यर्थः।

अन्यतः सिद्धिपक्षमवलम्ब्य विनियोगार्थवत्त्वं शङ्कते नन्विति। दुरितं तावद्द्विविधं ज्ञानोत्पत्तिप्रतिबन्धकं ज्ञानोत्पत्तिं प्रति उदासीनं सत् नरकादिप्रदञ्च। तथा च नित्यानां ज्ञाने विनियोगाभावे नित्यकर्मभिर्ज्ञानप्रतिबन्धकदुरितस्यैव क्षय इत्यत्र नास्ति मानम्। धर्मेण पापमपनुदति। यज्ञो दानं तपश्चैव पावनानि मनीषिणामित्यादिश्रुतिस्मृतिवचनानां नित्यानां दुरितसामान्यक्षयहेतुत्वबोधनमात्र-

अक्लृप्तमेव नियमतो ज्ञानोत्पत्तिप्रतिबन्धकदुरि-
तनिवर्हणत्वं ज्ञानसाधनविशिष्टगुरुलाभश्रवणमन-
नादिसम्पादकापूर्वं च द्वारं कल्पनीयमित्यक्लृप्त-
प्रकारकल्पनाविशेषान्न सामान्यश्रुत्यापादितो
नित्यकाम्यसाधारणविनियोगो भञ्जनीय इति ।

---

परत्वात् अतो नियमेन ज्ञानप्रतिबन्धकदुरितक्षयहेतुत्वं नित्य-कर्मणामन्यतो न प्राप्तमिति तत्प्राप्त्यर्थोऽयं विनियोग इत्यर्थः । नित्यैरेव यज्ञादिभिर्दुरितक्षयद्वारा ज्ञानं सम्पादयेदिति प्रकारेण विविदिषावाक्यीये नित्यानां ज्ञाने विनियोगे सति वा कथं ज्ञानप्रतिबन्धकदुरितस्यैव क्षयो नित्यानुष्ठानतो लभ्यत इति पृच्छति किन्त्विति । तल्लाभप्रकारमाह अस्मिन्निति अवश्यमिति । नित्यानुष्ठानात् ज्ञानप्रतिबन्धकदुरितक्षये सति प्रतिबन्धकरहितमहावाक्यादवश्यं ज्ञानं भवतीत्यर्थः । इतर-थेति । एतद्विनियोगाभावादित्यर्थः । दुरितसामान्यक्षयरूपा शुद्धिर्भवति न तु नियमेन ज्ञानप्रतिबन्धकदुरितक्षयरूपशुद्धि-विशेषो भवति । ज्ञानोद्देशेन नित्यानामननुष्ठानात् । तथा च बहुजन्मसु नित्यकर्मानुष्ठानशीलस्यापि नियमेन ज्ञानं न जायते किन्तु दैवयोगात् कदाचित् ज्ञानप्रतिबन्धकदुरितसङ्घस्य निःशेषक्षयसम्भवात् ज्ञानमपि कदाचित् भवतीत्यनियता ज्ञानोत्पत्तिरित्यर्थः । ज्ञानापेक्षितोपकारो नित्येषु क्लृप्त इति मतं निरालम्बनमित्यभिप्रेत्य काम्येष्विव नित्येष्वप्यक्लृप्तोप-कारकल्पनं तुल्यमिति दूषयति तर्हीति । नित्येषु ज्ञानोपकारक-त्वनियमासिद्धावित्यर्थः । नन्वेमपि नित्यानामेव विनियोगपक्षे

असन्न्यासिनामपि त्रैवर्णिकानामेव ज्ञानोत्पत्तिनिरूपणम्।

**नन्वेवमपि कथं कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादिस्मरणनिर्वाहः।**

---

विधेर्लाघवमस्ति। तेषां पक्षे ज्ञानप्रतिबन्धकदुरितनिवर्हकत्वस्य वचनान्तरात् प्राप्तत्वेन नियममात्रस्य विधेर्लभ्यत्वात्। काम्येषु तु ज्ञानप्रतिबन्धकदुरितनिवर्हकत्वं सर्वथा न प्राप्तमिति काम्यानामपि विनियोगपक्षे विधेस्तात्पर्य्यगौरवमपरिहार्य्यमिति चेत् सत्यम्। तथापि यज्ञादिश्रुतीनां सङ्कोचलक्षणबाधपरिहाराय काम्यानामपि विनियोग आवश्यक इत्यत्रैव तात्पर्य्यं बोध्यम्। नित्येभ्यो ज्ञानप्रतिबन्धकदुरितस्यैव क्षयरूपशुद्धिविशेषलाभेऽपि तावन्मात्रात् न ज्ञानोत्पत्तिरस्ति। प्रमाणप्रमेयासम्भावनादिरूपदृष्टप्रतिबन्धकसत्त्वात्। अतस्तन्निरासोपयोगिनामुत्कृष्टगुरुतदधीनश्रवणमननध्यानादीनां सम्पादकादृष्टजनकत्वं नित्यानामक्तृप्तमेव विविदिषावाक्यीयविनियोगबलात् कल्पनीयमित्याह ज्ञानसाधनेति।

एवं विविदिषाद्वारा विद्यायां कर्मणां विनियोगं निरूप्य तेषु त्रैवर्णिकानामधिकार इति निरूपणार्थमाक्षेपव्याजेन प्रसङ्गं दर्शयति ननु इत्यादिना एवमपीति। तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने! इति ज्ञानकर्मसमुच्चयप्रतिपादकस्मरणस्य विविदिषावाक्याविरोधेन ज्ञानं साक्षात् ब्रह्मप्राप्तिसाधनम्। कर्म च विद्याद्वारा तत्प्राप्तिसाधनमिति क्रमसमुच्चयपरतया निर्वाहेऽपीत्यर्थः। अत्रावधारणेन संसिद्धिशब्दितमुक्तिं प्रति कर्मातिरिक्तोपायनिषेधाज्जनकाद्यनुष्ठितकर्मणो मुक्तिं प्रति साक्षादेवोपयोगः प्रतीयते। स च विविदिषा-

न च तस्य विद्यार्थकर्मानुष्ठानपरत्वम् विविदिषावाक्ये ब्राह्मणग्रहणेन ब्राह्मणानामेव विद्यार्थकर्मण्यधिकारप्रतीतेः। अतो जनकाद्यनुष्ठितकर्मणां साक्षादेव मुक्त्युपयोगो वक्तव्यः। मैवम्। विविदिषावाक्ये ब्राह्मणग्रहणस्य त्रैवर्णिकोपलक्षणत्वात्।

यथाहुरत्रभवन्तो वार्त्तिककाराः। ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणम्। अविशिष्टाधिकारित्वात्सर्वेषामात्मबोधन इति।

---

वाक्यविरुद्ध इति समुच्चयस्मरणवदस्य स्मरणस्य निर्वाहो न सिध्यतीत्यर्थः।

अस्यापि विविदिषावाक्याविरुद्धं सिद्धान्त्यभिमतमर्थमाशङ्क्य निषेधति न च तस्येति विद्यार्थेति। अस्मिन् स्मरणे संसिद्धिपदं विद्यापरम्। तथा च शुद्धिद्वारा कर्मणैव विद्यां प्राप्ता इति स्मरणार्थं इति भावः। तस्य स्मरणस्य विद्यार्थकर्मानुष्ठानपरत्वं न चेत्यत्र हेतुमाह विविदिषावाक्य इति अत इति। विविदिषावाक्यबोध्ये विद्यासाधनकर्मणि त्रैवर्णिकानामनधिकारादित्यर्थः। उपलक्षणत्वादिति तथाच भाष्यं ब्राह्मणग्रहणमुपलक्षणार्थमविशिष्टो हि अधिकारस्त्रयाणां वर्णानामिति। तथा च विद्यार्थकर्मसु जनकादीनामप्यधिकारसत्त्वात् कर्मणैव हीति स्मरणं विद्यार्थकर्मानुष्ठानपरमेवेति न तद्बलात्। तमेव विदित्वातिमृत्युमेति नान्यः पन्था इत्यादिश्रुतिविरुद्धः साक्षादेव कर्मणां मुक्त्युपयोगो वक्तव्य इति भावः।

न हि विद्याकामो यज्ञादीननुतिष्ठेदिति विपरिणमिते विद्याकामाधिकारिविधौ ब्राह्मणपदस्याधिकारिविशेषसमर्पकत्वं युज्यते उद्देश्ये विशेषणायोगात् ।

---

अत्रभवन्त इति पूज्या इत्यर्थः । आत्मबोधन इति आत्मबोधनसाधनयज्ञादिकर्मणीत्यर्थः । विद्यार्थकर्माधिकारस्यैव प्रकृतत्वादिति मन्तव्यम् । ननु विविदिषावाक्ये ब्राह्मणपदस्य त्रैवर्णिकोपलक्षणत्वे सिद्धे त्रयाणां वर्णानामविशेषेण विद्यार्थकर्मसु अधिकारः सिध्यति तत्र सर्वेषामविशिष्टाधिकारत्वे सिद्धे तदनुरोधेन ब्राह्मणग्रहणस्योपलक्षणत्वं सिध्यतीति परस्पराश्रयत्वप्रसङ्ग इति चेत् न । ब्राह्मणग्रहणस्य द्विजोपलक्षणत्वमनुपजीव्यैव सर्वेषां द्विजानां विद्यार्थकर्मसु अधिकारसिद्धेर्वार्त्तिकवचने विवक्षितत्वात् । ननु विविदिषावाक्ये ब्राह्मणग्रहणेन ब्राह्मणस्यैव विद्यार्थकर्मसु अधिकारे प्रतीयमाने कथं वर्णत्रयसाधारणाधिकारः सिध्येदिति चेत् तत्र वक्तव्यम् । किं ब्राह्मणपदस्य यज्ञादिविधौ उद्देश्यविशेषणसमर्पकतया ब्राह्मणमात्राधिकारप्रापकत्वं किं वा विधेयकर्तृसमर्पकतया तदुभयसमर्पकत्वाभावेऽपि स्वसन्निधिमात्रेण तन्मात्राधिकारप्रापकत्वं वा ।

गत्यन्तराभावात् तत्र नाद्य इत्याह न हीति । यज्ञादीनां विद्यालक्षणफले विनियोगपरे विधौ विद्याकामस्याधिकारः सिद्ध एव । तथा च ब्राह्मण्यविशिष्टस्य विद्याकामस्याधिकारो विवक्षित इति स्वीकृत्य ब्राह्मणपदस्य अधिकारिवि-

नापि राजा स्वाराज्यकामो राजसूयेन यजेतेति स्वाराज्यकामाधिकारे राजसूयविधौ स्वाराज्यकामो राजकर्तृकेण राजसूयेन यजेतेति कर्तृतया यागविशेषणत्वेन विधेयस्य राज्ञो राजकर्तृकराजसूयस्याराज्ञा सम्पादयितुमशक्यत्वादर्थादधिकारिकोटिनिवेशवदिह यज्ञादिकर्तृतया विधेयस्य ब्राह्मणस्यार्थादधिकारिकोटिनिवेश इति युज्यते ।

---

शेषणसमर्पकत्वं वक्तुं न शक्यते । विधेययज्ञादिनिरूपितोद्देश्यताया विद्याकामसमाप्ते पर्यवसानसम्भवेन ब्राह्मणरूपविशेषणस्यानाकाङ्क्षिततया विद्याकामं प्रति विशेषणत्वेनान्वयायोगाद्विशिष्टस्य उद्देश्यत्वकल्पने गौरवाच्च । विद्याकामब्राह्मणयोः प्रत्येकमुद्देश्यत्वे च वाक्यभेदप्रसङ्गात् विद्याकामो यज्ञादीननुतिष्ठेत् ब्राह्मणो यज्ञादीननुतिष्ठेदिति भावः ।

द्वितीयं सदृष्टान्तमाशङ्क्य निराकरोति नापीति । स्वाराज्यकामवाक्ये राजपदस्य पूर्वोक्तरीत्या स्वाराज्यकामं प्रति विशेषणत्वायोगात् कर्तृविधायकत्वं स्वीकृत्य राजसूये राज्ञः सतः स्वाराज्यकामस्य अधिकारः साधित इत्यर्थः । राज्ञोऽर्थादधिकारिकोटिनिवेशवदिति सम्बन्धः । अर्थादिति पदोक्तामर्थापत्तिं स्फुटयति राजकर्तृकेति इहेति । विविदिषावाक्य इत्यर्थः । विधेयस्य इति । विद्याकामो ब्राह्मणकर्तृकयज्ञादीननुतिष्ठेत् इत्येवंविधेयस्य इत्यर्थः । अर्थादिति ब्राह्मणकर्तृकयज्ञादेः अब्राह्मणेन सम्पादयितुम् अशक्यत्वादित्यर्थः ।

सर्वथापि त एवोभयलिङ्गादितिसूत्रे अन्यत्र विहितानामेव यज्ञादीनां विविदिषावाक्ये फलविशेषसम्बन्धविधिर्नापूर्वयज्ञादिविधिरिति व्यवस्थापितत्वेन प्राप्तयज्ञाद्यनुवादेनैकस्मिन् वाक्ये कर्त्तृरूपगुणविधिः फलसम्बन्धविधिश्चेत्युभयविधानाद् वाक्यभेदापत्तेः ।

नापि राजसूयवाक्ये राज्ञः कर्त्तृतया विधेय-

---

अर्थात् अधिकारकोटिनिवेश इत्यपि न युज्यत इत्यत्र दृष्टान्तवैषम्यम् अभिप्रेत्य हेतुमाह । सर्वथापीत्यादिना । यज्ञादीनामाश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च यावज्जीवादिवाक्येषु ये अग्निहोत्रादयो धर्मा विहितास्त एव अनुष्ठेयाः । कुतः श्रुतिस्मृतिरूपोभयलिङ्गात् । श्रुतिस्तावत् विविदिषावाक्यगतयज्ञादिश्रुतिरेव । तया प्रसिद्धयज्ञादीनां प्रसिद्धदानादीनाञ्च प्रत्यभिज्ञायमानत्वात् अपूर्वयज्ञादिविधायकत्वे प्रत्यभिज्ञाविरोधात् प्रसिद्धयज्ञाद्यनुवादेन फलसम्बन्धमात्रबोधने लाघवाच्च यज्ञादीनां सुबन्तयज्ञादिपदोपात्तत्वेन अत्र विधेयत्वाप्रतीतेश्च । स्मृतिश्च अनाश्रितः कर्मफलम् इत्याद्या । प्रसिद्धयज्ञादीनामेव फलाभिसन्धिं विना अनुष्ठितानां विद्याहेतुत्वं दर्शयतीति सूत्रार्थः । अन्यत्रेति । विविदिषावाक्यात् अन्यत्र कर्मकाण्ड इत्यर्थः । उभयविधानादिति राजसूयवाक्ये तु कर्त्रादिगुणविशिष्टस्यापूर्वकर्मण एव विध्युपगमात् न वाक्यभेदप्रसक्तिरिति । तत्र राजपदस्य कर्त्तृरूपगुणविधायकत्वं युक्तमिति भावः ।

त्वाभावपक्षे राजपदसमभिव्याहारमात्राद्विशिष्ट-कर्त्तृत्वलाभवदिह वाक्याभेदाय कर्त्तृतया ब्राह्मणा-विधानेऽपि ब्राह्मणपदसमभिव्याहारमात्रेण ब्राह्म-णकर्त्तृत्वलाभात् तदधिकारपर्य्यवसानमित्युप-पद्यते ।

अन्यत्र त्रैवर्णिकाधिकारित्वेन क्लृप्तानामि-हापि त्रैवर्णिकाधिकारात्मविद्यार्थत्वेन विधीय-मानानां यज्ञादीनां त्रैवर्णिकाधिकारित्वस्य युक्त-तया विधिसंसर्गहीनब्राह्मणपदसमभिव्याहारमात्रा-दधिकारसङ्कोचासम्भवेन ब्राह्मणपदस्य यथाप्राप्त-विद्याधिकारिमात्रोपलक्षणौचित्यात् ।

---

तृतीयमपि सदृष्टान्तमाशङ्क्य निराकरोति नापीति राज्ञ इति । राज्ञः कर्त्तृतया विधेयत्वाभावेऽपि राज्ञ एव राज-सूयाधिकारः सिध्यति । राजपदसन्निधानेन स्वाराज्यकाम-पदस्य क्षत्रियपरत्वावगमात् । अन्यथा राजपदवैयर्थ्यप्रसङ्गा-दिति तात्पर्य्येण येषां मते राज्ञः कर्त्तृतया विधिर्नाभ्युपगम्यते तेषां पक्ष इत्यर्थः ।

ब्राह्मणाधिकारपर्य्यवसानमित्यपि नोपपद्यते इत्यत्र हेतु-माह अन्यत्र इति । कर्मकाण्ड इत्यर्थः । इहापीति विवि-दिषावाक्येऽपि इत्यर्थः । त्रैवर्णिकाधिकारात्मविद्येति । ब्राह्म-णस्येव क्षत्रियवैश्ययोरपि विद्यायामर्थित्वलक्षणाधिकारा-विशेषात् शूद्रस्येव विद्यार्थयज्ञादिषु तयोः प्रतिषेधाभावाच्च

शूद्रस्य ब्रह्मविद्यायामधिकाराभावोपपादनम्।

ननु विद्याधिकारिमात्रोपलक्षणत्वे शूद्रस्यापि विद्यायामर्थित्वादिसम्भवेन तस्यापि विद्यार्थकर्माधिकारप्रसङ्ग इति चेन्न। अध्ययनगृहीतस्वाध्यायजन्यतदर्थज्ञानवत एव वैदिकेष्वधिकार इत्यप-

---

इत्यर्थः। युक्ततयेति। अधिकारिणामसङ्कोचस्य विधिगतानुष्ठापकत्वलक्षणप्रामाण्योपपादकत्वादिति भावः। अन्यत्र क्लृप्तत्वाद्युपपत्तित्रयप्राप्तस्यापि क्षत्रियवैश्ययोः अधिकारस्य ब्राह्मणपदमपवादकमित्याशङ्क्याह विधिसंसर्गहीनेति। उद्देश्यसमर्पकतया विधेयसमर्पकतया वा विधिवाक्यार्थान्वयबोधानुपयोगीत्यर्थः। राजसूयवाक्ये तु राजसूयस्य अत्रैव विधेयत्वेन त्रैवर्णिकाधिकारत्वेन अन्यत्राक्लृप्तत्वाद्युक्तं विधिसंसर्गहीनराजपदसमभिव्याहारमात्रात् राजकर्तृनियम इति भावः।

ननु उक्तन्यायेन ब्राह्मणपदाभावेऽपि क्षत्रियवैश्ययोरिव ब्राह्मणस्यापि विद्यार्थकर्मसु अधिकारसिद्धेः ब्राह्मणग्रहणं व्यर्थमेव स्यादिति चेत् न। विद्यार्थकर्मसु ब्राह्मणस्य मुख्याधिकारज्ञापनार्थतोपपत्तेर्वैयर्थ्यानवकाशादिति भावः।

ब्राह्मणग्रहणस्य उपलक्षणत्वपक्षेऽतिप्रसङ्गं शङ्कते नन्विति। अविधेयायां हि विद्यायामधिकारी नाम विद्यार्थित्वमात्रम्। तच्च शूद्रस्यापि सम्भवतीति क्षत्रियादेरिव तस्यापि विद्यार्थकर्मसु अधिकारो दुर्निवार इत्यर्थः। शूद्रस्य श्रुत्युक्तसगुणब्रह्मविद्यासु निर्गुणब्रह्मविद्यासाधनवेदान्तश्रवणादिषु चाधिकारमाशङ्क्य नास्ति अधिकार इति निर्णीतमपशूद्राधिकरणे। तस्याधिकारा-

शूद्राधिकरणे अध्ययनवेदवाक्यश्रवणादिविधुरस्य शूद्रस्य विद्याधिकारनिषेधात् न शूद्राय मतिं दद्यादिति स्मृतेरापाततोऽपि तस्य विद्यामहिम्नाऽवगत्युपायासम्भवेन तदर्थित्वानुपपत्तेश्च तस्य विद्यायामनधिकारादिति केचित्।

अन्ये त्वाहुः। शूद्रस्याप्यस्त्येव विद्यार्थकर्माधिकारः। तस्य वेदानुवचनाग्निहोत्राद्यसम्भवेऽपि कण्ठोक्तसर्ववर्णाधिकारश्रीपञ्चाक्षरमन्त्रराज-विद्या-दिजपपापक्षय-हेतु-तपोदानपाक-यज्ञादि-सम्भवाद्

---

भावे च भाष्ये हेतुरुपन्यस्तो वेदाध्ययनाभावादिति। शूद्रस्य वेदोच्चारणश्रवणधारणानां निषेधेन वेदाध्ययनाभावेऽपि वेदार्थभूतोपासनाद्यनुष्ठानं किं न स्यादित्याशङ्क्याध्ययनविधिना वेदजन्यवेदार्थज्ञानस्य वेदार्थानुष्ठानेषु नियमितत्वात् अध्ययनशून्यस्य तदभावान्न सगुणनिर्गुणविद्यानुष्ठानेषु अधिकार इत्युक्तम्। तथा च तुल्यतया विद्यार्थकर्मस्वपि अधिकारो नास्ति इत्यर्थः।

ननु शूद्रस्य वेदोक्तयज्ञादिष्वधिकाराभावेऽपि वक्ष्यमाणरीत्या तस्य विद्यासाधनकर्मणां सम्भवात् विद्याकामनया शूद्रस्यापि तेषामनुष्ठानं सम्भवतीत्याशङ्क्य तस्य विद्याकामनैव न सम्भवतीत्याह न शूद्रायेति। मतिं शास्त्रार्थज्ञानं विद्यायाः महिमा निरतिशयानन्दरूपब्रह्मप्राप्तिसाधनत्वम्।

शूद्रस्यापि विद्यार्थकर्माधिकारप्रसङ्ग इत्यत्र इष्टापत्तिमित्याह अन्ये त्विति। कण्ठत उक्तः सर्ववर्णाधिकारो

वेदानुवचनेन यज्ञेन दानेनेत्यादिपृथक्करणविभक्ति-श्रुतेः विधुरादीनां विद्यार्थजपदानादिमात्रानुष्ठानानुमतेश्च वेदानुवचनादिसमुच्चयानपेक्षणात्।

न च शूद्रस्य विद्यायामर्थित्वासम्भवः। श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः। इत्यादीतिहासपुराण-

---

यस्मिन् तादृशविद्यादिजपे स तथोक्तः। श्रीमत्पञ्चाक्षरमेव मन्त्रराजविद्या। आदिपदञ्च आगमिकपौराणिकमन्त्रान्तर-संग्रहार्थम्। तथाच ब्रह्मोत्तरखण्डे किं तस्य बहुभिर्मन्त्रैः किं तीर्थैः किं तपोऽध्वरैः। यस्यों नमः शिवायेति मन्त्रो हृदय-गोचरः। मन्त्राधिराजराजो यः सर्ववेदान्तशेखरः। सर्व-ज्ञाननिधानञ्च सोऽयं शैवषडक्षरः। प्रणवेन विना मन्त्रः सोऽयं पञ्चाक्षरः स्मृतः। स्त्रीभिः शूद्रैश्च सङ्कीर्णैर्ध्यायते मुक्ति-काङ्क्षिभिरिति। पाकयज्ञादीत्यादिपदं द्विजशुश्रूषानामकीर्त्तन-तीर्थस्नानादिसंग्रहार्थम्। ननु विविदिषावाक्ये शूद्रसाधारण-वर्णधर्माणामुपलक्षणेऽपि यज्ञादीनामेकवाक्योपादानात् तेषां समुच्चयस्य विद्यासाधनत्वं भाति। यज्ञादिषु समुच्चयश्च शूद्रे बाधित इति कथं तस्य विद्यार्थकर्माधिकार इत्याशङ्क्य हेत्व-सिद्ध्या दूषयति वेदानुवचनेन विविदिषन्ति यज्ञेन विविदिष-न्तीत्यादिरूपेण प्रत्येकं साधनत्वप्रतीतेर्न समुच्चयापेक्षा। तद्विव-क्षायां हि वेदानुवचनयज्ञदानतपोभिर्विविदिषन्तीति वाक्यं स्यात्। पृथक्करणविभक्तिश्रवणेऽपि वेदानुवचनेन च यज्ञेन च दानेन च तपसा चेति प्रतिपदार्थं चकारयुक्तं वा वाक्यं स्यात् यदग्नये च प्रजापतये चेत्यादिवदिति भावः।

श्रवणे चातुर्वर्ण्याधिकारस्मरणेन पुराणाद्यवगतवि-
द्यामाहात्म्यस्य तस्यापि विद्यार्थित्वसम्भवात् ।

न शूद्राय मतिं दद्यादिति स्मृतेश्च तदनुष्ठा-
नानुपयोग्यग्निहोत्रादि-कर्मज्ञान-निषेध-परत्वात् ।
अन्यथा तस्य स्वधर्मस्याप्यवगत्युपायासम्भवेन
शूद्रः चतुर्थो वर्ण एकजातिस्तस्यापि सत्यमक्रोधः
शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके श्राद्धकर्म
भृत्यभरणं स्वदारतुष्टिः परिचर्या चोत्तरेषामित्या-
दितद्धर्मविभाजक-वचनानामननुष्ठानलक्षणाप्रामा-
ण्यापत्तेः ।

---

यत्तु आपाततोऽपि विद्यामहिमावगत्युपायासम्भवेन
विद्यायामर्थित्वलक्षणाधिकारानुपपत्तिरिति तदनूद्य निरा-
करोति न च शूद्रस्येति श्रावयेदिति ब्राह्मण इति शेषः ।
यदा क्षत्रियादीन् श्रावयेत् तदा विशेषमाह क्षत्वेति । पुरा-
णादिभिः साधनभूतैरवगतं विद्यामाहात्म्यं येन शूद्रेण स तथा
तस्येत्यर्थः ।

मतिनिषेधवचनस्य सङ्कोचं दर्शयति न शूद्रायेति
अन्यथेति । शास्त्रार्थज्ञानमात्रदाननिषेधपरत्व इत्यर्थः ।
शूद्रस्य स्वतः पुराणादिपठननिषेधादन्येभ्योऽपि पुराणादि-
श्रवणाभावे स्वधर्मावगतिर्न सम्भवतीत्यर्थः । इष्टापत्ति-
माशङ्क्याह शूद्रश्चतुर्थो वर्ण इत्यादिना । जातिर्जन्म उप-
नयनाख्यद्वितीयजन्मशून्य इत्यर्थः । प्रक्षालनमेवेति । न

न चैवं सति अपशूद्राधिकरणस्य निर्विषयत्वं, तस्य न शूद्रे पातकं किञ्चित् न च संस्कारमर्हतीत्यादिस्मृतेर्गुरूप-सदनाख्य-विद्याङ्गोपनयनसंस्कारविधुरस्य शूद्रस्य सगुणविद्यासु निर्गुणविद्यासाधनवेदान्तश्रवणादिषु चाधिकारनिषेधपरत्वान्निर्गुणविद्यायां शूद्रस्यापि विषयसौन्दर्य्यप्रयुक्तस्यार्थित्वस्य निषेद्धुमशक्यत्वात् अविधेयायां च तस्यां तदतिरिक्ताधिकाराप्रसक्त्या तन्निषेधाऽयोगाच्च।

---

त्वपां प्राशनम् अङ्गस्पर्शनादिकं वेत्येवकारार्थः। उत्तरेषामिति द्विजानामित्यर्थः। न शूद्राय मतिं दद्यादिति स्मृतिः शास्त्रार्थज्ञानमात्रदाननिषेधपरत्वेऽपि वृद्धौ च मातापितरौ भार्य्या साध्वी सुतः शिशुः। अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् इत्यादिवचनदर्शनेन ये ब्राह्मणाः उक्तलक्षणमात्रादिसंरक्षणोपयोग्यर्थलाभाय शूद्रान् प्रति पुराणादिपठने प्रवर्त्तन्ते तेभ्यो विद्यामाहात्म्यस्वधर्मयोरवगतिसम्भावात् न काप्यनुपपत्तिरिति मन्तव्यम्।

न च एवमिति शूद्रस्यापि विद्यार्थकर्माधिकारस्वीकार इत्यर्थः। निर्विषयत्वमिति। तदधिकरणस्य शूद्राधिकारनिषेधपरत्वादिति भावः। सत्यं तदधिकरणं शूद्राधिकारनिषेधपरं किन्तु विद्यार्थकर्माधिकारनिषेधपरं न भवति। वेदान्तश्रवणाद्यधिकारनिषेधपरत्वात् तस्येति परिहरति। तस्य न शूद्र इत्यादिना। वेदान्तश्रवणसगुणोपासनेषु अधिकाराभावे हेतुगर्भ-

विशेषणमाह गुरूपसदनाख्येति। शूद्रस्य संस्कारशून्यत्वे मानमाह न शूद्र इति पातकमिति। अभक्ष्यभक्षणादिकृतमित्यर्थः। संस्कारो द्विविधः अध्ययनाङ्गोपनयनलक्षणो विद्याङ्गोपनयनलक्षणश्च। द्विविधमपि संस्कारं निषेधति न च संस्कारमर्हतीति शिष्यत्वेन स्वीकृत्य समीपे स्थापनरूपं विद्याङ्गोपनयनमाचार्य्यकर्त्तृकं तच्च शिष्यकर्त्तृकगुरूपसदनपूर्वकत्वात् गुरूपसदनाख्यमित्युक्तं। गुरूपसदनञ्च तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्यादिना विद्याङ्गत्वेन विहितं तथा ह्योपनिन्य इत्यादिश्रुत्यादिविद्याङ्गत्वेनोपनयनं च प्रतीयत इति भावः। तं विद्यार्थिनं गुरुरुपनीतवानिति श्रुत्यर्थः। ननु श्रुत्युक्तसगुणोपासनेषु इव निर्गुणविद्यासाधनवेदान्तश्रवणादिषु इव च निर्गुणविद्यायामप्यधिकारनिषेधपरमपशूद्राधिकरणं किं न स्यात्। विनिगमनाविरहात्। तथाच निर्गुणविद्यायामधिकाराभावे तत्साधनकर्मसु शूद्राधिकारो न सिध्येदित्यत आह निर्गुणविद्यायामिति। ब्रह्मविद्यालक्षणस्य विषयस्य सौन्दर्य्यं मुक्तिसाधनत्वम्। तज्ज्ञानप्रयुक्तस्य विद्यायामर्थित्वलक्षणाधिकारस्य तदधिकरणन्यायेन निषेद्धुमशक्यत्वादित्यर्थः। ननु शूद्रस्य विद्यायामर्थित्वलक्षणाधिकारसत्त्वेऽपि तदतिरिक्तस्याधीतवेदत्वादिरूपविशेषणान्तराभावात् कथं तस्याधिकारो विद्यायामित्यत आह अविधेयायामिति। च शब्दः शङ्कानिरासार्थः। तदतिरिक्तेति अर्थित्वातिरिक्तेत्यर्थः। स्वर्गानुभववत् ब्रह्मानन्दानुभवरूपाया निर्गुणविद्यायाः फलरूपत्वादविधेयत्वं फलस्याविधेयत्वात्। तथाच यथा स्वर्गानुभवादौ फले तदर्थित्वमात्रमधिकारस्तथा निर्गुणविद्यायामपि तदर्थित्वमात्रमवाधिकारः। स च निषेद्धुमशक्यः। विधेयेषु एवोपासनादिषु पूर्वोक्ताधिकारिविशेषणान्तरापेक्षाशास्त्रे निरूपितेति विषमो दृष्टान्त इति भावः।

न च तस्य वेदान्तश्रवणासम्भवे विद्यार्थकर्मानुष्ठानसम्भवेऽपि विद्यानुत्पत्तेस्तस्य तदर्थकर्मानुष्ठानं व्यर्थमिति वाच्यम्। तस्य वेदान्तश्रवणाधिकाराभावेऽपि भगवत्पादैः श्रावयेच्चतुरो वर्णानिति चेतिहासपुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणात् वेदपूर्वस्तु नास्त्यधिकारः शूद्राणामिति स्थितमिति अपशूद्राधिकरण उपसंहारभाष्ये ब्रह्मात्मैक्यपरपुराणादिविधिश्रवणे विद्यासाधनेऽधिकारस्य दर्शितत्वात्।

विद्योत्पत्तियोग्यविमलदेवशरीरनिष्पादनद्वारा मुक्त्यर्थत्वं भविष्यतीति त्रैवर्णिकानां क्रममुक्ति-

---

असम्भव इति अपशूद्राधिकरणन्यायेन तदसम्भवे सतीत्यर्थः। तस्य वेदान्तश्रवणाभावेऽपि ब्रह्मात्मैक्यपरपुराणादिश्रवणे अधिकारस्य भाष्ये दर्शितत्वात् शूद्रस्यापि सम्भवति विद्योत्पत्तिरित्यर्थः। भाष्ये तुशब्दोऽवधारणार्थः। श्रावयेच्चतुरो वर्णानिति वचनेन शूद्रस्य पुराणादिश्रवणाभ्यनुज्ञानेऽपि मनननिदिध्यासनयोरभ्यनुज्ञानाभावात् न मननाद्यनुष्ठानं तस्य सिध्यति। न च मननादेः श्रवणाङ्गत्वात् न पृथगभ्यनुज्ञानापेक्षेति वाच्यम्। प्रयाजदर्शपूर्णमासादेरिव प्रकृते शेषशेषिभावबोधकप्रमाणाभावेन श्रवणादिषु अङ्गाङ्गिभावव्यवहारस्य गौणत्वात्।

फलकसगुणविद्यार्थकर्मानुष्ठानवद् वेदान्तश्रवणयोग्यत्रैवर्णिकशरीरनिष्पादनद्वारा विद्योत्पत्त्यर्थत्वं भविष्यतीति शूद्रस्य विद्यार्थकर्मानुष्ठानाविरोधाच्च। तस्माद्विविदिषावाक्ये ब्राह्मणपदस्य यथाप्राप्तविद्याधिकारिमात्रोपलक्षणत्वे न शूद्रस्यापि विद्यार्थकर्माधिकारः सिध्यत्येवेति।

---

तथा च शूद्रस्याद्वैतपरपुराणादिभागश्रवणे कृतेऽपि विद्योदयासम्भवात् विद्यार्थकर्मानुष्ठानवैयर्थ्यं तदवस्थमेव विद्योत्पत्तियोग्येति। यद्वा इति इतिहासइत्यस्वरसादाह विद्योत्पत्तियोग्येति। यद्वा इति इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति वचनादितिहासादिगतब्रह्मात्मैक्यपरभागस्य वेदान्तश्रवणजनितवेदान्तार्थज्ञानोपकारकत्वमात्रमेव न तु वेदान्तश्रवणमनपेक्ष्य स्वातन्त्र्येण ब्रह्मात्मैक्यज्ञानजनकत्वमिति निश्चीयते। तथा सत्येव तद्वचनपूर्वार्द्धः सङ्गच्छते। बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति अयमर्थः अल्पं वेदमात्रं श्रुतं विचारितं येन पुरुषेण सोऽल्पश्रुतस्तस्मात् पुरुषात् तेन श्रुतो वेदो बिभेति। कथं बिभेति तत्राह मामिति अयमल्पश्रुतपुरुषः मां श्रुतं वेदं प्रतरेत् मद्विचाररूपायां मीमांसायां न्यायाभासत्वादिशङ्कया मामप्यर्थान्तरपरं सम्भावयेत् इतिशब्दो हेत्वर्थः। एवं प्रतारणसम्भावद्धेतोरितिहासपुराणाभ्यां वेदं सम्यगुपबृंहयेत् इतिहासपुराणवचनैर्मीमांसानुसारिभिः तस्य दृढन्यायत्वनिश्चयसम्पादनद्वारा मीमांसानिर्णीतार्थ एव मां वेदं स्थापयेदिति। तथाच शूद्रस्य वेदान्तश्रवणरहितस्य वेदान्तार्थोपबृंहणरूपब्रह्मात्मैक्यपरेतिहासादिश्रवणे प्रवृत्ता-

संन्यासाश्रमस्यैव विद्योपयोगित्वनिरूपणम्।

ननु अस्तु कर्मणो चित्तशुद्धिद्वारा विद्योपयोगः सन्न्यासस्य किंद्वारा तदुपयोगः। के चिदाहुः। विद्योत्पत्तिप्रतिबन्धकदुरितानामनन्तत्वात्किञ्चिद्य-ज्ञाद्यनुष्ठाननिवर्त्त्यं किञ्चित् सन्न्यासापूर्वनिवर्त्त्य-मिति कर्मवच्चित्तशुद्धिद्वारैव सन्न्यासस्यापि तदुप-योगः।

---

वपि नास्ति विद्योदयः। श्रावयेच्चतुरो वर्णानिति वचनमपि शूद्रस्याद्वैतपरपुराणादिश्रवणांशे अदृष्टार्थमभ्यनुज्ञापरम्। अप-शूद्राधिकरणभाष्येऽपि शूद्रस्य अद्वैतपुराणादिश्रवणाधिकारवर्णनं विभेत्यल्पश्रुतादितिवचनं नास्तीति कृत्वा कृतमिति न भाष्य-विरोधोऽपि। तथाच वेदान्तश्रवणैकसाध्याविद्या तदभावे शूद्रस्य न सिध्येदेवेत्यस्वरसादाह विद्योत्पत्तियोग्येति सुत्त्यर्थत्वमिति। सगुणब्रह्मोपासनमिति शेषः। विद्योत्पत्त्यर्थत्वमिति शूद्रस्य मदनुष्ठितधर्माणां विद्योत्पत्त्यर्थत्वं भविष्यतीति निश्चयेन तदनुष्ठानसम्भवादित्यर्थः। तस्मादिति शूद्रस्य विद्यार्थकर्मानु-ष्ठाने बाधकाभावादित्यर्थः।

विद्याधिकारिमात्रेति न तु ब्राह्मणपदस्य ब्राह्मणमात्र-परत्वं न वा त्रैवर्णिकमात्रपरत्वमिति मात्रशब्दार्थः। ब्राह्मण-पदस्य द्विजोपलक्षणत्वे वार्त्तिकवचने यो हेतुरुक्तः त्रयाणामा-त्मबोधन साधनकर्मसु अधिकाराविशेषादिति तस्य हेतोः शूद्र-साधारणत्वादिति भावः। किं द्वारेति किमदृष्टद्वारा विद्योप-योगः किं वा दृष्टद्वारा। नाद्यः। विद्योत्पत्तिप्रतिबन्धकदुरितस्य

तथा च गृहस्थादीनां कर्मच्छिद्रेषु श्रवणाद्यनुतिष्ठतां न तस्मिन् जन्मनि विद्यावाप्तिः किं तु जन्मान्तरे सन्न्यासं लब्ध्वैव येषां तु गृहस्थानामेव सतां जनकादीनां विद्या दृश्यते तेषां पूर्वजन्मनि संन्यासाद्विद्यावाप्तिः। अतो न विद्यायां संन्यासापूर्वव्यभिचारशङ्कापीति।

सन्न्यासापूर्वस्य श्रवणाद्यधिकारिविशेषणम्।

अन्ये तु शान्तो दान्त उपरत इत्यादिश्रुतौ

---

यज्ञाद्यनुष्ठानजनितापूर्वेणैव निवर्त्तितत्वेन सन्न्यासजनितापूर्वनिवर्त्त्यदुरितालाभे सति सन्न्यासवैयर्थ्यप्रसङ्गात्। न द्वितीयः। तदनुपलम्भादित्याक्षेपाभिप्रायः। तत्राद्यं पक्षं समर्थयते केचिदाहुरिति।

ननु सन्न्यासापूर्वस्य न विद्योदयहेतुत्वं असन्न्यासिनामपि केषाञ्चिद्विद्योद्देशेन श्रवणाद्यनुष्ठानदर्शनात् केषाञ्चित्सन्न्यासं विनैव विद्योदयस्य प्रमाणासिद्धत्वाच्चेत्यत आह तथाचेति। सन्न्यासस्य विद्यां प्रति दृष्टद्वारानुपलम्भेनादृष्टद्वारैव विद्याप्राप्तिहेतुत्वे सन्न्यासविधिना सिद्धे सति इत्यर्थः। न च दृष्टद्वारानुपलम्भोऽसिद्धः लौकिकवैदिकव्यापारविक्षिप्तचित्तस्य विद्योदयासम्भवेन सर्वकर्मसन्न्यासस्य विक्षेपनिवृत्तिरूपदृष्टद्वारा विद्याहेतुत्वसम्भवादिति वाच्यम्। लौकिकवैदिककर्मवतामपि केषाञ्चित् पुरुषधौरेयाणां दैन्यहर्षक्रोधभयादिलक्षणविक्षेपनिवृत्तेरनुभवसिद्धत्वेन तदर्थं सन्न्यासानपेक्षणादिति भावः।

उपरतशब्दगृहीततया संन्यासस्य साधनचतुष्टया-न्तर्गतत्वात्सहकार्य्यन्तरविधिरिति सूत्रभाष्ये तद्वतो विद्यावतः संन्यासिनो बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं विधीयते।

---

सन्न्यासस्यादृष्टद्वारकत्वपक्षमेवावलम्ब्य सन्न्यासापूर्वस्य श्रवणाद्यधिकारिविशेषणत्वेन विद्योपयोगं सप्रमाणमाह अन्ये त्विति शान्त इति। तितिक्षुः समाहितः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येदिति श्रुतिशेषः। शमः अन्तरिन्द्रियनिग्रहः। दमः बाह्येन्द्रियनिग्रहः। उपरतिः नित्यकर्मत्यागः। ननु शान्तदान्तपदाभ्यामेव कर्ममात्रस्य वारितत्वादुपरतिश्रुतिर्व्यर्थेति चेन्न। शमदमविधिशास्त्रस्य सामान्यशास्त्रत्वात्तस्य नित्यकर्मविधिना विशेषशास्त्रेण नित्यनैमित्तिककर्मव्यतिरिक्तवाह्यान्तःकरणव्यापारनिवृत्तिमात्रपरतया सङ्कोचे सति नित्यकर्मत्यागालाभात् पुनः उपरतश्रुत्या नित्यकर्मत्यागो बोध्यत इति न तस्याः वैयर्थ्यम्। तितिक्षुः शीतोष्णादिद्वन्द्वसहिष्णुः समाहितः श्रवणाद्यपेक्षितचित्तसमाधानवान्। देवतागुरुवेदान्तेषु श्रद्धैव वित्तं यस्य सः श्रद्धावित्तः भूत्वेत्यस्य प्रत्येकमन्वयः आत्मन्येव कार्य्यकारणसङ्घात एव कार्य्यकारणसङ्घातसाक्षिणमात्मानमहं ब्रह्मास्मीति पश्येदिति श्रुत्यर्थः। साधनचतुष्टयेति नित्यानित्यवस्तुविवेकः ऐहिकामुष्मिकभोगविरागः शमादिषट्कं मुमुक्षा चेति साधनचतुष्टयं। तच्च श्रवणाद्यधिकारिविशेषणमिति व्यवस्थापितं प्रथमसूत्र इति भावः। सन्न्यासापूर्वस्याधिकारिविशेषणत्वे हेत्वन्तरमाह सह कार्य्यान्तरेत्यादिना

तस्माद्ब्राह्मणपाण्डित्यमित्यादिश्रुतौ ततः प्राग् भिक्षाचर्य्यं चरन्तीति संन्यासाधिकारादिति प्रतिपादनात् त्यक्ताऽशेषक्रियस्यैव संसारं प्रजिहासतः। जिज्ञासोरेव चैकात्म्यं त्वय्यन्तेष्वधिकारितेति वार्त्तिकोक्तेश्च संन्यासापूर्वस्य विद्यासाधनवेदान्तश्रवणाद्यधिकारिविशेषणत्वमिति तस्य विद्योपयोगमाहुः।

---

प्रतिपादनादित्यन्तेन। सहकार्य्यन्तरस्य विद्यां प्रति साधनान्तरस्य मौनस्य विधिरथ मुनिरिति शब्द इति सूत्रभागार्थः। सौत्रपदं तद्वत इति। तस्य व्याख्यानं विद्यावत इति। श्रवणाद्यनुष्ठानोपयोग्यापातज्ञानत इत्यर्थः। तद्वतः सहकार्य्यन्तरविधिरिति सूत्रे सन्न्यासिन इत्यनुक्तत्वात् कथं सन्न्यासिन इति लभ्यते तत्राह तस्मादिति। तस्मादित्यपि श्रुतिपदमेव। यस्मात् अतीताः ब्राह्मणा आपाततो ब्रह्मात्मानं विदित्वा तत्साक्षात्कारार्थं व्युत्थानशब्दितं सन्न्यासं कृतवन्तः तस्मादिदानीन्तनोऽपि ब्राह्मणो मुमुक्षुः सन्न्यस्य पाण्डित्यादिकं तत्त्वसाक्षात्कारार्थमनुतिष्ठेदिति श्रुत्यर्थः। पाण्डित्यं श्रवणं मौनं ध्यानम्।

तत इति तस्मात् ब्राह्मण इति वाक्यात् पूर्वमित्यर्थः। सन्न्यासापूर्वस्याधिकारिविशेषणत्वे वार्त्तिकसम्मतिरूपं हेत्वन्तरमाह त्यक्तेति। वार्त्तिके प्रथमविशेषणं सन्न्यासपरम्। ततश्च सन्न्याससमुमुक्षाजिज्ञासानां समुच्चयार्थेन चकारेण मुमुक्षुत्वादेरिव सन्न्यासस्यापि वेदान्तश्रवणादिषु अधिकारिविशेषणत्वं भातीति भावः। सन्न्यासापूर्वस्येति। सन्न्यासस्य त्यागलक्षण-

अपरे तु श्रवणाद्यङ्गतया आत्मज्ञानफलता संन्यासस्य सिद्धेति विवरणोक्तेरनन्यव्यापारतया श्रवणादिनिष्पादनं कुर्वतस्तस्य विद्यायामुपयोगः दृष्टद्वारे सम्भवति अदृष्टकल्पनायोगात्।

---

क्रियारूपतया स्वरूपेणानुवृत्त्ययोगात् अपूर्वपर्य्यन्तधावनमिति बोध्यम्।

सन्न्यासस्य दृष्टद्वारा विद्योपयोग इति द्वितीयपक्षं समर्थयते अपरे त्विति। ननु सन्न्यासस्य विद्याङ्गत्वबोधकश्रुत्यादिवत् तस्य श्रवणाद्यङ्गत्वबोधकप्रमाणाभावात् विवरणोक्तिरनुपपन्नेत्याशङ्क्य तस्याः तात्पर्य्यमाह अनन्यव्यापारतयेति। कादाचित्कं श्रवणादिकं विद्योदयद्वारा न अमृतत्वसाधनं किन्तु सार्वकालिकं ब्रह्मसंस्थोऽमृतत्वमिति आसुप्तेरामृतेः कालं नयेद् वेदान्तचिन्तयेत्यादिश्रुतिस्मृतिशतेभ्यः। तथा च अनन्यव्यापारतया श्रवणाद्यनुष्ठानं विदधता शास्त्रेण सन्न्यासोऽपेक्ष्यते। गृहस्थादेः स्वाश्रमविहितकर्म्मव्यग्रस्य सदा श्रवणाद्यनुष्ठानासम्भवात्। तथा विद्यासाधनत्वेन सन्न्यासं विदधतापि शास्त्रेण द्वारतया निरन्तरश्रवणाद्यनुष्ठानमपेक्ष्यते। सन्न्यासस्य साक्षात् विद्यासाधनत्वाभावात्। दृष्टद्वारसम्भवे अदृष्टद्वारकल्पनानुपपत्तेश्च। तत्रापि श्रवणादिकं तत्त्वव्यञ्जकत्वादर्थतः प्रधानं भवति सन्न्यासस्तूक्तहेत्वभावात् गुणभूततया व्यवतिष्ठते। एवं श्रवणादिविधेः सन्न्यासविधेश्च परस्परापेक्षावलादेकवाक्यभावमापन्नाभ्यां विधिभ्यां सन्न्यासाङ्गकं मननिदिध्यासनसहितं श्रवणं विधीयत इति सिद्धा सन्न्यासस्य श्रवणाद्यङ्गतया आत्मज्ञानफलकतेति भावः। यद्वा विवरणोक्ते-

यदि त्वनलसस्य धीमतः पुरुषधौरेयस्याश्रमान्तरस्थस्यापि कर्मच्छिद्रेषु श्रवणादि सम्पद्यते तदा चतुर्ष्वाश्रमेषु सन्न्यासाश्रमपरिग्रहेणैव श्रवणादि निर्वर्त्तनीयमिति नियमोऽभ्युपेय इति ।

---

रयं भावः । श्रवणविधिस्तावत् श्रवणसाधनतया विक्षेपनिवृत्तिं तद्धेतुसन्न्यासं च अपेक्षते । विक्षिप्तस्य चेतसः श्रवणाद्यनुष्ठाने प्रवृत्त्यसम्भवात् गृहस्थादेश्च स्वाश्रमकर्मकरणकालातिरिक्तकालेऽपि बहुविषयतया विक्षेपावश्यम्भावात् सन्न्यासविधेरपि विक्षेपनिवृत्तिरूपदृष्टद्वारा श्रवणादिकं घटयित्वा विद्यां सम्पादयतः सन्न्यासस्य विधानेन चारितार्थ्यसम्भवे अदृष्टद्वारा विद्यासाधनसन्न्यासविधायकत्वासम्भवात् । तथा च पूर्ववत् सन्न्यासस्य श्रवणाद्यङ्गतयैव विद्याफलकत्वं नत्वदृष्टद्वारेति सिद्धमिति अस्मिन् व्याख्याने अनन्यव्यापारतयेत्यस्य विक्षेपनिवृत्तिद्वारेत्यर्थो विवक्षितः । तस्येति सन्न्यासस्य इत्यर्थः ।

ननु सन्न्यासस्य विक्षेपनिवृत्तिद्वारा श्रवणाद्यङ्गभावमापन्नस्य विद्यासाधनत्वमुक्तमनुपपन्नम् । सन्न्यासं विनापि विक्षेपनिवृत्तेः केषुचिच्छ्रवणाधिकारिषु सम्भवादिति शङ्कते यदि त्विति । अनलसस्येति । सत्त्वगुणप्रधानस्येति यावत् । धीमत इति । विषयेषु दोषदर्शनशीलस्येति यावत् । पुरुषधौरेयस्येति । विषयेभ्यः सकाशादिन्द्रियाणां निग्रहे समर्थस्येत्यर्थः । एतैर्विशेषणैर्विक्षेपहेतूनामभावसूचनाद्विक्षेपनिवृत्तिरुक्ता । सन्न्यासफलस्य विक्षेपाभावस्य सन्न्यासादिव सन्न्यासादन्यतोऽपि प्राप्तौ सन्न्यासस्य विधिर्विक्षितस्य श्रवणाद्यपेक्षितविक्षेपनिवृत्तिं प्रति पक्षे प्राप्तिः पक्षे च अप्राप्तिरिति लभ्यते । तथा च माभूत् सन्न्यासाश्रम-

त्रैवर्णिकानां सन्न्यासाधिकारः।

ननु अस्मिन् पक्षद्वये क्षत्रियवैश्ययोः कथं वेदान्तश्रवणाद्यनुष्ठानं संन्यासस्य ब्राह्मणाधिकारत्वात् ब्राह्मणो निर्वेदमायात् ब्राह्मणो व्युत्थाय ब्राह्मणः प्रव्रजेदिति संन्यासस्य विधिषु ब्राह्मणग्रहणात्। अधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहः। न संन्यासविधि र्यस्मात् श्रुतौ क्षत्रियवैश्ययोरिति वार्त्तिकोक्तेश्चेति चेत्। अत्र केचित्।

यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा इत्यविशेषश्रुत्या ब्राह्मणः क्षत्रियो वापि

---

विधिरपूर्वविधिः। नियमविधिस्तु भवेदेवेति समाधत्ते तदेति परिग्रहेणैवेति। विक्षेपनिवृत्तिद्वारेति शेषः।

ननु अस्मिन् पक्षद्वय इति। सन्न्यासस्याधिकारिविशेषणत्वपक्षे अवणाङ्गत्वपक्षे च इत्यर्थः। कथमिति सन्न्यासाभावादिति भावः। तयोः सन्न्यासाभावे हेतुमाह सन्न्यासस्येति। ब्राह्मणस्यैव सन्न्यासाधिकारे मानमाह ब्राह्मण इति। निर्वेदं वैराग्यं तत्पूर्वकसन्न्यासं कुर्य्यादित्यर्थः। निर्वेदशब्दितवैराग्यस्य सन्न्यासं प्रति सामग्रीत्वेन तस्मिन् सति सन्न्यासस्यावश्यकत्वात् सन्न्यासविधिरेवायमिति भावः। व्युत्थायेति सन्न्यस्येत्यर्थः। यस्मात् श्रुतावधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहस्तस्मात् क्षत्रियवैश्ययोः सन्न्यासविधिर्नास्तीति वार्त्तिकयोजना। अत्र केचित्तयोः श्रवणाद्यनुष्ठानसिद्धिं समर्थयन्त इति सम्बन्धः।

वैश्यो वा प्रव्रजेद्गृहात्। त्रयाणामपि वर्णानाममी चत्वार आश्रमा इति स्मृत्यनुगृहीततया क्षत्रियवैश्ययोरपि संन्यासाधिकारे सिद्धे श्रुत्यन्तरेषु ब्राह्मणग्रहणं त्रयाणामुपलक्षणम्। अत एव वार्त्तिकेऽपि अधिकारिविशेषस्येति श्लोकेन भाष्याभिप्रायमुक्त्वा त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ। यदोपलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा इत्यनन्तरश्लोकेन स्वमते क्षत्रियवैश्ययोरपि संन्यासाधिकारो दर्शित इति तयोः श्रवणाद्यनुष्ठानसिद्धिं समर्थयन्ते।

ब्राह्मणस्यैव सन्यासपूर्वकं वेदान्तश्रवणाधिकारः क्षत्रियवैश्ययोस्तु तन्नैरपेक्ष्येण एव।

अन्ये तु अनेकेषु संन्यासविधिवाक्येषु ब्राह्मणग्रहणादुदाहृतजाबालश्रुतौ संन्यासविधिवाक्ये ब्राह्मणग्रहणाभावेऽपि श्रुत्यन्तरसिद्धं ब्राह्मणाधि-

---

ब्रह्मचर्यं समाप्य गृही भवेत् गृहात् वनी भूत्वा प्रव्रजेदिति पूर्वश्रुतौ चतुर्णामप्याश्रमाणां समुच्चयं प्रतिपाद्य तेषां विकल्पं दर्शयति यदि वेतरथेति। यदि वेत्यस्य ब्रह्मचर्याश्रम एव वैराग्यमुत्पन्नं चेदित्यर्थः। तत्र तदनुत्पत्तावाह गृहाद्वेति। गृहाश्रमेऽपि तदनुत्पत्तावाह वनाद्वेति अविशेषेणेति। ब्राह्मणादिविशेषग्रहरहितेत्यर्थः। अतएवेति वर्णत्रयसाधारणतया सन्न्यासस्य श्रुतिस्मृतिसिद्धत्वादेवेत्यर्थः। यदा यदि वेति श्रुतौ श्रूयते तदा उपलक्षणार्थं स्यादिति सन्दर्भः।

अन्ये त्विति। भाष्यानुवर्त्तिन इत्यर्थः। श्रुत्यन्तरसिद्धमिति

कारमेव सिद्धं कृत्वा संन्यासावस्थायामयज्ञोपवीती कथं ब्राह्मण इति ब्राह्मणपरामर्शाच्च ब्राह्मणस्यैव संन्यासाधिकारः।

विरोधाधिकरणन्यायेन श्रुत्यविरुद्धस्यैव स्मृत्यर्थस्य संग्राह्यत्वात्। यत्तु संन्यासस्य सर्वाधिकारित्वेन वार्त्तिकवचनं तद्विद्वत्संन्यासविषयं न तु आतुरविविदिषासंन्यासे भाष्याभिप्रायविरुद्ध-सर्वाधिकारप्रतिपादनपरम्।

---

ब्राह्मणो व्युत्थायेत्यादि श्रुतन्तरसिद्धमित्यर्थः। सिद्धं कृत्वेति। विद्योद्देशेन सन्न्यासविधिवाक्यानां सर्वेषामेकवाक्यत्वादिति भावः। कथमिति। तान्तवयज्ञोपवीतादेर्ब्राह्मणत्वव्यञ्जकत्वात् परमहंससन्न्यासे च तदभावादाक्षेप इत्यर्थः। यद्यत्र क्षत्रिय-वैश्ययोरपि सन्न्यासो विवक्षितः स्यात्तदा कथं ब्राह्मण इतिवत् कथं क्षत्रियः कथं वैश्य इत्यपि श्रूयेत न तु श्रूयते। तस्मान्न तयोः सन्न्यासः श्रुत्यभिमत इति भावः।

एवं सन्न्यासविधीनामेकवाक्यत्वे स्थिते सति ब्राह्मणः क्षत्रियो वापीति स्मृतिवचनं जाबालश्रुतितात्पर्याज्ञानमूलत्वादप्रमाणमित्याह विरोधाधिकरणन्यायेनेति। प्रत्यक्षश्रुतिविरुद्धं स्मृतिवचनं अप्रमाणमिति विरोधाधिकरणन्यायः। तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्येत्यादिश्रुतौ सन्न्यासाधिकारानुरोधेन ब्राह्मणः सन्न्यस्य पाण्डित्यादिकमनुतिष्ठेदिति वाक्यार्थलाभात् विद्यार्थ-सन्न्यासे विविदिषुणा क्रियमाणे ब्राह्मणस्यैवाधिकार इति भग-

सर्वाधिकारविच्छेदि विज्ञानं चेदुपेयते। कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् इत्यनन्तरश्लोकेन ब्रह्मज्ञानोदयानन्तरं जीवन्मुक्तेन क्रियमाणे विद्वत्संन्यास एवाधिकारनियमनिराकरणात्।

एवं च ब्राह्मणानामेव श्रवणाद्यनुष्ठाने संन्यासोऽङ्गं क्षत्रियवैश्ययोस्तन्निरपेक्षः श्रवणाद्यधिकार इति तयोः श्रवणाद्यनुष्ठाननिर्वाहः।

---

वतो भाष्यकारस्य मतम्। यदि वार्त्तिकवचनस्य प्रमाणमूलभाष्यकारमतविरुद्धेऽर्थे तात्पर्यं कल्प्येत तदा सन्न्यासस्य साधारण्यप्रतिपादकस्मृतिवचनवद्वार्त्तिकवचनमपि हेयमेव स्यात् अतो भाष्याविरुद्धार्थपरं वार्त्तिकवचनमित्याह तद्विद्वत्सन्न्यासविषयमिति।

विविदिषासन्न्यासे सर्वाधिकारप्रतिपादनपरं न भवतीति अत्र हेत्वन्तरमाह। सर्वाधिकारेति। क्षत्रियवैश्ययोस्तत्त्वज्ञानमभ्युपेयते न वा नान्त्यः। जनकादीनां तत्त्वज्ञानवत्त्वप्रतिपादकशास्त्रविरोधात् नाद्यः तत्त्वज्ञानेन कर्माधिकारप्रयोजकवर्णाश्रमाद्यध्यासनिवृत्तौ सकलकर्मनिवृत्तिरूपविद्वत्सन्न्यासस्य क्षत्रियवैश्ययोरपि वारयितुमशक्यतया विविदिषासन्न्यास इव विद्वत्सन्न्यासेऽपि ब्राह्मणस्यैव अधिकार इति नियमासम्भवादिति भावः। कुतो बलान्नियमः क्रियते तादृशं बलं नास्तीत्यर्थः।

एवञ्चेति। श्रवणाङ्गत्वेन अधिकारिविशेषणत्वेन वा विद्यासाधने विविदिषासन्न्यासे ब्राह्मणस्यैव अधिकार इति सिद्धे सतीत्यर्थः।

न हि संन्यासस्य श्रवणापेक्षितत्वपक्षे श्रवणमात्रस्य तदपेक्षा नियन्तुं शक्यते। क्रममुक्तिफलकसगुणोपासनया देवभावं प्राप्तस्य श्रवणादौ संन्यासनैरपेक्ष्यस्यावश्यं वक्तव्यत्वात्। देवानां कर्मानुष्ठानाप्रसक्त्या तत्त्यागरूपस्य संन्यासस्य तेषु असम्भवादित्याहुः।

---

ननु सन्न्यासस्याधिकारिविशेषणतया अङ्गतया वा श्रवणापेक्षितत्वपक्षे श्रवणमात्रस्य सन्न्यासापेक्षत्वावगमात् क्षत्रियवैश्ययोर्विविदिषासन्न्यासरहितयोः श्रवणानुष्ठानं नास्तीत्येव पर्य्यवस्यति न तु तयोः श्रवणं सन्न्यासनिरपेक्षमिति। तथाच कथं तयोः श्रवणाद्यनुष्ठाननिर्वाहस्तत्राह नह्लीति देवभावं प्राप्तस्येति। न च सगुणोपासकस्य ब्रह्मलोकं गतस्य उपासनया देवभावं प्राप्तस्य निर्गुणब्रह्मसाक्षात्काराय उपासकेन क्रियमाणे श्रवणादौ सन्न्यासस्य व्यभिचार इत्ययुक्तम्। तस्य सगुणविद्यासामर्थ्यादेव निर्गुणसाक्षात्कारसम्भवेन श्रवणाद्यनुष्ठानस्यैवाभावादिति वाच्यम्। देवताधिकरणे सगुणविद्यया देवभावं प्राप्तमुपासकमेव प्राधान्येन विषयीकृत्य श्रवणादौ देवताद्यधिकारस्य निरूपितत्वेन तस्यापि श्रवणाद्यनुष्ठानं विना विद्यानुदयस्य,प्रागेव श्रवणविधिविचारावसरे दर्शितत्वात् तथाच तत्र व्यभिचारात् सन्न्यासो न श्रवणमात्राङ्गं किन्तु ब्राह्मणकर्तृकश्रवणस्यैवाङ्गमिति क्षत्रियवैश्ययोः सन्न्यासाभावेऽपि श्रवणाद्यनुष्ठाननिर्वाह इत्यर्थः। ननु देवानामपि कुतः सन्न्यासाभावस्तत्राह देवानामिति।

संन्यासिनो वेदान्तश्रवणे मुख्योऽधिकारः क्षत्रियवैश्ययोः संन्यासाभावादमुख्यो-ऽधिकारः ।

अपरे तु ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुत्युदिता यस्य ब्रह्मणि संस्था समाप्तिरनन्यव्यापारत्वरूपं तन्निष्ठत्वं तस्य श्रवणादिषु मुख्योऽधिकारः। गच्छ-तस्तिष्ठतो वापि जाग्रतः स्वपतोऽथ वा। न विचा-रपरं चेतो यस्यासौ मृत उच्यते। आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तया इत्यादिस्मृतिषु सर्वदा विचारविधानात्।

---

ननु दैवकर्तृकश्रवणे सन्न्यासाश्रमस्य यदि व्यभिचार-स्तर्हि त्रैवर्णिकमनुष्यकर्तृकश्रवणे सन्न्यासाश्रमस्य हेतुत्वमस्तु न तु ब्राह्मणमात्रकर्तृके। तथा सङ्कोचे मानाभावात्। उक्तं हि प्रागेव चतुर्षु आश्रमेषु सन्न्यासाश्रमपरिग्रहेणैव श्रवणादि निर्वर्त्तनीयमिति। स च आश्रमविभागो वर्णत्रयसाधारण एव न ब्राह्मणमात्रगतः। तथा च सन्न्यासिनो ब्राह्मणस्येव सन्न्यास-हीनयोः क्षत्रियवैश्ययोः श्रवणादौ नाधिकारः सम्भवतीत्य स्वरसादाह अपरे त्विति। श्रुत्युदिता ब्रह्मणि संस्था यस्य सम्भवति तस्य मुख्योऽधिकार इति सम्बन्धः। संस्थापद-व्याख्यानं समाप्तिः। तस्या अपि व्याख्यानमनन्येति। अमृतत्वकामस्य नैरन्तर्येण विचारकर्त्तव्यतायां स्मृतिवचना-न्युदाहरति गच्छत इति स्वपत इति। शयानस्य इत्यर्थः। स जीवति मनो यस्य मननेनैव जीवति इत्यादिवचनसंग्रहार्थ-मादिपदम्। मननं तत्त्वचिन्तनम्। तद्रहितो जीवन्नेव मृत इत्यर्थः।

सा च ब्रह्मणि संस्था विना संन्यासमाश्रमान्तरस्थस्य न सम्भवति। स्वस्वाश्रमविहितकर्मानुष्ठानवैयग्र्यादिति संन्यासरहितयोः क्षत्रियवैश्ययोर्न मुख्यः श्रवणाद्यधिकारः।

---

अयञ्च मुख्याधिकारः सन्न्यासिनामेव इत्याह सा चेति वैयग्र्यादिति व्यग्रत्वादित्यर्थः। सार्वकालिकी विक्षेपनिवृत्तिरसन्न्यासिनां न सम्भवतीति भावः। न मुख्य इति शास्त्रीयोऽधिकारो नास्तीत्यर्थः। अयं भावः ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुत्या पाण्डित्यश्रुत्येव ब्रह्मनिष्ठाधर्मकः सन्न्यासाश्रमो विधीयते। ब्रह्मसंस्थाशब्दिताया: ब्रह्मनिष्ठायाः सन्न्यासाश्रमे सम्भावदाश्रमान्तरेषु असम्भवादिति प्रतिपादितं सन्न्यासाधिकरणभाष्यादौ। तथाच ब्रह्मनिष्ठत्वस्य सन्न्यासाश्रमधर्मत्वेन विहितत्वात् सन्न्यासिनो ब्राह्मणस्य ब्रह्मनिष्ठत्वं स्वधर्म इति सन्न्यासिनः तत्र मुख्योऽधिकारः। तस्य ब्रह्मनिष्ठत्वव्यतिक्रमे प्रत्यवायावगमाच्च। तथा परमहंसोपनिषदि श्रूयते। काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः। स याति नरकान् घोरान् महारौरवसंज्ञकानिति। काष्ठदण्डोपलक्षितः सन्न्यासाश्रमो धृतः परिगृहीतः येन सः। सर्वाशी सर्वं विषयजातमशितुं भोक्तुं शीलमस्यास्तीति सर्वाशी वाह्यान्तःकरणजयरहित इति यावत्। ज्ञानवर्जितः ज्ञानाभ्यासवर्जित इत्यर्थः। यः सन्न्यस्य शमदमादिसहितं ब्रह्मनिष्ठत्वं नानुतिष्ठति स तीव्रां दुर्गतिं गच्छतीत्यर्थः। यथा सन्न्यासिनां ज्ञाननिष्ठाविधायकानि सन्न्यस्य श्रवणं कुर्य्यात् गच्छतस्तिष्ठतोऽपि वा आसुप्तेरामृतेः कालमित्यादीनि स्मृतिवचनानि सहस्रशः सन्ति तथा तत्परित्यागी पति-

किं तु दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणा-र्थिनमधिकरोति श्रवणादिषु अन्तरा चापि तु तद्दृष्टेरित्यधिकरणभाष्योक्तन्यायेन शूद्रवदप्रतिषिद्ध-योस्तयोर्विधुरादीनामिव देहान्तरे विद्याप्रापकैर्णामु-ख्याधिकारमात्रेण श्रवणानुमतिः ।

---

त्वबोधकान्यपि स्मृतिवचनानि सहस्रशः सन्ति । त्वम्पदार्थविवे-काय सन्न्यासः सर्वकर्मणाम् । श्रुत्या विधीयते यस्मात् तत्त्यागी पतितो भवेत् । नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना । वर्त्त-मानस्तु सन्न्यासी पतत्येव न संशयः ॥ इत्यादीनि सर्वाश्रमसाधा-रण्येनापि स्वधर्मस्य विगुणस्यापि परित्यागे महाननर्थः स्मर्यते श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ इत्यादौ सन्न्यासाधिकरणे भाष्यकारै-रेतत् सर्वमभिप्रेत्य सन्न्यासिनोऽनन्यव्यापारतया श्रवणादि-निष्पादनमकुर्वतः पातित्यं कण्ठत एवोक्तम् । तथा च भाष्यं ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म यज्ञादीनि चेतरेषां तद्व्यतिक्रमे च तस्य प्रत्यवाय इति । तस्मात् श्रवणादेर्भिक्षुं प्रति विहितत्वात् तदतिक्रमे भिक्षोः प्रत्यवायावगमाच्च सन्न्यासिनःश्रवणादौ मुख्योऽधिकारः सन्न्या-सरहितान् प्रति तु श्रवणादेरविहितत्वात् अकरणे प्रत्यवाया-नवगमाच्च नास्ति तेषां मुख्योऽधिकार इति ।

ननु क्षत्रियादिकं प्रति श्रवणादिविधानाभावे सति अधिकार एव नास्तीति कुतो न उच्यत इति शङ्कते किन्त्विति । नित्याधि-काररूपमुख्याधिकारासम्भवेऽपि काम्याधिकाररूपगौणाधिका-

रसम्भवात् नैवमिति भाष्येणोत्तरमाह दृष्टार्था चेति। किन्तु अमुख्याधिकारमात्रेण श्रवणाद्यनुमतिरिति सम्बन्धः। यथा भुजिक्रिया क्षुद्बाधानिवृत्तिरूपदृष्टफला तथा विद्यापि सर्वानर्थ-मूलाविद्यानिवृत्तिरूपदृष्टफला श्रुतिसिद्धा। तथा च तस्यां विद्यायामनर्थनिवृत्तिकामानां सर्वेषामेवार्थित्वलक्षणाधिकारः सम्भवति। तथा च विद्याधिकारिणां सर्वेषामविशेषेण वेदान्त-श्रवणादौ अधिकारप्रसक्तौ शूद्रस्य वेदश्रवणादिप्रतिषेधान्नाधि-कार इत्युक्तमपशूद्राधिकरणे। क्षत्रियादीनां च तथा प्रतिषेधा-भावात् वेदान्तश्रवणाधिकारो भाष्यानुमतो विधुरादेरिवेत्यर्थः। ननु अमुख्याधिकारिभिरनुष्ठितश्रवणादेरपि विद्योत्पादकत्व-मवश्यं वाच्यम्। अन्यथा गौणाधिकारनिरूपणपरभाष्यवैय-र्थ्यप्रसङ्गात्। विद्योत्पादकत्वावश्यम्भावे च न काम्याधिकारस्य गौणत्वं मुख्यगौणाधिकारयोः फलतो विशेषाभावादित्यत आह देहान्तर इति। अयं भावः मुख्याधिकारिणामनन्यव्यापारतया प्रत्यहं निर्वर्त्यमानं श्रवणादिकं निरङ्कुशब्रह्मचर्य्याहिंसाशम-दमादियुक्तमस्मिन्नेव जन्मनि प्रायेण विद्योत्पादकं सम्पद्यते। अमुख्याधिकारिणां तु श्रवणादिकमनन्यव्यापाररूपत्वाभावात् सङ्कुचितब्रह्मचर्य्यादियुक्तत्वाच्च अस्मिन् जन्मनि विद्योत्पादन-योग्यमेव न भवति। किन्तु बहुषु जन्मसु किञ्चित्किञ्चित् श्रव-णादिकं सम्पाद्यमानं सम्भूय देहान्तरे क्वचित् ज्ञानमुत्पादये-दिति महान् फलभेदो गौणमुख्याधिकारयोः। तथा च स्मृतिः अनेकजन्मसंसिद्धस्ततो याति परां गतिमिति। अनेकेषु जन्मसु कृतश्रवणादिना क्वचित् जन्मनि संसिद्ध उत्पन्नविद्यः सन् ततः सिद्धिबलात् मुक्तिं गच्छतीति स्मृत्यर्थ इति।

विधुरादीनामनाश्रमिणामङ्गीकृतः श्रवणाद्यधिकारो मुख्य इति वक्तुं शक्यते ।

अतस्त्वितरज्ज्यायो लिङ्गाच्चेति सूत्रकारेणैव तेषाममुख्याधिकारस्फुटीकरणात् ।

---

ननु क्षत्रियवैश्ययोर्विधुरादीनामिवामुख्याधिकार इत्युक्तम्। दृष्टान्तासम्प्रतिपत्तेरित्यत आह न हीति। वक्तुं न हि शक्यत इति सम्बन्धः ।

यद्यपि सन्न्यासिन एव मुख्याधिकार इति पूर्वं प्रतिपादितत्वेन विधुरादीनां सन्न्यासाभावादेव गौणाधिकारः सिद्धस्तथापि तेषां गौणाधिकारे सूत्रसंगृहीतामप्युपपत्तिमाह अतस्त्वितरदिति। अतः अनाश्रमिभिरनुष्ठितविद्यासाधनापेक्षया इतरदाश्रमिभिरनुष्ठितं विद्यासाधनं कर्म श्रवणादिकं वा ज्यायः प्रशस्तं विद्यासाधनम्। ज्यायस्त्वावधारणार्थः तुशब्दः। श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च। तेनेति ब्रह्मवित् पुण्यकृदिति वाक्यं श्रुतिलिङ्गम्। अनाश्रमी न तिष्ठेत् क्षणमेकमपि द्विज इत्यादिवाक्यं स्मृतिलिङ्गम्। तेन पुण्यत्वेन ब्रह्मवेदनेन ब्रह्म एति प्राप्नोतीति श्रुत्यर्थः। अत्र श्रुतौ पुण्यत्वेन प्रसिद्धानामाश्रमधर्माणामेव विशिष्य ब्रह्मप्राप्तिसाधनत्वप्रतिपादनादनाश्रमिधर्माणां विशेषानुग्रहस्येति सूत्रोक्तन्यायेन विद्योपयोगिनामपि निकर्षो भाति स च निकर्षो विधुरादीनां विद्यार्थकर्मसु श्रवणादिषु च मुख्याधिकाराभावप्रयुक्त एवेति वक्तव्यम्। हेत्वन्तराभावादनाश्रमित्वस्य निन्दितत्वाच्च। न हि कर्मज्ञानयोर्मुख्याधिकारी निन्दार्ह इति सूत्रभाष्यकारयोरभिप्राय इत्यर्थः।

न च तत्र तेषां श्रवणाद्यधिकार एव नोक्तः। किं तु तदीयकर्मणां विद्यानुग्राहकत्वमिति शङ्क्यम्। दृष्टार्था च विद्या इत्युदाहृततदधिकरणभाष्यविरोधात्। न च क्षत्रियवैश्ययोः संन्यासाभावादमुख्याधिकारे तत एव देवानामपि श्रवणादिषु अमुख्य एवाधिकारः स्यात्। तथा च क्रममुक्तिफलकसगुणविद्यया देवभावं प्राप्य श्रवणाद्यनुतिष्ठतां विद्याप्राप्त्यर्थं संन्यासार्हं पुनर्ब्राह्मणजन्म वक्तव्यमिति ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्त्तते अनावृत्तिः शब्दादित्यादिश्रुतिसूत्रविरोध इति वाच्यम्।

---

ननु विधुराधिकरणे विधुराद्यनुष्ठितं कर्म विद्यासाधनमित्येतावदेवोक्तं न तु विधुरादेः श्रवणाद्यधिकारोऽपि तत्र प्रतिपादितः। तथाच श्रवणादौ विधुराद्यधिकारस्य गौणमुख्यत्वचिन्ता निरालम्बनेत्याशङ्क्य परिहरति न च तत्रेति। विधुराधिकरण इत्यर्थः। तत एवेति। सन्न्यासाभावादेव इत्यर्थः। अस्तु पुनः ब्राह्मणजन्मेत्यत आह ब्रह्मलोकमिति न स पुनरिति। ब्रह्मलोकमभिसम्पद्य पुनरिमं लोकं प्रति नावर्त्तत इत्यर्थः। एतत् श्रुतिमूलं सूत्रमुदाहरति अनावृत्तिरिति। ब्रह्मलोकं गतानामुपासकानाम् आवृत्तिर्नास्ति उदाहृतश्रुतेरित्यर्थः। स्मृतेश्चेत्यादि सूत्रसंग्रहार्थमादिपदम्। तथाच स्मृतिः ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्। इति ते ब्रह्मलोकवासिनो ब्रह्मोपासकाः प्रतिसञ्चरे महा-

देवानामनुष्ठेयकर्मवैयग्र्याभावात् स्वत एव अनन्यव्यापारत्वं सम्भवतीति क्रममुक्तिफलकसगुणविद्याभिधायिशास्त्रप्रामाण्याद्विनापि संन्यासं तेषां मुख्याधिकाराभ्युपगमादित्याहुः ।

अमुख्याधिकारिकृतवेदान्तविचारस्य जन्मान्तरीयज्ञानोपयोगित्वनिरूपणम् ।

ननु अमुख्याधिकारिणा दृष्टफलभूतवाक्यार्थावगत्यर्थमविहितशास्त्रान्तरविचारवत् क्रियमाणो वेदान्तविचारः कथं जन्मान्तरीयविद्यावाप्तावुपयुज्यते ।

न खलु अद्यतनविचारस्य दिनान्तरीयविचार्थ्यावगतिहेतुत्वमपि युज्यते । दूरे जन्मान्तरीयतद्धेतुत्वम् । न च वाच्यं मुख्याधिकारिणा परिव्राजकेन क्रियमाणमपि श्रवणं दृष्टार्थमेव । अवगतेर्दृष्टफलत्वात् ।

---

प्रलये परस्य हिरण्यगर्भस्य ब्रह्मलोकस्वामिनः आयुषोऽन्ते कृतः साक्षात्कृत आत्मा येषां ते तथा ।

ननु अनन्यव्यापारत्वसम्भवेऽपि सन्न्यासो नास्तीत्याशङ्क्याह क्रममुक्तीति । मनुष्येषु एव सन्न्यासो मुख्याधिकारप्रयोजकः । वर्णाश्रमविभागस्य मनुष्यविषयत्वदिति भावः ।

अविहितेति न्यायशास्त्रादिविचारवदित्यर्थः ।

एतज्जन्मीयवेदान्तविचारस्यागामिजन्मीयां वेदान्तार्थावगतिं प्रति हेतुत्वासम्भवं कैमुतिकन्यायेन द्रढयति न

तस्य यथा प्रारब्धकर्मविशेषरूपप्रतिबन्धादिह जन्मनि फलमजनयतो जन्मान्तरे प्रतिबन्धापगमेन फलजनकत्वम् ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् तृत्यधिकरणे तथा निर्णयात् एवममुख्याधिकारिकृतस्यापि स्यादिति।

यतः शास्त्रीयाङ्गयुतं श्रवणमपूर्वविधित्वपक्षे फलपर्य्यन्तमपूर्वं नियमविधित्वपक्षे नियमादृष्टं वा जनयति।

---

स्त्विति। मुख्याधिकारिकृतविचारदृष्टान्तेन गौणाधिकारिश्रवणादेरपि जन्मान्तरीयविद्योपयोगं शङ्कते न च वाच्यमिति।

ततः किं तत्राह तस्येति। यथा तस्य मुख्याधिकारिकृतश्रवणस्य प्रतिबन्धादिह जन्मनि विद्यालक्षणं फलमजनयतो जन्मान्तरे फलजनकत्वम् एवममुख्याधिकारिकृतमपि श्रवणं जन्मान्तरे फलजनकं स्यादिति न च वाच्यमिति सम्बन्धः। मुख्याधिकारिकृतश्रवणस्य सति प्रतिबन्धके आमुष्मिकं विद्याजन्मेत्यत्र मानमाह ऐहिकमपीति। प्रस्तुतप्रतिबन्धे असति सति विद्याजन्म इह जन्मन्यपि भवति। अपिशब्दात् सति प्रतिबन्धे जन्मान्तरे भवति। कुतः तद्दर्शनात् तस्य प्रतिबन्धकवशात् जन्मान्तरे विद्योदयस्य वामदेवादिषु दर्शनादित्यर्थः।

दृष्टान्तवैषम्येणोत्तरमाह शास्त्रीयाङ्गयुतमिति। शास्त्रीयाङ्गं

तच्च जातिस्मरत्वप्रापकादृष्टवत् प्राग्भवीयसंस्कारमुद्बोध्य तन्मूलभूतस्य विचारस्य जन्मान्तरीयविद्योपयोगितां घटयतीति युज्यते।

शास्त्रीयाङ्गविधुरं श्रवणं नादृष्टोत्पादकमिति कुतस्तस्य जन्मान्तरीयविद्योपयोगित्वमुपपद्यते।

घटकादृष्टं विना जन्मान्तरीयप्रमाणव्यापारस्य जन्मान्तरीयावगतिहेतुत्वोपगमेऽतिप्रसङ्गात्।

---

सन्न्यासः तद्युक्तं सन्न्यासिना अनुष्ठीयमानमिति यावत्। तथाच शास्त्रीयाङ्गसहितं श्रवणं श्रवणविधिरपूर्वविधिरिति पक्षे स्वयमेव विद्यालक्षणफलपर्यन्तमदृष्टं जनयति। श्रवणविधिर्नियमविधिरिति पक्षे तु तादृशं श्रवणं नियमविशिष्टं सत् फलपर्यन्तं नियमादृष्टं जनयतीत्यर्थः।

तच्चेति। श्रवणजनितादृष्टमित्यर्थः। जातीति जातिर्जन्म। ततश्च यथा जातिस्मरत्वसम्पादकमदृष्टं पूर्वजन्मतद्वृत्तान्तानुभवजन्यसंस्कारमस्मिन् जन्मनि उद्बोध्य तदुद्बोधनद्वारा पूर्वजन्मतद्वृत्तान्तस्मृतिं घटयति। तथा प्राचि भवे श्रवणादिजनितं संस्कारमुद्बोध्य तत्संस्कारकारणभूतस्य श्रवणस्य भाविजन्मनि विद्योपयोगित्वं घटयतीत्यर्थः।

शास्त्रीयाङ्गविधुरमिति। सन्न्यासरहितचत्रियादिना क्रियमाणं श्रवणमदृष्टोत्पादकं न भवति। चत्रियादिकं प्रति अविहितत्वात् श्रवणादेरिति भावः।

ननु अविहितश्रवणस्यादृष्टानुत्पादकत्वेऽपि संस्कारजनकत्वसम्भवात् तद्बलादेव जन्मान्तरीयविद्याहेतुत्वं कुतो न स्यादि-

उच्यते। अमुख्याधिकारिणापि उत्पन्नविविदिषेण क्रियमाणं श्रवणं द्वारभूतविविदिषोत्पादकप्राचीनविद्यार्थयज्ञाद्यनुष्ठानजन्यापूर्वप्रयुक्तमिति तदेवापूर्वं विद्यारूपफलपर्य्यन्तं व्याप्रियमाणं जन्मान्तरीयायामपि विद्यायां स्वकारितश्रवणस्य उपकारकतां घटयतीति नानुपपत्तिः। श्रवणादौ विध्यभावपक्षे तु संन्यासपूर्वकं कृतस्यापि श्रवणस्य अदृष्टानुत्पादकत्वात् सति प्रतिबन्धके तस्य जन्मान्तरीयविद्याहेतुत्वमित्थमेव निर्वाह्यम्।

आचार्य्यास्तु नियमविधिपक्षेऽप्ययमेव निर्वाहः। श्रवणमभ्यस्यतः फलप्राप्तेरर्वाक् प्रायेण तन्नियमादृष्टस्यानुत्पत्तेः तस्य फलपर्य्यन्तावृत्तिगुणकश्रवणानुष्ठाननियमसाध्यत्वात्।

---

त्यत आह घटकादृष्टं विनेति अतिप्रसङ्गादिति। जन्मान्तरानुभूतसकलपदार्थस्मृतिप्रसङ्गादित्यर्थः।

कर्मणां विद्यायां विनियोग इति पक्षमाश्रित्य परिहरति उच्यत इति। यज्ञादिभिर्विद्यायां सम्पादनीयायां द्वारभूता या विविदिषा तस्या उत्पादकं प्राचीनं च यद्विद्यार्थयज्ञाद्यनुष्ठानं तज्जन्येत्यर्थः। तत्पदं यज्ञाद्यनुष्ठानजन्यापूर्वपरम्। वाचस्पतिमते मुख्याधिकारिकृतश्रवणस्यापि यज्ञाद्यपूर्वेणैव निर्वाह इति दृष्टान्ताभिप्रायेणाह श्रवणादौ विध्यभावपक्षे त्विति।

विवरणपक्षेऽपि एवमेव निर्वाह इत्याह आचार्य्यास्त्विति। अयं

भावः प्रमाणासम्भावनानिवृत्तिः श्रवणफलं प्रमेयासम्भावनानिवृत्तिर्मननफलं विपरीतभावनानिवृत्तिर्निदिध्यासनफलम्। तथा च त्रिविधप्रतिबन्धकानिवृत्तिलक्षणफलपर्य्यन्तमावृत्तिविशिष्टानि श्रवणादीनि यस्य मुख्याधिकारिणो निष्पन्नानि तस्य नियमादृष्टमुत्पन्नमेव। एवं सम्पन्नविद्यासाधनस्यापि प्रतिबन्धवशाद्यदि विद्या न जाता तदा पुनर्जन्मलाभेन प्रतिबन्धक्षये सति पुनर्विचारमनपेक्ष्यैव विद्या जायते। यथा वामदेवहिरण्यगर्भादेः। यस्य तु उक्तप्रतिबन्धनिवृत्तिपर्य्यन्तं श्रवणाद्यावृत्तिर्न जाता मध्ये मृतिश्च जाता तस्य मुख्याधिकारिणोऽपि नियमादृष्टं न जायते। स च पुनर्जन्मान्तरे उक्तप्रतिबन्धकनिवृत्तिपर्य्यन्तश्रवणादिकमभ्यस्य श्रवणादिनियमादृष्टवशेन विद्याप्रतिबन्धककल्मषक्षये सति विद्यां लभते। तदुक्तं भगवता श्रीकृष्णेन तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्। यतते च ततो भूयः संसिद्धौ कुरुनन्दन ! इति। तत्र प्राप्ते साधुकुलजन्मनि पूर्वदेहभवमिदानीं संस्कारात्मना अनुवर्त्तमानं बुद्धिसंयोगं श्रवणादिकर्त्तव्यताबुद्ध्या सम्बन्धं लभते। अस्मिन्नपि जन्मनि प्रतिबन्धनिवृत्तिद्वारा विद्योदयाय मया श्रवणादिकमनुष्ठेयमिति बुद्ध्या युक्तो भवतीत्यर्थः। ततः पूर्वजन्मीययत्नापेक्षया भूयः अधिकं यतते संसिद्ध्यर्थमित्यर्थः। तथा च योऽयं फलपर्य्यन्तावृत्तिगुणकश्रवणादिरहितो योगभ्रष्टस्तस्य नियमादृष्टाभावाद् यत्नाद्यदृष्टादेव निर्वाहः कर्त्तव्य इति। प्रतिबन्धनिवृत्तिरूपफलप्राप्तेः पूर्वं नियमादृष्टानुत्पत्तौ हेतुमाह तस्येति। नियमादृष्टस्येत्यर्थः। नियमादृष्टं हि न श्रवणमात्रजन्यं किन्तु श्रवणनियमजन्यम्। तन्नियमश्च श्रवणादेरेव फलपर्य्यन्तमावृत्तौ सत्यां निष्पद्यते। तथा च फलोत्पत्तेरर्वाक् श्रवणादिनियमस्यैवाभावात् न नियमादृष्टोत्पत्तिरित्यर्थः।

न हि नियमादृष्टजनकः श्रवणनियमः फलपर्य्यन्तमावर्त्तनीयस्य श्रवणस्योपक्रममात्रेण निर्वर्त्तितो भवति। येन तज्जन्यनियमादृष्टस्यापि फलपर्य्यन्तश्रवणावृत्तेः प्रागेवोत्पत्तिः सम्भाव्येत। अवघातवदावृत्तिगुणकस्यैव श्रवणस्य फलसाधनत्वेन फलसाधनपदार्थनिष्पत्तेः प्राक् तन्नियमनिर्वर्त्तिवचनस्य निरालम्बनत्वात्।

श्रवणावघाताद्युपक्रममात्रेण नियमनिष्पत्तौ तावतैव नियमशास्त्रानुष्ठानं सिद्धमिति तदनावृत्तावपि अवैकल्यप्रसङ्गाच्च इत्याहुः।

---

उक्तं प्रपञ्चयति न हि इत्यादिना। श्रवणनियमः श्रवणस्योपक्रममात्रेण निर्वर्त्तितो न भवतीत्यत्र हेतुमाह अवघातवदिति। आवृत्तिविशिष्टस्यैव अवहननस्य तण्डुलनिष्पत्तिलक्षणफलसाधनताया लोकसिद्धत्वादिति भावः। प्राक् तदिति। फलपर्य्यन्तं श्रवणस्यैव आवृत्तौ सत्यां श्रवणस्याप्राप्तांशपरिपूरणलक्षणनियमो निष्पन्नो भवति न ततः प्रागित्यर्थः।

श्रवणस्यारम्भमात्रे वा कतिपयावृत्तिमात्रे वा जाते सति श्रवणनियमो निष्पन्न इति वचनं विषयाभावात् निरालम्बनमित्यर्थः। तदनावृत्तावपि इति। श्रवणावघाताद्यनुष्ठानमुपक्रम्य श्रवणादिकं त्यक्त्वा भाषाप्रबन्धादिविचारे नखविदलनादौ च प्रवृत्तावपि नियमविधिविरोधाभावप्रसङ्गादित्यर्थः।

केचित्तु दृष्टार्थस्यैव वेदान्तश्रवणस्य दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात्। गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेदित्यादिवचनप्रामाण्यात् स्वतन्त्रादृष्टोत्पादकत्वमप्यस्ति ।

यथा अग्निसंस्कारार्थस्याधानस्य पुरुषसंस्कारेषु परिगणनात् तदर्थत्वमपि। एवञ्च वचनबलादुभयार्थत्वोपपत्तेः। तथाच प्रतिदिनश्रवणजनितादृष्टमहिम्नैव आमुष्मिकविद्योपयोगित्वं श्रवणमननादिसाधनानामित्याहुः ।

---

मुख्यामुख्याधिकारिभिरन्वहं क्रियमाणस्य वेदान्तश्रवणस्य प्रतिबन्धक-निवृत्तिरूप-दृष्टफलोत्पादकत्ववद-दृष्टोत्पादकत्वमप्यस्ति। तथाच तद्बलात् जन्मान्तरे विद्योपयोगित्वं विचारस्य घटत इतिपरिहारान्तरमाह केचित्त्विति फलमिति। पुण्यरूपमित्यर्थः। वचने तुशब्दश्चार्थे। तथाच वेदान्तश्रवणस्य देवता-गुरुवेदान्तविषयभक्तिगुरुशुश्रूषाभ्यामुपात्ताभ्यामनुपात्तैश्च शमदमब्रह्मचर्याहिंसादिभिः समुच्चयार्थस्तुशब्द इति भावः। स्वतन्त्रेति। वेदान्तश्रवणस्य स्वतन्त्रतया अदृष्टोत्पादकत्वमस्तीत्यर्थः। स्वातन्त्र्यं च अदृष्टजनने श्रवणस्य विद्यायां विनियोगबोधकश्रवणविधिनैरपेक्ष्यमिति बोध्यम्।

एकस्योभयार्थत्वे दृष्टान्तमाह यथाग्नीति। अग्नीनादधीतेति वचनादाधानस्य आहवनीयाद्यग्निसंस्कारत्वोपगमादिति भावः। पुरुषसंस्कारेषु इति। अग्न्याधेयमग्निहोत्र-

## निर्गुणस्यापि उपासनोपपादनम्।

एवं श्रवणमननादिसाधनानुष्ठानप्रवणस्य विद्यावाप्तिरिति अस्मिन्नर्थे सर्वसंप्रतिपन्ने स्थिते भारतीतीर्थाः ध्यानदीपे विद्यावाप्तौ उपायान्तरमप्याहुः। तत्कारणं साङ्ख्ययोगाभिपन्नं यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते इति श्रुतिस्मृतिदर्शनात् यथा साङ्ख्यं नाम वेदान्तविचारः श्रवणशब्दितो मननादिसहकृतो विद्यावाप्त्युपायः एवं योगशब्दितं निर्गुणब्रह्मोपासनमपि।

---

मित्यादिपुरुषसंस्कारसंग्राहकसूत्रे अग्न्याधानस्यापि पाठादित्यर्थः। अदृष्टमहिम्नेवेति। वेदान्तश्रवणजनितादृष्टस्य योग्यतया विद्यायामेव विनियोगस्य वक्तव्यतया तद्बलात् जन्मान्तरीयविद्योपयोगित्वमिति भावः।

एवमुत्तममध्यमाधिकारिणां सांख्यमार्गं निरूप्य तदशक्तानामत्यन्तमन्दाधिकारिणां योगमार्गं निरूपयितुमुपक्रमते एवमिति सर्वसम्प्रतिपन्न इति। सर्वश्रुतिस्मृतिषु सम्यक् प्रतिपन्नः निश्चित इत्यर्थः। आहुरिति सम्यक् निरूपितवन्त इत्यर्थः। न तु नूतनतया कल्पितवन्त इति भ्रमितव्यम्। तस्यापि श्रुत्यादिसिद्धत्वात्। तत् प्रकृतं कारणत्वोपलक्षितं ब्रह्म सांख्ययोगाभ्यां विद्याद्वारा आभिमुख्येन प्रत्यक्षेन प्राप्तमिति श्रुत्यर्थः। सांख्यैः श्रवणादिपरैर्योगैरुपासकैः यत् स्थानं ब्रह्मस्वरूपं विद्याद्वारा गम्यते प्राप्यत इत्यर्थः। योगैरपीत्यपिशब्दाद् योगमार्गस्यानुकल्पत्वं भातीति बोध्यम्। अपीति विद्यावाप्त्युपाय इत्यनुषङ्गः।

न च निर्गुणस्य उपासनमेव नास्तीति शङ्क्यम् । प्रश्नोपनिषदि शैव्यप्रश्ने यः पुनरेतं त्रिमात्रेणोङ्कारेण परमपुरुषमभिध्यायीतेति निर्गुणस्यैव उपासनप्रतिपादनात् ।

---

निर्गुणब्रह्मोपासनं मानशून्यमित्याशङ्क्य परिहरति न च इत्यादिना । ननु इयं शङ्का न युक्ता । तत्कारणं यत् सांख्यैरिति श्रुतिस्मृत्योरादावेव तत्र प्रमाणत्वेनोदाहृतत्वात् । न च उदाहृतश्रुतिस्मृतिगतयोगपदस्य सगुणोपासनपरत्वसम्भवादाशङ्का युक्तेति वाच्यम् । भिन्नविषययोरुपासनसाक्षात्कारयोः कार्य्यकारणभावासम्भवेन निर्गुणविद्याहेतुभूतस्य योगस्य निर्गुणोपासनरूपत्वावश्यम्भावात् । न च यत्सांख्यैरिति वचनगतयोगपदस्य उपास्तिपरत्वमेवासिद्धम् । तस्य गीताभाष्ये कर्मयोगपरत्वेन व्याख्यातत्वादिति वाच्यम् यत्सांख्यैरिति वचनस्य वस्तुतो निर्गुणोपास्तिपरस्यैव सतो भगवता श्रीकृष्णेन कर्मविषये उदाहृतत्वेन तदनुरोधेन भाष्ये तथाव्याख्यानोपपत्तेः । योगपदस्य ध्याने रूढ़त्वेन वस्तुतः कर्मपरत्वाभावात् तद्वचनमूलभूतायां तत्कारणमिति श्रुतौ योगपदस्य ध्यानपरतया शारीरकभाष्ये व्याख्यातत्वाच्च कर्मयोगस्य मुख्ययोगद्वारा ब्रह्मप्राप्तिसाधनत्वं न तु साक्षादिति ज्ञापनाय अस्य वचनस्य कर्मविषयतया भगवत उदाहरणसम्भवाच्च । तस्मात् मानाभावशङ्का न युक्तेति चेत् न । उदाहृतश्रुतिस्मृतिव्यतिरेकेणान्यत्र क्वापि निर्गुणोपासनं न दृष्टमित्येतावता अभिप्रायेण शङ्कोपपत्तेः ।

अतएव सर्वासु श्रुतिषु निर्गुणोपासनं दृष्टमिति मन्दाधि-

तदनन्तरं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षत इति उपासनाफलवाक्ये ईक्षतिकर्मत्वेन निर्दिष्टं यन्निर्गुणं ब्रह्म तदेवोपासनावाक्येऽपि ध्यायतिकर्म नान्यत्। ईक्षतिध्यानयोः कार्य्यकारणभूतयोरेकविषयत्व-नियमादित्यस्यार्थस्य ईक्षतिकर्म्माधिकरणे भाष्यकारादिभिरङ्गीकृतत्वात्। अन्यत्रापि तापनीयकठवल्यादिश्रुत्यन्तरे निर्गुणोपास्तेः प्रपञ्चितत्वात् सूत्रकृताप्युपास्यगुणपरिच्छेदार्थमारब्धे गुणोपसंहार-

---

कारिणामाश्वासनाय आह प्रश्नोपनिषदीत्यादिना त्रिमात्रेणेति। द्वितीयार्थे तृतीया। तिस्रः अकारोकारमकाराख्याः मात्रा यस्य ओङ्कारस्य स त्रिमात्रः।

ओङ्कारे निर्गुणमेव ब्रह्म तदभेदेन ध्येयमिति अत्र भाष्यादिसम्मतिमाह तदनन्तरमिति। ध्यानवाक्यानन्तरमित्यर्थः। जीवरूपः परमात्मनो घनः घटाकाशवत् उपाधिपरिच्छिन्नचैतन्यात्मा जीवघनः तस्मात् परः पुरुषः निरुपाधिकः परमात्मा तं स ध्याता पुरि हार्दाकाशे बुद्धिसाक्षित्वेन शयं वर्त्तमानमीक्षते साक्षात्कारोतीत्यर्थः। उपासनावाक्ये परं पुरुषमभिध्यायीतेति वाक्य इत्यर्थः। कार्य्येति। ईक्षणवाक्यस्य ध्यानफलभूतसाक्षात्कारप्रतिपादकत्वेन ध्यानवाक्यैकवाक्यत्वात् ध्यानेक्षणयोः कार्य्यकारणभावोऽवगम्यत इति भावः। नियमादिति। अन्यध्यानात् अन्यसाक्षात्कारादर्शनादिति भावः।

पादे निर्गुणेऽपि आनन्दादयः प्रधानस्येति सूत्रेण भावरूपाणां ज्ञानानन्दादिगुणानाम् अक्षरधियां त्ववरोध इत्यादिसूत्रेणाभावरूपाणामस्थूलत्वादिगुणानां चोपसंहारस्य दर्शितत्वाच्च। ननु आनन्दादिगुणोपसंहारे उपास्यं निर्गुणमेव न स्यादिति चेन्न। आनन्दादिभिरस्थूलत्वादिभिश्चोपलक्षितमखण्डैकरसं ब्रह्मास्मीति निर्गुणत्वानुपमर्देनोपासनासम्भवात्। ननु तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति श्रुतेर्न परं ब्रह्मोपास्यमिति चेत् न।

---

ननु कल्पतरौ ध्यातव्यस्य सूर्य्यान्तस्थत्वं स तेजसि सूर्य्ये सम्पन्न इति सूर्य्यसम्पत्तिवचनानुसारेण विशेषणम् दत्तम्। तथा च ओङ्कारे ध्यातव्यपुरुषस्य निर्गुणब्रह्मरूपत्वं कल्पतरुकारैः नाङ्गीकृतमिति प्रतीयत इति चेन्न। सूर्य्यसम्पत्तिवचनस्यार्चिरादिमार्गप्राप्तिपरतायाश्चतुर्थाध्याये व्यवस्थापितत्वेन सूर्य्यतदन्तस्थेश्वरप्राप्तिपरत्वाभावात् कल्पतरुकाराणामपि तदीयवचनान्तरपर्य्यालोचनया श्रुतेर्मार्गपरतया च सूर्य्यान्तस्थत्वविशेषणदाने तात्पर्य्याभावस्य परिमले प्रतिपादितत्वाच्चेति भावः। देवा ह वै प्रजापतिमब्रुवन् अणोरणीयांसमिममात्मानम् ओङ्कारं नो व्याचक्ष्व इत्याद्या तापनीयश्रुतिः। अणोः सूक्ष्मादपि सूक्ष्मं दुर्विज्ञेयं इमं प्रत्यग्रूपं परमात्मानम् ओङ्कारगम्यमित्यर्थः। एतद्ध्येवाक्षरं ब्रह्म इत्याद्या कठवल्लीश्रुतिः ओमित्येतदक्षरमिदं सर्वमित्यादिमाण्डूक्यश्रुतिः। ओमित्येवं

ध्यायथ आत्मानमिति मुण्डकश्रुतिस्थादिपदार्थः। निर्गुणस्य उपास्यत्वे सूत्रसम्मतिमाह सूत्रक्कतापीति। सूत्रक्कता निर्गुणेऽपि गुणानामुपसंहारस्य दर्शितत्वादिति सम्बन्धः।

निर्गुणे गुणोपसंहारो निर्गुणब्रह्मप्रमित्यर्थं एव न निर्गुणब्रह्मोपास्त्यर्थं इति शङ्काव्यवच्छेदाय पादं विशिनष्टि उपास्यगुणपरिच्छेदार्थमिति। परिच्छेदो निर्णयः। निर्गुणे गुणोपसंहारनिरूपणस्य निर्गुणोपास्तिरपि फलमिति वक्तव्यम्। अन्यथा तन्निरूपणस्य पादासङ्गतिप्रसङ्गादिति भावः। आनन्दादयः क्वचिच्छ्रुताः अन्यत्र अपि उपसंहर्त्तव्याः। प्रधानस्य वेद्यब्रह्मणः सर्ववेदान्तेषु अभेदेन ब्रह्मविद्याया एकत्वादिति सूत्रार्थः। भावरूपाणामिति विशेषणमक्षरधियामित्यधिकरणस्यानन्दादय इत्यधिकरणेन पौनरुक्त्यपरिहारार्थमिति बोध्यम्। अक्षरे ब्रह्मणि धीयैरस्थूलादिशब्दवाच्यार्थभूतैः अभावैः भवति ते अक्षरधियः। तेषामवरोध उपसंहार इतरेषु वेदान्तेषु कर्त्तव्य एवेति सूत्रभागार्थः। स्थौल्यादिनिषेधानां निष्प्रपञ्चब्रह्मप्रमितिहेतुत्वादिति भावः। व्याघातं शङ्कते नन्विति। आनन्दादिगुणानामुपास्यकोटौ निवेशो नाङ्गीक्रियते येन उपास्यं ब्रह्म सगुणं स्यात्। किन्तु उपास्यनिर्गुणनिर्णयद्वारा निर्गुणोपास्तावुपयोगमात्रं स्वीक्रियत इति समाधत्ते नेति। आनन्दादिगुणानामस्थूलादिगुणानां च उपसंहारो हि तद्वाचकपदानां सहोच्चारणरूपो विवक्षितः। तथा च उपाधिविशिष्टचैतन्यवाचकैरानन्दादिपदैः स्थौल्याद्यभावविशिष्टचैतन्यवाचकैरस्थूलादिशब्दैश्च सर्वेषु वाच्यार्थेषु अनुगतम् अखण्डैकरसं यद् ब्रह्म लक्षणया बोध्यते तदहमस्मीति उपासनासम्भवादित्यर्थः। उक्तञ्च ध्यानदीपे आनन्दादिभिरस्थूलादिभिश्चात्मात्र लक्षितः योऽखण्डैकरसः सोऽहमस्मीत्येवमुपासते।

अन्यदेव तद्विदितादथोऽविदितादधीति श्रुतेस्तस्य वेद्यत्वस्याप्यसिद्ध्यापातात्। श्रुत्यन्तरेषु ब्रह्मवेदनप्रसिद्धेरवेद्यत्वश्रुतिर्वास्तववेद्यत्वपरा चेदाथर्वणादौ तदुपासनाप्रसिद्धेस्तदनुपास्यत्वश्रुतिरपि वस्तुवृत्तपरा अस्तु।

एवं च श्रवणायापि बहुभिर्यो न लभ्य इति श्रवणात् येषां बुद्धिमान्द्यात् न्यायव्युत्पादनकुशलविशिष्टगुर्वलाभाद्वा श्रवणादि न सम्भवति तेषा-मध्ययन-गृहीतै-र्वेदान्तैरापाततो-ऽधिगमितब्रह्मात्मभावानां तद्विचारं विनैव प्रश्नोपनि-

---

इति। अत्रेति वेदान्तेषु इत्यर्थः। एवं श्रुतिसूत्राभ्यां निर्गुणस्य उपास्यत्वं निरूप्य निर्गुणोपासनस्य श्रुत्यन्तरविरोधमाशङ्क्य परिहरति। ननु तदेव इत्यादिना। तदेवेति बुद्ध्यादिसाक्षि-चैतन्यमेवेत्यर्थः।

उपास्यस्य ब्रह्मत्वनिषेधवद्वेद्यस्यापि ब्रह्मत्वनिषेधात् परब्रह्मवेदनमपि न सिध्येदित्याह अन्यदेवेति। वेदनविषयादन्यद् ब्रह्मेत्युक्ते अर्थात् ब्रह्म वेद्यं न भवतीति सिध्यतीत्यर्थः। अस्त्विति। वेद्यत्वमुपास्यत्वं वा ब्रह्मणि परमार्थतो नास्तीति निषेधश्रुतीनां तात्पर्यमिति भावः।

निर्गुणोपासने अधिकारिणं दर्शयति एवञ्चेति। निर्गुणोपासने प्रमाणसिद्धे सतीत्यर्थः। केषाञ्चित् मुमुक्षूणां श्रवणासम्भवे प्रमाणमाह श्रवणयापीति। बहुभिर्मुमुक्षुभिः यः परमात्मा श्रोतुमपि न

प्रदाद्युक्तमार्षग्रन्थेषु ब्राह्मवाशिष्ठादिकल्पेषु पञ्चीकरणादिषु चानेकशाखाविप्रकीर्णसर्वार्थोपसंहारेण कल्पसूत्रेष्वग्निहोत्रादिवन्निर्धारितानुष्ठानप्रकारं निर्गुणोपासनं संप्रदायमात्रविद्भ्यो गुरुभ्योऽवधार्य्य तदनुष्ठानात्क्रमेणोपास्यभूतनिर्गुणब्रह्मसाक्षात्कारः सम्पद्यते। अविसंवादिभ्रमन्यायेन उपास्तेरपि क्वचित् फलकाले प्रमापर्य्यवसानसम्भवात्।

---

लभ्यते तस्य श्रुतस्यापि साक्षात्कारो दूरापास्त इत्यर्थः। बहूनां श्रवणालाभे श्रुत्यभिमतं कारणं दर्शयति। येषामिति बुद्धीति। उक्तञ्च ध्यानदीपे अत्यन्तबुद्धिमान्द्याद्वा सामग्र्या वाप्यसम्भवात्। यो विचारं न लभते ब्रह्मोपासीत सोऽनिशमिति। तत्र सामग्र्यसम्भवं विवृणोति न्यायेति। येषामत्यन्तबुद्धिमान्द्यात् श्रवणादिकं न सम्भवति येषां च कुशलमतीनामपि सामग्र्यभावात् श्रवणादिकं न सम्भवतीत्यर्थः। विशिष्टत्वमसम्भिन्नार्थमर्थ्यादत्वकारुणिकत्वादिलक्षणं बोध्यम्। तेषां ब्रह्मजिज्ञासाहेतुमाह अध्ययनेति। अधिगमितः अवगमितः ब्रह्मात्मभावो येषां ते तथोक्ताः तेषामित्यर्थः। तेषां तद्विचारं विनैव गुरुभ्योऽवधार्य्य तदनुष्ठानात् साक्षात्कारः सम्पद्यत इति सम्बन्धः। निर्गुणब्रह्मविचारं विनैव निर्गुणब्रह्मोपासनानुष्ठानादित्यर्थः। ननु प्रश्नोपनिषदादौ उपासनमात्रमुक्तं न तु तदनुष्ठानप्रकारोऽपि इत्याशङ्क्याह आर्षग्रन्थेष्विति। ननु पञ्चीकरणे वेदान्तलक्ष्ये अखण्डैकरसे प्रणवमात्रात्मकक्रत्स्नप्रपञ्चप्रविलापनोक्तिपूर्वक-

मह्ं ब्रह्मास्मीति अभेदेनावस्थानं समाधिरित्युक्त्वा योऽखण्डैक-रसः सोऽहमस्मीत्येवमुपासत इत्युदाहृतध्यानदीपवचनाच्च प्रकृतनिर्गुणोपासनमहंग्रहरूपं विवक्षितम्। प्रश्नोपनिषद्ग-तशैव्यप्रश्ने तु ओङ्काररूपे प्रतीके निर्गुणब्रह्मदृष्टिर्विव-क्षिता। तथा कठवल्ल्यामपि तथा च कथं प्रश्नादिवाक्यं प्रकृतोपासने प्रमाणत्वेनोदाहृतमिति चेत् न। प्रकृतोपासने तापनीयमाण्डूक्यमुण्डकश्रुतीनामिव प्रमाणत्वेन विवक्षितत्वात्। प्रश्नकठवल्लीश्रुत्युदाहरणं तु निर्गुणस्यापि उपासनमन्यत्रापि दृष्टमित्येतावन्मात्रेणेति न विरोध इति भावः। पञ्चीकर-णादिषु च निर्धारितानुष्ठानप्रकारमिति सम्बन्धः। तत्र दृष्टा-न्तमाह अनेकशाखेति। अनेकासु शाखासु विप्रकीर्णतया विशकलिततया स्थितानां पदार्थानामुपसंहारेण यथा अग्नि-होत्रादिकर्म निर्धारितानुष्ठानप्रकारं भवति तथेत्यर्थः। उपा-सनानुष्ठानप्रकारः सम्प्रदायः तन्मात्रविद्भ्योऽपि गुरुभ्यः सकाशात् निश्चित्येत्यर्थः। उक्तञ्च भगवता श्रीकृष्णेन निर्गुणप्रकरणे श्रुत्वान्येभ्य उपासत इति। क्रमेणेति उपासनापरिपाकक्रमेण इत्यर्थः। ननु निर्गुणोपासनस्य कथं प्रमालक्षणसाक्षात्कार-पर्य्यवसानमित्यत आह अविसंवादीति। अयमर्थः क्वचित् गृहविशेषे स्थितस्य श्रीकृष्णरूपविम्बस्य प्रतिविम्बं गृहात् वहिः पश्यतो दूरे स्थितस्य पुरुषस्य प्रतिविम्बे विम्बभूतश्रीकृष्णभ्रमो जायते तेन भ्रमेण प्रतिविम्बाध्यासोपाधिसमीपं गतस्य पुरुषस्य सत्यश्रीकृष्णगोचरप्रमा जायते इति लोकसिद्धम्। विसंवादः फला-भावः तद्रहितोऽविसंवादिभ्रमः फलवद्भ्रम इति यावत्। यथा तेन भ्रमेण प्रवृत्तस्य श्रीकृष्णप्राप्तिलक्षणफलकाले श्रीकृष्णप्रमा जायते तथा निर्गुणोपासने प्रवृत्तस्यापि ब्रह्मप्राप्तिलक्षणफल-काले निर्गुणप्रमा जायत इति।

पाणौ पञ्च वराटकाः पिधाय केनचित्करे कति वराटका इति पृष्टे पञ्च वराटका इति तदुत्तर-वक्तुर्वाक्यप्रयोगमूलभूतसंख्याविशेषज्ञानस्य मूल-प्रमाणशून्यस्याहार्य्यारोपरूपस्यापि यथार्थत्ववन्निर्गुण-ब्रह्मोपासनस्यार्थतथात्वविवेचकनिर्विचिकित्समूल-प्रमाणनिरपेक्षस्य दहराद्युपासनावदुपासनावदुपा-सनाशास्त्रमात्रमवलम्ब्य क्रियमाणस्यापि वस्तुतो यथार्थत्वेन दहराद्युपासनेनेव निर्गुणोपासनेन जन्यस्य स्वविषयसाक्षात्कारस्य श्रवणादिप्रमाणादिजन्यसा-क्षात्कारवदेव तत्त्वार्थविषयत्वावश्यम्भावाच्च।

---

ननु संवादिभ्रमदृष्टान्तेन निर्गुणोपास्तेः प्रमापर्य्यवसान-मुक्तमनुपपन्नं दृष्टान्तवैषम्यात्। तत्र तर्हि समीपोपसर्पणा-नन्तरं सत्यस्त्रीलक्षणस्य चक्षुःसन्निकर्षे सति स्त्रीलक्षणप्रमा जायते न तु संवादिभ्रममात्रात्। प्रकृते च निर्गुणोपासनस्य प्रमाजनने सामर्थ्याभावात् सामग्र्यन्तराभावाच्च कथं प्रमा-पर्य्यवसानमित्याशङ्क्य निर्गुणोपासनस्यैव स्वसमानविषयक-प्रमाजननसामर्थ्यसम्भावनाय तस्य यथार्थत्वं सदृष्टान्तमाह पाणाविति पिधायेति। तदुत्तरवक्तुरविदितमिति शेषः। तदुत्तरेति। दैवयोगात् पञ्चैव वराटिकास्तव पाणौ सन्ती-त्युत्तरवक्तुरित्यर्थः। निर्गुणोपासनस्यापि वस्तुतो यथा-र्थत्वेनेति सम्बन्धः। अखण्डैकरसं ब्रह्माहमस्मीति प्रत्यय-सन्ततिरूपोपास्तेर्विषयबाधाभावाद्यथार्थत्वमिति भावः।

इयांस्तु विशेषः प्रतिबन्धरहितस्य पुंसः श्रवणादिप्रणाड्या ब्रह्मसाक्षात्कारो झटिति सिध्यतीति सांख्यमार्गो मुख्यः कल्पः उपास्त्या तु विलम्बेनेति योगमार्गोऽनुकल्प इति ।

---

ननु प्रकृतोपासनस्य निर्विचिकित्सतत्त्वज्ञानापूर्वकत्वादेव श्रवणमननोत्तरकालीननिदिध्यासनस्येव यथार्थत्वासम्भवात् किमिति दैवयोगात् यथार्थत्वं समर्थ्यते तत्राह अर्थतथात्वेति । अर्थस्य ब्रह्मणः तथात्वं प्रत्यग्रूपत्वनिष्प्रपञ्चत्वादि तस्य विवेचकं निर्णायकं यन्निर्विचिकित्समन्यपरत्वादिशङ्काशून्यं मूलप्रमाणं श्रुतिरूपं तन्निरपेक्षस्य इत्यर्थः । निदिध्यासनस्येव प्रकृतनिर्गुणोपासनस्य विचारपूर्वकत्वाभावात् न निर्विचिकित्सतत्त्वनिर्णयपूर्वकत्वप्रयुक्तं यथार्थत्वमिति भावः । ननु विचारपूर्वकं प्रत्यगभिन्ननिर्णयाभावे कथमहं ब्रह्मास्मीति प्रत्ययसन्ततिरूपोपास्तिरनुष्ठीयते तत्राह दहरादीति । यथा सगुणस्येश्वरस्य विचारपूर्वकं जीवाभिन्नत्वनिर्णयाभावेऽपि स्वस्य सगुणेश्वराभेदचिन्तनं कर्त्तव्यमित्येवंरूपं सगुणोपासनाविधिशास्त्रमवलम्ब्य सगुणोपासनं क्रियते तथा निर्गुणोपासनं कर्त्तव्यमित्येवमात्मकं शास्त्रमात्रमवलम्ब्य निर्गुणोपास्तिरनुष्ठीयत इत्यर्थः । निर्गुणोपासनस्य साक्षात्कारहेतुत्वे दृष्टान्तमाह दहराद्युपासनेनेवेति अवश्यम्भावादिति । समानविषयकध्यानसामर्थ्याद्विषयाबाधाच्च इत्यर्थः ।

सांख्ययोगमार्गयोः तुल्यकल्पत्वभ्रममपनयति इयांस्त्विति । बुद्धिमान्द्यादिप्रतिबन्धरहितस्य विशिष्टगुर्वादिलाभे सति

ब्रह्मसाक्षात्कारे कारणनिरूपणम्।

ननु अस्मिन् पक्षद्वयेऽपि ब्रह्मसाक्षात्कारे किं करणम्। केचिदाहुः। प्रत्ययाभ्यासरूपं प्रसंख्यानमेव। योगमार्गे आदित आरभ्योपासनारूपस्य सांख्यमार्गे मननानन्तरनिदिध्यासनरूपस्य च तस्य सत्त्वात्।

न च तस्य ब्रह्मसाक्षात्कारकरणत्वे मानाभावः। ततस्तु तं पश्यते निष्कलं ध्यायमान इति श्रवणात्। कामातुरस्य व्यवहितकामिनीसाक्षात्कारे प्रसंख्यानस्य करणत्वक्लृप्तेश्च। आप्रायणात्तत्रापि हि दृष्टमित्यधिकरणे विकल्पोऽविशिष्टफलत्वात् इत्यधिकरणे च दहराद्यहंग्रहोपासकानां प्रसंख्यानादुपास्यसगुणब्रह्मसाक्षात्काराङ्गी-

---

सांख्यमार्ग एवानुष्ठेयः। तस्य त्वरया सिद्धिहेतुत्वात्। सांख्यालाभे तु योगोऽनुष्ठेय इति अनुकल्पः स इत्यर्थः।

ननु अस्मिन् इति। सांख्ययोगमार्गद्वयेऽपि इत्यर्थः। ननु योगमार्गे निर्गुणोपासनस्य सगुणोपासनदृष्टान्तोदाहरणेन साक्षात्कारकरणत्वस्यानुपदमुक्तत्वात् पक्षद्वयसाधारण्येन प्रश्नानुपपत्तिरिति चेन्नैष दोषः।

उपासनस्य साक्षात्कारकरणत्वे प्रमाणाभिप्रायेण प्रश्नोपपत्तेः अतएव तत्र प्रमाणं वक्ष्यति न च इत्यादिना।

काराच्च। ननु च प्रसंख्यानस्य प्रमाणपरिगणनेष्वप रिगणनात्तज्जन्यो ब्रह्मसाक्षात्कारः प्रमा न स्यात्।

न च काकतालीयसंवादिवराटकसंख्याविशेषा-र्थ्यज्ञानवदर्थाबाधेन प्रमात्वोपपत्तिः। प्रमा-णामूलकस्य प्रमात्वायोगात्।

---

अथवा पूर्वत्र सगुणोपासनदृष्टान्तेन निर्गुणोपासनस्य हेतु-त्वमात्रमुक्तं न तु करणत्वम्। तथा च योगमार्गेऽपि किम् उपासनमेव करणं किं वा अन्यदिति प्रश्नाभि-प्रायः सङ्गच्छत इति भावः। मार्गद्वयेऽपि साक्षात्कारो-दयकाले प्रसंख्यानस्यानुवृत्तिमाह योगमार्गे इत्यादिना। निष्कलं निर्विशेषं परमात्मानं ध्यायमानस्ततो ध्यानात्तं पश्यति इत्यर्थः। कामातुरेति। कामातुरस्यासन्निकृष्टकामिनीसाक्षात्-कार इत्यर्थः। तत्र सन्निकर्षाभावेन चक्षुषः करणत्वासम्भवात् मनसो बहिरस्वातन्त्र्याच्च कामिनीगोचरप्रसंख्यानमेव करण-मिति भावः। सगुणोपासनं प्रायणपर्य्यन्तमावर्त्तनीयम्। कुतः तत्रापि मरणकालेऽपि योगिनो ब्रह्मचिन्तनस्य श्रुतिस्मृति-सिद्धत्वात् सदा प्रत्ययाभ्यासं विना मरणकाले तदसम्भवादिति सूत्रार्थः। अहंग्रहोपासनानां विकल्पः उपास्य देवतासाक्षात्-कारलक्षणस्य फलस्याविशिष्टत्वादेकार्थानां विकल्पस्य प्रसिद्ध-त्वादिति सूत्रार्थः।

ब्रह्मसाक्षात्कारस्य प्रमाकरणजन्यत्वाभावेऽपि विषया-बाधात् प्रमात्वमाशङ्क्य निषेधति न च काकतालीयेति। यादृच्छिकेत्यर्थः। क्लृप्तज्ञानकरणाजन्यस्य ज्ञानत्वमेव

आहार्य्यवृत्तेश्चोपासनावृत्तिवत् ज्ञानभिन्नमानसक्रियारूपतया इच्छादिवदबाधितार्थविषयत्वेऽपि प्रमात्वानभ्युपगमात्। नैवम्। भ्रमप्रमाकरणामूलकत्वेऽपि ईश्वरमायावृत्तिवत् प्रमात्वोपपत्तेः। विषयाबाधतौल्यात्।

मार्गद्वयेऽपि प्रसंख्यानस्य विचारितादविचारिताद्वा वेदान्ताद् ब्रह्मात्मैक्यावगममूलकतया प्रसंख्यानजन्यस्यापि ब्रह्मसाक्षात्कारस्य प्रमाणमूलकत्वाच्च।

---

नास्ति। प्रमात्वं तु दूरापास्तमित्यभिप्रायेणाह प्रमाणामूलकस्येति।

अविसंवादिवराटिकासंख्याविशेषगोचराहार्य्यवृत्तेरपि ज्ञानत्वमसिद्धमित्याह आहार्य्यवृत्तेश्चेति। अबाधितार्थज्ञानत्वं हि प्रमात्वं नत्वबाधितार्थकत्वमात्रमतिप्रसङ्गादिति मत्वाह इच्छादिवदिति। ननु च प्रसंख्यानस्येत्यादिना। प्राप्तं चोद्यं परिहरति नैवमिति मायावृत्तिवदिति। न च मायावृत्तेरपि मास्तु ज्ञानत्वमिति वाच्यम्। तथा सति ईश्वरीयमायावृत्तेर्यः सर्वज्ञ इत्यादिश्रुतिषु ज्ञाधात्वर्थत्वाभावप्रसङ्गादिति भावः। तौल्यादिति। न च इच्छादौ अतिप्रसङ्ग इति वाच्यम्। तद्भिन्नत्वेन विशेषणोपपत्तेरिति भावः। प्रसंख्यानजन्यसाक्षात्कारस्य प्रमाणमूलकत्वात् प्रमाणत्वमिति।

समाधानान्तरमाह मार्गद्वयेऽपीति। अविचारितादिति योगमार्गाभिप्रायं वेदान्ताद् या ब्रह्मावगतिः तन्मूलकतयेत्यर्थः। न च विचारितादविचारिताद्वा यदि ब्रह्मावगतिर्जाता तर्हि

उक्तं हि कल्पतरुकारैः। वेदान्तवाक्यजज्ञान-भावनाजा परोक्षधीः। मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते।

न च प्रामाण्यपरतस्त्वापातः अपवादनिरासाय मूलशुद्ध्यनुरोधादिति।

अन्ये तु एषोऽणुरात्मा चेतसा वेदितव्यः दृश्यते त्वग्र्यया बुद्ध्या इत्यादिश्रुतेः मन एव ब्रह्म-

---

किमर्थं प्रसंख्यानमिति वाच्यम्। प्रसंख्यानात् पूर्वमविद्यानिवर्त्तकाप्रतिबन्धब्रह्मावगतेरलाभात् तदर्थं तदावश्यकमिति भावः।

प्रमीणाजन्यस्यापि प्रमाणप्रयोज्यत्वमात्रेण प्रमात्वे सम्मतिमाह उक्तं हीति। ज्ञानभावना ज्ञानाभ्यासरूपं प्रसंख्यानं तज्जन्यमपरोक्षज्ञानमित्यर्थः। मूलप्रमाणं वेदान्तवाक्यं तज्जन्यप्रमा वा तस्य दार्ढ्यं नाम अविप्रतिपन्नप्रामाण्यकत्वमिति बोध्यम्।

प्रसंख्यानजन्यसाक्षात्कारनिष्ठप्रामाण्यज्ञप्तौ मूलप्रमाणज्ञप्त्यपेक्षायामपसिद्धान्तापात इति शङ्कते न चेति। प्रसंख्यानजन्यसाक्षात्कारनिष्ठमपि प्रामाण्यं नियमेन स्वाश्रयग्राहकसाक्षिभास्यमेवेति न तत्प्रामाण्यज्ञप्त्यर्थं मूलप्रमाणानुसरणं किन्तु प्रसंख्यानजन्यव्यवहितकामिनीसाक्षात्कारस्याप्रमात्वदर्शनात् प्रसंख्यानजन्यब्रह्मसाक्षात्कारेऽपि कदाचिदप्रामाण्यशङ्का सम्भाव्यते ततः तन्निरासाय मूलप्रमाणानुसरणम् इति नापसिद्धान्त इति भावः। अपवादेति अप्रामाण्यशङ्का अपवादः।

प्रसंख्यानमात्रं न साक्षात्कारे करणं किन्तु तत्सहकृतं

साक्षात्कारे करणम्। तस्य सोपाधिकात्मनि अहं-वृत्तिरूपप्रमाकरणत्वक्लृप्तेः।

स्वप्रपञ्चविपरीतप्रमात्रादिज्ञानसाधनस्यान्तःकरणस्य इत्यादिपञ्चपादिकाविवरणग्रन्थैरपि तथा प्रतिपादनात्।

अहमेवेदं सर्वं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक इतिश्रुत्युक्ते स्वाप्ने ब्रह्मसाक्षात्कारे एव मनसः करणत्वसंप्रतिपत्तेश्च तदा करणान्तराभावात्। प्रसंख्यानं तु मनःसहकारिभावेनोपयुज्यते।

---

मनस्तत्र करणमिति मतं दर्शयति अन्ये त्विति। अणुर्दुर्विज्ञेयः अग्र्यत्वं प्रसंख्यानसंस्कृतत्वं मनसैवानुद्रष्टव्यमित्यादिश्रुति-रादिपदार्थः।

जीवसाक्षात्कारे मनसः करणत्वे सम्मतिमाह स्वप्नेति। प्रातिभासिकस्वप्नप्रपञ्चापेक्षया विपरीतो व्यावहारिकः प्रमात्रादिस्तज्ज्ञानसाधनस्येत्यर्थः। आदिपदं प्रमेयादिसंग्र-हार्थम्। तथेति। प्रमातृशब्दितसोपाधिकात्मसाक्षात्कारे मनसः करणतयेति तथाशब्दार्थः।

निरुपाधिकात्मसाक्षात्कारेऽपि मनसः करणत्वं क्लृप्तमित्याह अहमेवेति। इदं सद्रूपेण सर्ववस्तुषु अनुभूयमानं सर्वात्मकं ब्रह्मै-वाहमस्मि ततः सर्वोऽस्मीति स्वप्ने ब्रह्मविन्मन्यत इत्यर्थः। ननु स्वप्ने ब्रह्मविदो महावाक्यानुसन्धानसम्भवात् वाक्यमेव करणं किं न

वाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामाविर्भावयतीति भामतीवचनात्।

ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमान इति श्रुतावपि ज्ञानप्रसादशब्दितचित्तैकाग्र्यहेतुतयैव ध्यानोपादानात्। न तु प्रसंख्यानं स्वयं करणं तस्य क्वचिदपि ज्ञानकारणत्वाक्लृप्तेः। कामातुरकामिनीसाक्षात्कारादावपि प्रसंख्यानसहकृतस्य मनस एव करणत्वोपपत्त्या क्लृप्तज्ञानकरणान्तरकल्पनायोगादित्याहुः।

---

स्यादित्यत आह तदेति। स्वप्ने महावाक्यानुसन्धानस्यानियतत्वात् वाक्यस्यापरोक्षधीहेतुत्वानुपगमाच्चेति भावः।

सम्मतिमाह वाक्यार्थेति। महावाक्यार्थेत्यर्थः। स्थूलसूक्ष्मकारणोपाधीनां नेति नेतीत्यादिवाक्यैर्निषेधद्वारा शोधितो यस्त्वंपदार्थः स्वप्रकाशचैतन्यात्मकस्तस्य पूर्णतामाविर्भावयति। आविर्भावश्च वृत्तिसाक्षात्कार इत्यर्थः।

यत्तु निष्कलं ध्यायमानस्ततो ध्यानात्तं पश्यत इति योजनामभिप्रेत्य ध्यानस्य साक्षात्कारकरणत्वं श्रुतिसिद्धमित्युक्तं तत् दूषयति ज्ञानप्रसादेनेति। करणव्युत्पत्त्याज्ज्ञानपदं ज्ञानस्य प्रसाद ऐकाग्र्यं तथाच ध्यायमानो ध्यानाल्लब्धेन ज्ञानप्रसादेन पश्यत इति योजनाविवक्षितेति भावः। एवं योजनायां विनिगमनां पूर्वोदाहृतानि मनसः

अपरे तु तद्धास्य विजज्ञौ तमसः पारं दर्शयति आचार्य्यवान् पुरुषो वेद तस्य तावदेव चिरमित्यादिश्रुतिषु आचार्य्योपदेशानन्तरमेव ब्रह्मसाक्षात्कारोदये जीवन्मुक्तिश्रवणात् वेदान्तविज्ञानसुनिश्चितार्था इति ध्यानान्तरनैराकाङ्क्षश्रवणात् तं त्वौपनिषदं पुरुषमिति ब्रह्मण उपनिषदेकगम्यत्वश्रवणाच्च औपनिषदं महावाक्यमेव ब्रह्मसाक्षात्कारे करणं न मनः। यन्मनसा न मनुत इति तस्य ब्रह्मसाक्षात्कारकरणत्वनिषेधात्। न चापक्वमनोविषयमिदं येनाहुर्मनो मतमिति वाक्यशेषे मनोमात्रग्रहणात्।

---

करणत्वबोधकवचनान्येव इत्यभिप्रेत्य प्रसंख्यानमात्रस्य करणत्वं दूषयति नत्विति।

महावाक्यमेव तत्र करणमिति मतमाह अपरेत्विति। अस्य पितुरुपदेशात् तद्ब्रह्म विजज्ञौ साक्षात् कृतवान् ह किलेत्यर्थः। पारमधिष्ठानभूतं ब्रह्म तस्य विदुषस्तावानेव विलम्बो विदेहकैवल्यं प्रति यावत् प्रारब्धात् न विमोक्ष्यते इत्यर्थः। वेदान्तेति। अत्र वेदान्तजन्यज्ञानादेव ब्रह्मात्मैक्यलक्षणस्य अर्थस्य सुनिश्चितत्वोक्त्या वाक्यार्थावगत्यनन्तरं प्रसङ्ख्यानानुष्ठानं नापेक्षितमिति प्रतीयते। इदञ्च तन्नैरपेक्ष्यं वाक्यादेव अपरोक्षज्ञानोत्पत्तिपक्षे सङ्गच्छते। अन्यथा अपरोक्षज्ञानाय तस्य अपेक्षितत्वात् तन्नैरपेक्ष्यं न सङ्गच्छते। ततो

न चैवं यद्वाचानभ्युदितमिति शब्दस्यापि तत्करणत्वं निषिध्यत इति शङ्क्यम्। मनःकरणत्ववादिनामपि शब्दस्य निर्विशेषे परोक्षज्ञानकरणत्वस्याभ्युपगतत्वेन तस्य यतो वाचो

---

वेदान्तविज्ञानश्रुत्या वाक्यमेव अपरोक्षज्ञाने करणमिति निश्चीयत इति भावः।

महावाक्यमेवेति। साङ्ख्यमार्गानुष्ठानेन योगमार्गानुष्ठानेन वा दृष्टादृष्टलक्षणसकलप्रतिबन्धक्षये सति प्रतिबन्धरहितं सद्वाक्यमेव साक्षात्कारं जनयतीति वाक्यस्य करणत्वपक्षे न साङ्ख्ययोगमार्गयोर्वैयर्थ्यशङ्केति मन्तव्यम्। लोको मनसा यच्चैतन्यं न मनुते तदेव त्वं ब्रह्म विद्धीति योजना। न मनुत इति वाक्यमन्तःशुद्धमनस एव ब्रह्मज्ञानकरणत्वं निषेधतीति न च इत्यत हेतुमाह येनाहुरिति। येन चैतन्येन मतं प्रकाशितं मन इति वाक्यशेषे अपक्वमन एव चैतन्यभास्यमिति वक्तुमशक्यतया तत्र मनोमात्रग्रहणमावश्यकम्। तदैकरूप्याय न मनुते इति पूर्ववाक्येऽपि मनोमात्रं ग्राह्यमित्यर्थः।

न च एवमिति। मनोमात्रस्य ब्रह्मज्ञानकरणत्वनिषेधोपगम इत्यर्थः। अनभ्युदितमिति। अप्रकाशितमित्यर्थः। न च वाचा इत्यस्य वेदान्तातिरिक्तशब्दपरत्वं स्वीक्रियत इति वाच्यम्। अत्रापि येन वागभ्युद्यत इति वाक्यशेषे शब्दमात्रस्य चैतन्यप्रकाश्यत्वप्रतिपादनेन तदैकरूप्याय पूर्ववाक्येऽपि वाचा इत्यस्य शब्दमात्रपरत्वादित्याशयवानाह शब्दस्यापीति। मनोमात्रस्येव शब्दमात्रस्यापि इत्यर्थः।

निवर्त्तन्ते अप्राप्य मनसा सहेतिश्रुत्यनुरोधेन शब्दा-
र्थप्राप्तिरूपशक्तिमुखेन शब्दस्य तत्करणत्वनिषेधे
तात्पर्य्यस्य वक्तव्यतया शक्यसम्बन्धरूपलक्षणामुखेन
तस्य तत्करणत्वाविरोधात्। न च मनसैवानुद्रष्टव्य-
मिति श्रुतिसिद्धं मनसोऽपि तत्र करणत्वं न पराकर्त्तुं
शक्यमिति वाच्यम्।

---

सत्यं शब्दमात्रस्य ब्रह्मज्ञानकरणत्वं निषेधति तथापि शब्दस्य
शक्त्या ब्रह्मज्ञानकरणत्वनिषेधपरं तद्वचनं नतु लक्षणयापि
तत्करणत्वनिषेधपरम्। औपनिषदत्वश्रुतेर्निरालम्बनत्वप्रसङ्गा-
दिति समाधानमभ्युपेत्य विपक्षे परेषामपि बाधकं सूचयति मनः-
करणत्ववादिनामपीति। वेदान्तानां लक्षणयापि ब्रह्मबोधकत्वा-
नभ्युपगमे ब्रह्मण एव असिद्ध्यापत्त्या मनःकरणत्ववादिभिरपि
तेषां ब्रह्मज्ञानकरणत्वस्य अभ्युपगन्तव्यत्वादित्यर्थः। परन्तु
वाक्यजन्यं ब्रह्मज्ञानं परोक्षं भवतां मते अस्माकं मते तु तदप-
रोक्षमिति विशेष इत्याशयेनाह परोक्षेति। वेदान्तानां शक्त्या
ब्रह्मबोधकत्वनिषेधपरं यद्वाचानभ्युदितमिति वचनमिति व्यव-
स्थायां श्रुत्यन्तरमनुकूलयति तस्येति। यद्वाचानभ्युदितमिति
निषेधवचनस्य इत्यर्थः। अप्राप्येति। श्रुत्या ब्रह्मणि विषये शब्दानां
प्राप्तिर्निषिध्यते। सा च प्राप्तिः शक्तिरेव तस्याः शब्दानामौत्स-
र्गिकत्वादिति भावः। वक्तव्यतयेति। मनःकरणत्ववादिभि-
रपीति शेषः। तस्येति। शब्दस्य इत्यर्थः। तदिति। ब्रह्मसाक्षा-
त्कार इत्यर्थः। ब्रह्मगोचरवृत्तिं प्रति करणत्वं न तृतीयाश्रुत्यर्थः।
पूर्वोदाहृतश्रुतिविरोधात्।

शाब्दसाक्षात्कारजननेऽपि तदैकाग्रस्यापेक्षितत्वेन हेतुत्वमात्रेण तृतीयोपपत्तेः। मनसा ह्येव पश्यति मनसा शृणोतीत्यादौ तथा दर्शनात्। गीताविवरणे भाष्यकारीयमनःकरणत्ववचनस्य मतान्तराभिप्रायेण प्रवृत्तेरित्याहुः।

ब्रह्मविषयस्य शाब्दज्ञानस्यापि अपरोक्षत्वोपपादनम्।

ननु तथापि शब्दस्य परोक्षज्ञानजनकत्वस्वभावस्य अपरोक्षज्ञानजनकत्वं न सङ्गच्छत इति चेत् अत्र केचित्। स्वतोऽसमर्थोऽपि शब्दः शास्त्रीयश्रवणमननपूर्वकप्रत्ययाभ्यासजनितसंस्कारप्रचयलब्धब्रह्मैकाग्र्य-वच्चित्त-दर्पणानुगृहीतो-ऽपरोक्षज्ञानमुत्पादयति। शास्त्रीयसंस्कार-संस्कृताग्न्यधिकरणक इव होमोऽपूर्वमिति कल्प्यते।

---

किन्तु एकाग्रस्य मनसः तां प्रति उपादानतया हेतुत्वमात्रं तदर्थं इत्याह शाब्दसाक्षात्कारजननेऽपीति तथेति। चाक्षुषज्ञानादौ मनसः करणत्वाभावेन हेतुत्वमात्रेणापि तृतीयादर्शनादित्यर्थः। शमदमादिसंस्कृतं मन एव आत्मदर्शने करणमिति गीताभाष्यवचनविरोधं परिहरति गीतेति मतान्तरेति। वृत्तिकारमते इत्यर्थः। न तु स्वमताभिप्रायेण। उक्तप्रमाणविरोधादिति भावः।

ननु तथापीति। शब्दस्य ब्रह्मसाक्षात्कारकरणत्वपक्षे श्रुतिभाष्यविरोधाभावेऽपि शब्दप्रमाणस्वभावविरोधान्न महावाक्यं

तरति शोकमात्मविदिति शास्त्रप्रामाण्यात् अपरोक्षस्य कर्तृत्वाद्यध्यासस्यापरोक्षाधिष्ठानज्ञानं विना निवृत्त्ययोगात् औपनिषदे च ब्रह्मणि मानान्तराप्रवृत्तेः शब्दादप्यपरोक्षज्ञानानुत्पत्तौ अनिर्मोक्षप्रसङ्गादित्याहुः।

---

ब्रह्मसाक्षात्कारि करणमित्यर्थः। शब्दस्वभावमनुक्त्वैव तस्य अपरोक्षज्ञानकरणत्वं साधयति। अत्र केचिदिति। प्रचयः समूहः। प्रचयलब्धं यत् ब्रह्मण्येकाग्रं तदच्चित्तमेव दर्पणम् तदनुगृहीत इत्यर्थः। यथा चक्षुः स्वतः प्रतिबिम्बानुभवजननासमर्थमपि दर्पणानुगृहीतं सत् तदनुभवं जनयति तद्वदिति सूचयति चित्तदर्पणेति शास्त्रीयेति। यथा आधानादिजनितसंस्काररहितात्म्यधिकरणकहोमस्तावदपूर्वं न जनयति अग्न्यधिकरणकहोममात्रस्यापूर्वजननस्वभावाभावात् शास्त्रीयसंस्कारविशिष्टाग्न्यधिकरणको होमस्त्वपूर्वं जनयति तद्वदित्यर्थः।

ननु दृष्टान्ते शास्त्रबलात् तथा स्वीक्रियते प्रकृते तथा शास्त्रं नोपलभ्यत इत्यत आह तरतीति। ननु अनया श्रुत्या चिदात्मनि अध्यस्तस्य शोकोपलक्षितकर्तृत्वाद्यध्यासस्यात्मवेदनान्निवृत्तिरुच्यते न तु शब्दस्यापरोक्षज्ञानकरणत्वमित्यत आह अपरोक्षस्येति। यथा दृष्टान्ते होमाधिकरणस्याग्नेराधानादिसंस्कृतत्वश्रवणान्यथानुपपत्त्या शास्त्रीयाधानसंस्कारसंस्कृताग्न्यधिकरणको होमोऽपूर्वं जनयतीति कल्प्यते तथात्मज्ञानस्यापरोक्षाध्यास-निवर्तकत्व-श्रवणान्यथानुपपत्त्या आत्मज्ञानजनकवेदान्तानामेवापरोक्षज्ञानकरणत्वं कल्प्यत इत्यर्थः।

अन्ये तु भावनाप्रचयसाहित्ये सति वहिरसमर्थस्यापि मनसो नष्टवनितासाक्षात्कारजनकत्वदर्शनान्निदिध्यासनसाहित्येन शब्दस्याप्यपरोक्षज्ञानजनकत्वं युक्तमिति दृष्टान्तानुरोधेन समर्थयन्ते।

अपरे तु अपरोक्षार्थविषयत्वं ज्ञानस्यापरोक्षत्वं नाम अन्यानिरुक्तेः।

---

अयोगादिति। सत्यपि श्रवणजनितपरोक्षज्ञाने कर्त्तृत्वाद्यध्यासनिवृत्त्यदर्शनात् परोक्षज्ञानमात्रेण अध्यासनिवृत्तौ मननादिविधिवैयर्थ्यप्रसङ्गाच्च अपरोक्षाध्यासरूपदिग्भ्रमादिषु दिग्याथात्म्यादिसाक्षात्कारं विना निवृत्त्यदर्शनाच्चेति भावः।

ननु कर्त्तृत्वाद्यध्यासनिवर्त्तकमधिष्ठानात्मतत्त्वसाक्षात्काररूपज्ञानं मनसैव सम्भवति किं शब्दस्य तत्करणत्वकल्पनयेति तत्राह औपनिषदे च इति। अन्तरिन्द्रियस्य मनसः प्रत्यक्षप्रमाणत्वेन ब्रह्मणस्तद्गम्यत्वे उपनिषदेकगम्यत्वप्रतिपादकश्रुतिबाधप्रसङ्ग इति भावः। ननु औपनिषदत्वश्रुतिविरोधेन ब्रह्मणि मानान्तराप्रवृत्तौ शब्दस्वभावविरोधेन शब्दस्यापि ब्रह्मसाक्षात्कारजनने प्रवृत्तिर्न सम्भवति। तथा च ब्रह्मसाक्षात्कारकरणस्यैवालाभात् मास्तु तत्साक्षात्कार इत्यत आह शब्दादपीति। तथा च मोक्षशास्त्रप्रामाण्याय शब्दस्यैव साक्षात्कारकरणत्वं कल्पनीयमिति भावः।

शास्त्रप्रामाण्यमनुपजीव्यापि शब्दस्य अपरोक्षज्ञानकरणत्वं साधयति अन्ये त्विति।

अर्थापरोक्षत्वं तु नापरोक्षज्ञानविषयत्वं येनान्योन्याश्रयो भवेत् किन्तु तत्तत्प्रमातृचैतन्याभेदः। अन्तःकरणतद्धर्माणां साक्षिणि कल्पिततया तदभेदसत्त्वात्। बाह्यचैतन्ये कल्पितानां घटा-

---

इदानीं शब्दस्य परोक्षज्ञानजननस्वाभाव्यमेवासिद्धमतो नित्यापरोक्षे ब्रह्मणि वेदान्तानां साक्षात्कारकरणत्वं निरपवादमिति मतान्तरमाह अपरे त्विति। ननु इन्द्रियजन्यज्ञानत्वादिकमेव ज्ञानस्यापरोक्षत्वं ब्रह्मगोचरशाब्दज्ञानस्य तु तदभावात् नापरोक्ष्यमित्यत आह अन्यानिरुक्तेरिति। इन्द्रियजन्यज्ञानत्वादेश्च प्रथमपरिच्छेदावसाने निरस्तत्वादिति भावः।

ननु अर्थस्यापरोक्षत्वमपरोक्षज्ञानविषयत्वमन्यस्यानिर्वचनात् तथा च अन्योन्याश्रयः। अर्थस्यापरोक्षत्वज्ञप्तौ ज्ञानस्यापरोक्षत्वज्ञप्तिः ज्ञानस्यापरोक्षत्वज्ञप्तौ चार्थस्यापरोक्षत्वज्ञप्तिरित्याशङ्क्य अन्यानिर्वचनमसिद्धमित्यभिप्रेत्याह अर्थापरोक्षत्वं तु इति तत्तदिति। तत्तत्प्रमातृचैतन्याभिन्नत्वं तस्य तस्य विषयस्य तं तं प्रमातारं प्रति अपरोक्षत्वं तत्तत्प्रमातृचैतन्याभिन्नार्थविषयकं ज्ञानं तत्तत्प्रमातृचैतन्याभिन्ने विषये अपरोक्षज्ञानमित्यर्थः। न च अर्थापरोक्ष्यादावननुगम इति वाच्यम्। ज्ञानगतस्यानुगतापरोक्षत्वस्य जातिरूपस्य उपाधिरूपस्य वा प्राक् निरस्तत्वेन तदभावादेवार्थापरोक्ष्यस्यापि अनुगतस्य असम्भवेन तस्यादोषत्वादिति भावः।

ननु प्रमातृचैतन्याभिन्नत्वरूपस्यार्थापरोक्ष्यस्य जड़रूपापरोक्षार्थे अव्याप्तिः। चैतन्यजड़योरैक्यस्य बाधितत्वादित्यत आह

दीनां बाह्यचैतन्ये वृत्तिकृततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्त्या तदभेदसत्त्वाच्च न क्वाप्यव्याप्तिः।

---

अन्तःकरणेति तदभेदसत्त्वादिति। साक्षित्वाच्छिन्नप्रमातृचैतन्याभेदसत्त्वादित्यर्थः। तथा च अर्थापरोक्ष्यनिर्वचने कल्पिताकल्पितसाधारणाभेदस्य विवक्षितत्वेन प्रमातृचैतन्यब्रह्मचैतन्ययोरिव प्रमातृचैतन्यजड़योरकल्पिताभेदाभावेऽपि जड़ं सदिति सामानाधिकरण्यानुभवसिद्धकल्पिताभेदसत्त्वात् नाव्याप्तिरिति भावः। आन्तरजड़पदार्थेषु प्रमातृचैतन्याभिन्नत्वमुपपाद्य बाह्यापरोक्षार्थेषु तदुपपादयति बाह्येति। अन्तःकरणतद्धर्माणां तदभेदसत्त्वात् घटादीनां तदभेदसत्त्वाच्च न क्वापि आन्तरार्थे बाह्यार्थे वा अव्याप्तिरिति सम्बन्धः। घटादीनां तत्तत्पुरुषीयचैतन्याभेदसत्त्वे हेतुमाह बाह्यचैतन्ये वृत्तिकृततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्त्येति। ननु बाह्यचैतन्यस्य तत्तत्पुरुषीयचैतन्यस्य च वस्तुतः सदा अभेदसत्त्वेऽपि तदभिव्यक्तिः कुतः इत्यत आह वृत्तिकृतेति। बाह्ये विषयावच्छिन्नचैतन्ये चक्षुरादिद्वारा निर्गताया वृत्तेः संसर्गे सति वृत्तिवृत्तिमतोरभेदात् वृत्तिमदन्तःकरणस्यापि तत्र संसर्गो लभ्यते। तथाच वृत्तिसंसृष्टबाह्यचैतन्यमेव अन्तःकरणसम्बन्धात् तत्तत्पुरुषीयचैतन्यं भवतीत्यनेन प्रकारेण बाह्यचैतन्ये वृत्तिकृता तत्तत्पुरुषीयचैतन्याभेदाभिव्यक्तिर्भवतीत्यर्थः। ननु उक्तप्रकारेण बाह्यचैतन्यस्य प्रमातृचैतन्याभिन्नत्वसिद्धावपि घटादीनां प्रमातृचैतन्याभिन्नत्वमसिद्धमेव इत्याशङ्क्याह बाह्यचैतन्ये कल्पितानामिति। बाह्यचैतन्ये तावद्घटादीनामभेदः प्रागेव सिद्धस्तत्र तेषां कल्पितत्वात्। तथाच बाह्यचैतन्यस्य वृत्तिकृततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्तिदशायां घटादीनामपि तत्तत्पुरुषीयचैतन्याभिन्नत्वं सिध्यतीति भावः।

न च अन्तःकरणतद्धर्माणां ज्ञानादीनामिव धर्माधर्मसंस्काराणामपि साक्षिणि कल्पितत्वावि-शेषादापरोक्ष्यापत्तिः तेषामनुद्भूतत्वात्। उद्भूतस्यैव जडस्य चैतन्याभेद आपरोक्ष्यमित्यभ्युपगमात्।

एवञ्च सर्वदा सर्वपुरुषचैतन्याभिन्नत्वात् यत्साक्षादपरोक्षाद् ब्रह्मेति श्रुत्या स्वत एवापरोक्षं ब्रह्मेत्यपरोक्षार्थविषयत्वात् शाब्दस्यापि ब्रह्मज्ञान-स्यापरोक्षत्ववाचोयुक्तिर्युक्तैवेत्याहुः।

---

अर्थापरोक्ष्यलक्षणस्यातिव्याप्तिमाशङ्क्य निराकरोति न च इत्यादिना धर्मेति। धर्मादीनामपि अधिष्ठानभूतप्रमातृचैतन्येन सहाभिन्नसत्ताकत्वरूपाभेदसत्त्वादिति भावः। उद्भूतत्वे सति प्रमातृचैतन्याभिन्नत्वमर्थापरोक्ष्यम्। उद्भूतत्वं च फलबलकल्प्य-स्वभावविशेषः। स च धर्मादेर्नास्तीति परिहारार्थः।

एवं शब्दस्य ब्रह्मसाक्षात्कारे करणत्वसिद्ध्यर्थमुपोद्घातं कृत्वा प्रकृतं दर्शयति एवञ्चेति। ज्ञानापरोक्ष्यस्यार्थापरोक्ष्यप्र-युक्तत्वे सतीत्यर्थः। अभिन्नत्वादिति। जीवरूपप्रमातुर्ब्रह्मा-भेदस्य श्रुतिसिद्धत्वादिति भावः। इदञ्च ब्रह्मणो जीवा-भिन्नत्वं जडस्य प्रमातृचैतन्याभिन्नत्ववत् काल्पनिकं न भवति किन्तु वास्तवैक्यरूपमित्याशयेनाह स्वत एवेति। ब्रह्मणो नित्यापरोक्षप्रमातृचैतन्याभेदे श्रुतिमाह यत्साक्षादिति। ब्रह्म जडवत् स्वव्यतिरिक्तप्रमातृचैतन्यमपेक्ष्य आपरोक्षं न भवति किन्तु साक्षात्प्रमातृचैतन्यस्वरूपत्वादेवापरोक्षमित्यर्थः।

अद्वैतविद्याचार्यास्तु नापरोक्षार्थविषयत्वं ज्ञानस्यापरोक्ष्यं स्वरूपसुखापरोक्षरूपस्वरूपज्ञाना-व्यापनात् स्वविषयकत्वलक्षणस्वप्रकाशत्वनिषेधात्।

किन्तु यथा तत्तदर्थस्य स्वव्यवहारानुकूलचैत-न्याभेदोऽर्थापरोक्ष्यम् एवं तत्तद्व्यवहारानुकूलचैत-न्यस्य तत्तदर्थाभेदो ज्ञानापरोक्ष्यम्।

---

ज्ञानापरोक्ष्यमर्थापरोक्ष्यञ्च प्रकारान्तरेण निरूपयति अद्वैतविद्याचार्यास्त्विति। पूर्वोक्तं ज्ञानापरोक्ष्यलक्षणम-व्याप्त्या दूषयति नापरोक्षेति। स्वरूपसुखस्यापरोक्ष्यरूपे स्वरूप-ज्ञाने अव्यापनादित्यर्थः। ननु आत्मस्वरूपसुखानुभवस्य साक्षि-चैतन्यरूपस्य स्वप्रकाशत्वाभ्युपगमात् स्वप्रकाशत्वस्य च स्वविषयकत्वरूपत्वात् स्वरूपसुखविषयकत्वं तदपरोक्षरूपे स्वरूपज्ञाने निरपवादमित्यत आह स्वविषयकत्वलक्षणेति। एकस्मिन् चैतन्ये विषयविषयिभावलक्षणसम्बन्धो न सम्भवति। सम्बन्धस्य द्विनिष्ठत्वात् स्वविषयत्वं विनापि स्वसत्ताप्रयुक्त-संशयाद्यगोचरत्वादिलक्षणस्य स्वप्रकाशत्वस्याकरेषु निरूपित-त्वादिति भावः।

किं तर्हि ज्ञानपरोक्ष्यमिति पृच्छति किन्त्विति। ज्ञानापरोक्ष्यनिर्वचनं प्रति दृष्टान्तव्याजेन प्रथममर्थापरोक्ष्यं निर्वक्ति यथेति। अर्थस्य स्वव्यवहारानुकूलचैतन्याभिन्नत्व-मपरोक्षत्वम्। अस्ति चान्तःकरणतद्धर्माणां स्वव्यवहारानुकू-लेन साक्षिचैतन्येनाभिन्नत्वम्। तत्र तेषामध्यस्तत्वात् तथा घटा-दीनामपि स्वव्यवहारानुकूलेन घटादिगोचरवृत्त्यपच्छिन्नेन घटा-

तथा च चैतन्यधर्म एवेदमापरोक्ष्यं न त्वनुमितित्वेच्छात्वादिवदन्तःकरणवृत्तिधर्मः।

अत एव सुखादिप्रकाशरूपे साक्षिणि स्वरूपसुखप्रकाशरूपे चैतन्ये चापरोक्ष्यम्।

---

द्यधिष्ठानचैतन्ये नाभिन्नत्वमस्ति। तथा च ब्रह्मणोऽपि स्वव्यवहारानुकूलेन स्वगोचरवृत्त्युपहितेन साक्षिचैतन्येनाभिन्नत्वमस्तीति न क्वापि अव्याप्तिः। घटाद्यर्थस्य चैतन्ये कल्पितस्य चैतन्याभिन्नत्वं सदा वर्त्तते अपरोक्षत्वं तु सदा नास्तीति स्वव्यवहारानुकूलेत्युक्तम्। घटादिगोचरवृत्तिदशायामेव घटाद्यधिष्ठानचैतन्यं घटादिव्यवहारानुकूलं भवति न सर्वदेति नातिप्रसङ्गः।

ननु तत्तद्व्यवहारानुकूलचैतन्यस्य तत्तदर्थाभिन्नत्वमपरोक्षत्वमस्तु नाम तथापि ज्ञानापरोक्ष्यं नोक्तमेव। वृत्तिरूपज्ञानस्य चैतन्यापेक्षया भिन्नत्वादित्यत आह तथा चेति। चैतन्यस्यैव तत्तदर्थव्यवहारानुकूलत्वे विवक्षिते सति इत्यर्थः। तथा च ज्ञानापरोक्ष्यमित्यत्र ज्ञानपदं चैतन्यपरमेव न वृत्तिज्ञानपरमिति नानुक्तिदोष इति भावः।

तत्तदर्थव्यवहारानुकूलत्वे सति तत्तदर्थाभिन्नत्वरूपं ज्ञानापरोक्षत्वं चैतन्यधर्म एवेत्यत्र युक्तिमाह अतएवेति। चैतन्यधर्मत्वाभ्युपगमादेव इत्यर्थः। तस्य वृत्तिधर्मत्वे तु सुखदुःखादिगोचरापरोक्षवृत्त्यनङ्गीकारात् सुखदुःखादिभासकसाक्षिचैतन्ये वृत्तिधर्मस्य आपरोक्ष्यस्य असम्भवाच्च सुखदुःखादेरपरोक्षत्वानुभवविरोधः स्यादिति भावः। लक्षणे सत्यन्तं वह्निगोचरानुमितिवृत्त्युप-

न च घटाद्यैन्द्रियकवृत्तौ तदनुभवविरोधः। अनुभवस्य वृत्त्यवच्छिन्नचैतन्यगतापरोक्ष्यविषयत्वोपपत्तेः। ननु उक्तं ज्ञानार्थयोरापरोक्ष्यं हृदयादि-गोचरशाब्द-वृत्ति-शाब्द-विषययोरतिप्रसक्तम्। तत्र दैवात् कदाचिद्वृत्तिविषयसंसर्गे सति वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्यस्य चाभेदाभिव्यक्तेरवर्जनीयत्वादिति चेत् न। परोक्षवृत्तेर्विषयावच्छिन्न-चैतन्यगता-ज्ञाननिवर्त्तनाक्षम-

---

हिते जीवचैतन्ये वह्निव्यवहारानुकूले गतमिति तत्रातिव्याप्तिवारणाय विशेषणम्। अनुमिति वृत्तेः विषयदेशे गमनाभावेन तद्वृत्त्यवच्छिन्नचैतन्यस्य न वह्न्यभिन्नत्वमिति नातिव्याप्तिः। घटादिगोचरवृत्त्यभावदशायां घटाद्यवच्छिन्नचैतन्ये घटाद्यपरोक्षत्वविरहिते घटाद्यर्थाभिन्नत्वमस्तीति तद्वारणाय सत्यन्तं तदा तस्य चैतन्यस्यावृतत्वेन घटादि व्यवहारानुकूलत्वाभावान्नातिव्याप्तिरिति मन्तव्यम्।

न चेति। ज्ञानापरोक्षस्य चैतन्यधर्मत्वे घटादिगोचरवृत्तौ घटं साक्षात्करोमि इत्यादिप्रकारेणापरोक्षत्वानुभवविरोध इत्यर्थः। वृत्तिचैतन्ययोस्तादात्म्येन वृत्तिसाक्षात्कारत्वानुभवस्य चैतन्यगतापरोक्ष्यविषयकत्वोपपत्तेरित्यर्थः। ननु हृदयनाड़ीधर्माधर्मादिगोचरशाब्दवृत्तिरन्तःकरणे शरीरव्यापिनी जायमाना दैवयोगात् हृदयनाड्याद्यवच्छिन्नान्तःकरणप्रदेशे यदि जायेत तदा हृदयादिरूपविषयावच्छिन्नचैतन्यस्य हृदयादिगोचरशाब्दवृत्त्यवच्छिन्नस्य च अभेदाभिव्यक्तिरपरिहार्य्या। घटादि-

तथा तत्राज्ञानेनावृतस्य विषयचैतन्यस्यानावृतेन वृत्त्यवच्छिन्न-साक्षिचैतन्येनाभेदाभिव्यक्तेरभावादा-परोक्ष्याप्रसक्तेः।

---

स्थले वृत्तेर्विषयसंसर्गे सति वृत्तिविषयावच्छिन्नचैतन्ययोरभेदा-भिव्यक्तिस्वीकारात्। तथाच ह्रदयादिगोचरशाब्दानुमित्यादि-वृत्त्यवच्छिन्नचैतन्यरूपे परोक्षज्ञाने ह्रदयाद्यर्थाभिन्ने ह्रदयादि-व्यवहारानुकूले ज्ञानापरोक्ष्यलक्षणमतिव्याप्तम्। तथा ह्रदया-दिरूपे परोक्षार्थे स्वव्यवहारानुकूलशाब्दादिवृत्त्यवच्छिन्नचैत-न्याभिन्ने अर्थापरोक्ष्यलक्षणमतिव्याप्तमिति शङ्कते ननु उक्तमिति। ययोश्चैतन्ययोरभेदाभिव्यक्तिरिष्यते तयोरुभयोरपि अनावृतत्व-मपेक्षितम्। अन्यतरचैतन्यस्य आवरणदशायां तयोरभेदस्य प्रत्य-क्षत्वलक्षणाभिव्यक्त्ययोगात्। तथाच ह्रदयादिगोचरशाब्दवृत्ति-स्थले नातिव्याप्तिः। तत्र विषयचैतन्यस्य आवृतत्वादिति परि-हरति न परोक्षवृत्तेरिति आपरोक्ष्याप्रसक्तेरिति। परोक्षह्रद-यादिविषयस्य ह्रदयादिगोचरशाब्दवृत्त्यवच्छिन्नचैतन्यरूपप-रोक्षज्ञानस्य चेति शेषः। तथाच ह्रदयादिगोचरशाब्दवृत्त्यव-च्छिन्नचैतन्यरूपपरोक्षज्ञानस्य ह्रदयादिव्यवहारानुकूलज्ञानत्वे सत्यपि ह्रदयादिविषयेण सहाभिव्यक्ताभेदाभावादभिव्यक्ततत्त-दर्थाभिन्नत्वे सति तत्तदर्थव्यवहारानुकूलज्ञानत्वलक्षणं ज्ञानाप-रोक्ष्यं नास्ति तथा ह्रदयाद्यर्थस्यापि स्वव्यवहारानुकूलशाब्दवृत्त्य-वच्छिन्नसाक्षिचैतन्याभेदसत्त्वेऽपि तदभेदाभिव्यक्त्यभावेन स्वव्य-वहारानुकूलचैतन्याभेदाभिव्यक्तिशालित्वरूपमर्थापरोक्ष्यं नास्ति इत्यर्थः। न च अहं सुखी दुःखीत्याकारके सुखादिसाक्षिणि सुख-दुःखादिरूपविषयाभेदो विद्यमानोऽपि नाभिव्यज्यते। सुखादि-

साक्षिणो जीवस्य सुखादेश्चाधाराधेयभावप्रतीतेः। तथाच सुख-दुःखादिप्रत्यक्षेऽभिव्यक्तविषयाभेदाभावात् अव्याप्तिरिति वाच्यम्। घटादिप्रत्यक्षरूपे घटादिस्फुरणे घटः स्फुरति पटः स्फुरतीत्याकारकानुभवमादाय घटाद्यर्थाभेदाभिव्यक्तिमत्त्वस्येव सुखं स्फुरति दुःखं स्फुरतीत्याद्याकारकानुभवमादाय एव सुख-दुःखादिप्रत्यक्षे सुखाद्यर्थाभेदाभिव्यक्तिमत्त्वसत्त्वात्। न च घटः स्फुरतीत्यनुभवे घटस्य स्फुरणाश्रयत्वमेव भाति न तु स्फुरणाभेद इति वाच्यम्। घटः स्फुरतीति प्रयोगे देवदत्तो गच्छतीत्यत्र गमनकर्त्रभिन्नो देवदत्त इति वाक्यार्थवत् स्फुरणाश्रयाभिन्नो घट इति वाक्यार्थस्य वक्तव्यतया घटः स्फुरतीति प्रयोगमूलभूते घटः स्फुरतीत्यनुभवेऽपि घटस्फुरणाश्रयभूत-चिदात्माभिन्नतया घटस्य भानावश्यम्भावात्। न च घटस्य स्फुरणाश्रयाभेदाभिव्यक्तावपि स्फुरणाभेदाभिव्यक्तिरव्यापि नोपपादितैवेति वाच्यम्। घटस्य स्वरूपमिति प्रत्यक्षं हि घटमेव घटस्य स्वरूपतया यथा विषयीकरोति तथा घटः स्फुरतीति प्रत्यक्षमपि घटादिवृत्तिदशायां घटाद्यधिष्ठानभूतमनावृतचिदात्मानमेव स्वप्रकाशचिदात्माश्रितस्फुरणस्वरूपेण विषयीकरोतीत्यभ्युपगमेन घटे स्फुरणाश्रयाभेदभावस्य एव स्फुरणाभेदभानरूपत्वात्। एतदुक्तं भवति घटस्य स्वरूपमिति शब्दप्रयोग एव घटतत्स्वरूपयोः भेदो भासते न तु तन्मूलभूते घटस्य स्वरूपमिति प्रत्यक्षे। अन्यथा तत्प्रत्यक्षस्य भ्रमत्वप्रसङ्गात् घटतत्स्वरूपयोः भेदाभावात्। न च तस्य भ्रमत्वम् अभ्युपगन्तुं शक्यते। बाधकाभावात्। एवं स्फुरतीति शब्दप्रयोग एव स्वप्रकाशात्मनः स्फुरणतदाश्रयभावेन भेदभानं न तु स्फुरतीति प्रत्यक्षे। तत्र स्फुरणाद्वित्वानुपलम्भादिति। न च ब्रह्म-गोचरशाब्दवृत्तेर्विषयसंसृष्टाया विषयगताज्ञाननिवर्त्तनक्षम-

अत एव जीवस्य संसारदशायां वस्तुतः सत्यपि ब्रह्माभेदे न तदापरोक्ष्यम् । अज्ञानावरणकृतभेदसत्त्वात् ।

न चैवं ब्रह्मणोऽपि जीवापरोक्ष्यासम्भवादसर्वज्ञत्वापत्तिः अज्ञानस्येश्वरं प्रति अनावारकतया

---

त्वदर्शनेन हृदयादिगोचरशाब्दवृत्तेरपि विषयसंसर्गाविशेषे कथं तस्याः स्वविषयचैतन्यगताज्ञाननिवर्त्तनक्षमत्वं नेति वाच्यम् । हृदयादिगोचरशाब्दवृत्तेः सत्यपि विषयसंसर्गे तस्यां वृत्तौ अज्ञाननिवर्त्तकत्वप्रयोजकाभावेनाज्ञानानिवर्त्तकत्वस्य प्रथमपरिच्छेदावसाने दर्शितत्वादिति भावः ।

अर्थस्य स्वव्यवहारानुकूलचैतन्याभेदाभिव्यक्तिमत्त्वमेव आपरोक्ष्यं न तु तादृशाभेदवत्त्वमात्रमित्यत्र लिङ्गमाह अतएवेति । अभेदाभिव्यक्तेरेव अपरोक्षत्वप्रयोजकत्वस्वीकारादेवेत्यर्थः । संसारेति । तत्त्वसाक्षात्कारात् पूर्वकाल इत्यर्थः । जीवस्य ब्रह्माभेदे सत्यपीत्यनेन ब्रह्मणः स्वव्यवहारानुकूलजीवचैतन्याभिन्नत्वे सत्यपीत्यर्थो विवक्षितः । तथा च संसारदशायां स्वव्यवहारानुकूलजीवचैतन्याभिन्नस्यापि ब्रह्मणो जीवं प्रति अपरोक्षत्वाभावः तयोरभेदाभिव्यक्त्यभावादेवेति वक्तव्यतया अभेदाभिव्यक्तेः आपरोक्ष्यप्रयोजकत्वं युक्तमिति भावः ।

न च एवमिति । अज्ञानकृतभेदस्याभेदाभिव्यक्तिप्रतिबन्धकत्व इत्यर्थः । असम्भवादिति । जीवं साक्षात्करोमि जीवो मम अपरोक्ष इति जीवगोचरव्यवहारानुकूलं ज्ञानं न ब्रह्मणो मायावृत्त्युपहितं ब्रह्म चैतन्यमेव । तथा च ब्रह्म-

तं प्रति जीवभेदानापादनात्। यदज्ञानं यं प्रत्यावारकं तस्य तं प्रत्येव स्वाश्रयभेदापादकत्वात्।

अत एव चैतज्ज्ञानेन तस्य घटाज्ञाने निवृत्ते

---

कर्तृकव्यवहारविषयस्य जीवस्य ब्रह्मकर्तृकव्यवहारानुकूलतादृशब्रह्मचैतन्याभिन्नत्वसत्त्वेऽप्यभिव्यक्ताभेद-शालित्वाभावात् जीवस्य ब्रह्म प्रति अपरोक्षत्वं न सम्भवति। न च ब्रह्मणो जीवगोचरापरोक्षज्ञानासम्भवेऽपि न सर्वज्ञत्वभङ्गः जीवगोचरपरोक्षज्ञानमात्रेणापि तत्सम्भवादिति वाच्यम्। ईश्वरस्य परोक्षज्ञानानङ्गीकारादिति भावः। अज्ञानं हि जीवधर्मिकब्रह्मप्रतियोगिकभेदप्रयोजकम्। जीवस्य नाहं ब्रह्मेति ब्रह्मभेदानुभवसत्त्वात्। न तु ब्रह्मधर्मिकजीवप्रतियोगिकभेदप्रयोजकम्। ब्रह्मणो नाहं जीव इत्यनुभवे मानाभावात्। तथा च ब्रह्म प्रति जीवस्य ब्रह्मा भेदाभिव्यक्तिप्रतिबन्धकस्याज्ञानकृतभेदस्याभावात् नोक्तदोष इति परिहरति अज्ञानस्येति अनावारकतयेति। ईश्वरस्याहमज्ञ इत्यनुभवे मानाभावात् अज्ञानमीश्वरं प्रति जीवावरकं न भवति। न च ईश्वरस्यापि लीलाविग्रहपूर्वकव्यवहारकाले तदीयेनैव वचनेन तस्याज्ञत्वानुभवोऽस्तीति गम्यत इति वाच्यम्। तदीयस्य तदीयाज्ञत्वगमकवचनस्यान्यथासिद्धेश्चतुर्थपरिच्छेदे वक्ष्यमाणत्वादिति भावः। तमिति। ईश्वरं प्रति जीवप्रतियोगिकभेदाप्रयोजकत्वादित्यर्थः। तं प्रति जीवानावारकस्यापि जीवभेदापादकत्वं किं न स्यादित्यत आह यं प्रतीति। यं जीवं प्रति यदज्ञानं विषयचैतन्यावारकं तं प्रत्येव तस्याज्ञानस्य स्वाश्रयभूतविषयचैतन्यप्रतियोगिकभेदापादकत्वाभ्युपगमादित्यर्थः।

अनिवृत्तं मैत्राज्ञानं मैत्रं प्रत्येव विषयचैतन्यस्य भेदापादकमिति न चैत्रस्य घटापरोक्ष्यानुपपत्तिरिति।

नन्वेवं वृत्तिविषयचैतन्याभेदाभिव्यक्तिलक्षणस्यापरोक्षत्वस्य स्वविषयचैतन्यगताज्ञाननिवृत्ति-

---

उक्तव्यवस्थायां नियामकमाह अतएवेति। यं प्रति यदज्ञानमित्यादिव्यवस्थाभ्युपगमादेव चैत्रस्य घटापरोक्ष्यानुभवानुपपत्तिरपि नेति सम्बन्धः। घटावच्छिन्नचैतन्ये चैत्रं प्रति घटचैतन्यावारकमज्ञानं यथा वर्त्तते तथा मैत्रं प्रत्यपि घटचैतन्यावारकमज्ञानं तत्रास्ति। तथा च चैत्रीयघटज्ञानेन चैत्रस्य घटाज्ञाने चैत्रं प्रति स्वाश्रयभूतविषयचैतन्यप्रतियोगिकभेदापादके निवृत्ते सति चैत्रीयघटज्ञानेनानिवृत्तं घटचैतन्यगतं मैत्रं प्रति घटावारकज्ञानं मैत्रं प्रत्येव स्वाश्रयभूतघटचैतन्यप्रतियोगिकभेदापादकं न तु मैत्राज्ञानं चैत्रं प्रति घटचैतन्यानावारकमपि चैत्रं प्रति स्वाश्रयभूतघटचैतन्यप्रतियोगिकभेदापादकम्। तथा सति चैत्रीयघटज्ञानेन चैत्रीयाज्ञाने निवृत्ते सति तत्कृतभेदनिवृत्तावपि चैत्रस्य घटचैतन्यस्य च मैत्राज्ञानकृतभेदसत्त्वेनाभेदाभिव्यक्त्यभावाच्चैत्रस्य घटापरोक्ष्यानुभवानुपपत्तिरेव स्यात्। अतो मैत्राज्ञानं मैत्रं प्रतीव चैत्रं प्रति स्वाश्रयभेदापादकं न भवति। चैत्रं प्रति स्वाश्रयचैतन्यानावारकत्वादिति वक्तव्यम्। तथा च उक्तव्यवस्था सिद्धेत्यर्थः।

ननु अपरोक्षज्ञानमज्ञाननिवर्त्तकमितिरीत्या ज्ञानस्याज्ञाननिवर्त्तकत्वे अपरोक्षत्वं प्रयोजकमिति वक्तुं न शक्यते। ज्ञान-

प्रयोज्यत्वे तस्य अज्ञाननिवृत्तिप्रयोजकत्वायोगात् ज्ञानमात्रमज्ञाननिवर्त्तकं भवेदिति चेत्।

न यत् ज्ञानमुत्पद्यमानं स्वकारणमहिम्ना विषयसंसृष्टमेवोत्पद्यते तदेवाज्ञाननिवर्त्तकमिति विशेषणात् ऐन्द्रियकज्ञानानां तथात्वात्।

एवञ्च शब्दादुत्पद्यमानमपि ब्रह्मज्ञानं सर्वोपादानभूतस्वविषयब्रह्मचैतन्यसंसृष्टमेव उत्पद्यत

---

गतापरोक्षत्वस्यैवाज्ञाननिवृत्त्यधीनत्वात्। न च मास्तु ज्ञानापरोक्ष्यस्याज्ञाननिवृत्तिप्रयोजकत्वमिति वाच्यम्। तथा सति ज्ञानमात्रस्याज्ञाननिवर्त्तकत्वापत्त्या परोक्षज्ञानस्यापि अज्ञाननिवर्त्तकत्वप्रसङ्गादित्याशयेन शङ्कते नन्वेवमिति। एवंशब्दार्थमेवाह वृत्तीति। वृत्त्यवच्छिन्नचैतन्यरूपे ज्ञाने घटादिरूपविषये च वृत्त्यवच्छिन्नचैतन्यविषयावच्छिन्नचैतन्ययोरभेदाभिव्यक्तिघटितस्येत्यर्थः। अज्ञाननिवृत्तिप्रयोज्यत्व इति। प्रमातारं प्रति विषयचैतन्यावरणद्वारा विषयचैतन्यप्रतियोगिकभेदापादकस्याज्ञानस्य निवृत्तिं विना अर्थस्य ज्ञानस्य वा आपरोक्ष्यासम्भवस्योक्तत्वादापरोक्ष्यस्याज्ञाननिवृत्तिप्रयोज्यत्वमित्यर्थः। ज्ञानस्याज्ञाननिवर्त्तकतायामापरोक्ष्यस्य प्रयोजकत्वाभावेऽपि न हानिः। प्रयोजकान्तरस्य प्रथमपरिच्छेदान्ते दर्शितत्वादित्याशयेन परिहरति।

नेति तथात्वादिति। सन्निकर्षरूपकारणमहिम्ना विषयसंसृष्टतयैव उत्पद्यमानत्वादित्यर्थः। अनुमित्यादिवृत्तीनामतथात्वेनातिप्रसङ्गाभावाच्चेत्यपि द्रष्टव्यम्।

इति तस्याज्ञाननिवर्त्तकत्वं अज्ञाननिवृत्तौ तन्मूलभेदप्रविलयाद्दापरोक्ष्यं चेत्युपपद्यतेतराम्। नन्वेवमध्ययनगृहीतवेदान्तजन्येनापि तज्ज्ञानेन मूलाज्ञाननिवृत्त्या आपरोक्ष्यं किं न स्यात्।

---

ननु अनुमेयवह्न्यादिगोचरानुमितिवृत्तेरिव ब्रह्मगोचरशाब्दवृत्तेरपि स्वविषयभूतेन ब्रह्मचैतन्येन संसर्गाभावात् मूलाज्ञानानिवर्त्तकत्वं न स्यात्। तथा च तत्त्वज्ञानानन्तरमपि ब्रह्मापरोक्ष्यं न स्यादित्यत आह एवञ्चेति। एवमेवेत्यर्थः। ऐन्द्रियकवृत्तिवदेवेति यावत्। ब्रह्मगोचरवृत्तेः स्वविषयसंसर्गनियमे कारणमाह सर्वोपादानभूतेति। जायमानस्य सर्वस्य ब्रह्मसंसर्गनियमे सति ब्रह्मगोचरवृत्तेः स्वविषयसंसर्गनियमे किं वक्तव्यमित्याशयेन सर्वोपादानेत्युक्तं कार्य्यस्योपादानसंसर्गनियमात्। तथा च ब्रह्मगोचरवृत्तेर्नानुमेयवह्न्यादिगोचरानुमितिवृत्तितुल्यतेति भावः। आपरोक्ष्यं चेति। ननु ज्ञानापरोक्ष्यस्याज्ञाननिवृत्तावप्रयोजकत्वमते वेदान्तजन्यज्ञानस्यापरोक्षत्वप्रसाधनमस्मिन् शाब्दापरोक्षत्ववादे व्यर्थमिति चेत् न। अज्ञाननिवर्त्तकज्ञानमपरोक्षरूपमिति नियमस्य चक्षुरादिजन्यज्ञानेषु दृष्टस्य ब्रह्माज्ञाननिवर्त्तके ब्रह्मगोचरशाब्दज्ञाने व्यभिचारवारणार्थतया तत्साधनस्यार्थवत्त्वोपपत्तेर्मूलाज्ञाननिवर्त्तके ब्रह्मगोचरशाब्दज्ञाने आपरोक्ष्यस्य तद्वैतत् पश्यन्नित्यादिश्रुत्या ब्रह्म साक्षात्करोमीति विद्वदनुभवेन च सिद्धस्य तत्तत्प्रसाधनं विना अनुपपत्तेश्चेति भावः। घटादौ घटादिगोचरवृत्तिकाल एव आपरोक्ष्यं तद्वृत्त्युपरमे तु पुनरज्ञानान्तरकृतभेदप्राप्त्या स्वव्यवहारानुकूलचैतन्याभेदाभिव्यक्त्यभावात्

न च तत्सत्तानिश्चयरूपत्वाभावान्नाज्ञाननिवर्त्तकमिति वाच्यम्। तथापि कृतश्रवणस्य निर्विचिकित्सशाब्दज्ञानेन तन्निवृत्त्या मननादिवैयर्थ्यापत्तिरिति चेत् न। सत्यपि श्रवणात् निर्विचिकित्सज्ञाने चित्तविक्षेपदोषेण प्रतिबन्धात् अज्ञाननिवृत्त्या तन्निराकरणे मननिदिध्यासननियमविध्यर्थानुष्ठानस्यार्थवत्त्वात् भवान्तरीयमननाद्यनुष्ठाननिरस्तचित्तविक्षेपस्योपदेशमात्रात् ब्रह्मापरोक्ष्यस्येष्यमाणत्वाच्चेत्याहुः।

---

नापरोक्ष्यं ब्रह्मणि तु मूलाज्ञाननिवृत्तौ पुनरावरणकृतभेदाप्रसक्त्या ब्रह्मज्ञानानन्तरं सदैवापरोक्ष्यमिति विशेषं सूचयति तरामिति।

नन्वेवमध्ययनगृहीतेति। नियमेन यज्ज्ञानं विषयसंसृष्टतयोदेति तज्ज्ञानमज्ञानं निवर्त्तयत्येवेति नियमोपगमे सतीत्येवंशब्दार्थः। आपातज्ञानस्यापि स्वविषयब्रह्मसंसर्गितयैवोत्पन्नत्वादिति भावः। सत्तानिश्चयरूपत्वमपि निवर्त्तकज्ञानविशेषणमतो नोक्तातिप्रसङ्ग इति शङ्कते न च तदिति। विचारप्राचीनमध्ययनगृहीतवेदान्तजन्यज्ञानं तच्छब्दार्थः। विशेषणमभ्युपगम्याप्यतिप्रसङ्गमाह तथापीति। अप्रतिबद्धत्वमपि निवर्त्तकज्ञानविशेषणमतो नोक्तातिप्रसङ्गोऽपीति समाधत्ते न सत्यपीति। ननु मननादेर्विक्षेपशब्दितासम्भावनाविपरीतभावनानिवृत्त्यर्थत्वे यस्य विद्याधिकारिणो जन्मा-

अज्ञाननिवर्त्तकनिरूपणम्।

अथैवमपि कृतनिदिध्यासनस्य वेदान्तजन्य-ब्रह्मज्ञानेनेव घटादिज्ञानेनापि ब्रह्माज्ञाननिवृत्तिः किं न स्यात्।

न च तस्य ब्रह्माविषयत्वान्न ततो ब्रह्माज्ञान-निवृत्तिरिति वाच्यम्। घटः सन् इत्यादिबुद्धिवृत्तेः सद्रूपब्रह्मविषयत्वोपगमात्।

न च तत्र घटाद्याकारवृत्त्या तदज्ञाननिवृत्तौ स्वतः स्फुरणादेव तदवच्छिन्नं चैतन्यं सदिति प्रका-शते। न च तस्य घटाद्याकारवृत्तिविषयत्वमिति

---

न्तरीयमननादिसहितश्रवणानुष्ठानेन समस्तो विक्षेपदोषो निरस्तः तस्योपदेशमात्रेणापि सत्तानिश्चयरूपमप्रतिबद्धञ्च ब्रह्मज्ञानं जायते। तथाच तस्येह जन्मनि श्रवणमननाद्यनुष्ठानं विनापि मूलाज्ञाननिवृत्तिः ब्रह्मापरोक्ष्यञ्च स्यादित्यत आह भवान्तरीयेति। तथाच इष्टापत्तिरिति भावः।

अथैवमपीति। विक्षेपदोषनिवृत्त्यर्थं मननाद्यपेक्षायामपि इत्यर्थः। कृतनिदिध्यासनस्य अधिकारिणो घटादिज्ञानेनापि मूलाज्ञाननिवृत्तिः किं न स्यात्। घटादिवृत्तेरपि मूलाज्ञान-विषयचैतन्यविषयकत्वाविशेषादित्याक्षेपाभिप्रायः।

मूलाज्ञानघटज्ञानयोः समानविषयत्वमसिद्धमिति सिद्धा-न्तिनः शङ्कामनूद्य निराकरोति न च तस्येति। घटादिज्ञानस्य इत्यर्थः। तत इति। घटादिज्ञानादित्यर्थः।

घटः सन्नित्याद्याकारायाः वृत्तेर्ब्रह्मचैतन्यविषयकत्वा-

वाच्यम्। तदभावे घटविषयं ज्ञानं तदवच्छिन्नचैतन्यविषयमज्ञानमिति भिन्नविषयेण ज्ञानेन तन्निवृत्तेरयोगात्। जडे आवरणकृत्याभावेन घटस्याज्ञानाविषयत्वात्।

न च घटादिवृत्तेस्तदवच्छिन्नचैतन्यविषयत्वेऽप्यखण्डानन्दाकारत्वाभावान्न ततो मूलाज्ञाननिवृत्तिरिति वाच्यम्। वेदान्तजन्यसाक्षात्कारेऽपि तदभावात्। न हि तत्राखण्डत्वमानन्दत्वं वा कश्चिदस्ति प्रकारः।

---

भ्युपगमोऽसिद्ध इति सिद्धान्ती शङ्कते न च तत्रेति। तत्रेत्यादि तच्छब्दद्वयं घटादिपरम्। तस्येति। अज्ञान इत्यर्थः। घटाद्यवच्छिन्नचैतन्यस्य घटादिवृत्तिविषयत्वं पूर्ववादी साधयति तदभाव इत्यादिना। चैतन्यस्य घटादिवृत्तिविषयत्वाभावे सति इत्यर्थः। ननु यदि घटमात्रविषयकज्ञानेन घटावच्छिन्नचैतन्यविषयकाज्ञाननिवृत्तिर्न सम्भवति तयोः समानविषयकत्वाभावात् तर्हि घटज्ञानेन सहाज्ञानस्य समानविषयकत्वसम्पत्तये अज्ञानमपि घटादिजडमात्रविषयमेव अस्तु न इत्याह पूर्ववादी। जड इति। जडस्य जडत्वादेव प्रमाणानवतारदशायामप्रकाशोपपत्त्या जडस्याप्रकाशार्थमावरणकल्पना योगादित्यर्थः। कृत्यं फलम्।

तथाच वेदान्तजन्यज्ञानवद्घटादिज्ञानस्यापि ब्रह्मचैतन्यविषयकत्वावश्यम्भावेन मूलाज्ञानसमानविषयकत्वात् तेनापि

वेदान्तानां संसर्गागोचरप्रमाजनकत्वलक्षणाखण्डार्थत्वहानापत्तेः । न च वेदान्तजन्यज्ञानादेव तन्निवृत्तिनियम इति वाच्यम् । क्लृप्ताज्ञाननिवर्त्तकत्वप्रयोजकस्य रूपस्य ज्ञानान्तरेऽपि सद्भावे तथा नियन्तुमशक्यत्वात् ।

न च घटाद्याकारवृत्तिविषयस्यावच्छिन्नचैतन्यस्यापि कल्पितत्वेन यन्मूलाज्ञानविषयभूतं सत्य-

---

तन्निवृत्तिप्रसङ्ग इति स्थितम् । तत्र सिद्धान्ती शङ्कते न च इति । तर्हि वेदान्तजन्यज्ञानमपि ब्रह्माज्ञाननिवर्त्तकं न स्यादिति पूर्ववादी दूषयति वेदान्तजन्येति । अखण्डत्वमनवच्छिन्नत्वम् । वेदान्तजन्यज्ञानस्य अखण्डत्वादिधर्मवैशिष्ट्यावगाहित्वोपगमे बाधकमाह वेदान्तानामिति । मूलाज्ञाननिवर्त्तकज्ञानस्य वेदान्तजन्यत्वमपि विशेषणं विवक्षितम् । अतो घटादिज्ञाने नातिप्रसङ्ग इत्याशयवतीमाशङ्कामनूद्य दूषयति पूर्ववादी न च वेदान्तेत्यादिना । वेदान्तजन्यज्ञाने क्लृप्तस्य मूलाज्ञाननिवर्त्तकत्वप्रयोजकरूपस्य मूलाज्ञानसमानविषयकत्वसत्तानिश्चयरूपत्वाप्रतिबद्धत्वलक्षणस्य निदिध्यासनपरिपाककाले चक्षुरादिजन्यघटादिज्ञानेऽपि सत्वे सति वेदान्तजन्यज्ञानादेव मूलाज्ञाननिवृत्तिर्नतु घटादिज्ञानादिति नियन्तुमयुक्तत्वात् वेदान्तजन्यत्वस्यापि सत्तानिश्चयरूपत्वादेरिव प्रयोजकविशेषणत्वे गौरवात्मानाभावाच्चेति भावः ।

तर्हि वेदान्तजन्यज्ञाने क्लृप्तं यत्प्रयोजकं तदेव घटादि-

मनवच्छिन्नं चैतन्यं तद्विषयत्वाभावात् घटादि-वृत्तीनां निवर्त्यत्वाभिमताज्ञानसमानविषयत्वल-क्षणं क्लृप्तप्रयोजकमेव नास्तीति वाच्यम्।

तत्रावच्छेदकांशस्य कल्पितत्वेऽप्यवच्छे-द्यांशस्याकल्पितमूलाज्ञान-विषयचैतन्यरूपत्वात्तस्य कल्पितत्वे घटवज्जडतया अवस्थाज्ञानं प्रत्यपि विष-यत्वायोगेनावस्थाज्ञानस्य मूलाज्ञानविषयाकल्पि-तचैतन्यविषयत्वस्य वक्तव्यतया तन्निवर्त्तकघटादि-ज्ञानस्यापि तद्विषयत्वावश्यम्भावेन तत्पक्षेऽपि ततो मूलाज्ञाननिवृत्तिप्रसङ्गस्यापरिहारात्।

---

ज्ञाने नास्तीति प्रश्नते न च घटाद्याकारेति। अवच्छि-न्नत्वं कल्पितत्वे हेतुः अनवच्छिन्नत्वं सत्यत्वे हेतुः। घटादि-वृत्तीनां कल्पितचैतन्यविषयकत्वेन सत्यब्रह्मविषयकत्वा-भावादित्यर्थः। घटाद्यवच्छिन्नचैतन्यं कल्पितमित्यत्र चैत-न्यांशस्याकल्पितत्वं कल्पितत्वं वा विवक्षितम्।

नाद्य इत्याह तत्रेति। अवच्छिन्नचैतन्य इत्यर्थः। अवच्छेद्य-चैतन्यांशस्य घटादिवृत्तिविषयस्य अकल्पितं यन्मूलाज्ञानविषय-ब्रह्मचैतन्यं तद्रूपत्वादित्यर्थः। तथाच घटाद्यवच्छिन्नचैतन्य-गोचरवृत्तेरपि निवर्त्त्यत्वाभिमतमूलाज्ञानसमानविषयकत्व-रूपं वेदान्तजन्यज्ञाने क्लृप्तं प्रयोजकमस्तीति भावः। द्वितीय-कल्पेऽपि घटादिवृत्तौ क्लृप्तप्रयोजकमस्तीति दर्शयन् तं कल्पं दूषयति तस्य कल्पितत्व इति। अवच्छेद्यचैतन्यांशस्य इत्यर्थः। वक्तव्यतया इति। अवच्छेद्यचैतन्यांशस्य कल्पितत्वपक्षे तस्य

अत्राहुराचार्य्याः। न चैतन्यं चक्षुरादिजन्य-वृत्तिविषयः। न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्। पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन् इत्यादि-श्रुत्या तस्य परमाण्वादिवच्चक्षुराद्ययोग्यत्वोपदेशात् औपनिषदमिति विशेषणाच्च।

---

जड़त्वापत्त्या जड़स्य तस्याज्ञानविषयत्वासम्भवादवस्थाज्ञानं प्रति मूलाज्ञानविषयब्रह्मचैतन्यमेव विषय इति वक्तव्यम्। निर्विष-याज्ञानासम्भवात्। तथाच ब्रह्मचैतन्यविषयकावस्थाज्ञाननिवर्त्त-कत्वाय घटादिवृत्तीनामपि मूलाज्ञानविषयब्रह्मचैतन्यविष-यकत्वमपरिहार्य्यम्। घटादिवृत्तीनां सत्यब्रह्मविषयकत्वाभावे अवस्थाज्ञानेन सह समानविषयकत्वाभावात् तासामवस्थाज्ञान-निवर्त्तकत्वं न स्यादित्यर्थः। तन्निवर्त्तकेति। अवस्थाज्ञानं तच्छ-ब्दार्थः। तद्विषयत्वेति। मूलाज्ञानविषयब्रह्मचैतन्यं तच्छब्दार्थः। तत्पक्षेऽपीति। अवच्छेद्यांशस्य कल्पितत्वमिति द्वितीयकल्पेऽपि इत्यर्थः। तत इति। घटादिज्ञानादित्यर्थः। अपरिहारादिति। घटादिज्ञानस्यापि वेदान्तजन्यज्ञानस्येव मूलाज्ञानसमानविष-यकत्वादिति भावः।

अत्राहुरिति। घटादिज्ञानमपि मूलाज्ञाननिवर्त्तकं स्यात्। चैतन्यविषयकत्वात् वेदान्तजन्यज्ञानवदिति चोद्ये हेत्वसिद्धिमाहुरित्यर्थः। अस्यात्मनो रूपं सन्दृशे सन्दृशं चक्षुषो योग्यत्वेन न तिष्ठति। रूपादिहीनत्वात्। अतो न कश्चि-देनमात्मानं चक्षुषा पश्यति। पराञ्चि पराग्विषयाणि खानि

न च सर्वंप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते इत्यादिवार्त्तिकविरोधः।

तस्य घटाद्याकारवृत्त्युदये सत्यावरणाभिभवात् स्वप्रभं सद्रूपं ब्रह्म घटः सन्निति घटवद्व्यवहार्य्यं भवतीत्यौपचारिकघटादिवृत्तिवेद्यत्वपरत्वात्।

---

इन्द्रियाणि व्यतृणत् हिंसितवान् ईश्वरः। जड़ार्थविषयकत्वेनैव करणानि सृष्टवानिति यावत्। तस्मात् तथा सृष्टत्वात् पराङ् पराञ्चं सर्वो लोक इन्द्रियैरुपलभते नान्तरात्मानं चैतन्यस्वभावमित्यर्थः। न चक्षुषा गृह्यत इत्यादिश्रुतिरादिपदार्थः। तस्येति चैतन्यस्य इत्यर्थः।

ननु यदेन्द्रियायोग्यत्वोपदेशादुपनिषदेकगम्यत्वश्रवणाच्च चैतन्यं घटादिवृत्तिविषयो न भवतीत्युपेयते तर्हि वार्त्तिकविरोध इति शङ्कते न च सर्वेति। यद्यदस्तु प्रतीयते तत्सर्वं सदित्येव प्रतीयते। तथाच अनुभवबलात् सद्रूपं ब्रह्म सर्वंप्रत्ययवेद्यतया व्यवस्थितमित्यर्थः। चैतन्यस्य सर्वप्रत्ययवेद्यत्वं गौणमेव वार्त्तिककाराणामभिमतं न घटादिवत् मुख्यम्। उदाहृतश्रुतिविरोधात्।

तथा च न वार्त्तिकविरोध इति समाधत्ते तस्येति। वार्त्तिकवचनस्य इत्यर्थः। यथा घटस्य घटगोचरवृत्त्यधीनव्यवहारविषयत्वं तथाच घटाद्यधिष्ठानसद्रूपब्रह्मणोऽपि घटादिवृत्त्यधीनव्यवहारविषयत्वमस्तीत्यनेन गुणेन सद्रूपं ब्रह्म घटादिप्रत्ययवेद्यमिति वार्त्तिककारैरुच्यत इत्यर्थः। न

आवरणाभिभावकत्वं च घटादिज्ञानस्य घटादि-विषयत्वादेव उपपन्नम्। घटादेरप्यज्ञानविषयत्वात् घटं न जानामि घटज्ञानेन घटाज्ञानं नष्टमिति अवस्थाज्ञानानां घटादिविषयत्वानुभवात्।

न च तत्रावरणकृत्याभावादज्ञानाङ्गीकारो न युक्तः।

तज्ञासकस्य तदवच्छिन्नचैतन्यस्यावरणादेव तदप्रकाशोपपत्तेरिति वाच्यम्।

---

च एवं परोक्षवृत्तिविषयेष्वावरणाभिभवाभावादुक्तगतिस्तत्र न सम्भवतीति वाच्यम्। वार्त्तिके प्रत्ययपदस्य आवरणाभिभावक-वृत्तिपरत्वोपपत्तेरिति भावः।

ननु घटादिवृत्तेर्घटाद्यवच्छिन्नचैतन्यविषयकत्वाभावे चैतन्यावारकाज्ञानाभिभावकत्वं न सम्भवति। ज्ञानाज्ञानयोः समानविषयकत्वाभावादित्यत आह आवरणाभिभावकत्वं चेति। जड़स्यापि अज्ञानविषयत्वमनुभवबलात् स्वीकार्य्यमित्याह घटादेरपीति। अवस्थापदं मूलाज्ञानव्यवच्छेदाय। तस्य ब्रह्म न जानामीति ब्रह्ममात्रविषयकत्वानुभवात् न जड़विषयकत्व-मिति भावः।

न च तत्रेति। जड़वस्तुनीत्यर्थः। न युक्त इति। अज्ञाना-श्रयत्वं जड़े न युक्तम्। तत्रावरणाभावात् तदभावश्च फलाभा-वादित्यर्थः। घटं न जानामीत्यनुभवस्तु घटतदधिष्ठानचैतन्य-योस्तादात्म्यात् चैतन्यविषयकत्वेनाप्युपपद्यत इति भावः।

ननु जड़स्यावरणाभावे कथं तदप्रकाशः सम्भवति। न च

उक्तभङ्ग्या जडस्य साक्षादज्ञानविषयत्वस्य प्रतिक्षेपेऽपि जडावच्छिन्नचैतन्यप्रकाशस्याज्ञानेनावरणं ततो नित्यचैतन्यप्रकाशसंसर्गेऽपि जडस्य नास्ति न प्रकाशत इत्यादिव्यवहारयोग्यत्वमिति परम्परया अज्ञानविषयत्वाभ्युपगमात् ।

---

तत्प्रकाशचैतन्यसंसर्गाभावादेव अप्रकाशः नत्वावरणबलादिति वाच्यम् । जडस्य स्वप्रकाशचैतन्ये अध्यस्ततया तस्य सदावभासकचैतन्यसंसर्गसत्त्वात् । अतो जडस्य अप्रकाश एव जडावरणफलमित्यत आह तद्भासकस्य इति । अत्र तच्छब्दद्वयं जडपरम् ।

उक्तभङ्ग्येति । तत्रावरणकृत्याभावादज्ञानाङ्गीकारो न युक्त इति वाक्येन जडे साक्षादज्ञानाश्रयत्वस्य साक्षादज्ञानविषयत्वस्य च प्रतिक्षेपेऽपि इत्यर्थः । ननु तद्वाक्यस्य जडे साक्षादज्ञानविषयत्वप्रतिक्षेपपरत्वं किमिति कल्प्यते । साक्षात्परम्परासाधारणाज्ञान-विषयत्व-मात्र-प्रतिक्षेप-परत्वसम्भवादित्याशङ्क्य तथा सति तद्भासकस्य तदवच्छिन्नचैतन्यस्य आवरणादेव तदप्रकाशोपपत्तेरित्युत्तरवाक्येन जडेऽपि परम्परया अज्ञानविषयत्वाभ्युपगमविरोधप्रसङ्गादित्याशयेनाह जडावच्छिन्नेत्यादिना । शङ्काग्रन्थे तदप्रकाशोपपत्तेरित्यनेनांशेन जडे अस्ति प्रकाशते प्रियश्चेत्येवमात्मक-व्यवहारायोग्यत्वलक्षणमावरणमभ्युपगतम् । चैतन्यस्यावरणादेवेत्यनेनांशेन जडावरणस्य कारणत्वेन चैतन्यावरणमभ्युपगतमिति प्रतिपादयति अज्ञानेनेति तत इति । चैतन्यावरणादित्यर्थः । चैतन्यस्य स्वप्रकाशतया तस्य यथा सदा प्रसन्नप्रकाशत्वमावरणकल्पकमस्ति तथा जडस्यापि सदा

साक्षात्परम्परया वा यदज्ञानावरणीयं तद्विषयस्यैव ज्ञाने तदज्ञाननिवर्त्तकत्वप्रयोजकशरीरे निवेशनात्।

न च एवं घटादीनामुक्तरीत्या मूलाज्ञानविषयत्वमपि स्यादिति घटादिसाक्षात्कारादेव मूलाज्ञाननिवृत्त्यापातः।

---

चैतन्यप्रकाशसंसृष्टतया सदा प्रसक्तप्रकाशत्वम् आवरणकल्पकं मुख्यमिति सूचयति नित्यचैतन्यप्रकाशसंसर्गेऽपीति। इतिशब्दः प्रकारवचनः।

ननु उक्तरीत्या अवच्छिन्नचैतन्यनिष्ठमवस्थाज्ञानं जड़तदवच्छिन्नचैतन्ययोरपि आवारकमिति लभ्यते। तथा च घटादिज्ञानस्य जड़मात्रविषयकत्वस्वीकारेण तस्याज्ञानेन सह सर्वांशे समानविषयकत्वाभावादज्ञाननिवर्त्तकत्वं न स्यादित्यत आह साक्षादिति। ज्ञानस्याज्ञानसमानविषयकत्वमात्रं विरोधप्रयोजकशरीरे प्रविष्टं न तु सर्वांशेऽपि समानविषयकत्वम्। गौरवादिति भावः।

न च एवमिति। ज्ञानाज्ञानयोः सर्वांशे समानविषयकत्वानादर इत्यर्थः। उक्तरीत्येति। अवच्छिन्नचैतन्यस्य स्वरूपेण सत्यतया ब्रह्मस्वरूपस्यावस्थाज्ञानविषयत्ववत् मूलाज्ञानविषयत्वमप्यस्ति। तथा च अवस्थाज्ञानकृतचैतन्यावरणबलात् जड़स्यापि परम्परया अवस्थाज्ञानविषयत्वमित्युक्तरीत्या मूलाज्ञानकृतचैतन्यावरणबलात् मूलाज्ञानविषयत्वमपि जड़स्य घटादेरपरिहार्य्यं स्यादित्यर्थः। ततः किं तत्राह घटादीति।

फलबलात्तदज्ञानकार्य्यातिरिक्ततद्विषयविषयकत्वस्यैव तन्निवर्त्तकत्वे तन्त्रत्वात्।

अथ वा मूलाज्ञानस्यैव जडं न विषयः। अवस्थाज्ञानानां त्ववच्छिन्नचैतन्याश्रितानां तत्तज्जडमेव विषयः। अन्यथा चाक्षुषवृत्त्या चन्दनखण्डे चैतन्याभिव्यक्तौ तत्संसर्गिणो गन्धस्यापि आपरो-

---

यथा अवस्थाज्ञानं प्रति परम्परया विषयभूतजड़साक्षात्कारादेव अवच्छिन्नचैतन्यनिष्ठावस्थाज्ञानस्य निवृत्तिः तथा मूलाज्ञानं प्रत्यपि परम्परया विषयभूतजड़साक्षात्कारादेव ब्रह्मचैतन्यनिष्ठमूलाज्ञानस्यापि निवृत्त्यापात इत्यर्थः।

मूलाज्ञाननिवृत्त्यापातो न च इत्यत्र हेतुमाह फलबलादित्यादिना। घटादिसाक्षात्कारे सत्यपि मूलाज्ञानानुवृत्तिरूपफलबलादित्यर्थः। मूलाज्ञानतत्कार्य्यातिरिक्तो यो मूलाज्ञानविषयस्तिस्मात्र तद्विषयकत्वस्यैव ज्ञाने मूलाज्ञाननिवर्त्तकत्वे तन्त्रत्वकल्पनात् घटादिसाक्षात्कारे च तदभावात् न मूलाज्ञाननिवर्त्तकत्वापत्तिरित्यर्थः। जड़मात्रगोचरवृत्त्या कथमवच्छिन्नचैतन्यावारकाज्ञाननिवृत्तिः। भिन्नविषयत्वादिति शङ्कायामवस्थाज्ञानमवच्छिन्नचैतन्यावरणद्वारा जड़मप्यावृणोति। अतो जड़मात्रगोचरयापि वृत्त्या अवस्थाज्ञाननिवृत्तिः सम्भवतीति प्रतिपादितम्।

इदानीं तस्यामेव शङ्कायां प्रकारान्तरेण समाधानं दर्शयति अथ वेति। अथवा अवस्थाज्ञानानां तत्तत् जड़मेव विषय इति सम्बन्धः। घटं न जानामीत्यादिपूर्वोक्तानुभवादेव इति भावः।

च्चापत्ते: तदनभिव्यक्तौ चन्दनतद्रूपयोरप्यप्रकाशापत्ते: ।

न च चाक्षुषवृत्त्या चन्दनतद्रूपावच्छिन्नचैतन्ययोरभिव्यक्ता तयो: प्रकाश: गन्धाकारवृत्त्यभावेन गन्धावच्छिन्नचैतन्यस्यानभिव्यक्ता तस्याप्रकाशस्येति वाच्यम् ।

चैतन्यस्य द्विगुणीकृत्य वृत्त्यभावेन एक-

---

तर्हि अवस्थाज्ञानामामाश्रयोऽपि तत्तज्जड़मेव स्यात् । तथाच अपसिद्धान्त इत्यत आह अवच्छिन्नचैतन्याश्रितानामिति । ननु जड़स्याज्ञानविषयत्वोपगमे जड़मज्ञानस्य विषयो न भवतीति सिद्धान्तस्य का गतिरत आह मूलाज्ञानस्यैवेति । जड़स्याज्ञानाविषयत्वसिद्धान्तो मूलाज्ञानमात्रविषय इति भाव: । अन्यथेति । जड़स्यानावृतत्व इत्यर्थ: । चन्दनखण्डगोचरचाक्षुषवृत्त्या तदवच्छिन्नचैतन्यमभिव्यज्यते न वा । आद्ये दोषमाह तत्संसर्गिण इति । चन्दननिष्ठगन्धस्यापि चन्दनस्येव आपरोक्ष्यापत्ति: । अभिव्यक्तचैतन्यसंसर्गित्वस्योभयत्राविशेषात् । जड़स्यावृतत्वपक्षे तु नायं दोष: । चाक्षुषवृत्त्या गन्धावरणानिवृत्तेरित्यर्थ: । द्वितीये दोषमाह तदनभिव्यक्तावपीति अप्रकाशापत्तेरिति । चन्दनगोचरचाक्षुषवृत्तिकाले चन्दनतद्रूपप्रकाशाभावोऽनिष्ट इति भाव: ।

चन्दनखण्डघटपटादिद्रव्याणामिवैकद्रव्यवृत्तिगुणानामपि चैतन्यावच्छेदकत्वमस्तीत्यभिप्रेत्य आशङ्कते न चेति । एवञ्च द्रव्ये रूपरसगन्धादिभेदेन चैतन्यभेदो नास्ति ।

द्रव्यगुणानां स्वाश्रये सर्वत्र व्याप्य वर्तमानानां पृथक् पृथक् गगनावच्छेदकत्वस्येव चैतन्यावच्छेदकत्वस्याप्यसम्भवात् ।

तेषां स्वाश्रयद्रव्यावच्छिन्नचैतन्येनैव शुक्तीदमंशावच्छिन्नचैतन्येन शुक्तिरजतवत् प्रकाश्यतया तस्याभिव्यक्तौ गन्धस्यापि आपरोक्ष्यापत्तेः गन्धस्यापि प्रकाशस्यानभिव्यक्तौ रजतादेरप्यप्रकाशस्य चापत्तेः ।

---

मानाभावादित्याह चैतन्यस्येति। चैतन्यस्य निरवयवतया द्रव्ये द्रव्यावच्छेदेनैका गुणावच्छेदेनापरा वृत्तिर्न सम्भवतीत्यर्थः। यदि एकत्र द्रव्ये प्रदेशभेदेन गन्धादयः स्युः तदा तत्र द्रव्ये गन्धादिभेदेन चैतन्यभेदशङ्कापि स्यात् नत्वेतदस्ति। गन्धादीनां व्याप्यवृत्तित्वानुभवादित्याशयेनाह व्याप्येति गगनेति। यथा घटादिद्रव्याणां गगनभेदकत्वमस्ति तथा गन्धादीनां गगनभेदकत्वं नास्ति। गन्धादिभेदेन गगनभेदानुभवादिति भावः।

गन्धादिभेदेन चैतन्यभेदाभावे सिद्धे चन्दनचैतन्याभिव्यक्त्यनभिव्यक्तिकृतौ पूर्वोक्तदोषौ दुष्परिहरावित्याह तेषामिति शुक्तीति। यथा शुक्तीदमंशावच्छिन्नचैतन्ये रजतस्याध्यासात् रजतं शुक्तीदमंशचैतन्येनैवावभास्यं नत्विदमंशावच्छिन्नचैतन्यापेक्षया पृथग्भूतेन स्वावच्छिन्नचैतन्येनावभास्यम्। तथा द्रव्यावच्छिन्नचैतन्ये कल्पिता रूपादयोऽपि द्रव्यावच्छिन्नचैतन्येनैव प्रकाश्या इत्यर्थः।

न च गन्धाकारवृत्त्युपरक्ते एव चैतन्ये गन्धः प्रकाशत इति नियमः प्रकाशसंसर्गस्यैव प्रकाश-मानशब्दार्थत्वेनासत्यामपि तदाकारवृत्तौ अनावृत-प्रकाशसंसर्गे अप्रकाशमानत्वकल्पनस्य विरुद्धत्वात्।

अभिव्यक्तस्यच गन्धोपादानचैतन्यस्य गन्धा-संसर्गित्वासम्भवात्।

तस्माद्यथा चैत्रस्य घटवृत्तौ तं प्रति आवा-रकस्यैवाज्ञानस्य निवृत्तिरिति तस्यैव विषयप्रकाशो नान्यस्य तथा तत्तद्विषयाकारवृत्त्या तत्तदावारका-

---

ननु चन्दनगन्धस्याभिव्यक्तचैतन्यप्रकाशसंसृष्टस्यापि गन्ध-गोचरवृत्त्यभावादेव आपरोक्ष्याभाव इति शङ्कामनूद्य निराकरोतीति न च गन्धाकारेति। नियमो न च इत्यत्र हेतुमाह प्रकाशसंसर्गस्यैवेति। न तु वृत्त्युपहितानावृतप्रकाशसंसर्गस्य प्रकाशमानताशब्दार्थत्वं सुखादिगोचर-वृत्त्यनुपहितसाक्षिप्रकाशसंसर्गिणि सुखादौ प्रकाशमानशब्दा-र्थत्वाभावप्रसङ्गादित्यर्थः।

गन्धस्याभिव्यक्तचैतन्यसंसर्ग एव नास्तीत्याशङ्क्याह अभि-व्यक्तस्य चेति। चकारस्यासम्भवादित्यनेन सम्बन्धः। उपा-दानपदमधिष्ठानपरम्। असम्भवादिति। तथा च जड़स्य अनावृतत्वपक्षे चन्दनचैतन्याभिव्यक्तिदशायां गन्धस्यापि आप-रोक्ष्यापत्तिरपरिहार्य्येति भावः।

जड़स्य आवृतत्वपक्षे तु नोक्तदोषप्रसक्तिरित्याह तस्मादिति।

ज्ञानस्यैव निवृत्तेर्न विषयान्तरस्यापरोक्ष्यम् अना-वृतस्यैवार्थस्य संविदभेदात् आपरोक्ष्यमित्युपगमा-दिति प्रमातृभेदेनेव विषयभेदेनाप्येकत्र चैतन्ये अवस्थाज्ञानभेदस्य वक्तव्यतया अवस्थाज्ञानानां तत्तज्जडविषयकत्वमिति घटादिवृत्तीनां नावस्था-ज्ञाननिवर्त्तकत्वे काचिदनुपपत्तिः न वा मूला-ज्ञाननिवर्त्तकत्वापत्तिः।

---

जड़े आवरणस्य सिद्धत्वादित्यर्थः। ननु जड़स्य आवृत-त्वपक्षेऽपि चन्दनगोचरचाक्षुषवृत्त्यैव गन्धावरणस्यापि निवृत्तिः स्यात्। गुणगुणिनोः तादात्म्यात्। तथाच चन्दना-परोक्ष्यदशायां तद्गन्धापरोक्ष्यदोषोऽत्रापि तुल्य इति शङ्कां दृष्टान्तेन परिहरति यथेति। नान्यं प्रत्यावारकाज्ञानस्यापि निवृत्तिरित्येवकारार्थः। तस्यैवेति। चैत्रस्यैव घटप्रकाशो नान्यस्य मैत्रादेरित्यर्थः। तथेति। गुणगुणिनोः तादात्म्ये-ऽपि भेदस्यापि सत्त्वात् न चन्दनगोचरवृत्त्या गन्धादेरापरोक्ष्य-प्रसक्तिरित्यर्थः। ननु चन्दनसंविदभिन्नस्य गन्धस्यावृतस्यापि कथं नापरोक्ष्यमित्याशङ्क्य अनावृतसुखादावेव संविदभेदस्याप-रोक्ष्यप्रयोजकत्वदर्शनात् नैवमित्याह अनावृतार्थस्यैवेति। ननु एकत्र चन्दनावच्छिन्ने चैतन्ये अवस्थाज्ञानस्य चैत्रं प्रति चन्दनावारकस्यैकत्वात् तस्य च चन्दगोचरवृत्त्या निवृत्तत्वात् चन्दनवृत्तिकाले गन्धस्यावरणमयुक्तमित्याशङ्कां निराकरोति इति प्रमातृभेदेनेवेति। यथा एकत्र प्रमातृविषये चैत्रमैत्रादिभे-देनाज्ञानमनेकमस्ति तथा एकत्रापि चन्दनावच्छिन्नचैतन्ये गन्धा-

न चैवमपि जीवविषयाया अहमाकारवृत्ते-र्मूलाज्ञाननिवर्त्तकत्वापत्तिः ।

---

दिविषयभेदेनापि अज्ञानमनेकमस्तीति वक्तव्यम् । चन्दना-परोक्षदशायां गन्धापरोक्षादर्शनादेवेत्ययं हेतुः प्रकृतपराम-र्शिना इतिपदेन समर्प्यते । तथा च चन्दनापरोक्षकाले गन्धा-देरावरणसम्भवात् नोक्तदोष इति भावः । जड़विषयकत्वमि-तीति । जड़विषयकत्वादित्यर्थः । न काचिदनुपपत्तिरिति । घटा-दिवृत्तीनां चैतन्यविषयकत्वाभावे ज्ञानाज्ञानयोः समानविषय-कत्वरूपं विरोधप्रयोजकं न सम्भवति । तासां जड़मात्रगोचर-त्वादज्ञानस्य च चैतन्यमात्रविषयकत्वादिति पूर्वोक्तानुपपत्ति-र्नास्ति । अवस्थाज्ञानस्यापि जड़मात्रविषयकत्वाभ्युपगमात् । तथा जड़स्यावरणाभ्युपगमे अपसिद्धान्तापत्तिरूपानुपपत्तिरपि नास्ति । जड़ावरणानभ्युपगमस्य मूलाज्ञानविषयत्वात् । तथा तत्तज्जड़ावारकाज्ञानानां नानात्वाभ्युपगमे तदेकत्वसिद्धान्तविरो-धरूपानुपपत्तिरपि नास्ति । तदेकत्वाभ्युपगमस्यापि मूलाज्ञान-विषयत्वात् । जड़ावारकाज्ञानानां च अवस्थारूपत्वादित्यादि-कमभिप्रेत्य न काचिदनुपपत्तिरित्युक्तम् ।

परमप्रकृतमाह न चेति । घटादिवृत्तीनामपि मूला-ज्ञाननिवर्त्तकत्वापत्तिरिति यत् पूर्ववादिनश्चोद्यमादौ प्रक्रान्तं तत् नास्त्येव । घटादिवृत्तीनां मूलाज्ञानविषयचैतन्य-विषयकत्वाभ्युपगमादित्यर्थः ।

न च एवमपीति । घटादिवृत्तीनां चैतन्यविषयकत्वा-भावेऽपि अहमर्थरूपजीवस्य चिदचित्संवलितरूपतया तद्वृत्तेश्चैतन्यविषयकत्वावश्यम्भावादित्यर्थः ।

तस्याः स्वयंप्रकाशमानचित्संवलिताचिदंशमात्र-विषयत्वात्। सोऽहमिति प्रत्यभिज्ञाया अपि स्वयंप्रकाशचैतन्ये अन्तःकरणवैशिष्ट्येन सह पूर्वापरकालवैशिष्ट्यमात्रविषयत्वेन चैतन्यविषयत्वा-भावादिति।

केचित्तु घटादिवृत्तीनां तत्तदवच्छिन्नचैतन्यविषयत्वमभ्युपगम्य सर्वमानप्रसक्तौ च सर्वमान-फलाश्रयात्। श्रोतव्येति वचः प्राह वेदान्तावरुद्धतया इतिवार्त्तिकोक्तश्रोतव्यवाक्यार्थवेदान्तनियम-

---

तस्या इति। स्वप्रकाशतया स्वयमेव प्रकाशमानायां चिति चित्संवलितश्चित्तादात्म्येनाध्यस्तो योऽयमचिदंश स्तन्मात्रविषयकत्वादहमाकारवृत्तेर्न तस्या अपि चैतन्यविषयकत्वम्। औपनिषदत्वश्रुतिविरोधादेव इत्यर्थः। ननु योऽहं स्वप्ने श्रीकृष्णमन्वभूवं सोऽहं जागरे तं स्मरामीत्यादिप्रत्यभिज्ञायाश्चैतन्यविषयकत्व-मावश्यकम्। अन्यथा तया चिदात्मनः स्थायित्वं सङ्घातव्यतिरिक्तत्वञ्च न सिध्येदित्यत आह सोऽहमिति। प्रत्यभिज्ञापि स्वयमेव प्रकाशमाने चैतन्ये अहमित्यन्तःकरणतादात्म्यमिव तत्तादिवैशिष्ट्यमपि विषयीकरोति न तु स्वप्रकाशचैतन्यम्। अस्मिन् मते चिदात्मनः स्थायित्वादेः श्रुतिबलादेव सिद्धिर्न प्रत्यभिज्ञाया इति बोध्यम्।

घटादिवृत्तीनामपि चैतन्यविषयकत्वाविशेषात् वेदान्तजन्यज्ञानवत् मूलाज्ञाननिवर्त्तकत्वापत्तिरिति चोद्ये हेतोरेवासत्त्वात् नोक्तातिप्रसङ्ग इति समाधानमुक्तम्। इदानीं तासां

विध्यनुसारेण वेदान्तजन्यमेव नियमादृष्टसहितं ब्रह्मज्ञानमप्रतिबद्धं ब्रह्माज्ञाननिवर्त्तकमिति घटादिज्ञानान्न तन्निवृत्तिप्रसङ्ग इत्याहुः।

---

चैतन्यविषयकत्वाभ्युपगमेऽपि नोक्तातिप्रसङ्ग इत्याह केचित्त्विति अभ्युपगम्येति। न च एवमभ्युपगमे चैतन्यस्य चक्षुरादिविषयत्वनिषेधश्रुतीनां बाधः स्यादिति वाच्यम्। तासां निरुपाधिकचैतन्यविषयत्वाभ्युपगमेन अवच्छिन्नचैतन्यस्य चक्षुरादिवृत्तिविषयत्वे तद्विरोधाभावादिति भावः। अतएव ब्रह्मचैतन्यस्य सर्वप्रत्ययवेद्यत्वप्रतिपादकं पूर्वोदाहृतवार्त्तिकवचनमपि सङ्गच्छते। अज्ञातज्ञापकत्वं हि प्रामाण्यम्। अज्ञातं च वस्तु चैतन्यमेव। तस्यैव स्वप्रकाशतया सदा प्रसक्तप्रकाशस्य अज्ञानविषयत्वकल्पनौचित्यात्। अवभासकचैतन्यस्यावरणे सति जड़ानवभाससम्भवेन तस्य पृथगावरणकल्पनायोगात्। अज्ञानस्य चैतन्याश्रितत्वनियमेन तस्य तमस इव स्वाश्रयादन्यत्रावरणहेतुत्वानुपपत्तेश्च। तथा च प्रत्यक्षादीनामपि प्रामाण्यसिद्धये घटाद्यवच्छिन्नचैतन्यविषयकत्वमेव स्वीकर्त्तव्यं न तु जड़मात्रविषयकत्वम्। एवं सर्वेषामेव मानानां फलशब्दितचैतन्यविषयकत्वादमृतत्वसाधने ब्रह्मदर्शने सर्वेषां मानानां कारणत्वप्रसक्तौ वेदान्तानामेवावरोधेच्छया नियमनेच्छया श्रोतव्येति वचनं वेदान्तानामेव विचारः कर्त्तव्य इत्यमुमर्थं प्राहेति वार्त्तिकार्थः। घटादिवृत्तीनां तु चैतन्यविषयकत्वेऽपि वेदान्तजन्यत्वाभावेन श्रोतव्यविधिसिद्धनियमादृष्टसाहित्याभावात् न मूलाज्ञाननिवर्त्तकत्वप्रसङ्ग इति भावः। अप्रतिबद्धमिति। नियमादृष्टेन प्रतिबन्धकदुरितस्य क्षीणत्वादिति भावः।

अन्येतु तत्त्वमस्यादिवाक्यजन्यं जीवब्रह्माभेदगोचरमेव ज्ञानं मूलाज्ञाननिवर्त्तकं मूलाज्ञानस्य तदभेदगोचरत्वादिति न चैतन्यस्वरूपमात्रगोचरात् घटादिज्ञानात्तन्निवृत्तिप्रसङ्गः।

न चाभेदस्य तत्त्वावेदकप्रमाणबोध्यस्य चैतन्यातिरेके द्वैतापत्तेश्चैतन्यमात्रमभेद इति तद्गोचरं घटादिज्ञानमप्यभेदगोचरमिति वाच्यम्।

---

तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति नारदवचनदर्शनात् तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः। तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनमिति भगवत्पादीयवचनदर्शनाच्च मूलाज्ञानस्य जीवब्रह्माभेदावारकत्वाच्च जीवब्रह्मणोरैक्यलक्षणतादात्म्यविषयकं यज्ज्ञानम् इदमेव मुक्तिसाधनम्। अतो नोक्तातिप्रसङ्ग इति समाधानान्तरं दर्शयति अन्येत्विति इतीति। वाक्यजन्याभेदज्ञानमेवाज्ञाननिवर्त्तकमिति स्थिते तदभेदागोचरात् घटादिज्ञानात् न मूलाज्ञाननिवृत्तिप्रसङ्ग इत्यर्थः।

न चेति। जीवब्रह्माभेदश्चैतन्यापेक्षया अतिरिक्त इति वक्तुं न शक्यते। तथा सति वेदान्ततात्पर्य्यगोचरस्य अभेदस्य सत्यत्वावश्यम्भावेन चैतन्यस्याद्वितीयत्वहानापत्तेर्वेदान्ततात्पर्य्यविषयस्याभेदस्यासत्यत्वे वेदान्तानां तत्त्वावेदकत्वलक्षणस्य प्रामाण्यस्य सिद्धान्तसम्मतस्य भङ्गापत्तेरित्यर्थः। अत्र तत्पदं परमार्थवस्तुपरम्।

न हि अभेदज्ञानमिति विषयतो विशेषं ब्रूमः किन्तु तत्त्वम्पदवाच्यार्थधर्मिद्वयपरामर्शादिरूपकारणविशेषाधीनेन स्वरूपसम्बन्धविशेषेण चैतन्यविषयत्वमेव तदभेदज्ञानत्वम् ।

---

नहीति । घटादिज्ञाने चैतन्यविषयकेऽपि जीवब्रह्माभेदो न विषयः महावाक्यार्थज्ञाने तु तयोरभेदो विषय इत्येवं घटादिज्ञानापेक्षया महावाक्यजन्यज्ञानस्य विषयतो विशेषं न ब्रूमः येन उक्तदोषतादवस्थ्यं स्यादित्यर्थः । ननु इदं रजतमिति भ्रमे यावानधिष्ठानांशो भासते तावदपेक्षया अधिकशुक्तित्वादिविशेषविषयकस्य शुक्त्यादिज्ञानस्य रजतादिभ्रमविरोधित्वं दृष्टम् । तथा सन् घटः स्फुरति घट इत्यादिभ्रमेषु यावदधिष्ठानभूतं चैतन्यं विषयः तावदपेक्षया अधिकाभेदविषयकत्वस्य वाक्यजन्यज्ञानेऽनभ्युपगमे वाक्योत्थज्ञानस्य भ्रमनिवर्त्तकत्वमेव न स्यात् । अतो विषयतो विशेषोऽभ्युपगन्तव्य इति शङ्कते किन्त्विति । भ्रमाधिकविषयाणामेव ज्ञानानां भ्रमनिवर्त्तकत्वमिति नियमो नास्ति । भ्रमानधिकविषयाणामपि भ्रमनिवर्त्तकत्वदर्शनेन व्यभिचारात् । तथाहि वस्तुतो घोषाधारभूते गङ्गातीरे यस्य तटाकतीरत्वभ्रमेण तटाकतीरे घोष इति भ्रमोऽस्ति तं प्रति गङ्गायां घोष इति वाक्यप्रयोगे सति तस्माद्वाक्यात् तस्य पुरुषस्य गङ्गातीरे घोष इति बोधो जायते । तेन च बोधेन तस्य गङ्गातीरे तटाकतीरत्वभ्रमो निवर्त्तते । न च तत्र भ्रमविषयगङ्गातीरांशे भ्रमापेक्षया वाक्यजन्यबोधे कश्चिद् विशेषो विषयो दृष्टः । न च तत्र वाक्यजन्यज्ञाने तटाकतीर-

व्यावर्त्तकस्य गङ्गातीरत्वरूपविशेषस्य विषयत्वदर्शनाद्विशेषाविषयकत्वमसिद्धमिति वाच्यम्। यत्र तीरत्वमात्रप्रकारकतात्पर्य्येण गङ्गायां घोष इति प्रयोगः तत्रैव तस्य भ्रान्तस्य तात्पर्य्यग्रहस्य तत्र गङ्गातीरत्वप्रकारकबोधाभावेऽपि भ्रमनिवृत्तिदर्शनेन व्यभिचारश्रौव्यात्। तथा येन केनचित् कपालेन तुषोपवापः कर्त्तव्य इति भ्रमवन्तं पुरुषं प्रति कपालत्वमात्रप्रकारकतात्पर्य्येण प्रयुक्तात् तन्मात्रतात्पर्य्यवत्तया गृहीतात् पुरोडाशकपालेन तुषानुपवपतीति वाक्यात् कपालेन तुषोपवापः कर्त्तव्य इत्येव तस्य पुरुषस्य बोधो जायते। तत्र कपालांशे कपालान्तरव्यावर्त्तकविशेषाग्रहणेऽपि पुरोडाशकपालातिरिक्तकपालेषु तुषोपवापसाधनत्वभ्रमनिवृत्तिदर्शनेन तत्रापि व्यभिचारात्। तस्मात्तीरे घोष इति शाब्दबोधस्य गङ्गातीरत्वरूपविशेषविषयकत्वाभावेऽपि तद्धेतुपदार्थोपस्थितिकाले तीरस्य गङ्गासम्बन्धित्वेनोपस्थितत्वात् तदुपस्थितिमहिम्ना वस्तुगत्या गङ्गातीरविषयकस्य भ्रमानधिकविषयस्यापि तस्य भ्रमनिवर्त्तकत्वमिति वक्तव्यम्। तथा कपालेन तुषोपवापः कर्त्तव्य इति शाब्दबोधस्य स्वयं कपालान्तरव्यावर्त्तकविशेषविषयकत्वाभावेऽपि तादृशशाब्दबोधहेतुपदार्थोपस्थितिकाले कपालस्य पुरोडाशसम्बधित्वेनोपस्थितिसत्त्वात् तदुपस्थितिमहिम्ना तस्य भ्रमानधिकविषयस्यापि भ्रमनिवर्त्तकत्वमिति वक्तव्यम्। तथा च ज्ञानस्य भ्रमविरोधित्वे सामग्रीविशेषप्रयोज्यत्वं प्रयोजकं न तु भ्रमाधिकविषयत्वम्। व्यभिचारात्। किञ्च महावाक्यजन्यज्ञानस्य संसारमूलभ्रमविरोधित्वं श्रुतिस्मृतिविद्वदनुभवैः सिद्धं महावाक्यानां च चैतन्यस्वरूपमात्रबोधकत्वम्। द्वितीयपरिच्छेदे मुक्तिसाधनमहावाक्यजन्यज्ञानं प्रति चैतन्यमात्ररूपविषयनियामकसुत्युदाहरणेनास्माभिः साधितम्। प्रपञ्चितं च

यथा हि विशेषणविशेष्यतत्सम्बन्धगोचरत्वाविशेषेऽपि विशिष्टज्ञानस्य विशेषणज्ञानादिकारणविशेषाधीनस्वरूपसम्बन्धविशेषेण तन्नितयगोचर-

---

निबन्धनेषु एतत्। तथा च शुक्तिरजतादिस्थले भ्रमाधिकविषयकशुक्तिज्ञानादौ भ्रमविरोधिनि भ्रमाधिकविषयत्वस्येव दोषभावादिघटितसामग्रीविशेषाधीनत्वस्यापि दृष्टत्वेन अख एडार्थकवेदान्तानुसारेण पूर्वोदाहृतव्यभिचारस्थलानुरोधेन च ज्ञानस्य भ्रमविरोधित्वे सामग्रीविशेषाधीनत्वमेवानुगतं प्रयोजकं कल्पयितुं युक्तं न तु भ्रमाधिकविषयत्वमित्यभिप्रेत्य महावाक्यार्थज्ञानस्य भ्रमानधिकविषयस्यापि भ्रमनिवर्त्तकत्वं सम्भवतीति समाधत्ते तत्त्वमिति। तत्त्वम्पदयोर्वाच्यार्थभूतौ जीवेश्वरावेव धर्मिद्वयम्। तस्य तत्त्वम्पदाभ्यां प्रथमं शक्त्या स्मृतिरूपः परामर्शः तदनन्तरं तत्त्वम्पदसामानाधिकरण्यबलात् जीव ईश्वराभिन्न इति तयोर्विशेषणविशेष्यभावेनावगतिः, तदनन्तरं च विशिष्टयोरैक्यं न सम्भवतीति विरोधप्रतीतिः, तदनन्तरं च तत्त्वम्पदाभ्यां वाच्यार्थरूपविशिष्टान्तर्गतयोर्विशेष्यचैतन्यांशयोरभेदयोग्ययोः लक्षणया प्रतीतिः, ततश्च विशेष्यद्वयाभेदगोचरशाब्दबोध इति क्रममभिप्रेत्यादिपदम्। वाक्यजन्यज्ञानस्य स्वविषयचैतन्येन सह यः स्वरूपसम्बन्धविशेषः सामग्रीविशेषाधीनत्वप्रयुक्तः तेन सम्बन्धेन चैतन्यगोचरत्वं घटज्ञानादिव्यावृत्तं तदेव तस्याभेदज्ञानत्वं तद्बलादेव तस्य मूलाज्ञानमिथ्याज्ञानादिविरोधित्वमित्यर्थः।

महावाक्यजन्यज्ञानस्य घटादिज्ञानापेक्षया चैतन्यांशे विषयतो विशेषाभावेऽपि सामग्रीविशेषादेव घटादिज्ञानापेक्षया

त्वमेव समूहालम्बनव्यावृत्तं विशिष्टज्ञानत्वं यथा वा स्थाणुत्वपुरुषत्ववानिति आहार्यवृत्तिव्यावृत्तं संशयत्वं विषयतो विशेषानिरूपणात् तथा घटादावपि सोऽयं घट इत्यादिज्ञानस्य स्वरूपसम्बन्धविशेषेण घटादिविषयत्वमेव केवलघटशब्दादिजन्यज्ञानव्यावृत्तं तदभेदज्ञानत्वम् अतिरिक्ताभेदानिरूपणात् ।

---

भेदज्ञानत्वरूपे वैलक्षण्ये दृष्टान्तमाह यथा हीति विशिष्टज्ञानस्येति । दण्डी पुरुष इति ज्ञानस्येत्यर्थः । विशेषणविशेष्ययोरसंसर्गाग्रह आदिपदार्थः । समूहालम्बनेति । दण्डपुरुषसंयोगा इति ज्ञानेत्यर्थः । तदुक्तं चिन्तामणिकृता कारणकृत इति । विशिष्टज्ञानस्य समूहालम्बनापेक्षया विशेषणज्ञानादिरूपकारणकृतो विशेष इति तदर्थः । स्थाणुत्वेति । स्थाणुत्वविरुद्धपुरुषत्ववानिति निश्चयः संशयसमानविषयको य आहार्यवृत्तिरूपः तद्व्यावृत्तमित्यर्थः । विशेषदर्शनदशायामनाहार्यनिश्चयासम्भवादाहार्यत्युक्तम् । विषयत इति । विशिष्टज्ञाने स्थाणुः पुरुषो वेति संशये चेति शेषः । न केवलं तत्त्वमसिवाक्यजन्यज्ञानस्याभेदज्ञानत्वे इयं रीतिः । सोऽयं घटः सोऽयं देवदत्त इत्यादिवाक्यजन्यज्ञानस्यापि केवलघटशब्ददेवदत्तशब्दादिजन्यज्ञानव्यावृत्ताभेदज्ञानत्वेऽपि इयं रीतिरनुसर्त्तव्येत्याह तथा घटादावपीति अतिरिक्तेति । केवलघट-शब्ददेवदत्त-शब्दादिजन्यज्ञानविषयघटस्वरूपापेक्षया सोऽयमिति वाक्यगम्याभेदस्यातिरिक्तत्वे मानाभावात् । तथा च विषयतो विशेषासम्भवात् सोऽयं घट इत्यादावपि तत्त्वमसि

अभावसादृश्यादीनामधिकरणप्रतियोग्यादिभिः स्वरूपसम्बन्धयुक्तानामधिकरणेनाधाराधेयभावरूपः स्वरूपसम्बन्धविशेषः प्रतियोगिना प्रतियोग्यनुयोगिभावरूप इत्यादिप्रकारेण स्वरूपसम्बन्धे अवान्तरविशेषकल्पनावत् वृत्तीनां विषयेऽपि संयोगतादात्म्ययोरतिप्रसक्त्या विषयैर्विषयविषयिभावरूपस्वरूपसम्बन्धवतीनां विषयविशेषनिरूपणासम्भवे क्लृप्त एव स्वरूपसम्बन्धे अवान्तरविशेषकल्पनेनाभेदज्ञानत्वादिपरस्परवैलक्षण्यनिर्वाहाच्च।

---

इत्यत्रैव सोऽयमिति पदद्वयवाच्यार्थरूपधर्मिद्वयपरामर्शादिरूपकारणविशेषाधीनस्वरूपसम्बन्धविशेषेण घटादिस्वरूपविषयकत्वमेव घटाद्यभेदज्ञानत्वं नान्यदिति वक्तव्यमिति भावः। ननु केवलघटशब्दादिजन्यज्ञानस्यापि विषयेण स्वरूपसम्बन्ध एव। तथाच कथं स्वरूपसम्बन्धकृताभेदज्ञानत्वादिव्यवस्था। न च वृत्तिज्ञानानां विषयैः सह विषयविषयिभावप्रयोजकस्वरूपसम्बन्धानामविशेषेऽपि तेषु एव विषयतज्ज्ञानस्वरूपात्मकसम्बन्धेषु सामग्रीविशेषाधीनत्वप्रयुक्तपरस्परवैलक्षण्यकल्पनया व्यवस्थोपपादनं कर्त्तुं शक्यत इति वाच्यम्।

स्वरूपसम्बन्धेषु वैलक्षण्यस्य क्वापि अदृष्टत्वेन तथाकल्पनानुपपत्तेरित्यत आह अभावसादृश्यादीनामिति। ननु वृत्तीनां विषयैः सह विषयविषयिभावः स्वरूपसम्बन्धकृत एव न भवति किन्तु संयोगादिकृतः। तथा च तासां तैः

सह स्वरूपसम्बन्धानामेवासिद्धत्वात् तेषु वैलक्षण्यात्मकविशेष-कल्पना दूरापास्तेति अत आह संयोगेति। वृत्ति-संयोगस्य वृत्तिविषयत्वप्रयोजकत्वे चक्षुर्गोलकादेरपि घटा-दिवृत्तिसंयोगित्वेन तद्विषयत्वप्रसङ्गात् वृत्तितादात्म्यस्य वृत्तिविषयत्वप्रयोजकत्वे वृत्त्यधिष्ठानतया तद्वृत्तितादात्म्याप-न्नस्य घटाद्यवच्छिन्नचैतन्यस्य घटादिवृत्तिविषयत्वसम्भवेऽपि घटादेः वृत्तितादात्म्यरहितस्य तदविषयत्वप्रसङ्गात् तद्वृत्तिपरि-णाम्यन्तःकरणस्य घटादिवृत्तिविषयत्वप्रसङ्गाच्च परिणामपरिणा-मिनोस्तादात्म्यादित्यर्थः। ननु तत्त्वमस्यादिवाक्यजन्यज्ञानस्य विषयेण सह यः स्वरूपसम्बन्धश्चैतन्यतद्गोचरज्ञानोभयस्वरूपा-त्मकः तत्र सामग्रीविशेषबलादपि विषयस्वरूपात्मके सम्बन्धे विशेषो निरूपयितुं न शक्यत इत्यत आह विषयविशेषनिरूप-णासम्भव इति। विषये निर्विशेषचैतन्यात्मके विशेषाधाना-सम्भवेऽपि स्वरूपसम्बन्धान्तर्गततया क्लृप्ते एव ज्ञानस्वरूपात्मके सम्बन्धे सामग्रीविशेषबलात् विशेषाधानसम्भवात् नोक्तदोष इति भावः। यद्वा वृत्तीनां विषयेऽपि संयोगतादात्म्ययोरति-प्रसक्त्या विषयविशेषनिरूपणाभावे विषयैर्विषयविषयिभाव-रूपस्वरूपसम्बन्धवतीनामिति सम्बन्धः। अभावसादृश्यादीनाम-धिकरणादौ इव वृत्तीनामपि विषये संयोगतादात्म्ययोरतिप्रस-क्तत्वेन ताभ्यां वृत्तीः प्रति विषयविशेषनियमनासम्भवे सति परिशेषाद्विषयविषयिभावप्रयोजकस्वरूपसम्बन्धवतीनामित्यर्थः। रूपपदं नियामकपरम्। विषयविषयिभावस्य स्वरूपसम्बन्धनिय-म्यत्वेन तयोरभेदस्य स्वरूपशब्दार्थस्यायोगात्। ननु संयोग-तादात्म्ययोर्विषयविशेषनियामकत्वाभावेऽपि वृत्तीनां विषये स्वरूपसम्बन्धवत्त्वं परिशेषात् न सिध्यति। स्वरूपसम्बन्धातिरिक्तस्य सम्बन्धान्तरस्य कल्पनोपपत्तेरित्यत आह क्लृप्त एवेति। स्वरूप-

एवञ्च ब्रह्मज्ञानस्याभेदाख्यकिञ्चित्संसर्गागोचरत्वानभ्युपगमान्न वेदान्तानामखण्डार्थत्वहानिरपीत्याहुः।

ननु घटादिज्ञानवत् ब्रह्मज्ञानस्यापि न मूलाज्ञाननिवर्त्तकत्वं युक्तम्। निवर्त्तकत्वे तदवस्थानासहिष्णुत्वरूपस्य विरोधस्य तन्त्रत्वात् कार्य्यस्य चोपादानेन सह तादृशविरोधाभावादिति चेन्न।

---

सम्बन्धस्य वृत्त्यादिस्वरूपतया तस्य क्लृप्तत्वात् क्लृप्त एव स्वरूपसम्बन्धे विशेषकल्पनायां लाघवं सम्बन्धान्तरं कल्पयित्वा तस्मिन् सम्बन्धान्तरे अभेदज्ञानत्वादिनिर्वाहकविशेषकल्पनायां गौरवम्। अतो वृत्तीनां विषयैः सह स्वरूपसम्बन्धत्वमेवेति भावः।

ननु तत्त्वमस्यादिवाक्यात् जीवस्य ब्रह्माभेदज्ञानोपगमे तदभेदस्यैव संसर्गविधया भानात् वेदान्तानां संसर्गागोचरप्रमितिजनकत्वरूपाखण्डार्थत्वाभ्युपगमहानिरित्येतत् चोद्यं निरवकाशमित्याह एवञ्चेति। महावाक्यजन्यज्ञानगताभेदज्ञानत्वस्यान्यथोपपादितत्वेन अभेदसंसर्गभानानपेक्षायां सत्यामित्यर्थः। हानिरपीति। घटादिवृत्तीनां मूलाज्ञाननिवर्त्तकत्वापत्तिर्नास्ति अखण्डार्थत्वहानिश्च नास्तीत्यपिशब्दार्थः।

वेदान्तजन्यज्ञानस्यापि मूलाज्ञाननिवर्त्तकत्वमाक्षिपति नन्विति तादृशेति। कार्य्यस्य लोके उपादानस्थितिविरोधित्वादर्शनादित्यर्थः। ब्रह्मगोचरवृत्तिं प्रति अन्तःकरणस्यैवोपादानत्वेन तां प्रति अज्ञानस्यानुपादानत्वात् तन्निवर्त्तकत्वं सम्भवतीति मत्वा आह नेति।

कार्य्यकारणयोरन्यत्र तादृशविरोधादर्शनेऽपि एकविषयज्ञानाज्ञानप्रयुक्तस्य तादृशविरोधस्यात्र सत्त्वात् कार्यकारणयोरप्यग्निसंयोगपटयोस्तादृश-विरोधस्य दृष्टेश्च ।

न चाग्निसंयोगे सति अवयवविभागप्रक्रियया असमवायिकारणसंयोगनाशादेव पटनाशो नाग्नि-संयोगादिति वाच्यम् ।

दग्धपटेऽपि पूर्वसंस्थानानुवृत्तिदर्शनेन मुद्ग-रचूर्णीकृतघटवदवयवविभागादर्शनात् तत्रावयव-विभागादिकल्पनाया अप्रामाणिकत्वात् ।

---

उपादानत्वमुपेत्याप्याह कार्य्येति । उपादानोपादे-ययोः निवर्त्त्यनिवर्त्तकभावप्रयोजकाविरोधो नास्तीति उत्सर्गः । स च ब्रह्मज्ञानतदुपादानस्थले अपोद्यते । निवर्त्त्यनिवर्त्तकभाव-प्रयोजकतया लोके क्लृप्तसमानविषयज्ञानाज्ञानभावस्य विशेष-रूपतया तेन सामान्यरूपस्य उपादानोपादेयभावप्रयुक्ताविरो-धस्य बाधोपपत्तेरित्यर्थः । लोके उपादानोपादेययोर्निवर्त्त्य-निवर्त्तकभावप्रयोजकविरोधादर्शनमसिद्धं चेत्याह कार्य्यकारण-योरपीति । अग्निसंयोगरूपकार्य्यस्य स्वोपादानपटनाशक-त्वदर्शनादित्यर्थः ।

ननु तत्राग्निसंयोगस्य नाशकत्वदर्शनं भ्रान्तिरिति मत्वा शङ्कते न च अग्नीति प्रक्रिययेति । अग्निसंयोगात् तन्तुषु क्रिया ततस्तेषां विभागः ततः तेषां पटासमवायि-कारणसंयोगनाशः ततः पटनाश इति वैशेषिकप्रक्रिया ।

नापि तत्र तन्तूनामपि दाहेन समवायिकारणनाशात् पटनाश इति युक्तम् । अंशुतन्त्वादिभिः सह युगपदेव पटस्य दाहदर्शनेन क्रमकल्पनायोगात् । यतोऽधस्तान्नावयवनाशस्तत्रावयवी अग्निसंयोगादेव नाशस्य वाच्यत्वात् ।

ब्रह्माकारवृत्तिनाशकनिरूपणम् ।

ननु अस्तु एतदेवं तथापि सविलासाज्ञाननाशकमिदं ब्रह्मज्ञानं कथं नश्येत् नाशकान्तराभावादिति चेत् न ।

---

तन्तुषु विभागप्रक्रियैव भ्रान्तिमूलेत्याह दग्धपटेऽपीति । पूर्वसंस्थानं संयुक्तावस्था । व्यतिरेकदृष्टान्तमाह मुद्गरेति । यथा मुद्गरचूर्णीकृतस्य घटस्यावयवेषु विभागो दृश्यते तथा पटदाहानन्तरं दग्धतन्तुषु विभागादर्शनेनेत्यर्थः । तत्रेति । तन्तुषु इत्यर्थः ।

वैशेषिकप्रक्रियान्तरमपि भ्रान्तिमूलमेवेत्याह नापीत्यादिना. तत्रेति । पटदाहस्थल इत्यर्थः । अग्निसंयोगस्य क्वचिदुपादानद्रव्यनाशकताया आवश्यकत्वात् पटनाशकत्वमपि तस्यैव इत्याह यत इति । यतो द्व्यणुकादयस्तावत् द्व्यणुकावयवस्य परमाणोर्न नाशः तत्र द्व्यणुके विद्यमानादग्निसंयोगादेव तदुपादानभूतद्व्यणुकनाशस्य वाच्यत्वात् । न च तत्रावयवविभागप्रक्रियया परमाणुद्वयसंयोगनाशादेव द्व्यणुकनाश इति वाच्यम् । अवयवावयविविभागप्रक्रियाया निरस्तत्वात् । तथाच अग्निसंयोगस्य स्वोपादानपटनाशकत्वदर्शनं न भ्रान्तिरिति भावः ।

नन्वस्तु एतदेवमिति । एतत् ब्रह्मज्ञानम् । एवम् अन्तःकरणद्वारा

यथा कतकरजः सलिलेन संयुज्य पूर्वसंयुक्तरजोऽन्तरविश्लेषं जनयत् स्वविश्लेषमपि जनयति तथा आत्मन्यध्यस्यमानं ब्रह्मज्ञानं पूर्वाध्यस्तसर्वप्रपञ्चं निवर्त्तयत् स्वात्मानमपि निवर्त्तयतीति केचित्।

अन्ये तु अन्यन्निवर्त्त्य स्वयमपि निवृत्तौ दग्धलोहपीताम्बुन्यायमुदाहरन्ति।

---

स्वोपादानाज्ञाननाशकमस्त्वित्यर्थः। तथापीति। ब्रह्मज्ञानस्य सविलासाज्ञाननाशकत्वेऽपि इत्यर्थः। सकार्य्याज्ञाननाशकस्याज्ञाननाशकाले अवशिष्यमाणस्य ब्रह्मज्ञानस्य नाशो न सिध्येत्। स्वस्य स्वनाशकत्वायोगात् नाशकान्तरानवशेषाच्चेत्यर्थः। प्रथमं ब्रह्मज्ञानव्यतिरिक्तस्य सकलस्य ब्रह्मज्ञानेन नाशः पश्चादवशिष्टस्य ब्रह्मज्ञानस्य नाश इति क्रमो नोपेयते किन्तु ब्रह्मज्ञानेन सविलासाज्ञाननाशकाले सविलासाज्ञानेन सहैव ब्रह्मज्ञानस्यापि नाश इत्युपेयते। ब्रह्मज्ञानस्यैव स्वनाशं प्रत्यपि हेतुत्वाभ्युपगमात्। न च एकस्यैव स्वपरविलापकत्वं न दृष्टमिति वाच्यम्। कतकरजसि दृष्टत्वादिति परिहरति।

यथेति पूर्वेति। कतकरजःसंयोगात् पूर्वं जलेन संयुक्तरजोऽन्तरैर्जलस्य विश्लेषमित्यर्थः। पूर्वाध्यस्तेति। ब्रह्मज्ञानाध्यासात् पूर्वेत्यर्थः।

अन्ये त्विति। यथा वह्नितप्तलोहपिण्डे प्रक्षिप्तमम्बु लोहगतमग्निं नाशयदात्मानमपि नाशयति तथा ब्रह्मज्ञानमपीत्यर्थः। ब्रह्मज्ञानस्य स्वातिरिक्तं सर्वं निवर्त्तयतः तदैव स्वस्यापि निवर्त्तने दग्धलोहेन पीताम्बुरूपं दृष्टान्तमुदाहरन्तीत्यक्षरार्थः।

अपरे तु अत्र दग्धतृणकूटदहनोदाहरणमाहुः।

न च ध्वंसस्य प्रतियोग्यतिरिक्तजन्यत्वनियमः। अप्रयोजकत्वात् निरिन्धनदहनादिध्वंसे व्यभिचाराच्च। न च ध्वंसस्य प्रतियोगिमात्रजन्यत्वेऽतिप्रसङ्गात् कारणान्तरमवश्यं वाच्यम्।

निरिन्धनदहनादिध्वंसेऽपि कालादृष्टेश्वरेच्छादिकारणान्तरमस्तीति वाच्यम्। अतिप्रसङ्गापरिज्ञानात्।

---

अपरे त्विति। यथा शुष्कतृणसमूहे प्रक्षिप्तो दहनस्तृणकूटं नाशयन्नात्मानमपि नाशयति तथा अज्ञानतत्कार्यसमुदाये समुत्पन्नो ब्रह्मप्रत्ययस्तन्नाशयन्नात्मानमपि नाशयतीत्यर्थः।

ननु दग्धदाह्यदहनादिन्यायेन ब्रह्मज्ञानादेव ब्रह्मज्ञाननाश इत्युपपादनमयुक्तम्। घटादिनाशे प्रतियोगिघटाद्यतिरिक्तमुद्गरपातादिकारणान्तरदर्शनेन ध्वंसस्य प्रतियोग्यतिरिक्तकारणजन्यत्वनियमादिति शङ्कते न च ध्वंसस्येति निरिन्धनेति। इन्धनानां निःशेषं नाशानन्तरं दहनस्य स्वत एव नाशदर्शनेन निरिन्धनदहनध्वंसे स्वाप्यव्यवहितपूर्वकालीनज्ञानादिध्वंसे च प्रतियोगिमात्रजन्ये व्यभिचाराच्चेत्यर्थः।

उक्तं व्यभिचारं पूर्ववादी परिहरति निरिन्धनेति। अतिप्रसङ्गस्यैवासिद्ध्या ध्वंसे प्रतियोग्यतिरिक्तकारणजन्यत्वनियमस्याप्रयोजकत्वमित्याशयेन दूषयति सिद्धान्ती अतिप्रसङ्गापरिज्ञानादिति।

न च घटादिध्वंसस्यापि कारणान्तरनिरपेक्षत्वं स्यादित्यतिप्रसङ्गः। ध्वंसमात्रे कारणान्तरनैरपेक्ष्यानभिधानात्। न च घटध्वंसदृष्टान्तेन ब्रह्मज्ञानध्वंसस्य कारणान्तरापेक्षा साधनम्। तद्दृष्टान्तेन मुद्गरपतनापेक्षाया अपि साधनापत्तेः।

नापि ज्ञानध्वंसत्वसाम्याद् घटज्ञानादिध्वंसस्यापि कारणान्तरनैरपेक्ष्यं स्यादित्यतिप्रसङ्गः। सेन्धनानलध्वंसस्य जलसेकादिदृष्टकारणापेक्षत्वे-

---

ननु कुतोऽपरिज्ञानमिति चेत् तत्र वक्तव्यं ब्रह्मज्ञानध्वंसस्य प्रतियोग्यतिरिक्ताजन्यत्वे घटादिध्वंसोऽपि प्रतियोग्यतिरिक्तकारणानपेक्षः स्यादित्यतिप्रसङ्गो वा, घटादिध्वंसवत् ब्रह्मज्ञानध्वंसोऽपि प्रतियोग्यतिरिक्तकारणापेक्षः स्यादिति अतिप्रसङ्गो वा, ब्रह्मज्ञानध्वंसवत् घटज्ञानादिध्वंसोऽपि कारणान्तरानपेक्षः स्यादित्यतिप्रसङ्गो वा, ब्रह्मज्ञानस्य स्वोत्पत्तिद्वितीयक्षण एव नाशः स्यादित्यतिप्रसङ्गो वा विवक्षित इति। तत्राद्यमनूद्य दूषयति न चेति ध्वंसमात्र इति। ध्वंसत्वावच्छिन्न इत्यर्थः। अनभिधानादिति। न च सिद्धान्तिना तथानभिधानेऽपि ध्वंसत्वाविशेषात् तत्र तदापाद्यते इति वाच्यम्। अप्रयोजकत्वादिति भावः। द्वितीयमतिप्रसङ्गेन दूषयति घटध्वंसदृष्टान्तेनेति। ध्वंसत्वहेतुनेति शेषः।

तृतीयमनूद्य अप्रयोजकत्वेन दूषयति नापि ज्ञानध्वंसत्वसाम्यादिति। ब्रह्मज्ञानध्वंसदृष्टान्तेनेति शेषः। सुषुप्तीति। सुषुप्तिपूर्वज्ञानादिगुणस्य नाशकगुणान्तरापेक्षायां तस्यापि

ऽपि निरिन्धनानलध्वंसस्य तदनपेक्षत्ववज्जाग्रज्ज्ञानध्वंसस्य विरोधिविशेषगुणान्तरापेक्षत्वेऽपि सुषुप्तिपूर्वज्ञानध्वंसस्य तदनपेक्षत्ववच्च मूलाज्ञाननिवर्त्तकज्ञानध्वंसस्य कारणान्तरसापेक्षत्वेऽपि तन्निवर्त्तकज्ञानध्वंसस्य तदनपेक्षत्वोपपत्तेः।

नापि कारणान्तरनैरपेक्ष्ये स्वोत्पत्त्युत्तरक्षण एव नाशः स्यादित्यतिप्रसङ्गः। इष्टापत्तेः। तदुत्पत्त्युत्तरक्षणे एव ब्रह्माध्यस्तनिखिलप्रपञ्चदाहेन तदन्तर्गतस्य तस्यापि तदैव दाहाभ्युपगमात्।

निरिन्धनदहनध्वंसन्यायेन ब्रह्मज्ञानध्वंसस्यापि कालादृष्टेश्वरेच्छादिकारणान्तरजन्यत्वेऽप्यविरोधाच्च।

---

नाशकात्मगुणान्तरकल्पनापत्त्या सुषुप्त्युच्छेदप्रसङ्गः स्यात् तत्परिहाराय सुषुप्तिपूर्वज्ञानादिगुणस्य नाशकान्तरानपेक्षत्वं वक्तव्यमिति भावः। मूलाज्ञाननिवर्त्तकमिति। ब्रह्मज्ञानमित्यर्थः।

चतुर्थमतिप्रसङ्गमनूद्य तस्येष्टत्वमाह नापि कारणान्तरनैरपेक्ष्य इति। ब्रह्मज्ञानध्वंसस्य इति शेषः।

ननु उदाहृतनिरिन्धनदहनध्वंसादौ जलसेकादिविशेषकारणानां व्यभिचारदर्शनेऽपि साधारणकारणानां व्यभिचारादर्शनेन ब्रह्मज्ञानध्वंसस्यापि साधारणकारणापेक्षा दुर्वारेत्यत आह निरिन्धनदहनध्वंसन्यायेनेति।

सर्वप्रपञ्चनिवृत्त्यनन्तरमेकशेषस्य ब्रह्मज्ञानस्य निवृत्तिरित्यनभ्युपगमेन युगपत् सर्वदाहे पूर्वक्षणे चिदविद्यासम्बन्धरूपस्य द्रव्यान्तररूपस्य वा कालस्य ईश्वरप्रसादरूपस्य अन्तःकरणगुणविशेषरूपस्य वा अदृष्टस्यान्येषां च सत्त्वात्।

न च तत्र ज्ञानातिरिक्तकारणापेक्षणे ब्रह्मज्ञानस्यामिथ्यात्वप्रसङ्गः ज्ञानैकनिवर्त्यत्वं मिथ्यात्वमित्यभ्युपगमादिति वाच्यम्।

---

ननु प्रथमक्षणे ब्रह्मज्ञानस्य जन्म द्वितीयक्षणे सविलासाज्ञाननिवृत्तिः तृतीयक्षणे ब्रह्मज्ञानस्य निवृत्तिरिति क्रमे सति ब्रह्मज्ञाननाशात् पूर्वक्षणे कालादृष्टादीनामसत्त्वात् कथं तेषां ब्रह्मज्ञाननाशहेतुत्वाभ्युपगमे विरोधाभाव इत्यत आह सर्वप्रपञ्चेति। स्वमतेनाह चिदविद्येति। परमतेनाह द्रव्यान्तरेति। यद्वा स्वमतेऽपि ईश्वरस्य कालत्वमभिप्रेत्याह द्रव्यान्तरेति। स्वमतेनैवादृष्टस्य द्विप्रकारत्वमाह ईश्वरेति। प्रसादग्रहणमुपलक्षणम्। पुण्यमीश्वरप्रसादरूपं पापमीश्वरक्रोधरूपमिति द्रष्टव्यम्। अन्तःकरणेति। आत्मनः स्वमते निर्गुणत्वादिति भावः। अन्येषाञ्चेति। ईश्वरदिगादीनामपि इत्यर्थः।

न च तत्रेति। ब्रह्मज्ञानध्वंस इत्यर्थः। ज्ञानैकनिवर्त्यत्वं हि ज्ञानातिरिक्तानिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वरूपं यथाश्रुतं न भवति। ज्ञानसाध्यायाम् अज्ञाननिवृत्तौ ज्ञानातिरिक्तस्य प्रतियोगिनोऽपि हेतुत्वात्।

ज्ञानाघटितसामग्र्यनिवर्त्त्यत्वे सति ज्ञाननिवर्त्त्यत्वस्य तदर्थत्वात्। नान्यः पन्था इति श्रुतेरपि तत्रैव तात्पर्य्यात्। अतो युक्त एव दग्धदाह्यदहनादिन्यायः।

केचित्तु वृत्तिरूपं ब्रह्मज्ञानं नाज्ञानतन्मूल-

---

किन्त्वन्यदेव तदित्याह ज्ञानाघटितेति। ज्ञानाघटिता या सामग्री तदनिवर्त्त्यत्वे सति इत्यर्थः। प्रपञ्चसत्यत्वमतेऽपि घटादेर्ज्ञाननिवर्त्त्यत्वमस्ति। घटं नाशयामीत्यादिज्ञानपूर्वकं मुद्गरपातादिना तन्नाशदर्शनादिति तद्वारणाय सत्यन्तम्। घटादिनाशस्य ज्ञानपूर्वकत्वनियमाभावेन ज्ञानाघटितसामग्रीनिवर्त्त्यजातीये घटादौ तदघटितसामग्र्यनिवर्त्त्यत्वस्याभावात्। न च परमते नाशमात्रस्येश्वरज्ञानघटितसामग्रीसाध्यत्वात् तदीयज्ञानमादाय कार्य्यमात्रे ज्ञानाघटितसामग्र्यनिवर्त्त्यत्वे सति ज्ञाननिवर्त्तत्वमस्तीति नैतत् मिथ्यात्वनिर्वचनमिति वाच्यम्। लक्षणे ज्ञानपदस्य जैवज्ञानपरत्वात्। आत्मनि अतिव्याप्तिवारणाय विशेष्यमिति भावः। ननु कार्य्यमात्रे कालादृष्टादेः कारणत्वमित्यङ्गीकृत्य ब्रह्मज्ञानध्वंसेऽपि कालादृष्टादेः कारणत्वाभ्युपगमे मूलाज्ञानध्वंसरूपे मोक्षेऽपि कालादेः कारणत्वं स्यात्। कार्य्यत्वाविशेषात्। न चेष्टापत्तिः। नान्यः पन्था इति श्रुतिविरोधादित्यत आह नान्यः पन्था इतीति। अस्याः श्रुतेः ज्ञानमेकमेव मोक्षसाधनमित्यत्र न तात्पर्य्यम्। किन्तु मोक्षस्य ज्ञानाघटितं किमपि साधनं नास्तीत्यत्र तात्पर्य्यम्। अतो न श्रुतिविरोध इत्यर्थः। अत इति। श्रुतिविरोधादिरूपबाधकाभावादित्यर्थः।

प्रपञ्चनिवर्हकम् । अज्ञानस्य प्रकाशनिवर्त्यत्व-नियमेन जडरूपवृत्तिनिवर्त्यत्वायोगात् । किन्तु तदारूढचैतन्यप्रकाशस्तन्निवर्त्तकः ।

स्वरूपेण तस्याज्ञानादिसाचितया तदनिवर्त्तकत्वेऽपि अखण्डाकारवृत्त्युपारूढस्य तन्निवर्त्तकत्वोपपत्तेः । तृणादेर्भासिकाप्येषा सूर्य्यदीप्तिस्तृणं दहेत् । सूर्य्यकान्तमुपारुह्य तं न्यायं तत्र योजयेत् । इत्यभियुक्तोक्तेः ।

एवं च यथा किञ्चित् काष्ठमुपारुह्य ग्रामनगरादिकं दहन् वह्निः दहत्येव तदपि काष्ठं तथा

---

वृत्तिरूपस्य ब्रह्मज्ञानस्याविद्यादिनाशकत्ववदेव स्वनाशकत्वमप्यस्तीत्युक्तम् । इदानीं वृत्तिरूपब्रह्मज्ञानस्य अविद्यानाशकत्वं स्वनाशकत्वं वा नास्ति किन्तु तद्वृत्त्यारूढचैतन्यमेव तद्वृत्तिसहितसर्वनाशकमिति मतमाह केचित्त्विति ।

ननु चैतन्यस्याज्ञानादिसाधकत्वात् कथं तस्य नाशकत्वमत आह स्वरूपेणेति । तत्र दृष्टान्तं श्लोकेन दर्शयति तृणादेरिति । एषा प्रत्यक्षा सूर्य्यदीप्तिः स्वरूपेण तृणादेः प्रकाशिकापि सूर्य्यकान्तमणिमुपारुह्य तृणादिकं दहतीति प्रत्यक्षसिद्धं तन्न्यायं तत्र चैतन्ये योजयेत् । चैतन्यं स्वरूपेणाज्ञानादिप्रकाशकमपि वृत्तिविशेषसंसृष्टं सत् अज्ञानादेर्नाशकमिति निश्चिनुयादेव न तु साधकस्य कथं घातकत्वमित्यसम्भावनया प्रमाणसिद्धमर्थमुपेक्षेतेति श्लोकतात्पर्य्यम् ।

चरमवृत्तिमुपारुह्य निखिलं प्रपञ्चमुन्मूलयन् अखण्डचैतन्यप्रकाशस्तन्निवर्त्तनेऽपि प्रगल्भत इति न तन्नाशे काचिदनुपपत्तिरित्याहुः।

अन्ये तु ब्रह्मज्ञानमज्ञानस्यैव निवर्त्तकम्। ज्ञानाज्ञानयोरेव साक्षाद्विरोधात्। प्रपञ्चस्य तूपादाननाशान्नाश इति प्रपञ्चान्तर्गतस्य ब्रह्मज्ञानस्यापि तत एव नाशः। न च प्रपञ्चस्य ज्ञानानिवर्त्त्यत्वे मिथ्यात्वानुपपत्तिः। प्रपञ्चनिवृत्तेः साक्षाज्ज्ञानजन्यत्वाभावेऽपि ज्ञानजन्याज्ञान-

---

ननु मण्यारूढा सूर्य्यदीप्तिः मणिव्यतिरिक्तमेव तृणादिकं दहति न तु मणिमपि। तथा वृत्त्यारूढं चैतन्यं वृत्तिव्यतिरिक्तमेवाज्ञानादिकं नाशयेत् न वृत्तिमपि। तथा च ब्रह्मज्ञानं कथं नश्येत् नाशकान्तराभावादिति शङ्कायाः समाधानं कथं लब्धं तत्राह एवञ्चेति। चैतन्यस्य वृत्त्यारूढस्य नाशकत्वे प्रकाशाप्रकाश्ययोरेव लोके निवर्त्त्यनिवर्त्तकभावदर्शनात् प्रकाशस्यापि सहकारिविशेषवशेन नाशकत्वाविरोधाच्चेति युक्तिद्वयेन सिद्धे सति इत्यर्थः। उन्मूलयन्निति। मूलभूताज्ञानेन सह नाशयन्नित्यर्थः। प्रगल्भत इति। समर्थो भवतीत्यर्थः। तन्नाश इति। चरमवृत्तिनाश इत्यर्थः।

अज्ञाननाश एव ब्रह्मज्ञाननाशहेतुरिति मतं दर्शयति अन्ये त्विति अज्ञानस्यैवेति। उक्तञ्च पञ्चपादिकायां ज्ञानमज्ञानस्यैव निवर्त्तकमिति। साक्षादिति। विरोधप्रयोजकस्य समानविषयत्वा-

नाशजन्यत्वात् साक्षात् परम्परया वा ज्ञानैक-निवर्त्त्यत्वं मिथ्यात्वमित्यङ्गीकारात्।

एवञ्च तत्त्वसाक्षात्कारोदयेऽपि जीवन्मुक्तस्य देहादिप्रतिभास उपपद्यते।

प्रारब्धकर्मणा प्रतिबन्धेन तत्त्वसाक्षात्कारो-दयेऽपि प्रारब्धकर्मतत्कार्य्यदेहादि-प्रतिभासानु-वृत्त्युपादानाविद्यालेशानुवृत्त्युपपत्तेः।

---

देरज्ञान एव सम्भवादिति भावः। तत एवेति। उपादाननाशादेव इत्यर्थः। साक्षात् परम्परया वेति। मूलाज्ञानमात्रस्य ज्ञानैक-निवर्त्त्यतया मिथ्यात्वसिद्धौ मूलाज्ञानातिरिक्तजड़मात्रस्य तद-धीनतया स्वयं साक्षाज्ज्ञाननिवर्त्त्यत्वाभावेऽपि कृत्स्नप्रपञ्चस्य मिथ्यात्वसिद्धिरप्रत्यूहेत्यपि मन्तव्यम्।

अस्य मतस्य जीवन्मुक्तिशास्त्रानुगृहीतत्वं दर्शयति एवञ्चे-त्यादिना। अज्ञानातिरिक्तस्य जड़स्य ज्ञानेन सह साक्षा-द्विरोधाभावे सति इत्यर्थः।

ननु तत्त्वसाक्षात्कारेण अज्ञाननाशे सति उपादानाभावाद्देहा-देरवस्थानासम्भवे सति कथं विद्योदये देहादिप्रतिभास इत्यत आह प्रारब्धेति। तत्त्वसाक्षात्कारोदये सति अज्ञानस्य निःशेषेण निवृत्तिप्रसक्तौ प्रारब्धकर्मकृतप्रतिबन्धवशादज्ञानलेशस्य निवृ-त्तिर्न सम्भवति। तल्लेशानुवृत्तौ च तत्त्वज्ञानानन्तरमपि प्रारब्ध-कर्मणस्तत्कार्य्यस्य देहादिप्रतिभासस्याप्यनुवृत्तिर्युज्यते। देहाद्यु-पादानभूतस्याविद्यालेशस्यानुवृत्तेरित्यर्थः।

अज्ञानवत् प्रपञ्चस्यापि साक्षात् ब्रह्मसाक्षात्कारनिवर्त्त्यत्वे नायमुपपद्यते। अतिविरोधिनि ब्रह्मसाक्षात्कारे सति प्रारब्धकर्मणः स्वयमवस्थानासम्भवेनाविद्यालेशनिवृत्तिप्रतिबन्धकत्वायोगादित्याहुः।

इति तृतीयः परिच्छेदः।

---

# चतुर्थः परिच्छेदः।

अविद्यालेशनिरूपणम्।

अथ कोऽयमविद्यालेशो यदनुवृत्त्या जीवन्मुक्तिः।

---

पूर्वमते जीवन्मुक्त्यसिद्धिमाह अज्ञानवदिति नायमिति। जीवन्मुक्तस्य देहादिप्रतिभास इत्यर्थः। विरोधिनीति। अज्ञानस्येव प्रारब्धकर्मणोऽपि साक्षाद्विरोधिनीत्यर्थः।

इति शास्त्रसिद्धान्तलेशसंग्रहे तृतीयः परिच्छेदः।

---

अथ कोऽयमिति। तृतीयपरिच्छेदे ब्रह्मज्ञानरूपं मुक्तिसाधनं सपरिकरं निरूपितम्। इदानीं तत्फलभूता मुक्तिर्निरूप्यते। तथाच फलनिरूपणपरस्य चतुर्थपरिच्छेदस्य साधननिरूपणपरतृतीयपरिच्छेदानन्तर्य्यमथशब्दार्थः। लेशो नामावयवः। न

आवरणविक्षेपशक्तिमत्या मूलाविद्यायाः प्रारब्धकर्मवर्त्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंश इति केचित्।

क्षालितलशुनभाण्डानुवृत्तलशुनवासनाकल्पोऽविद्यासंस्कार इत्यन्ये। दग्धपटन्यायेनानुवृत्ता मूलाविद्या एवेत्यपरे।

---

च अनाद्यविद्याया अवयवोऽस्ति। सावयवस्य कार्य्यत्वनियमात्। अतोऽविद्यालेशो न सम्भवतीति किंशब्दार्थः।

अविद्याया अनादित्वाविरोधेन लेशशब्दार्थं मतभेदेनाह आवरणेति। आवरणविक्षेपशक्तिद्वयवत्या अविद्याया वृत्तिसाक्षात्कारेण आवरणशक्तेर्नाशः, विक्षेपशक्तिमत्या अविद्यायाः प्रारब्धकर्मरूपप्रतिबन्धकक्षये सति पूर्वमेव निवृत्तावरणतया स्थितं चैतन्यं प्रतिबन्धापगमकाले नाशकमित्युपगमात् तत्त्वज्ञानेन विक्षेपशक्तिमदविद्यारूपस्य अविद्यालेशस्य अनिवृत्तौ तस्य पश्चात् को निवर्त्तक इति शङ्काया अनवकाश इति बोध्यम्।

क्षालितेति। तत्त्वज्ञानेनान्तःकरणाद्युपादानभूताविद्याया निवृत्तावपि अविद्याजन्यः कश्चिद्देहादिस्थितिप्रयोजको वासनाविशेष इत्यर्थः। न च उपादाननाशे कथं कार्य्यस्थितिरिति वाच्यम्। पटादिनाशक्षणे पटरूपादीनां परमते स्थित्यभ्युपगमवदस्मन्मतेऽपि तदभ्युपगमोपपत्तेः। न च समवायिकारणनाशरूपकारणप्रतीक्षया रूपादीनामुपादानाभावकालेऽपि स्थितिरुपपद्यत इति वाच्यम्। तथा सति प्रकृतेऽपि तत्त्वज्ञानजनितस्य देहाद्युपादानाविद्यानाशस्य देहादिनाशहेतोः प्रारब्धकर्मणा

सर्वज्ञात्मगुरवस्तु विरोधिसाक्षात्कारोदये लेशतोऽपि अविद्यानुवृत्त्यसम्भवात् जीवन्मुक्तिशास्त्रं श्रवणादिविध्यर्थवादमात्रम्।

शास्त्रस्य जीवन्मुक्तिप्रतिपादने प्रयोजनाभावात्। अतः कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारोदयमात्रेण सविलासवासनाविद्यानिवृत्तिरित्यपि कश्चित् पक्षमाहुः।

---

प्रतिबद्धतया प्रतिबन्धकरहिताविद्यानाशप्रतीक्षया देहादीनामपि स्थित्युपपत्तेः। न च प्रारब्धकर्मणः प्रतिबन्धकत्वे मानाभावः। जीवन्मुक्तिशास्त्रविद्वदनुभवादेर्मानत्वात्। परमते च पटतद्रूपादीनां युगपदेव नाशदर्शनेन परमते परं तथा अङ्गीकारे मानाभावः। तदुक्तं श्रीविद्यारण्यगुरुभिः, विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते। श्रुतियुक्त्यनुभूतिभ्यो वदतां किं न दुःशकमिति। दुःशकम् अशक्यमित्यर्थः। क्षालिते लशुनभाण्डे अनुवृत्ता या लशुनवासना तत्तुल्य इत्यक्षरार्थः।

तत्त्वज्ञानेन बाधिता दृढ़तरकार्य्याक्षमत्वं नीता साक्षादविद्यैवाविद्यालेश इत्याह दग्धेति। तदुक्तं कार्य्यक्षमं नश्यति चापरोक्ष्यादिति।

कोऽयमविद्यालेशः यदनुवृत्त्या जीवन्मुक्तिसिद्धिरित्याक्षेपे इष्टापत्तिरित्याह सर्वज्ञेति अनुवृत्त्यसम्भवादिति। न जीवन्मुक्तिरस्तीति शेषः।

ननु जीवन्मुक्त्यभावे तस्य तावदेव चिरमित्यादिशास्त्रं

अविद्यानिवृत्तिस्वरूपनिरूपणम् ।

अथ केयमविद्यानिवृत्तिः । आत्मैवेति ब्रह्मसिद्धिकाराः । न च तस्य नित्यत्वेन सिद्धत्वात् ज्ञानवैयर्थ्यम् ।

असति ज्ञाने अनर्थहेत्वविद्याया विद्यमानतया

---

जीवन्मुक्तिप्रतिपादकमप्रमाणं स्यादित्यत आह जीवन्मुक्तिशास्त्रमिति । श्रोतव्यादिविधिभिर्विधीयमानं श्रवणादिकमतिप्रशस्तं यस्यानुष्ठानात् जीवतोऽपि मुक्तिर्लभ्यत इति श्रवणादिस्तावकमित्यर्थः न तु स्वार्थपरमिति मात्रशब्दार्थे हेतुमाह शास्त्रस्येति । निष्फलेऽर्थे वेदतात्पर्य्यायोगादिति भावः । अत इति । जीवन्मुक्तौ मानाभावादित्यर्थः । सविलासेति । विलासेन वासनया च सहैव अविद्यानिवृत्तिरित्यर्थः । सत्यं जीवन्मुक्तिशास्त्रं श्रवणादिविध्यर्थवाद इति अर्थवादत्वेऽपि सालम्बनार्थवादत्वसम्भवे निरालम्बनत्वायोगात् । लोके रज्ज्वादितत्त्वज्ञानेन सर्पाद्यध्यासस्य समूलस्य निवृत्त्यनन्तरमपि सर्पाद्यध्याससंस्कारवशात् कञ्चित्कालं भयकम्पाद्यनुवृत्तिदर्शनेन तत्त्वज्ञानस्याविद्यादिसंस्काराविरोधित्वाच्च मूलाविद्याद्यध्यासजनितसंस्कारवशात् जीवन्मुक्तौ नानुपपत्तिरिति सूचयति इत्यपीति ।

अथ केयमिति । इयं प्रकृता अविद्यानिवृत्तिः का आत्मस्वरूपा अतिरिक्ता वा । नाद्यः । साध्यत्वायोगात् । न द्वितीयः । तस्याः सत्त्वे द्वैतापत्तेः असत्त्वे साध्यत्वायोगादेव इत्यर्थः । तत्र अविद्यानिवृत्तेरात्मस्वरूपत्वमिति पक्षं साधयति आत्मैवेति । आत्मैव अविद्यानिवृत्तिः नातिरिक्ता । उक्तदोषप्रसङ्गादिति भावः । आद्यपक्षेऽपि दोषतौल्यमाशङ्क्य निराकरोति न च तस्येति । अविद्यानिवृत्तिरूपात्मन इत्यर्थः ।

अनर्थमपि तिष्ठेदिति तदन्वेषणात्। यस्मिन् सति अग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चाभावस्तत्तत्साध्यमिति लक्षणानुरोधेन आत्मरूपाया अप्यविद्यानिवृत्तेर्ज्ञानसाध्यत्वाच्च। ज्ञाने सति अग्रिमक्षणे आत्मरूपाविद्यानिवृत्तिसत्त्वं तद्व्यतिरेके तत्प्रतियोग्यविद्यारूपस्तदभाव इत्युक्तलक्षणसत्त्वात्।

---

तत्त्वज्ञानस्य वैयर्थ्यं वदता वक्तव्यम्। किं ज्ञानसम्पादनस्य प्रयोजनं नास्तीति तद्वैयर्थ्यं विवक्षितं किं वा अविद्यानिवृत्तेरात्मस्वरूपत्वे तस्या अनादित्वया ज्ञानं विनापि सिद्धत्वेन ज्ञानसाध्यत्वासम्भवात् तस्य वैयर्थ्यं विवक्षितं नाद्य इत्याह अस्तीति तदन्वेषणादिति। अनर्थनिवृत्तिमुद्दिश्य ज्ञानान्वेषणोपपत्तेरित्यर्थः। अन्वेषणं च ज्ञानसाधनानुष्ठानम्। साध्यलक्षणं द्विविधम् एकं सादिपदार्थमात्रासाधारणं जन्यत्वरूपम्। अपरं तु साद्यनादिसाधारणं यस्मिन् सतीत्यादिरूपम्। तथाच आत्मस्वरूपायामविद्यानिवृत्तौ प्रथमलक्षणासम्भवेऽपि द्वितीयस्य साध्यलक्षणस्य सम्भवात् तस्या ज्ञानसाध्यत्वमुपपन्नम्। अतो न ज्ञानवैयर्थ्यमित्यभिप्रेत्य द्वितीयं निराकरोति।

यस्मिन् सतीति अभाव इति। यस्याभाव इत्यर्थः। तत्तत्साध्यमिति। यस्मिन् सति अग्रिमक्षणे यस्य सत्त्वमित्यत्र प्रथमयच्छब्दार्थः साधनं द्वितीययच्छब्दार्थः साध्यमिति विभागः। प्रायश्चित्ते सति अग्रिमक्षणे दुःखप्रागभावस्य सत्त्वं प्रायश्चित्तस्य व्यतिरेके च दुःखस्यैवोद-

आत्मान्यैव अविद्यानिवृत्तिः। सा च न सती। अद्वैतहानेः। नाप्यसती। ज्ञानसाध्यत्वायोगात्।

---

यादग्रिमक्षणे दुःखप्रागभावस्याभाव इति दुःखप्रागभावस्नानादेरपि दुःखसाधनपापध्वंसस्य सादेरिव प्रायश्चित्तसाध्यत्वमेतल्लक्षणसिद्धमिति बोध्यम्। उक्तलक्षणं प्रकृते योजयति ज्ञाने सतीति। आत्मस्वरूपाया अविद्यानिवृत्तेरनादित्वेन ज्ञानोत्पत्तिद्वितीयक्षणे जन्मासम्भवेऽपि सत्त्वं सम्भवतीत्याह आत्मरूपाविद्यानिवृत्तिसत्त्वमिति। तद्व्यतिरेके तत्प्रतियोग्यविद्यारूपः तदभाव इति तद्व्यतिरेके तदभाव इत्युक्तलक्षणसत्त्वादिति सम्बन्धः। ज्ञानव्यतिरेके आत्मरूपाविद्यानिवृत्तेरभाव इति अनेन प्रकारेण आत्मरूपाविद्यानिवृत्तौ ज्ञानसाध्यत्वरूपलक्षणसत्त्वादित्यर्थः। ननु अविद्यानिवृत्तेरात्मस्वरूपत्वे आत्मनोऽनन्तत्वेन वस्तुतः तदभावस्यैवाभावात् कथमविद्यानिवृत्तेरभावस्तत्राह अविद्यारूप इति। निर्विशेषचैतन्यस्य वास्तवाभावाभावेऽपि तादृशं चैतन्यं नास्त्येव इति भ्रान्तिसिद्धः कश्चित् तदभावोऽस्ति। सा च अविद्यैव। चैतन्यप्रतियोगिककल्पिताभावस्याविद्यातिरिक्तत्वे मानाभावादित्यर्थः। ननु लोके घटादिभावपदार्थस्याभावप्रतियोगिकाभावरूपत्वमेव दृष्टं न तु भावप्रतियोगिकाभावरूपत्वम्। तथा च कथमविद्याया भावरूपायाश्चैतन्यप्रतियोगिकाभावरूपत्वमत आह तत्प्रतियोगीति। आत्मरूपाविद्यानिवृत्तेः प्रतियोगिनी या अविद्या तद्रूप इत्यर्थः। एतदुक्तं भवति चैतन्यस्य स्वस्मिन्नध्यस्ताविद्यां प्रति अभावरूपत्वादविद्यायाः स्वाभावरूपचैतन्यप्रतियोगिकाभावरूपत्वं सम्भवतीति।

नापि सदसद्रूपा। विरोधात्। नाप्यनिर्वाच्या। अनिर्वाच्यस्य सादेरज्ञानोपादानकत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः ज्ञाननिवर्त्त्यत्वापत्तेश्च। किन्तु उक्तप्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारेत्यानन्दबोधाचार्य्याः।

अविद्यावत्तन्निवृत्तिरप्यनिर्वाच्यैव। न च तदनुवृत्तौ तदुपादानाज्ञानस्याप्यनुवृत्तिनियमादनिर्मोक्ष-

---

अविद्यानिवृत्तिरात्मान्येतिपक्षं मतभेदेन द्वेधा साधयति आत्मान्यैवेत्यादिना तदुपादानेति। अनिर्वचनीयामविद्यानिवृत्तिं प्रति उपादानत्वेन अज्ञानस्य मुक्तावपि अनुवृत्त्यापत्तेः। तथा च अनिर्मोक्षप्रसङ्ग इति भावः। किञ्च मुक्तिकाले अनुवर्त्तमानाया अविद्यानिवृत्तेरनिर्वाच्यत्वरूपमिथ्यात्वनिर्वाहार्थं ज्ञाननिवर्त्त्यत्वापत्तिः। ज्ञानैकनिवर्त्त्यत्वं मिथ्यात्वमित्युपगमात्। न च मुक्तिकाले तन्निवर्त्तकं ज्ञानं सम्भवति। सामग्र्यभावात्। अतो नानिर्वाच्या अविद्यानिवृत्तिरित्याशयेनाह ज्ञाननिवर्त्त्यत्वापत्तेश्चेति। सा च न सती। नाप्यसती। नापि सदसद्रूपा। नाप्यनिर्वाच्या। किन्तु पञ्चमप्रकारा सेति सम्बन्धः।

ननु अविद्यानिवृत्तेरुक्तप्रकारचतुष्टयेऽन्तर्भावासम्भवे प्रकारान्तराप्रसिद्धेरविद्यानिवृत्तिरेव मास्तु इति शङ्कते किन्त्विति। मोक्षशास्त्रप्रामाण्यादप्रसिद्धोऽपि कश्चित् प्रकार एषितव्य इत्याशयेनाह उक्तप्रकारेति।

अविद्यानिवृत्तेरात्मान्यत्वपक्षे मतान्तरं दर्शयति अविद्या-

प्रसङ्गः। तदनुवृत्तौ प्रमाणाभावात्। उत्पत्तेः प्रथम-समयमात्रसंसर्गिभावविकारत्ववत् निवृत्तेरपि चरम-समयमात्रसंसर्गिभावविकारत्वोपपत्तेः।

अतएव यथा पूर्वं पश्चाच्चोत्पत्स्यते उत्पन्न इति भाविभूतभावेन व्यवह्रियमाणाया उत्पत्तेः प्रथमसमयमात्रे उत्पद्यत इति वर्त्तमानत्वव्यवहार-स्तथा पूर्वं पश्चाच्च निवर्त्तिष्यते निवृत्त इति भाविभूतभावेन व्यवह्रियमाणाया निवृत्तेश्चरम-समयमात्रे निवर्त्तते नश्यति ध्वंसते इति वर्त्तमान-व्यपदेशः।

---

वदिति न च तदनुवृत्ताविति। मुक्तावविद्यानिवृत्तेरनुवृत्ता-वित्यर्थः। उत्पत्तेरिति। यथा घटादिपदार्थानामुत्पत्ति-राद्यक्षणमात्रसंसर्गी भावरूपो विकार उपेयते नत्वभावरूपा तथा निवृत्तिर्घटादिनाशोऽपि तेषां चरमक्षणमात्रसम्बन्धी कश्चित् भावरूप एव विकारोऽभ्युपगन्तव्यो नत्वभावरूपः विनिगमकाभावादित्यर्थः।

उत्पत्तेः क्षणिकभावविकारत्व इव नाशस्यापि क्षणिकभाव-विकारत्वे प्रमाणं सममित्याह अतएवेति। निवृत्तेरपि क्षणिक-त्वाभ्युपगमादेव इत्यर्थः। उत्पत्तेः पूर्वमुत्पत्स्यते घट इति भावि-त्वेन व्यवह्रियमाणायाः उत्पत्तेः पश्चादुत्पन्नो घट इति भूतत्वेन च व्यवह्रियमाणाया उत्पत्तेः प्रथमसमयमात्रे उत्पद्यते इति वर्त्तमानत्वव्यवहारो यथा उत्पत्तेः क्षणिकत्वसाधकोऽस्तीति दृष्टान्तभागार्थः।

निवृत्तेरनुवृत्तौ तु चिरशकलितेऽपि घटे इदानीं निवर्त्तते इत्यादिव्यवहारः स्यात्। आख्यातानां प्रकृत्यर्थगतवर्त्तमानत्वाद्यर्थाभिधायित्वात्।

ननु च तेषां स्वस्वाभिहितसंख्याश्रयप्रकृत्यर्थ-कर्तृकर्मगतवर्त्तमानत्वाद्यर्थाभिधायकत्वं स्वाभि-हित-प्रकृत्यर्थानुकूल-व्यापारगत-वर्त्तमानत्वाद्यर्था-भिधायकत्वं वा अस्तु।

---

तथेति निवृत्तेः पूर्वं निवर्त्स्यति घट इति भावित्वेन व्यवह्रियमाणायाः पश्चान्निवृत्तो घट इति भूतत्वेन च व्यव-ह्रियमाणाया निवृत्तेश्चरमसमयमात्रे निवर्त्तत इत्यादिवर्त्त-मानत्वव्यपदेशरूपो व्यवहारो निवृत्तेरपि क्षणिकत्वसाधको-ऽस्तीति प्रमाणं तुल्यमित्यर्थः।

निवृत्तेः स्थायित्वाभ्युपगमे बाधकमाह निवृत्तेरनुवृत्तौ त्विति। मासात् पूर्वं ध्वस्तेऽपि घटे वर्त्तमानकालेऽपि घटावयवेषु शकलेषु कपालरूपेषु निवृत्तिरूपस्य पराभि-मतप्रध्वंसरूपाभावस्य वर्त्तमानत्वादिदानीं निवर्त्तते नश्यति ध्वंसत इति निवृत्तेर्वर्त्तमानत्वव्यपदेशः स्यादित्यत्र हेतुमाह आख्यातानामिति। प्रकृत्यर्थो धात्वर्थः। तद्गतवर्त्तमानत्वातो-तत्वभावित्वार्थकत्वादित्यर्थः।

आख्यातानां प्रकृत्यर्थगतवर्त्तमानत्वादिकं नार्थः। किन्तु अन्यगतवर्त्तमानत्वादिकमेवेति शङ्कते ननु च तेषामिति। एकवचनत्वादिरूपेण आख्यातैरभिहितानां संख्यानामाश्रय-भूताः, घटो निवर्त्तते देवदत्तः पचति तण्डुलाः पच्यन्त

तथा च निवृत्तिक्रियाकर्त्तुश्चिरं चूर्णितस्य घटस्य बह्वतनिवृत्त्यनुकूलव्यापारस्य चावर्त्तमानत्वात् नोक्तातिप्रसङ्ग इति चेन्न। आद्ये उत्पन्नेऽपि घटे उत्पद्यत इति व्यवहारापत्तेः। उत्पत्तिक्रियाकर्त्तुर्घटस्य वर्त्तमानत्वात्। द्वितीये आमवातजडीकृतकलेवरे उत्थानानुकूलयत्नवति उत्थानानुदयेऽप्युत्तिष्ठतीति व्यवहारापत्तेः। आख्यातार्थस्य प्रकृत्यर्थभूतोत्थानानुकूलस्य यत्नरूपव्यापारस्य वर्त्तमानत्वात्।

तस्मात् प्रकृत्यर्थगतमेव वर्त्तमानत्वाद्याख्यातार्थं इति ध्वंसस्य स्थायित्वे चिरनिवृत्तेऽपि घटे निवर्त्तत इति व्यवहारो दुर्वारः।

---

इत्यादिप्रयोगेषु प्रकृत्यर्थभूतनिवृत्त्यादिक्रियाणां कर्त्तृकर्मादिरूपाश्च ये घटादयः, तद्गतवर्त्तमानत्वाद्यर्थवाचकत्वं लट्त्वादिरूपेण तेषामाख्यातानामस्त्वित्यर्थः। अर्थान्तरमाह स्वाभिहितेति। घटो निवर्त्तत इत्यत्र आख्याताभिहितो यः प्रकृत्यर्थनिवृत्त्यनुकूलो व्यापारस्तद्गतेत्यर्थः। संख्यायाः प्रकृत्यर्थानुकूलव्यापारस्य च समानप्रत्ययोपात्तत्वेन अन्तरङ्गत्वात् प्रकृत्यर्थस्य निवृत्त्यादेः प्रकृत्यर्थकर्त्तृघटादेश्च अतथात्वेन वहिरङ्गत्वादित्यभिप्रायः।

ततः किं तत्राह तथा चेति। द्वितीयमर्थमभिप्रेत्याह तद्गतेति। घटगतेत्यर्थः। निराकरणग्रन्थः स्पष्टार्थः।

तस्मादिति। अर्थान्तरासम्भवादित्यर्थः। पराभिमतो ध्वंसः

यदि च मुद्गरादिशकलिते घटे ध्वंसो नाम कश्चिदभावस्तत्प्रतियोगिकः स्थायिभूतलाद्याश्रित उपेयेत तदा कपालमालापसरणे तदनपसरणेऽपि मणिकशरावादिकपालव्यावृत्तकपालसंस्थानविशेषादर्शने च किमिति स प्रत्यक्षो न स्यात्। कपालसंस्थानविशेषादिना अनुमेयो घटादिध्वंसो न प्रत्यक्ष इति चेत् तर्हि तेन मुद्गरनिपातकालीनस्योत्पत्तिवद्भावविकाररूपतया प्रतियोग्याश्रितस्य ध्वंसस्यानुमानं सम्भवति इति न ततः पश्चादनुवर्त्तमानप्रतियोग्यधिकरणाश्रिताभावरूपध्वंससिद्धिः।

---

प्रत्यक्षोऽनुमेयो वेति विकल्पं मनसि निधाय क्रमेण निराकर्त्तुं परमतमनुवदति।

यदि चेति। घटे मुद्गरपातादिना शकलीकृते सतीत्यर्थः। तत्प्रतियोगिकः घटप्रतियोगिक इत्यर्थः। भूतलादीति। ध्वंसोत्तरकालं कपालेषु इव शकलीक्रियमाणघटाधिकरणभूतलादिषु अपि। अत्र घटो ध्वस्त इति प्रतीतिबलात् भूतलादिकमपि कपालानीव घटध्वंसाधिकरणत्वेन कैश्चित् तार्किकैरुपेयते इति तन्मतानुवाद इति बोध्यम्। ध्वंसः प्रत्यक्ष इति पक्षं दूषयति तदेति तदा किमिति। स ध्वंसः प्रत्यक्षो न स्यादिति सम्बन्धः। ननु भूतलादौ घटध्वंसप्रत्यक्षे कपालमालाप्रत्यक्षमपि कारणम्। अतो नोक्तदोष इत्यत आह तदनपसरणेऽपीति। रूपसमवहत्पात्रविशेषो मणिकशब्दार्थः। यदा भूतलगतेषु

इह भूतले घटो ध्वस्त इति भूतले ध्वंसाधिकरणत्वव्यवहारस्य इह भूतले घट उत्पन्न इतिवत् भावविकारयुक्तप्रतियोग्यधिकरणत्वविषयत्वोपपत्तेः। घटध्वंसानन्तरं भूतले घटाभावव्यवहारस्य घटापसरणानन्तरं तदभावव्यवहारवत् समयविशेषसंसर्गात्यन्ताभावालम्बनतोपपत्त्या ध्वंसविषयत्वस्याकल्पनीयत्वाच्च।

---

घटकपालेषु मणिकशरावादिकपालेभ्यो व्यावृत्तस्य संस्थानविशेषस्य घटकपालासाधारणस्य दर्शनं नास्ति कपालमालागोचरदर्शनमात्रमेवास्ति तदापि ध्वंसः प्रत्यक्षः स्यात्। कपालमालादर्शनस्य सत्त्वादित्यर्थः। वस्तुतस्तु प्रध्वंसाभावस्य इन्द्रियसन्निकर्षानिरूपणात् प्रत्यक्षत्वं न सम्भवतीति भावः। ध्वंसोऽनुमेय इति पक्षं दूषयति तर्हीति। अतीतस्यापि ध्वंसस्यानुमानसम्भवादनुमानेन ध्वंसमात्रसिद्धावपि नानुमानबलात् ध्वंसस्य पराभिमतं स्थायित्वं सिध्यतीत्यर्थः। तत इति। अनुमानादित्यर्थः। ननु इदं भूतलं घटध्वंसवत्। कपालमालाविशेषवत्त्वात्। व्यतिरेकेण कपालमालाविशेषानधिकरणप्रदेशवदित्यनुमानं कथं घटाश्रितं ध्वंसं विषयीकुर्यादिति चेत् न।

ध्वंसोत्पत्तिकाले प्रतियोग्याश्रितस्यापि ध्वंसस्य प्रतियोगिद्वारा भूतलाश्रितत्वस्यापि सत्त्वेनानुमानस्य तद्विषयत्वोपपत्तेरिति भावः। अनयैव रीत्या व्यवहारविशेषस्यापि

एवं सति घटोत्पत्तेः पूर्वं तदभावव्यवहारोऽपि अत्यन्ताभावेन चरितार्थ इति प्रागभावोऽपि न स्यादिति चेत् सोऽपि मा भूत्। नन्वेवं प्रागभावाधारकालः पूर्वकालः ध्वंसाधार उत्तरकाल इति निर्वचनासम्भवात् काले पूर्वोत्तरादिव्यवहारः किमालम्बनः स्यात्।

घटादिषु प्रतियोगित्वादिव्यवहारवदखण्ड-

---

गतिमाह इहेति। भूतलाधिकरणकस्थायिध्वंससाधकान्तरमप्यन्यथयति घटध्वंसानन्तरमिति भूतल इति। भूतले घटो नास्तीति प्रत्ययप्रयोगात्मकव्यवहारस्येत्यर्थः। समयविशेषे भूतलादौ घटसंयोगाद्यभावकाले संसर्गी योऽत्यन्ताभावः स आलम्बनं यस्य घटाभावव्यवहारस्य स तथा। तस्य भावस्तत्ता तदुपपत्तेरित्यर्थः। क्लृप्ताभावेनैव व्यवहारोपपत्तावतिरिक्तप्रध्वंसाभावो न कल्पनीयः। अतोऽन्यदार्तमिति श्रुत्या चैतन्यव्यतिरिक्तवस्तुमात्रानित्यत्वप्रतिपादिकया पराभिमतस्य नित्यध्वंसस्य निराकृतत्वाच्चेति भावः। एतेन घटध्वंसानन्तरं कपालमालायां घटो नास्तीति व्यवहारोऽपि नीतः। उपादानेऽपि समयविशेषेऽत्यन्ताभावसंसर्गमादाय तदुपपत्तेः।

शङ्कते एवं सतीति। घटनाशोत्तरकालीनस्य घटाभावव्यवहारस्य सामयिकात्यन्ताभावालम्बनत्वोपपत्तौ सत्यामित्यर्थः। तदभावेति। इह घटो नास्तीति व्यवहारोऽपीत्यर्थः। अत्यन्ताभावेनेति। सामयिकेनेत्यर्थः। कालत्रयेऽप्यधिकरणसंसर्ग्यत्यन्ताभावस्य इह असम्भवादिति बोध्यम्।

किञ्चिद्धर्मगोचरोऽस्तु। अभावस्वरूपस्थायिध्वंसाभ्युपगमेऽपि तेषु ध्वंसत्वादेरखण्डस्य एव वक्तव्यत्वात्। न च जन्याभावत्वरूपं सखण्डमेव ध्वंसत्वम्। ध्वंसप्रागभावरूपस्य घटस्य तद्ध्वंसत्वापत्तेः।

न च सप्तमपदार्थरूपाभावत्वं विवक्षितम्। घटस्य प्रागभावं प्रत्यपि ध्वंसत्वाभावप्रसङ्गेन घटकाले प्रागभावोत्तरकालत्वव्यवहारस्य निरालम्बनत्वापत्तेः।

---

प्रागभावप्रध्वंसाभावयोरभावेऽपि काले पूर्वकालत्वमुत्तरकालत्वञ्च अखण्डोपाधिरूपमादाय व्यवहारोपपत्तिरिति परिहरति घटादिष्विति। तथाप्यखण्डोपाधिकल्पनमावश्यकमित्याह अभावस्वरूपेति। सखण्डस्यैव ध्वंसत्वस्य मन्मते निर्वचनसम्भवात् न मम अक्लृप्ताखण्डोपाधिकल्पनमित्याशयेनाशङ्कते न च जन्याभावत्वरूपमिति। जन्यत्वे सति अभावत्वरूपमित्यर्थः। अतिव्याप्त्या दूषयति ध्वंसेति तद्ध्वंसत्वेति। घटध्वंसत्वापत्तेरित्यर्थः। ननु जन्यत्वे सति सप्तमपदार्थरूपाभावत्वं ध्वंसलक्षणं विवक्षितम्। अत्यन्ताभावादिवारणाय सत्यन्तम्।

घटध्वंसप्रागभावरूपे घटे उक्तातिव्याप्तिवारणाय विशेष्यमित्याशङ्कामनूद्य निराकरोति न च सप्तमेति। घटप्रागभावस्य ध्वंसत्वेनोपेते घटे उक्तलक्षणाभावात् घटस्य घटप्रागभावं प्रति ध्वंसत्वं न स्यादिति दूषयति घटस्येति। इष्टापत्तिमाशङ्क्याह घटकाल इति। घटकाले घटप्रागभाव-

न च प्रतियोग्यतिरिक्तः प्रागभावध्वंसः । तथा सति तुल्यन्यायतया ध्वंसप्रागभावोऽपि प्रतियोग्यतिरिक्तः स्यादिति प्रागभावध्वंसस्यापि प्रागभावोऽन्यस्तस्यापि कश्चिद् ध्वंसस्तस्यापि प्रागभावोऽन्य इत्यप्रामाणिकानवधिकध्वंसप्रागभावकल्पनापत्तेः ।

न चान्यत् ध्वंसत्वमात्माश्रयादिशून्यं निर्वक्तुं शक्यम् ।

---

ध्वंसाभावेन प्रागभावध्वंसकालत्वरूपस्य तदुत्तरकालत्वस्याभावादिति भावः ।

ननु घटप्रागभावध्वंसस्य घटातिरिक्तस्य सप्तमपदार्थरूपस्याभ्युपगमात् नोक्तदोष इत्यत आह न च प्रतियोग्यतिरिक्त इति तथा सतीति । प्रागभावध्वंसस्य प्रतियोग्यतिरिक्तत्वे सति इत्यर्थः । घटप्रागभावध्वंसः प्रतियोगिव्यतिरिक्त इति न च । तथा सति घटध्वंसप्रागभावोऽपि घटरूपप्रतियोगिव्यतिरिक्तः स्यात् । ध्वंसप्रागभावयोरुभयोरपि कादाचित्काभावत्वेन तुल्यत्वादित्यर्थः । ततः किं तत्राह इतीति । इतिशब्दो हेत्वर्थे । तथा च यथा घटप्रागभावस्य ध्वंसः प्रतियोगिव्यतिरिक्तोऽस्ति तथा घटप्रागभावध्वंसस्यापि प्रागभावो घटप्रागभावादन्यो वाच्यः । ध्वंसप्रागभावस्यापि ध्वंसप्रतियोगिव्यतिरिक्तत्वादित्यर्थः । ततः किं तत्राह तस्यापीति । अन्यप्रागभावस्यापीत्यर्थः । तस्यापीति । ध्वंसस्यापीत्यर्थः ।

ननु यदि अन्याभावत्वरूपं ध्वंसत्वमुक्तरीत्या अनवस्था-

एवं प्रागभावत्वमपीत्यन्यत्र विस्तरः।

तस्मान्न पूर्वं प्रागभावः न पश्चाद् ध्वंसाभावः। मध्ये परं कियत्कालमनिर्वचनीयोत्पत्तिस्थिति-ध्वंसरूपभावविकारवान् घटाद्यध्यासः। एवं चाविद्यानिवृत्तिरपि ब्रह्मसाक्षात्कारोदयानन्तरक्षणवर्त्ती कश्चिद्भावविकार इति तस्या मुक्तौ

---

दोषदुष्टं तर्हि ध्वंसाप्रतियोगित्वे सति त्रैकालिकभिन्नाभावत्वरूपं ध्वंसत्वमस्तु अत्यन्ताभावादौ अतिव्याप्तिवारणाय विशेष्यम्। त्रैकालिकवस्तुभिन्ने प्रागभावे अतिव्याप्तिवारणाय सत्यन्तम्। तथाच सखण्डमेव ध्वंसत्वमिति नेत्याह नच अन्यदिति। ध्वंसलक्षणे ध्वंसत्वप्रवेशादात्माश्रय इत्यर्थः। न च प्रागभावात्यन्ताभावभिन्नत्वे सति संसर्गाभावत्वं ध्वंसत्वम्। अतो नात्माश्रय इति वाच्यम्। प्रागभावत्वादिनिर्वचनस्यापि प्रध्वंसाभावभिन्नत्वघटिततया अन्योन्याश्रयापत्तेरित्याशयेनादिपदमिति बोध्यम्।

ध्वंसत्ववत् प्रागभावत्वमपि सखण्डं दुर्निरूपमित्याह एवमिति। अयमभिप्रायः न तावदनादित्वे सति सान्ताभावत्वं प्रागभावत्वं घटध्वंसप्रागभावरूपे घटे अनादित्वाभावेनाव्याप्त्यापत्तेः। नापि प्रतियोगिजनकाभावत्वं प्रागभावत्वम्। जनकत्वशरीरप्रविष्टपूर्ववृत्तित्वस्य कार्य्यप्रागभावकालवृत्तित्वरूपतया आत्माश्रयप्रसङ्गात्।

एवं लक्षणान्तरमपि निरसनीयमिति [तस्मादिति। पराभिमतप्रागभावादिसाधकाभावादित्यर्थः। ननु प्रागभावाद्यनङ्गीकारे तत्प्रतियोगिघटादिकार्य्यमपि नाङ्गीकर्त्तव्यं तदङ्गी-

ननुवृत्त्यभावान्न तदनिर्वाच्यत्वे कश्चिद्दोष इति अद्वैतविद्याचार्य्याः।

नन्वेवमविद्यानिवृत्तेः क्षणिकत्वे मोक्षः स्थिरपुरुषार्थो न स्यादिति चेत् भ्रान्तोऽसि। न हि अविद्यानिवृत्तिः स्वयमेव पुरुषार्थ इति तस्या ज्ञानसाध्यत्वमुपेयते तस्याः सुखदुःखाभावेतरत्वात्।

किन्तु अखण्डानन्दावारकसंसारदुःखहेत्वविद्योच्छेदेन अखण्डानन्दस्फुरणं संसारदुःखो-

---

कारे द्वैतापत्तेरित्यत आह मध्ये परमिति। घटादिकार्य्यस्य शुक्तिरजतादिवदध्यासरूपत्वाभ्युपगमात् नाद्वैतविरोधः। ननु यथा परमते ध्वंसत्वादिकं दुर्निरूपं तथा सिद्धान्ते भावविकाररूपा उत्पत्तिस्थितिध्वंसा अपि दुर्निरूपा एवेत्याशङ्क्य तेषां दुर्निरूपत्वमलङ्कारायेत्याशयेनाह अनिर्वचनीयेति एवञ्चेति। लोके घटादिध्वंसस्य क्षणिकभावविकाररूपत्वे सिद्धे सतीत्यर्थः।

ननु एवमिति। उक्तरीत्येत्येवंशब्दार्थः। अविद्यानिवृत्तेर्मोक्षसाधनज्ञानसाध्यत्वोपपादने सिद्धान्तिना क्रियमाणे सति सिद्धान्तिनोऽविद्यानिवृत्तिरेव मोक्षत्वेनाभिमतेति पूर्वपक्षिणो भ्रान्तिरभूत् तां भ्रान्तिमवलम्ब्य शङ्का। तस्य भ्रममपनयति भ्रान्तोऽसि इति। अविद्यानिवृत्तेरपुरुषार्थत्वे हेतुमाह तस्या इति।

तर्हि तस्या ज्ञानसाध्यत्वोपगमो व्यर्थ इति शङ्कते किन्त्विति। अविद्यानिवृत्तेः सुखेतरत्वात् दुःखाभावेतरत्वाच्च

च्छेदस्य भवतीति तदुपयोगितया तस्यास्तत्त्वज्ञानसाध्यत्वमुपेयते ।

चित्सुखाचार्य्यास्तु दुःखाभावोऽपि मुक्तौ न स्वतः पुरुषार्थः । सर्वत्र दुःखाभावस्य स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया सुखशेषत्वात् सुखस्यैव स्वतः पुरुषार्थत्वम् अन्येषां सर्वेषामपि तच्छेषत्वमिति सुखस्य तज्ज्ञानस्यैव प्रवर्त्तकत्वे सम्भवति दुःखाभावस्यापि स्वतः पुरुषार्थत्वं परिकल्प्य तत्साधनप्रवर्त्तकसंग्रहाय इष्टसाधनताज्ञानस्य इच्छाविषयत्वप्रवेशेन गुरुघटितस्य प्रवर्त्तकत्वकल्पनायोगात् ।

---

स्वयं पुरुषार्थत्वेऽपि पुरुषार्थसाधनतया तस्या ज्ञानसाध्यत्वम् उपेयते इत्याह अखण्डेति तदुपयोगितयेति । अनर्थात्मकदुःखनिवृत्तिरानन्दावाप्तिश्चेति द्वयमपि स्वतः पुरुषार्थभूतं तच्छब्दार्थः ।

अविद्यानिवृत्तिवत् दुःखनिवृत्तिरपि स्वतः पुरुषार्थो न भवति । अतो ब्रह्मानन्दस्फुरणसाधनतयैव अविद्यानिवृत्तेर्ज्ञानसाध्यत्वमुपेयते इति मतमाह चित्सुखेति। मुक्ताविति विशेषणात् संसारदशायां सुखवत् दुःखाभावोऽपि स्वतः पुरुषार्थ इति भ्रान्तिर्भवेत् तां वारयति सर्वत्रेति। दुःखदशायामात्मस्वरूपभूतस्यापि सुखस्याभिव्यक्तिमान्द्यतस्फुरणविशेषाभावेन दुःखस्य तदभिव्यक्तिप्रतिबन्धकत्वं कल्प्यते । तथाच तदभावस्य सुखाभि-

न च दुःखाभाव एव स्वतः पुरुषार्थस्तच्छेष-तया सुखं काम्यमिति वैपरीत्यापत्तिः।

---

व्यक्तिशेषतयैव काम्यमानत्वं न सुखवत् स्वतः पुरुषार्थत्वेनेति भावः। सुखस्यैव स्वतः पुरुषार्थत्वकल्पने विनिगमकमाह सुख-स्यैवेति। दुःखाभावस्य सुखशेषत्वे दुःखाभावसाधनानि अपि सुखसाधनानि भवन्ति। तथाच सुखसाधनेषु दुःखाभावसाधनेषु च सर्वत्र सुखसाधनताज्ञानस्यैव प्रवर्त्तकत्वं सम्भवति। दुःखा-भावसाधनताज्ञानस्य स्वतः पुरुषार्थत्वकल्पने तु तत्साधनेषु सुखसाधनत्वस्य बाधितत्वात् सुखसाधनताज्ञानात् तेषु प्रवृत्तिर्न सम्भवति। न च तेषु दुःखाभावसाधनताज्ञानमेव प्रवर्त्तकमस्त्विति वाच्यम्। तथा सति प्रवृत्तिमात्रे अनुगतकारणाभावप्रसङ्गात्। न च तर्हि इष्टसाधनताज्ञानात् सर्वत्र प्रवृत्तिरस्तु। दुःखाभाव-स्यापि सुखवदिच्छाविषयतया इष्टपदेन संग्रहोपपत्तेरिति वाच्यम्। प्रवृत्तित्वावच्छिन्नं प्रति कारणे इष्टसाधनताज्ञाने इष्टांशे सुखत्वजातेः प्रवेशकल्पने कारणतावच्छेदकलाघवं लभ्यते। इष्टत्वरूपोपाधेः प्रवेशकल्पने तु कारणतावच्छेदकगौरवं भवेदिति सुखस्यैव स्वतः पुरुषार्थत्वपक्षो युक्तिमानिति भावः। तच्छेषत्वमितीति स्वोक्त्येति शेषः। प्रवर्त्तकत्व इति। प्रवर्त्तक-त्वकल्पन इत्यर्थः। तत्साधनेति। दुःखाभावसाधनेषु प्रवर्त्तकस्य दुःखाभावसाधनताज्ञानस्य संग्रहायेत्यर्थः।

न च दुःखाभाव एवेति। न चेयं शङ्कैव नावतरति। वैपरीत्यपक्षे दुःखाभावत्वरूपोपाधेरेव प्रवर्त्तकज्ञानकारण-तावच्छेदकशरीरे प्रवेशापत्तया इच्छाविषयत्वरूपोपाधिप्रवेश-पक्ष इव गौरवदोषस्य तुल्यत्वादिति वाच्यम्। सिद्धान्ते

बहुकालदुःखसाध्येऽपि क्षणिकसुखजनके निन्दितग्राम्यधर्मादौ प्रवृत्तिदर्शनात्। तत्र क्षणिकसुखकालीनदुःखाभावस्य पुरुषार्थत्वे तदर्थं बहुकालदुःखानुभवायोगात्।

न च तत्र क्षणिकसुखस्य पुरुषार्थत्वेऽपि दोषतौल्यम्। भावरूपे सुखे उत्कर्षापकर्षयोरनुभवसिद्धत्वेन क्षणमप्युत्कृष्टसुखार्थं बहुकालदुःखा-

---

सुखस्यात्मरूपतया एकव्यक्तित्वेन सुखत्वस्य जातित्वासम्भवं तस्योपाधिरूपत्वञ्च मन्वानस्य शङ्कासम्भवात् इच्छाविषयत्वस्यैव सुखत्वस्याप्युपाधिरूपत्वे सति सुखत्वप्रवेशेऽपि कारणतावच्छेदकगौरवाविशेषे सति विनिगमकाभावेन वैपरीत्यशङ्का युक्तैवेति भावः।

सिद्धान्ते वस्तुतः सुखव्यक्तेरेकत्वेऽपि औपाधिकभेदाङ्गीकारेण सुखत्वस्य जातित्वाद्यते वैपरीत्यं वक्तुं न शक्यत इति मनसि निधाय दोषान्तरमाह बहुकालेति। लोके हि क्षणिकसुखोद्देशेन बहुकालदुःखानुभवमङ्गीकृत्यापि अगम्यागमनादौ प्रवृत्तिर्दृश्यते। सा च दुःखाभावस्यैव स्वतः पुरुषार्थत्वपक्षे न सम्भवतीत्यर्थः। कुत इत्यत आह तत्रेति। निन्दितप्रवृत्तिस्थल इत्यर्थः। सुखस्य दुःखाभावशेषत्वपक्षे सुखकालीनो यो दुःखाभावस्तं प्रत्येव सुखस्य शेषत्वं वाच्यम्। कालान्तरीयं दुःखाभावं प्रति तस्य शेषत्वासम्भवात्। तथा च क्षणिकसुखकालीनं दुःखाभावं क्षणिकमुद्दिश्य बहुकालदुःखानुभवाङ्गीकारस्यायुक्तत्वादित्यर्थः।

न च तत्रेति। निन्दितप्रवृत्तिस्थल इत्यर्थः। दोषतौल्यमिति।

नुभवोपपत्तेः दुःखाभावे तूत्कर्षासम्भवात्। तस्मान्मुक्तौ संसारदुःखनिवृत्तिरप्यविद्यानिवृत्तिवत् सुखशेष इत्यनवच्छिन्नानन्दप्राप्तिरेव स्वतः पुरुषार्थ इत्याहुः।

ब्रह्मानन्दस्य प्राप्यत्वोपपादनम्।

नन्वनवच्छिन्नानन्दः प्रत्यग्रूपतया नित्यमेव प्राप्तः। सत्यं नित्यप्राप्तोऽपि अनवच्छिन्नानन्दस्तन्मात्रत्व तद्विपरीतमनर्थं प्रदर्शयन्त्या अविद्यया संसारदशायामसत्कल्पत्वं नीत इत्यकृतार्थता अभूत्।

---

बहुकालदुःखानुभवाङ्गीकारायोगरूपदोषस्य तुल्यत्वमिति न च इत्यर्थः। दुःखाभावस्यैव स्वतः पुरुषार्थत्वपक्षेऽपि क्षणिकसुखकालीने दुःखाभावे उत्कर्षः कल्प्यतामिति तत्राह दुःखाभावे त्विति। अभावस्योत्कर्षादिजात्याश्रयत्वानभ्युपगमादिति भावः। तस्मादिति। दुःखाभावस्य स्वतः पुरुषार्थत्वासम्भवादित्यर्थः।

नित्यमेवेति। तथा च जीवस्य स्वस्वरूपतया सदा प्राप्तस्य ब्रह्मानन्दस्य प्राप्तव्यत्वासम्भवात् तत्प्राप्त्युद्देशेन तदुपायेषु प्रवृत्तिर्न स्यादिति भावः। नित्यतया तस्य प्राप्तिं तत्त्वमस्यादिश्रुतिसिद्धामङ्गीकरोति सत्यमिति। औपचारिकं तस्य प्राप्तत्वमाह नित्यप्राप्तोऽपीति। अनवच्छिन्नानन्दो नित्यप्राप्तोऽपि अविद्यया असत्कल्पत्वं नीत इति सम्बन्धः। तथा च प्राप्तेऽप्यप्राप्तत्वभ्रान्त्या तत्प्राप्त्युद्देशेन तदुपायेषु प्रवृत्तिर्युज्यत इत्यर्थः। तमिति। पूर्णानन्दमात्रत्वानन्दविपरीतं तद्दुःखात्मकं संसारमापयन्त्या इत्यर्थः। अकृतार्थतेति। पूर्णानन्दाप्राप्तिरित्यर्थः।

निवर्त्तितायां च तस्यां निरस्तनिखिलानर्थ-विक्षेपे स्वकण्ठगतविस्मृतकनकाभरणवत् प्राप्यत इव इत्यौपचारिकी तस्य प्राप्यतेति केचित्।

अन्ये तु संसारदशायां नास्ति न प्रकाशत इति व्यवहारयोग्यत्वरूपाज्ञानावरणप्रयुक्तस्य मम निरतिशयानन्दो नास्तीति प्रत्ययस्य सर्वसिद्धत्वात् तदालम्बनभूतः कश्चिद् ब्रह्मानन्दस्याभावः काल्पनिको यावदविद्यमनुवर्त्तते। अविद्यानिवृत्तौ च तन्मूलत्वान्निवर्त्तत इति यस्मिन् सति अग्रिम-क्षणे इत्यादिलक्षणानुरोधेन मुख्यमेव तस्य प्राप्यत्व-मित्याहुः।

---

निरस्तेति। अविद्यायां निवृत्तायां निखिलानर्थात्मकविक्षेप-रहित आनन्दः प्राप्यते। यथा स्वकण्ठगतमेव विस्मृतं सत् कनकाभरणं प्राप्तमपि अप्राप्तत्वभ्रमतत्कृतविक्षेपलक्षणानर्थनिवृत्तिमात्रेण प्राप्यते नत्वप्राप्ताभरणप्राप्तिवत् मुख्या तस्य प्राप्ति-रस्ति। तद्वदित्यर्थः। एतस्यैव आनन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति आनन्दं ब्रह्मणो विद्वानित्यादिवेदान्तप्रसिद्धो निरतिशयानन्दो नास्तीत्यनुभवः सर्वसम्प्रतिपन्नः। तथा च प्रत्यग्रूपतया नित्यमेव तादृशानन्दे विद्यमानेऽपि ततभावप्रत्यय-दर्शनेन वास्तवस्य तदभावस्य असम्भवादविद्यावरणाधीनर्नास्तित-कस्यानादेः काल्पनिकाभावस्य तदभावप्रत्ययालम्बनत्वं वक्तव्यम्। तत्रावरणस्वरूपमाह नास्तीति। निरतिशयानन्दो मे न प्रका-

अपरे तु अवेद्यस्यापुरुषार्थत्वात् संसारदशायां सदपि अनवच्छिन्नसुखमापरोक्ष्याभावान्न पुरुषार्थः। न च स्वरूपज्ञानेनापरोक्ष्यं तदाप्यस्ति। तस्य सर्वदा स्वरूपसुखाभिन्नत्वात् वृत्तिज्ञानेनापरोक्ष्यं तु न मुक्तावपीति वाच्यम्।

---

शते अप्रकाशमानत्वात् नास्त्येव स इति व्यवहारस्य सदा अभावादावरणस्य च सदा सत्त्वात् योग्यत्वपर्य्यन्तधावनमिति बोध्यम्। निवर्त्तत इति। ब्रह्मानन्दस्याभाव इति शेषः।

इदानीं ब्रह्मानन्दाभावसाधनफलं ब्रह्मानन्दस्य मुख्यं प्राप्यत्वं दर्शयति इति यस्मिन् इति। ज्ञाते सति अग्रिमक्षणे निरतिशयमानन्दसत्त्वं ज्ञानाभावे च साधितस्य निरतिशयानन्दाभावस्यैव सत्त्वमिति लक्षणसत्त्वात् निरतिशयानन्दस्य प्राप्तस्यापि मुख्यमेव प्राप्यत्वमित्यर्थः।

ब्रह्मानन्दस्वरूपमात्रं न पुरुषार्थः। किन्तु तस्यापरोक्ष्यम्। तच्च अविद्यानिवृत्तिद्वारा विद्यासाध्यमेव न तु तद्विद्योदयात् प्रागस्तीति मतमाह अपरे त्विति। विद्याप्राप्यमानन्दापरोक्ष्यं स्वप्रकाशचैतन्यरूपं वृत्तिरूपं वा। उभयथापि न सम्भवतीति शङ्कते न चेति। आपरोक्ष्यं हि स्वव्यवहारानुकूलचैतन्याभिन्नत्वम्। तच्च संसारदशायाम् आवृतस्यापि ब्रह्मानन्दस्य वर्त्तत एव। ब्रह्मानन्दव्यवहारानुकूलसाक्षिचैतन्याभेदस्य सदा ब्रह्मानन्दे सत्त्वादित्यर्थः। तदापीति। संसारकालेऽपि अस्ति। तथा च न तस्य ज्ञानप्राप्यत्वमिति भावः। तस्येति। स्वरूपज्ञानस्येत्यर्थः।

न हि स्वव्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यम्। घटावच्छिन्नचैतन्याभिव्यक्तौ तदभिन्नस्य घटगन्धस्याप्यापरोक्ष्यापत्तेः। किं त्वनावृतार्थस्य तदभेदः। तथा च अनावृतत्वांशस्तत्त्वसाक्षात्कारे सति एवेति निरतिशयसुखापरोक्ष्यस्य पुरुषार्थस्य विद्याप्राप्यत्वं युक्तमित्याहुः।

इतरे तु अस्तु व्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यम्।

---

आपरोक्ष्यशरीरप्रविष्टा या आवृतत्वनिवृत्तिस्तस्याः सम्पादनद्वारा ब्रह्मानन्दापरोक्ष्यं विद्यासाध्यमिति समाधानं कर्तुं शाब्दापरोक्ष्यवादे निर्णीतमर्थं स्मारयति न हि इत्यादिना तदभिन्नस्येति। अभिव्यक्तचैतन्याभिन्नस्येत्यर्थः। तदभेद इति। अनावृतचैतन्याभिन्नत्वमित्यर्थः। निरतिशयसुखापरोक्ष्यस्येति। चैतन्यरूपस्येत्यर्थः। न वृत्तिरूपस्य। अतो न मुक्तावापरोक्ष्यानुपपत्तिरित्यर्थः।

चैतन्याभेदमात्रमिति। अर्थापरोक्ष्यनिर्वचनेऽस्मिन् अनावृतत्वमर्थविशेषणं मात्रपदेन व्यवच्छिद्यते। न च एवं घटावच्छिन्नचैतन्याभिव्यक्तौ सत्यां तदभिन्नस्य घटगन्धस्यापि आपरोक्ष्यापत्तिरिति वाच्यम्। धर्मादेः साक्षिणि अध्यस्तस्यानावृतसाक्षिचैतन्याभिन्नस्यापि आपरोक्ष्यादर्शनेन तद्वत् घटगन्धस्याप्यभिव्यक्तघटावच्छिन्नचैतन्याभिन्नस्यापि आपरोक्ष्याभावोपपत्तेः। न च धर्मादेः अयोग्यत्वाद्

तथापि अज्ञानमहिम्ना जीवभेदवच्चिदानन्दभेदोऽपि अध्यस्त इति संसारदशायां पुरुषान्तरस्य पुरुषान्तरचैतन्यापरोक्ष्यवदनवच्छिन्नसुखापरोक्ष्यमपि नास्ति। अज्ञाननिवृत्तौ तु चिदानन्दभेदप्रविलयात्तदापरोक्ष्यमिति तस्य विद्यासाध्यत्वमित्याहुः।

मुक्तस्य ईश्वरभावापत्तिनिरूपणम्।

अथ विद्योदये सति उपाधिविलयादपेतजीवभावस्य किमीश्वरभावापत्तिर्भवति उत शुद्धचैतन्यमात्ररूपेणावस्थानमिति विवेचनीयम्।

---

आपरोक्ष्याभाव इति वाच्यम्। तथा सति प्रकृतेऽपि चाक्षुषवृत्त्यभिव्यक्तचैतन्यं प्रति फलबलेन गन्धस्यायोग्यत्वकल्पनेन तदापरोक्ष्याप्रसक्तेरिति भावः।

तर्हि स्वरूपानन्दस्य सदा स्वव्यवहारानुकूलसाक्षिचैतन्याभिन्नत्वसत्त्वादापरोक्ष्यस्य विद्यासाधनत्वानुपपत्तिरित्याशङ्क्याह तथापीति। तावन्मात्रस्यापरोक्ष्यरूपत्वेऽपीत्यर्थः। यथा एकस्य पुरुषस्य पुरुषान्तरचैतन्यापरोक्ष्यं नास्ति तथा जीवस्य संसारदशायामनवच्छिन्नानन्दापरोक्ष्यमपि नास्ति। जीवानां परस्परभेदवत् साक्षिचैतन्यब्रह्मानन्दयोरपि अज्ञानिकस्यानादिभेदस्य सत्त्वेन ब्रह्मानन्दस्य व्यवहारानुकूलेन साक्षिचैतन्येनाभेदाभावात् वास्तवाभेदस्य च परस्परभिन्नजीवसाधारणस्य विद्यमानस्यापि अकिञ्चित्करत्वादित्यर्थः। प्रविलयादिति। तथा च तत्त्वज्ञानस्याज्ञानतत्प्रयुक्त-

उच्यते। एकजीववादे तदेकाज्ञानकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयान्निर्विशेषचैतन्यरूपेणैवावस्थानम्।

अनेकजीववादमभ्युपगम्य बद्धमुक्तव्यवस्थाङ्गीकारेऽपि यद्यपि कस्यचिद्विद्योदये तदविद्याकृतप्रपञ्चविलयेऽपि बद्धपुरुषान्तराविद्याकृतो जीवेश्वरविभागादिप्रपञ्चोऽनुवर्त्तते तथापि जीव इव ईश्वरो-

---

भेदनिवृत्तिद्वारा अनवच्छिन्नानन्दापरोक्ष्यसम्पादकत्वात् तादृशानन्दापरोक्ष्यस्य तत्त्वज्ञानसाध्यत्वं युक्तमित्यर्थः।

इति विवेचनीयमिति। इत्याकाङ्क्षायां सत्यां विविच्य वक्तव्यमिति प्रश्नार्थः।

मतभेदेन विवेकं दर्शयति उच्यते इत्यादिना तदेकाज्ञानेति। तस्य जीवस्य यदेकमज्ञानं तत्कल्पिते इत्यर्थः। जीवस्यैकत्वात् तदीयमूलाज्ञानमपि एकमेव। तथा च तस्यैकस्य जीवस्य यत्र क्वापि अन्तःकरणे तत्त्वसाक्षात्कारोदये सति अज्ञानस्य देवतिर्यङ्मनुष्यादिरूपसर्वप्रमातृसाधारणस्य सकार्यस्य तस्मिन्नेव क्षणे निःशेषं प्रविलयादित्यर्थः। न च एवं शुकाद्यन्तःकरणोत्पन्नतत्त्वज्ञानेनैव समूलस्य सर्वप्रमातृसाधारणसंसारस्य निवृत्तत्वात् इदानीं संसारानुपलब्धिप्रसङ्ग इति वाच्यम्। शुकादिमुक्तौ मानाभावाच्छुकादिमुक्तिप्रतिपादकशास्त्रस्यान्यपरतायाः प्राग्दर्शितत्वादिति भावः।

एकजीववादे अस्वरसं सूचयन् नानाजीववादं पुरस्करोति अनेकेति। कश्चित् जीवो बद्धः कश्चिज्जीवो मुक्त इति व्यवस्थाभ्युपगम

ऽपि प्रतिबिम्बविशेष इति पक्षे मुक्तस्य बिम्बभूत-शुद्धचैतन्यरूपेणैवावस्थानम् ।

अनेकोपाधिष्वेकस्य प्रतिबिम्बे सति एकोपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनैवावस्थानौचित्येन प्रतिबिम्बान्तरत्वापत्त्यसम्भवात् । तत्सम्भवे कदाचिज्जीवरूपप्रतिबिम्बान्तरत्वापत्तेरपि दुर्वारत्वेनावच्छेदपक्ष इव मुक्तस्य पुनर्बन्धापत्तेः ।

---

इत्यर्थः । नानाजीववादे मुक्तस्येश्वरभावापत्तिरिति मनसि निधाय तत्र तत्सम्भवमाह यद्यपीति अनुवर्त्तते इति । तथा च नानाजीववादे मुक्तस्य वक्ष्यमाणविधया यावत्सर्वमुक्ति बद्ध-पुरुषान्तराविद्याकृतेश्वरभावापत्तिः सम्भवतीति भावः ।

ननु एवं यद्यपीत्युक्तिरनुपपन्ना । तदुक्त्या हि यद्यपि ईश्वर-भावापत्तिः सम्भवति तथापि न सम्भवतीत्यर्थप्रतीतेरिति चेत् नायं दोषः । नानाजीववादो हि बहुविधः । तथा च सर्वेषु नानाजीववादेषु मुक्तस्येश्वरभावपत्तिर्न सम्भवतीति यद्यपि इत्युक्तेस्तात्पर्य्यात् । एतदेव प्रपञ्चयति तथापीत्यादिना बिम्बभू-तेति । न तु प्रतिबिम्बविशेषरूपेश्वररूपेण अवस्थानमित्येव-कारार्थः ।

एवकारार्थे हेतुमाह अनेकेत्यादिना । एकस्य ब्रह्म-चैतन्यस्येत्यर्थः । प्रतिबिम्बभूतस्य बिम्बप्राप्तिनियमं विहाय प्रतिबिम्बान्तरत्वापत्तिसम्भवाभ्युपगमे बाधकमाह तत्सम्भव इति ।

अत एवानेकजीववादे अवच्छेदपक्षो नाद्रि- यते। यदवच्छेदेन मुक्तिः तदवच्छेदेनान्तःकरणा- न्तरसंसर्गे पुनरपि बन्धापत्तेः।

प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वर उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे तु मुक्तस्य

---

दृष्टान्तं प्रपञ्चयति अतएवेति। पुनर्बन्धापत्तेरेवेत्यर्थः। यदवच्छेदेनेति। पूर्णचैतन्ये यच्चैतन्यप्रदेशावच्छेदेन मुक्तिः तत्प्रदे- शावच्छेदेन तत्र चैतन्ये उपाध्यन्तरसम्बन्धे सति पुनर्बन्धापत्ते- रित्यर्थः। यच्चैतन्यप्रदेशो मुक्तस्तस्य बन्धापत्तेरिति यावत्। अत्रेदं चिन्त्यं चैतन्यं तावत् स्वतो नित्यमुक्तम्। तस्य च अनाद्यु- पाध्यवच्छिन्नस्योपाध्युपहितस्य वा जीवत्वं बन्धश्चेति स्थितिः। तथा च मुक्तेः पूर्वं यस्योपाधिपरतन्त्रस्य चैतन्यप्रदेशस्य बन्ध आसीत् न तस्य पुनर्बन्ध आपादयितुं शक्यते। मुक्तिकाले तदु- पाधिनिवृत्त्या तत्परतन्त्रस्य पूर्वं बन्धाश्रयस्य निवृत्तत्वात्। नापि मुक्तस्य शुद्धचैतन्यस्य तदापादनं सम्भवति। तस्य बद्धजीवान्त- रोपाधिसंसर्गे जीवान्तरत्वापत्तावपि पूर्वं यो बद्धः सन् मुक्तिं गतस्तस्य बन्धाप्रसक्त्या पुनर्बन्धापत्तेरित्युक्त्ययोगात्। किञ्च मुक्त- चैतन्यस्य अन्तःकरणान्तरसंसर्गेण तदुपाधिकजीवान्तरत्वापत्तौ सत्यां योऽहं पूर्वं संसारी सन् कथञ्चित् मुक्तः सोऽहं पुनः संसारं प्राप्त इत्यनुसन्धानं तावत् न सम्भवति। मुक्तजीवस्य बद्ध- जीवस्य च उपाध्यैक्याभावात्। तथा च इयं जीवान्तरतापत्ति- रकिञ्चित्करीति न दोषावहा। एवं पूर्वोक्ता मुक्तस्य प्रतिबिम्ब- रूपजीवान्तरतापत्तिरपि अकिञ्चित्करीति।

यावत्सर्वमुक्ति सर्वज्ञत्वसर्वकर्तृत्वसर्वेश्वरत्वसत्यकामत्वादिगुणपरमेश्वरभावापत्तिरिष्यते ।

यथा अनेकेषु दर्पणेष्वेकस्य मुखस्य प्रतिबिम्बे सति एकदर्पणापनये तत्प्रतिबिम्बो बिम्बभावेनावतिष्ठते न तु मुखमात्ररूपेण । तदानीमपि दर्पणान्तरस्य सन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात् । तथा एकस्य ब्रह्मचैतन्यस्यानेकेषु उपाधिषु प्रतिबिम्बे सति एकस्मिन् प्रतिबिम्बे विद्योदये तेन तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यम्भावात् ।

---

ननु नानाजीववादे यदि प्रतिबिम्बेश्वरपक्षे मुक्तस्येश्वरभावापत्तिर्न सम्भवति अवच्छेदपक्षे च मुक्तिरेव न सम्भवति दूरे ईश्वरभावापत्तिः तर्हि कस्मिन् पक्षे मुक्तस्येश्वरभावापत्तिरिष्यते तत्राह प्रतिबिम्बो जीव इति । अस्मिन्नपि पक्षे सर्वेषां जीवानां मुक्त्यनन्तरं मुक्तस्य निर्विशेषशुद्धचैतन्यमात्ररूपेणैव अवस्थानं तदा सर्वेषामुपाधीनां निःशेषं चिन्मात्रे विलीनत्वेन जीवेश्वरविभागाभावादित्याशयेनाह यावदिति ।

ननु ततः पूर्वमपि बिम्बप्रतिबिम्बोभयानुस्यूतशुद्धचैतन्यरूपेणैव अवस्थानमस्तु तथा सति निर्गुणविद्याफलभूताया मुक्तेरैकरूप्यप्रतिपादकस्य तृतीयाध्यायान्तिमाधिकरणस्य सामञ्जस्योपपत्तेरित्यत आह यथेति तदानीमपीति । एक-

न च मुक्तस्याविद्याभावात् सत्यकामत्वादिगुणविशिष्टसर्वैश्वरत्वानुपपत्तिः। तदविद्याभावेऽपि तदानीं बद्धपुरुषान्तराविद्यासत्त्वात्।

न हि ईश्वरस्येश्वरत्वं सत्यकामत्वादिगुणविशिष्टत्वं च स्वाविद्याकृतम् तस्य निरञ्जनत्वात् किं तु बद्धपुरुषाविद्याकृतमेव तत्सर्वमेष्टव्यम्।

---

दर्पणापनयनकालेऽपीत्यर्थः। एकस्मिन्निति। एकस्मिन् प्रतिबिम्बरूपे जीवे विद्योदये सति तेन विद्योदयेन तस्य विदुष उपाधिलये सति तत्प्रतिबिम्बस्य मुक्तस्य प्रतिबिम्बजीवस्येत्यर्थः।

ननु मुक्तस्य निरुपाधिकत्वात् कथं तस्यैश्वर्यं सम्भवतीति शङ्कते न च मुक्तस्येति। परिहरति तदविद्येति। तस्य मुक्तस्याविद्याभावेऽपीत्यर्थः। अत्राविद्यानानात्वव्यवहारेण अविद्याप्रतिबिम्बा एव जीवा, अन्तःकरणानि तु तेषां कर्तृत्वाद्युपाधय इति सूचितम्। तथा च मुक्तस्याविद्यकमैश्वर्यमिति उपगमात् परमार्थत एकरूपैव सदा मुक्तिरिति न तृतीयाध्यायान्तिमाधिकरणविरोध इति भावः।

ननु जीवस्य संसारित्वं यथा स्वाविद्याकृतं तथा ईश्वरस्यापि ऐश्वर्यं स्वोपाधिकृतमेव वाच्यम्। तथाच मुक्तस्य स्वोपाध्यभावात् न ऐश्वर्यं भवतीति शङ्कां निराकरोति न हीति। तत्र किम् ईश्वरस्योपाधिरविद्या किं वा तदतिरिक्ता माया। नान्त्यः। अविद्यासु बिम्बभूतस्य चैतन्यस्य जीवाश्रिताविद्याभिः ऐश्वर्यसम्भवेन तदतिरिक्तमायोपाधिकल्पनावैयर्थ्यात् तत्तज्जीवगततत्त्वज्ञानेन

न च यथाक्रतुरस्मिन् लोके पुरुषो भवति तथा इतः प्रेत्य भवति तं यथा यथोपासत इत्यादिश्रुतिषु सगुणोपासकानामपीश्वरसायुज्यश्रवणान्मुक्तेः सगुणविद्याफलाविशेषापत्तिः।

---

तत्तदविद्यानिवृत्तिरिति क्रमेण सर्वजीवमुक्त्यनन्तरमपि मायाया निवर्त्तकाभावेन तदापि मायावशेषप्रसङ्गाच्च अविद्यानामपि बिम्बभूतेश्वरसम्बन्धित्वसत्त्वेन ईश्वरस्य तासु विक्षेपशक्तिप्राधान्येन मम मायेत्यादिनिर्देशोपपत्तेश्च बन्धमुक्तिप्रतिपादकशास्त्रानुसारिभिः इन्द्रो मायाभिः पुरुरूपः यो योनिं योनिमित्यादिश्रुतिवाक्यैरविद्यानानात्वसिद्धौ मायामित्याद्येकवचनस्य जात्यभिप्रायत्वोपपत्तेश्च। तस्मात् नान्यः कल्पः सम्भवति। नाद्य इत्याह स्वाविद्याकृतमिति। स्वाश्रिताविद्याकृतमित्यर्थः। बद्धपुरुषेति। अविद्यानां जीवाश्रितत्वञ्च प्रथमपरिच्छेदे निरूपितमस्माभिरिति नात्र निरूप्यते। निरञ्जनत्वादिति। दोषानाश्रयत्वादित्यर्थः।

ननु निर्गुणब्रह्मविद्याफलभूतायां मुक्तावपीश्वरसायुज्याभ्युपगमे सगुणविद्याफलादविशेषापत्त्या सगुणनिर्गुणविद्ययोः फलतो भेदो न स्यादित्याशङ्क्य निराकरोति न चेत्यादिना। यादृग्गुणकब्रह्मध्यानवान् अस्मिन् लोके भवति तादृशं ब्रह्म देहपातानन्तरं प्राप्नोतीति यथाक्रतुरिति श्रुत्यर्थः। तमीश्वरं यथा यथा येन येन गुणजातेन विशिष्टमुपासते तादृशमेव तं प्राप्नुवन्तीत्यर्थः। सगुणोपासकं प्रकृत्य श्रुतम् आप्नोति स्वाराज्यमिति,श्रुतिवाक्यमादिशब्दार्थः।

सगुणोपासकानामखण्डसाक्षात्काराभावात् नाविद्यानिवृत्तिर्न वा तन्मूलाहङ्कारादेर्विलयः ॥ आवरणानिवृत्तेर्नाखण्डानन्दस्फुरणम् । जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च भोगमात्रसाम्यलिङ्गाच्च इत्यादिसूत्रोक्तन्यायेन तेषां परमेश्वरेण भोगसाम्येऽपि सङ्कल्पमात्रात् स्वभोगोपयुक्तदिव्यदेहेन्द्रियवनितादिसृष्टिसामर्थ्येऽपि सकल-

---

अविशेषापत्तिरिति । तथा च सगुणोपासकानां ब्रह्मलोकगतानां निर्गुणविद्याश्रयणं व्यर्थं स्यादिति भावः ।

फलभेदं दर्शयति सगुणेत्यादिना जगदिति । सकलजगत्सृष्टिसंहारकर्तृत्वलक्षणव्यापारव्यतिरिक्तं स्वभोगोपयुक्तभोग्यभोगोपकरणमात्रसृष्टिसामर्थ्यरूपमेव ऐश्वर्यमुपासकानां भवितुमर्हति न तु सकलजगद्व्यापारः । स तु नित्यसिद्धस्य परमात्मन एव । कुतः । आत्मन आकाशः सम्भूत इत्यादिसृष्टिवाक्येषु परमात्मन एव प्रकृतत्वादुपासकानामसन्निहितत्वाच्च । इतश्च सगुणोपासकानां न निरङ्कुशमैश्वर्यमित्याह भोगेति । उपासकानां नित्यसिद्धेन परमेश्वरेण हिरण्यगर्भमाविश्य भोगान् भुञ्जानेन भोगमात्रे साम्यगमकस्य सत्त्वादित्यर्थः । तथा च श्रुतिः तमाह आपो वै खलु मीयन्ते लोकोऽसाविति । तमुपासकं स्वसमीपमागतं प्रति आह हिरण्यगर्भः मया खलु आपोऽमृतलक्षणा भुज्यन्ते त्वयापि असावमृतलक्षणपदार्थो लोको भोग्य इति श्रुत्यर्थः । ननु सङ्कल्पादेव तु तच्छ्रुतेरिति सूत्रेण तेषामीश्वरवत् सत्यसङ्कल्पत्वव्यवस्थापनात् कथं जगद्व्यापाराभावः । इत्यत आह सङ्कल्प-

जगत्सृष्टिसंहारादिस्वातन्त्र्यलक्षणं न निरवग्रहमैश्वर्य्यम् मुक्तानां तु निःसन्धिबन्धमीश्वरभावं प्राप्तानां तत् सर्वमिति महतो विशेषस्य सद्भावात्।

न च परमेश्वरस्य रघुनाथाद्यवतारे तमखिल्वदुःखसंसर्गादिश्रवणान्मुक्तानामीश्वरभावे पुनर्बन्धापत्तिः। तस्य विप्रशापामोघत्वादिस्वकृतमर्य्यादापरिपालनाय कथञ्चिद्भृगुशापादिसत्यत्वं प्रत्याययितुं नटवदीश्वरस्य तदभिनयमात्रपरत्वात्।

---

मात्रादिति। यं यं कामं पित्रादिरूपं कामयते स स कामः सङ्कल्पादेव समुत्तिष्ठतीति भोग्यादिपदार्थानामिव श्रुतौ सङ्कल्पमात्रसिद्धत्वप्रतिपादनात् तावन्मात्रविषयमेवोपासकानां सत्यसङ्कल्पत्वमिति सूत्रतात्पर्य्यात् न तद्विरोध इति भावः। निःसन्धिबन्धमिति। सर्वात्मनेत्यर्थः। तत्सर्वमिति। अविद्यानिवृत्त्यादिकं पूर्वोक्तं सर्वमित्यर्थः।

परममुक्तस्य ईश्वरभावापत्तौ बाधकमाशङ्क्य निराकरोति न च इत्यादिना परमेश्वरस्येति। श्रीमहाविष्णोरित्यर्थः। श्रीकृष्णाद्यवतार आदिशब्दार्थः। तमखिल्वेति। आत्मानं मानुषं मन्ये रामं दशरथात्मजमित्यादि श्रीरामवाक्यैरेव स्वकीयविष्णुत्वलक्ष्मीभर्तृत्वादिविषयी अज्ञानावगमात् राज्यनाशो वने वासः सीता नष्टा द्विजो हतः। ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्। न मद्विधो दुष्कृतकर्मकारीत्यादिभिः श्रीरामवाक्यैरेव अत्यन्तदुःखित्वप्रतीतिश्चेत्यर्थः। सुग्रीवं प्रत्यं

गत इत्यादिवाक्यगतदैन्यादिकमादिपदार्थः। तस्य कथञ्चिदभिनयमात्रपरत्वादिति सम्बन्धः। तस्येत्यस्य तमस्त्वित्वादिश्रवणस्येत्यर्थः। कथञ्चिदित्यस्य स्वेच्छयेत्यर्थः। विप्रशापामोघत्वादिरूपा या स्वेन परमेश्वरेण कृता मर्य्यादा व्यवस्था तत्परिपालनायेत्यर्थः। सर्वज्ञस्यापि श्रीरामस्य महादेवब्रह्मेन्द्रादिदेवानां सन्निधौ आत्मानं मानुषं मन्य इत्यादिवचनेन देवानां सन्निधौ मनुष्येण विनय एव कर्त्तव्यः न तु प्रागल्भ्यं कर्त्तव्यम्। तथा सति मनुष्यस्यानर्थो भवेदिति या परमेश्वरकृता मर्य्यादा सा श्रीरामेण परिपालिता। एवमन्या अपि मनुष्याणां हितार्थाय गुरुशिष्यसम्प्रदायादिलक्षणा मर्य्यादा परमेश्वरेण कृतास्ताः सर्वा अपि तदा तदा श्रीरामकृष्णाद्यैर्लोकहितार्थाय अनुष्ठिताः तासां संग्रहार्थमादिपदम्। भृगु इति। भृगुशापस्य स्वयं तच्छापाङ्गीकारस्य च सत्यत्वं मनुष्यलोके प्रकाशयितुमित्यर्थः। तत्प्रकाशनफलञ्च श्रेयोऽर्थिनां विप्रशापादिभ्योऽतिभीत्या निवृत्तिद्वारा श्रेयःप्राप्तिरेव। भृगुशापादिकं च वाल्मीकीये उत्तररामायणे व्यक्तम्। तथा हि वशिष्ठसन्निधौ दशरथं प्रति दुर्वासाः। शृणु राजन्! पुरावृत्तं पुरा देवासुरे युधि। दैत्याः सुरैर्हन्यमाना भृगुपत्नीमुपाश्रिताः। तया दत्ताभयास्तत्र न्यवसन्निर्भयास्तदा। तया परिगृहीतांस्तान् दृष्ट्वा क्रुद्धः सुरोत्तमः। चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत्। ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः। शशाप सहसा क्रुद्धो विष्णुं रिपुबलार्दनम्। सहसा विष्णोर्जगदीश्वरस्य शापानभिभाव्यत्वमविचार्य्येत्यर्थः। यस्मादवध्यां मे भार्य्यामवधीः क्रोधमूर्च्छितः। तस्मात् त्वं मानुषे लोके जनिष्यति जनार्दन!। तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम्। एवं शापं भृगुर्दत्त्वा विष्णोर्देवस्य विव्यथे। विष्णुशक्तिमविद्वान् स प्रपेदे शापमूढताम्। विष्णुशक्तिमविद्वान् सन्

अन्यथा तस्य नित्यमुक्तत्वनिरवग्रहस्वातन्त्र्य-

---

विष्णोः शापं दत्त्वा पश्चाद्विष्णुशक्तिप्रतिहतं शापं स्वात्मानं प्रति पुनः प्राप्तं ज्ञात्वा व्यथां भीतिं प्राप्तवान् व्यथितश्च शापेन मूढ़तां विसंज्ञतां प्राप्त इत्यर्थः। चिरकालमसंज्ञोऽभूच्छापान्धतम-सावृतम्। दृष्ट्वा सप्तर्षयश्चैनं कृपां चक्रुश्च भक्तिभिः। एनं चिरकालं शापान्धतमसावृतं भृगुं दृष्ट्वा पूर्वं सप्तर्षिषु भृगुणा कृताभि-र्भक्तिभिः पूजाभिः तस्मिन् ते ऋषयः कृपां चक्रुः। शापश्च कृपया भृगोः सकाशान्निःसारितवन्त इत्यर्थः। स च शापः पुरस्तस्थौ मन्दं भृगुरथाब्रवीत्। रक्षध्वं मामृषिश्रेष्ठाः! शापात् मत्पुरतः स्थितात्। श्रुत्वा तु भृगुवाक्यं तमाहुश्च परमर्षयः। स्तुत्यैर्ब्रह्मे-शशक्राद्यैः स्तूयमानमहर्निशम्। स्तुत्यैरिति अस्माभिः स्तुत्यै-रपीत्यर्थः। नारायणं प्रपद्यस्व स्तोत्रैरेव च सुव्रत!। नारायण-मेव प्रपद्यस्व नान्यः शक्तस्त्वां मोचयितुमित्यर्थः। भृगुणारा-धितो विष्णुरागतस्त्वरितं भृगुम्। कृतापराधमपि भृगुं भक्तवा-त्सल्यात् त्वरया आगत इत्यर्थः। माभैर्भृगोऽनृतं वाक्यं नाभवि-ष्यद्द्विजस्य ते। अनृतं न भविष्यतीत्यर्थः। सम्मोचयित्वा शापात् त्वामहमेनं गृहीतवान्। अङ्गीकृतवानित्यर्थः। अर्चया-मास तं देवं भृगुः शापेन पीड़ितः। ततोऽब्रवीद्देवदेवः प्रीति-मान् भक्तवत्सलः। लोकानां तु हितार्थाय शापं तं ग्राह्यमुक्तवान्। तव च हितार्थायेति तुशब्दार्थः। इति शप्तो महातेजा भृगुणा पूर्वजन्मनि। इहागतः स पुत्रत्वं तव पार्थिवसत्तम। राम इत्यभि-विख्यातस्त्रिषु लोकेषु मानदेति। अहर्निशं ब्रह्मेशादि-स्तुत्यत्वदेवदेवत्वादिप्रतिपादकरामायणवचनैरेव श्रीमहाविष्णो-र्लोकहितार्थाय श्रीरामरूपेणावतीर्णस्य तमस्त्विवेत्यादिश्रवण-मभिनयमात्रपरमिति भावः।

समाभ्यधिकराहित्यादिश्रुतिविरोधात्। तस्माद्
यावत्सर्वमुक्ति परमेश्वरभावो मुक्तस्येति विम्बेश्वर-
भावे न कश्चिद्दोषः।

अयमेव पक्षः श्रुतिसूत्रभाष्याद्यनुगुणः। तथा
हि समन्वयाध्याये तावद्दहर उत्तरेभ्य इत्यधिकरणे
अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म
दहरोऽस्मिन् अन्तराकाश इत्यादिश्रुतिनिर्दिष्टो दह-
राकाशो न भूताकाशो नापि जीवः किन्तु परमे-
श्वरः। उत्तरेभ्यो वाक्यशेषेभ्यः। उभे अस्मिन्
द्यावापृथिवी अन्तरेव समाहिते यावान् वा अय-
माकाशस्तावानेषोऽन्तर्हृदय आकाश एष आत्माप-

---

अन्यथेति। तस्याभिनयमात्रपरत्वानङ्गीकार इत्यर्थः।
तस्येति। नारायणात् ब्रह्मा जायते अन्तर्बहिश्च तत्सर्वं
व्याप्य नारायणः स्थित इत्यादिश्रुतिसहस्रसिद्धस्य ईश्वरस्ये-
त्यर्थः। एष त आत्मान्तर्याम्यमृतः एष सर्वेश्वरः न तत्स-
मश्चाभ्यधिकश्च दृश्यते सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं
पदमित्यादिश्रुतिषु नारायणस्य नित्यमुक्तत्वसर्वेश्वरत्वसमाधि-
कराहितत्वमुक्तप्राप्यत्वादिश्रवणेन तद्विरोधप्रसङ्गादित्यर्थः।
तस्मादिति। मुक्तस्येश्वरभावापत्तौ बाधकाभावादित्यर्थः।

ननु बाधकाभावेऽपि साधकमानं विना कथमीश्वरभावा-
पत्तिर्मुक्तस्य सिध्यतीत्याशङ्क्य तत्र मानमाह अयमेवेति। अस्मिन्
ब्रह्मणः परमात्मन उपलब्धिस्थानभूते पुरे शरीरे यदिदं दहरमल्पं

हतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो विपिपासः सत्यकामः सत्यसङ्कल्प इत्यादिना प्रतिपाद्यमानेभ्यो द्यावापृथिव्याद्याधारत्वलक्षणगुणेभ्यो हेतुभ्य इति निर्णीय उत्तराच्चेदाविर्भूतस्वरूपस्त्विति सूत्रान्तरेण दहरविद्यानन्तरमिन्द्रप्रजापतिसंवादे य आत्मापहतपाप्मा इत्यादिना अपहतपाप्मत्वादि गुणाष्टकयुक्तमात्मानमुपदेश्यमुपक्षिप्य य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति जाग्रदवस्थायां द्रष्टृत्वेनाक्षिसन्निहितस्य य एष स्वप्ने महीयमानश्चरति एष आत्मेति स्वप्नावस्थापन्नस्य तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजा-

---

पुण्डरीकमस्ति वेश्माकारमस्मिन् पुण्डरीकेऽन्तर्दहर आकाशो यः श्रुतः स भूताकाशो वा जीवो वा परमेश्वरो वेति संशये रूढ़िबलात् भूताकाश इत्येकः पूर्वपक्षः। आकाशविशेषणदहरत्वलिङ्गादल्पोपाधिपरिच्छिन्नो जीव इति द्वितीयः पूर्वपक्षः। पक्षद्वयनिषेधपूर्वकं सिद्धान्तं वदन् सूत्रं व्याचष्टे न भूताकाश इत्यादिना। वाक्यशेषमेव खण्डश उदाहरति उभे इति। अस्मिन् प्रकृते दहराकाशे समाहिते स्थिते अयमाकाशः भूताकाशः एतच्छब्दाभ्यां दहराकाशो निर्दिष्टः। जिघत्सा भक्षणेच्छा तद्रहितः पिपासारहितश्च। अत्र भूताकाशे भूताकाशोपमितत्वसत्यकामत्वादयो गुणा न सम्भवन्तीति तन्निरासः। परिच्छिन्ने जीवे आकाशोपमितत्वद्यावापृथिव्यादिजगदाधारत्वापहतपाप्मत्वा-

नात्येष आत्मेति सुषुप्त्यवस्थापन्नस्य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इत्यवस्थात्रयोत्तीर्णस्य च जीवस्योपदेशाज्जीवेऽपि अस्ति अपहतपाप्मत्वादिगुणाष्टकमिति न दहराकाशस्य परमेश्वरत्वनिर्णायकम् ।

---

दयो गुणा न सम्भवन्तीति जीवनिरासः । उक्तहेतूनां परमेश्वरे सम्भवादाकाशशब्दस्य तत्र निरूढत्वाच्च स एव दहराकाशः । तस्य दहरत्वं तु न स्वाभाविकं किन्तु उपासनार्थं कल्पितमणीयस्त्वादिवदिति निर्णयः । सूत्रान्तरेण जीवेऽप्यपहतपाप्मत्वादिगुणाष्टकमस्तीति तद्गुणाष्टकं निर्णायकं न भवतीत्याशङ्क्य समादधानः सूत्रकारो मुक्तस्येश्वरभावापत्तिमाहेति सम्बन्धः । जीवेऽपि गुणाष्टकमस्तीति गुणाष्टकयुक्तमात्मानमुपदेश्यमुपक्षिप्य जीवस्योपदेशादिति हेतुः । गुणाष्टकयुक्तमात्मानमुपदेश्यत्वेनोपक्रम्य प्रजापतिना जीव उपदिष्ट इति कथमवगम्यत इत्यत आह य एषोऽक्षिणीत्यादिना । प्रजापतिना हि पर्य्यायचतुष्टयेन आत्मा इन्द्रं प्रत्युपदिष्टः । तत्र प्रथमपर्य्यायवाक्यं य एषोऽक्षिणीति। पुरुषो जीवः । अक्षिग्रहणं सर्वेन्द्रियोपलक्षणार्थम् । चक्षुरादिषु रूपाद्युपलब्धिक्रियां कुर्वत्सु सत्सु यः पुरुषो दृश्यते रूपाद्युपलब्धिक्रियाकर्त्तृत्वेनानुमीयते एष युवाभ्यां पृष्ट आत्मेतीन्द्रविरोचनौ प्रति प्रजापतेरुपदेशः । तत्राक्षिग्रहणेन जाग्रदवस्थावान् जीव इह विवक्षित इति प्रतीयते । अवस्थान्तरेषु इन्द्रियव्यापाराभावादिति मत्वा प्रथमपर्य्यायवाक्यस्य तात्पर्य्यमाह

य एष स्वप्न इत्यादिपर्य्यायेषु प्रतिपर्य्यायमेतं त्वेव ते भूयोऽनुव्याख्यास्यामि इति श्रवणेन स्फुट-

---

जाग्रदवस्थायामिति। द्रष्टृत्वेनेति। इन्द्रियैः रूपादिद्रष्टृत्वेने-त्यर्थः। अक्षिसन्निहितस्य स्वप्नावस्थापन्नस्य सुषुप्त्यवस्थापन्न-स्यावस्थात्रयोत्तीर्णस्य च जीवस्योपदेशादिति सम्बन्धः। द्विती-यपर्य्यायवाक्यमुदाहरति य एष स्वप्न इति। महीयमानो विन-तादिभिः पूज्यमान इत्यर्थः। चरति विषयान् वासनामया-ननुभवति य एष इन्द्रेण त्वया पृष्ट आत्मेत्यर्थः। तृतीयपर्य्याय-वाक्यमुदाहरति तद्यत्रैतदिति। यत्र यस्मिन् काले एतदेषः जीवः सुप्तः स्वापं प्राप्तः समस्तः सम्यग्विलीनकरणग्रामः संप्रसन्नः स्वरूपानन्दानुभववान् स्वप्नमपि न विजानाति एष एव त्वया पृष्ट आत्मेत्यर्थः। चतुर्थपर्य्यायवाक्यमुदाहरति एष संप्रसाद इति। सम्यक् प्रसीदत्यस्मिन् जीव इति व्युत्पत्त्या संप्रसादशब्दः सुषुप्तस्थानवाचकः सन् सुषुप्त्यवस्थोपलक्षितं जीवमुपलक्षयति। शरीरादुत्क्रम्य परममुत्कृष्टं ज्योतिरादित्यमुपसम्पद्य आदि-त्योपलक्षितं देवयानमार्गं प्राप्य स्वेन स्वकीयेनोपासनाफल-भूतैश्वर्य्यविशिष्टेन रूपेणाभिनिष्पद्यते। ब्रह्मलोकं गत उपासकः स उत्तमः पुरुष उपक्रान्तापहतपाप्मत्वादिगुणक इति पूर्वं-पक्षरीत्या चतुर्थपर्य्यायवाक्यार्थो द्रष्टव्यः। ननु प्रजापतिवाक्ये पर्य्यायचतुष्टयस्य जाग्रदाद्यवस्थापन्नजीवविषयकत्वमनुपपन्नम्। प्रथमपर्य्याये जाग्रदवस्थावाचिपदाभावेन तस्य जाग्रज्जीवविषय-कत्वस्यास्फुटत्वात्। तथाच प्रथमपर्य्याये इन्द्रविरोचनाभ्यां पृष्टो-ऽपहतपाप्मत्वादिगुणक आत्मैव निर्दिष्टः। स च ब्रह्मैवेति। प्रजापतिवाक्येऽपि ब्रह्मण एव गुणाष्टकमुपदिष्टं न जीवस्येति

स्वप्नादिजीवलिङ्गानां द्वितीयादिपर्य्यायाणामेव जीवविषयत्वं प्रथमपर्य्यायस्य च ब्रह्मविषयत्वमिति चोद्यानवकाशादित्याशङ्क्य तत्र चतुर्थपर्य्याये निरूप्यमाणः सकलबन्धविमुक्तत्वेनाविर्भूतस्वरूपो जीवः प्रतिपाद्यः। न तु सांसारिकावस्थाभेदकलुषितः। तत्र सत्यसङ्कल्पत्वादिगुणबाधात्। अवस्थात्रयोपन्यासस्य तत्तदवस्थादोषाभिधानेन चतुर्थपर्य्यायोपदेशशेषत्वप्रतिपत्तेरिति समादधानः सूत्रकारश्चतुर्थपर्य्याये प्रतिपाद्यस्य मुक्तस्येश्वरभावापत्तिं स्पष्टमाह। तदभावे मुक्तेऽपि सत्यसङ्कल्पत्वाद्ययोगात्। अनुक्रान्तस्य गुणाष्टकस्येश्वरादन्यत्रापि

चोद्यस्यात्र नावकाश इत्याह य एष स्वप्न इत्यादिना पर्य्यायेष्विति स्फुटेति। स्फुटानि स्वप्नस्थापशरीरात् समुत्थानरूपाणि जीवलिङ्गानि येषु पर्य्यायेषु तेषामेव जीवविषयत्वम्। तेषां ब्रह्मविषयकत्वचोद्यानवकाशात् प्रथमपर्य्यायस्य त्वस्फुटजीवलिङ्गस्य ब्रह्मविषयकत्वमिति चोद्यं सावकाशमिति भ्रमो न कर्त्तव्य इत्यत्र हेतुमाह प्रतिपर्य्यायमिति। द्वितीयपर्य्यायस्यादौ एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति श्रवणेन प्रथमपर्य्यायस्य ब्रह्मविषयत्वासम्भवादित्यर्थः। एतदुक्तं भवति द्वितीयादिपर्य्यायत्रयस्य जीवविषयत्वं तावत् संप्रतिपन्नम्। प्रथमपर्य्यायस्यापि जीवविषयत्वं वक्तव्यम्। प्रथमपर्य्यायनिर्दिष्टस्यैव एतमिति सर्वनाम्ना आकृष्यमाणत्वादर्थभेदे तदयोगादिति। एतेन प्रथमपर्य्यायस्य चतु-

र्गोलकस्थप्रतिबिम्बविषयत्वमेव तस्याच्छिणि दृश्यत इति दृश्यमानत्वसम्भवादिति चोद्यमपि निरस्तम्। द्वितीयपर्य्यायगतेनैतत्पदेन प्रथमपर्य्यायनिर्दिष्टं पुरुषमाकृष्य तस्योत्तरत्र स्वप्नजीवरूपत्वोपदेशात् प्रथमपर्य्याय एवाच्छिणि निर्दिष्टस्य पुरुषस्यामृतत्वाभयत्वब्रह्मत्वसङ्कीर्त्तनाच्च। न च प्रतिबिम्बे तत् सम्भवति न च जीवस्यापि तदसम्भव इति वाच्यम्। जाग्रदाद्यवस्थासु अमृतत्वाभयत्वादेरसम्भवेऽपि अवस्थात्रयोत्तीर्णस्य तस्य प्रजापतिवाक्यप्रामाण्यात् तत्सम्भवादिति पूर्वपक्षाशयः। एवमुत्तराच्चेदिति सौत्रशङ्काभागं व्याख्यायाविर्भूतस्वरूपस्त्विति सिद्धान्तभागं व्याचष्टे तत्र चतुर्थेति। पर्य्यायचतुष्टयमध्य इत्यर्थः। सकलेति। तत्त्वसाक्षात्कारेणाविद्यानिवृत्तौ सत्यां तन्मूलकसकलबन्धविनिर्मुक्त्या आविर्भूतममृताभयब्रह्मलक्षणं स्वरूपमस्येत्याविर्भूतस्वरूपो जीवः प्रतिपाद्यत इत्यर्थः। ननु चतुर्थपर्य्यायेऽपि पूर्वपर्य्यायेष्विव संसार्य्यात्मैव कुतो न निरूप्यते। तत्पर्य्यायेऽपि शरीरात् समुत्थायेति शरीरावधिकोत्क्रान्त्यवस्थाविशेषविशिष्टस्य संसारिण एव स्पष्टं प्रतीतेरित्याशङ्कां सौत्रावधारणार्थकतुशब्दव्याख्यानेन परिहरति न त्विति तत्रेति। संसारिणेत्यर्थः। तथा च चतुर्थपर्य्यायेऽपि संसारिण एव निरूपणे इन्द्रेण पृष्टस्यापहतपाप्मत्वादिगुणकस्य प्रजापतिना अनुपदिष्टत्वात् प्रजापतिवाक्यं प्रतिवचनमेव न स्यात्। अतःचतुर्थपर्य्यायो गुणाष्टकयोग्यमुक्तजीवविषय एवेत्यर्थः। न च पूर्वपक्षोक्तरीत्या सगुणविद्यया ब्रह्मलोकं गतस्य अपहतपाप्मत्वादिगुणाष्टकसम्भवादात्यन्तिकमुक्तविषयत्वं चतुर्थपर्य्यायस्य न वक्तव्यम्। तथा च संसारिविषयत्वमेव अस्यापि पर्य्यायस्येति वाच्यम्। सगुणविद्याफलभूतस्यापि तस्याविद्यानिवृत्त्यादेरभावेन निरङ्कुशापहतपाप्मत्वाद्यसम्भवात् प्रजापतिवाक्यस्य निर्गुणब्रह्मपरत्वस्य सम-

न्वयाध्याय एव सप्रपञ्चं निरूपितत्वाच्च न तद्विद उत्क्रान्त्यादिसम्भव इति भावः। तथा चोक्ततात्पर्य्यानुरोधेन चतुर्थपर्य्यायस्यायमर्थः। शरीरात् समुत्थानं शरीरत्रयविलक्षणस्य त्वम्पदलक्ष्यस्य निर्णयः परं ज्योतिर्ब्रह्म तदुपसम्पत्तिः तत्साक्षात्कारः तत्फलं मुक्तिः स्वरूपाविर्भावः स्वेन रूपेणाभिनिष्पत्तिः। स च मुक्तः उत्तमपुरुषः परमात्मैवेति। ननु चतुर्थपर्य्यायस्यैव पृष्टगुणाष्टकमुक्तात्मनिरूपणपरत्वे पूर्वपर्य्यायाणामवस्थात्रयोपन्यासरूपाणां वैयर्थ्यं स्यादिति नेत्याह अवस्थात्रयोपन्यासस्येति। जाग्रदवस्थायामन्धत्वविनाशित्वादिदोषाभिधानेन स्वप्नावस्थायां रोदनादिदोषाभिधानेन सुषुप्त्यवस्थायां स्वपरज्ञानाभावविनष्टप्रायत्वादिदोषाभिधानेन च अवस्थात्रयकलुषितस्य जीवरूपस्य लोकसिद्धस्य हेयत्वज्ञापनद्वारा तज्जिहासोरधिकारिणो वास्तवब्रह्मस्वरूपनिरूपणार्थं चतुर्थपर्य्यायप्रवृत्तिरित्यवगमात् पूर्वपर्य्यायाणां चतुर्थपर्य्यायशेषत्वं प्रतीयते। अतो न तेषां वैयर्थ्यमित्यर्थः। समादधान इति। अपहतपाप्मत्वादिगुणाष्टकं दहराकाशस्य ईश्वरस्य निर्णायकं न भवति। प्रजापतिवाक्यात् जीवेऽपि गुणाष्टकसत्त्वेन तस्य व्यभिचारित्वादित्याशङ्क्य प्रजापतिवाक्ये मुक्तजीव एव गुणाष्टकयुक्तः प्रतिपाद्यते न तु बद्धजीवः। ततो न गुणाष्टकस्य परमेश्वरादन्यत्र सत्त्वम्। येन तस्य अन्यत्रापि सत्त्वेन व्यभिचारितया निर्णायकत्वं न स्यादिति समादधान इत्यर्थः। ननु तत्र सत्यसङ्कल्पत्वादिगुणबाधादिति पूर्वग्रन्थेन चतुर्थपर्य्याये गुणाष्टकयुक्तो मुक्तजीवः प्रतिपाद्यत इति सूत्रतात्पर्य्यं वर्णितम्।

तावता मुक्तस्येश्वरभावापत्तिः कथं सूत्रकारेणोक्ता तत्राह तदभाव इति। मुक्तस्येश्वरभावापत्त्यभावे बद्धजीव इव मुक्तजीवेऽपि निरस्तोपाधिके सत्यसङ्कल्पत्वादिगुणयोगात्

भावे कृतशङ्कापरिहारालाभाच्च। तस्मिन् सूत्रे तस्मादविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिदोषकलुषितमनेकानर्थयोगितद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यत इति भाष्यकारोऽपि अतिस्पष्टं मुक्तस्य सगुणेश्वरभावापत्तिमाह।

---

गुणाष्टकयुक्तस्यात्मनो निरूपणं प्रजापतिवाक्येन स्यात्। अतो मुक्तजीवस्य गुणाष्टकयुक्तत्वमीश्वरभावापत्तेरेवेति सूत्रकारस्य तात्पर्यं निश्चीयत इत्यर्थः। ननु जीवेश्वरयोर्वस्तुत एव भिन्नत्वात् मुक्तस्य न ईश्वरभावापत्त्या गुणाष्टकयोगः किन्तु स्वत एवेत्याशङ्कां निराकरोति। अनुक्रान्तस्येति। उपक्रमे श्रुतस्येत्यर्थः। कृतेति। गुणाष्टकस्य जीवसाधारणत्वेन ईश्वरासाधारणत्वाभावात् न ईश्वरलिङ्गत्वं गुणाष्टकस्येति या शङ्का उत्तराच्चेदिति सूत्रभागेन कृता तस्याः शङ्काया गुणाष्टकयुक्तस्य मुक्तस्य वस्तुगत्या ईश्वराद्भिन्नत्वपक्षे परिहारो न लभ्यते। तथाच सूत्रविरोधात् न मुक्तस्य ईश्वरात् भेदेन अवस्थानमिति भावः।

तस्मिन्निति। उत्तराच्चेदाविर्भूतस्वरूपस्त्विति अस्मिन्नित्यर्थः। तस्मादिति। जीवब्रह्माभेदस्य वास्तवत्वादित्यर्थः। तस्मादित्यनन्तरं यदिति पदमध्याहर्त्तव्यम्। विद्यया तद्विलापनेन आविद्यकसंसारनिवृत्तिद्वारा संसारविलक्षणं रूपं प्रतिपद्यत इत्यर्थः। ननु अत्र मुक्तस्येश्वरभावापत्तौ किम् उत्तराच्चेदिति सूत्रभागकृतशङ्कापरिहारालाभप्रसङ्गो

अविरोधाध्यायेऽपि एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते

---

नियामकत्वेनाभिमतः किं वा प्रजापतिवाक्यमेव मुक्तस्येश्वरभावापत्तौ नियामकत्वेनाभिमतम्। नाद्यः। मुक्तस्य विश्वभूतीश्वरभावापत्तिं विना केवलचिन्मात्ररूपेणैव अवस्थानाभ्युपगमेऽपि गुणाष्टकस्य विश्वभूतीश्वरादन्यत्राभावेन तस्य तदसाधारणस्य महाकाशे ईश्वरत्वनिर्णायकत्वसम्भवात्। न द्वितीयः। निर्गुणविद्याप्रकरणरूपे प्रजापतिवाक्ये गुणानामविवक्षितत्वेन मुक्तजीवेऽपि गुणाष्टकवैशिष्ट्यस्याप्रतिपाद्यत्वात्। ज्ञेयब्रह्मप्रकरणे गुणवैशिष्ट्यस्याप्रतिपाद्यत्वमानन्दमयाधिकरणारम्भभाष्ये स्पष्टमभिहितम्। तथा च भाष्यम् एकमपि ब्रह्मापेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धञ्च उपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषु उपदिश्यत इति। अत्र भाष्ये वेदान्तेषु निरस्तोपाधिसम्बन्धं ब्रह्म ज्ञेयत्वेनोपदिश्यत इत्युक्त्या ज्ञेयब्रह्मप्रकरणेषु गुणवैशिष्ट्यस्याप्रतिपाद्यत्वं स्पष्टं प्रतीयते। अतएव सिद्धान्ते ज्ञेयब्रह्मपराणां वेदान्तानां संसर्गागोचरप्रमितिजनकत्वरूपम् अखण्डार्थत्वमिष्यते। तस्मात् प्रजापतिवाक्योपक्रमे श्रुतं सत्यसङ्कल्पत्वादिकं बृहदारण्यकषष्ठाध्यायगतसर्वेश्वरत्वादिगुणजालवत् ज्ञेयब्रह्मप्रशंसापरमुपलक्षणमात्रं वा न तु दहरविद्यागतगुणाष्टकवत् प्रतिपाद्यम्। तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यते इति भाष्यमपि गुणाष्टकोपलक्षितं ब्रह्म प्रतिपद्यत इति योजनीयम्।

अतो मुक्तस्येश्वरभावापत्तौ नोदाहृतश्रुतिसूत्रभाष्याक्षि

इत्यादिश्रुतेस्तत्तत्कर्मकर्तृत्वेन तत्तत्कर्मकारयितृत्वेन च उपकार्य्योपकारकभावेन अवगतयोर्जीवेश्वरयोरंशांशिभावरूपसम्बन्धनिरूपणार्थत्वेनावतारिते अंशो नानाव्यपदेशादित्यधिकरणे जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखभोगेन ईश्वरस्यापि दुःखित्वं स्यात्। यथा लोके हस्तपादाद्यन्यतमांशगतेन दुःखेनांशिनो देवदत्तस्यापि दुःखित्वं तद्वत्।

ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात्

---

प्रमाणं भवितुमर्हन्तीत्यस्वरसादाह अविरोधाध्यायेऽपीति। वेदान्तसमन्वयस्य प्रथमाध्याये निरूपितस्य मानान्तरविरोधसमाधानप्रतिपादके द्वितीयाध्यायेऽपीत्यर्थः। अविरोधाध्यायेऽपि समाहितेन शङ्काग्रन्थेन भाष्यकारो मुक्तस्येश्वरभावापत्तिं स्पष्टीचकारेति सम्बन्धः। उन्निनीषते उत्कृष्टं लोकं नेतुमिच्छतीति यावत्। कर्मकर्त्ता जीव उपकार्य्यः कर्मकारयिता ईश्वर उपकारकः। तयोः श्रुत्यवगतोपकार्य्योपकारकभावबलात् सामान्यतः कश्चित् सम्बन्धोऽवगतः। सम्बन्धं विना लोके तद्भावादर्शनात्। स च सम्बन्धः क इति विशेषाकाङ्क्षायां तयोरंशांशिभावः सम्बन्ध इति निरूपणार्थत्वेन इत्यर्थः। जीव ईश्वरस्यांशः। कुतः। नानात्वस्य भेदस्योपदेशादिति सूत्रभागाचरार्थः। भाष्यं पठति जीवस्येत्यादिना।

अतो वरं पूर्वावस्था संसार एवास्त्विति सम्यक् ज्ञानानर्थक्यप्रसङ्ग इति शङ्काग्रन्थेन भामत्यादिषु स्पष्टीकृतं बिम्बप्रतिबिम्बभावकृतासङ्करमुपादाय समाहितेन भाष्यकारो मुक्तस्येश्वरभावापत्तिं स्पष्टीचकार।

---

ईश्वरस्य स्वांशभूतसकलजीवगतदुःखभाक्त्वे को दोषः तत्राह तत्रश्चेति। तत्पदमीश्वरपरम्। तत इति। ईश्वरप्राप्तेः सकाशात् पूर्वावस्थितसंसाराङ्गीकरणमेव वरमिति बुद्ध्या ईश्वरप्राप्त्युपाये सम्यक् ज्ञाने कोऽपि न प्रवर्त्तेत। ततश्च ज्ञानशास्त्रमप्रमाणं स्यादित्यर्थः। अस्याः शङ्कायाः परिहारग्रन्थरूपयोः सूत्रभाष्ययोरभिप्रेतो जीवपरमेश्वरयोरंशांशिनोः परस्परधर्मासङ्करो भामत्यादिग्रन्थेषु स्पष्टीकृतः। कथं जीवाः तावदविद्याप्रतिबिम्बभूता ईश्वरांशत्वेन श्रुतिसूत्रभाष्येषु विवक्षिताः न तु हस्तपादादिवदवयवाः। तथा बिम्बभूतेश्वरोऽंशित्वेन विवक्षितो नत्ववयवी। बिम्बप्रतिबिम्बयोश्च लोके धर्मासाङ्कर्यं प्रसिद्धम्। अतो न जीवगतानां दुःखानामीश्वरे प्रसक्तिरिति स्पष्टीचकारेति। ननु मुक्तस्य ईश्वरभावापत्तिर्न सिद्धान्तसम्मता। तथाहि यावत्सर्वमुक्तीश्वरभावापत्तिर्मुक्तस्येति स्वीकारे हि चरमं मुच्यमानस्य निर्विशेषचिन्मात्रस्वरूपेणैव अवस्थानलक्षणा मुक्तिः। ततः प्राङ्मुच्यमानानान्तु स्वतश्चिन्मात्ररूपेणावस्थितानामीश्वरभावापत्त्या निरवग्रहैश्वर्यप्राप्तिरूपा मुक्तिरिति परममुक्तौ बहूनामैश्वर्यप्राप्तिरेकस्य तन्नास्तीत्येकं वैषम्यं, बहूनामैश्वर्यप्राप्तावपि क्रमेण मुच्यमानानां चिराचिरकालैश्वर्यलक्षणमपरं तारतम्यं, तेषामेव किञ्चित्कालमैश्वर्यं पश्चात्तदभाव इत्यादि-

रूपं तारतम्यं कल्पितं स्यात्। तच्च तृतीयाध्यायान्तिमाधिकरणवि-
रुद्धम्। तत्र हि सगुणविद्याफलभूतायामवान्तरमुक्तावेव तार-
तम्यं न तु परममुक्ताविति व्यवस्थापितम्। न च तदधिकरणस्य
परममुक्तौ वस्तुतस्तारतम्यं नास्तीति प्रतिपादने तात्पर्य्यम्।
तथाच काल्पनिकतारतम्ये सत्यपि न तदधिकरणविरोध इति
वाच्यम्। सिद्धान्ते सगुणविद्याफलभूतावान्तरमुक्तावपि वास्तव-
तारतम्यस्याभावेन सगुणमुक्तावेव तारतम्यं, न निर्गुणविद्याफल-
भूतायां परममुक्ताविति व्यवस्थापनपरस्य भाष्यादेर्निरालम्बन-
त्वापत्तेः। अतो मुक्तस्य ईश्वरभावापत्तिर्न सिद्धान्तसम्मता। एवं
स्थिते प्रकृते किं शङ्काभाष्यपर्य्यालोचनेन ईश्वरभावापत्तिर्भाष्य-
काराभिमतेति कल्प्यते, किं वा परिहारभाष्याभिप्रायालोचन-
या तथा कल्प्यते। नाद्यः। शङ्ककेन सिद्धान्त्यनभिमतामीश्वर-
भावापत्तिमापाद्य चोद्यकरणोपपत्तेः। न हि सर्वत्र सिद्धान्त्य-
भिमतमेव अर्थमवलम्ब्य पूर्वपक्षिणा सिद्धान्तिनं प्रत्यनिष्टमाशङ्क्यत
इति नियमो दृश्यते। द्वितीयकल्पस्य त्वीत्थमुत्थितिः, ईश्वरभावं
प्राप्तानां महत्तरं दुःखं स्यादिति शङ्काया द्वेधा परिहारः सम्भ-
वति। ईश्वरस्य सकलजीवदुःखैः दुःखित्वेऽपि न मुक्तानां मह-
त्तरदुःखप्राप्तिः। तेषां शुद्धचिन्मात्ररूपेणैव अवस्थानाभ्युपगमेन
ईश्वरभावापत्तेरनभ्युपगमादित्येकः प्रकारः। ईश्वरस्य दुःखा-
भावे समर्थिते सति तं प्राप्तानां मुक्तानां दुःखं स्यादिति शङ्का।
अर्थात् परिहृता भवति इत्याशयेन विम्बप्रतिविम्बभाव-
कृतभेदाधीनधर्मव्यवस्थासमर्थनं द्वितीयः प्रकारः। तत्र परिहार-
भाष्यभामत्यादिनिबन्धनेषु प्रथमप्रकारं विहाय द्वितीयप्रकार-
स्यैवावलम्बनात् शङ्काग्रन्थोक्ता मुक्तानामीश्वरभावप्राप्तिर्भाष्यका-
राद्यनुमतेति प्रतीयते। अनेनैवाभिप्रायेण भामत्यादिप्रस्फुटीकृतं
विम्बप्रतिविम्बभावकृतासङ्करमुपादाय समाहितेनेत्युक्तमिति।

एवमुत्थितः परिहारभाष्यपर्य्यालोचनारूपो द्वितीयप्रकारोऽपि मुक्तस्येश्वरभावापत्तावनन्यथासिद्धहेतुर्न भवति। परिहारभाष्यादौ प्रथमप्रकारमवलम्ब्य मुक्तानामीश्वरभावापत्तिर्नास्ति। तेषां शुद्धचिन्मात्ररूपेणैव अवस्थानाभ्युपगमात्। अतो न ज्ञानानर्थक्यप्रसङ्ग इति वास्तवपरिहारे कथिते हि ज्ञानानर्थक्यशङ्कापरिहारेऽपि ईश्वरस्य सकलजीवदुःखे दुःखित्वप्रसङ्गः परिहृतो न भवतीति तत्प्रसङ्गशङ्का अवशिष्येत। सापि शङ्का मा भूदित्यालोच्य प्रथमं प्रकारं विहाय द्वितीयप्रकारमवलम्ब्य महता यत्नेन परमेश्वरस्य दुःखित्वप्रसङ्गः परिहृतो भाष्यादिषु इति वक्तुं शक्यत्वात्, परिहारभाष्यादिषु परमेश्वरस्य दुःखित्वप्रसङ्गपरिहारानन्तरं तथा च मुक्तानामीश्वरभावापत्तिर्नानुपपन्नेति परापादितानुपपत्त्यभावोपसंहारादर्शनाच्च। किञ्च छान्दोग्ये सप्तमाध्याये स एकधा भवति त्रिधा भवति पञ्चधा भवति सप्तधा नवधा चैव पुनश्चैकादश स्मृतः। शतञ्च दश चैकञ्च सहस्राणि च विंशतिरिति वाक्येन परब्रह्मविदोऽनेकशरीरपरिग्रहादिरूपमैश्वर्य्यं श्रूयते। तच्च मुक्तस्येश्वरभावापत्तिपक्षे परममुक्तस्यैव सम्भवति। तथा च स एकधा भवतीत्यादिवचनं निर्गुणविद्याफलसमर्पकं न भवति किन्तु सगुणोपासनाफलसमर्पकम्। तच्च निर्गुणविद्याफलप्रशंसार्थं निर्गुणविद्याप्रकरणे पठ्यत इति भाष्यादिव्यवहारो विरुध्येत। तथा च सगुणविद्याफलविचारप्रस्तावे भाष्यं यद्यपि निर्गुणायां भूमविद्यायामनेकधा भावविकल्पः पठ्यते तथापि विद्यमानमेवेदं सगुणावस्थायाम् ऐश्वर्य्यं भूमविद्यास्तुतये सङ्कीर्त्यत इति यदि मुक्तस्येश्वरभावापत्तिः सूत्रभाष्यकारयोरभिप्रेता स्यात् तदा स एकधा भवतीत्यादिवचनस्य निर्गुणविद्याफलसमर्पकत्वेन प्रकरणसमन्वितार्थस्य सगुणविद्याफलसमर्पकत्वायोगादेतद्वचनस्य तत्फल-

साधनाध्यायेऽपि सन्ध्ये सृष्टिराह हीत्यधिकरणे स्वप्नप्रपञ्चस्य मिथ्यात्वे व्यवस्थापिते तत्र मिथ्याभूते स्वप्नप्रपञ्चे जीवस्य कर्त्तृत्वमाशङ्का पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययाविति सूत्रेण जीवस्येश्वराभिन्नत्वात् सदपि सत्यसङ्कल्पत्वादिकमविद्यादोषात्तिरोहितमिति न तस्य स्वप्नप्रपञ्चे स्रष्टृत्वं सम्भवतीति वदन् सूत्रकारः

---

समर्पकत्वमाश्रित्य सूत्रभाष्ययोः प्रवृत्तौ भावं जैमिनिर्विकल्पामननादित्यादिविचारो निरालम्बन एव स्यात्। ब्रह्मलोकं गतस्य सगुणोपासकस्य स्थूलशरीरसद्भावं जैमनिराचार्य्यो मन्यते। स एकधा भवतीत्यादिना अनेकधाभावरूपविकल्पश्रवणात् स्थूलशरीरभेदं विना एकस्योपासकस्यानेकधाभावासम्भवादिति सूत्रार्थः।

तस्मादुदाहृतशङ्काभाष्यग्रन्थस्य तत्परिहारभाष्यादिग्रन्थस्य च मुक्तानामीश्वरभावापत्तावनन्यथासिद्धप्रमाणत्वाभावात् उदाहृतानेकाधिकरणतद्भाष्यादिविरोधाच्च सा भाष्याभिमतेति कल्पयितुं न शक्यत इत्यस्वरसादाह साधनाध्यायेऽपीति। ब्रह्मविद्यासाधनवैराग्यप्रतिपादकतृतीयाध्यायेऽपि इत्यर्थः। साधनाध्यायेऽपि सूत्रकारः सूत्राभिप्रायं वर्णयन् भाष्यकारश्च मुक्तस्य परमेश्वरभावापत्तिं स्पष्टीचकारेति सम्बन्धः। सन्ध्ये जाग्रत्सुषुप्त्योः सन्धौ भवे स्वप्नस्थाने रथादिसृष्टिः सत्या भवितुमर्हति। हि यस्मात् श्रुतिराह रथादिसृष्टिम् अथ रथान् रथयोगान् पथः सृजत इत्यादिका। न हि श्रुतिसिद्धा सृष्टिः

तत्तु नस्तिरोहितं सत् परमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्ति-रौषधवीर्य्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवा-विर्भवति न स्वभावत एव सर्वेषां जन्तूनामिति तत्सू-त्राभिप्रायं वर्णयन् भाष्यकारस्य मुक्तस्य स्वप्नसृष्ट्या-द्युपयोगिसत्यसङ्कल्पत्वाद्यभिव्यक्त्यङ्गीकारेण परमे-

---

सत्या भवितुमर्हति। वियदादिसृष्टौ श्रुतिसिद्धायामसत्यत्वाद-र्शनादिति सूत्रार्थः। रथयोगा अश्वाः। कर्तृत्वमाशङ्क्येति। यथाग्न्यंशस्य विस्फुलिङ्गस्याग्नेरिव दहनप्रकाशनसामर्थ्यमस्ति तथा जीवस्य परमेश्वरांशत्वात् तद्वदेव जीवस्यापि स्वप्नादि-सृष्ट्यनुकूलं सत्यसङ्कल्पत्वादिलक्षणं सामर्थ्यमस्ति। अतः तस्य स्वप्नसृष्टौ कर्तृत्वं सम्भवतीत्याशङ्क्येत्यर्थः। सत्यं जीवस्य सत्य-सङ्कल्पत्वादिकमस्ति किन्तु तत्तिरोहितं वर्तते संसारदशा-याम्। अतो न सृष्ट्यादावुपयोगस्तस्य। तच्च तिरोहितमैश्वर्य्यं परस्य विश्वभूतेश्वरस्याभिधानादीश्वरसाक्षात्कारपर्य्यन्तात् तिरो-धायकनिवृत्तावभिव्यज्यते। ईश्वरध्यानादभिव्यक्तौ हेतुमाह तत इति। हि यस्मात् कारणात् तत ईश्वरादज्ञाताद्बन्धोऽस्य जीवस्य तत एव ज्ञाताद्बन्धविपर्य्यय ऐश्वर्य्याविर्भाव इति सूत्रार्थः। सदपीत्यत्र हेतुरीश्वराभिन्नत्वादिति। जन्तोर्जीवस्य सत्यसङ्कल्पत्वादिलक्षणैश्वर्य्याविर्भावार्थं यतमानस्य श्रवणमन-नात्मकं विचारमनुतिष्ठतः क्रमेण परं परमेश्वरमभेदेन ध्यायतः कस्यचिदेव प्रतिबन्धरहितस्य श्रवणमननध्यानानुष्ठानजनिता-दीश्वरस्य प्रसादात् संसिद्धस्याप्रतिबद्धपरमेश्वरसाक्षात्कारवत

श्वरभावापत्तिं स्फुटीचकार। फलाध्यायेऽपि स्वेन रूपेणाभिनिष्पद्यत इति मुच्यमानविषयायां श्रुतौ स्वेन रूपेणाभिनिष्पत्तिं विवक्षितेति बुभुत्सायां ब्राह्मेण जैमिनिरुपन्यासादिभ्य इति सूत्रेण यत् ब्राह्मं रूपमपहतपाप्मत्वादि सत्यसङ्कल्पत्वाद्यवसानं सर्वज्ञत्वसर्वेश्वरत्वादि च तेनाभिनिष्पत्तिः

---

इत्यर्थः। तिमिरेण रोगविशेषेण तिरस्कृता दृग्दृक्चक्षुषः शक्तिर्यथा औषधवीर्य्यादाविर्भवति तथेत्यर्थः। न स्वभावत एवेति। यथोक्तसाधनसम्पत्तिं विनेत्यर्थः। अभिव्यक्त्यङ्गीकारेणेति। ईश्वरभावापत्तिं विना मुक्तस्य सत्यसङ्कल्पत्वाद्यभिव्यक्तिर्न सम्भवतीत्यर्थः। अत्रेदं विचार्य्यते किं प्रतिविम्बत्वविशिष्टचैतन्यरूपजीवगतस्य सत्यसङ्कल्पत्वादेर्मुक्तावाविर्भावः प्रतिपाद्यते किं वा विम्बत्वविशिष्टचैतन्यरूपेश्वरगतस्य। नाद्यः। ईश्वरगतसत्यसङ्कल्पत्वाद्यपेक्षया जीवे पृथक् सत्यसङ्कल्पादिसत्त्वे प्रमाणाभावात्। न हि ईश्वरस्येव जीवस्यापि पृथक् तत्सत्त्वप्रतिपादकं शास्त्रमस्ति। न च जीवस्येश्वराभिन्नत्वेन तत्समानधर्मवत्त्वमनुमातुं शक्यते। लोके विम्बमुखाभिन्नस्यापि प्रतिविम्बमुखस्य विम्बवदवदातत्वादिधर्मादर्शनेन व्यभिचारात् तत्त्वसाक्षात्कारादविद्यानिवृत्तावविद्यानिरूपितप्रतिविम्बत्वस्यापि निवृत्त्या प्रतिविम्बजीवाश्रितसत्यसङ्कल्पत्वादेरवस्थानस्यैव अभावेन मुक्तौ तदभिव्यक्त्यसम्भवात् बन्धदशायामावृतस्य सत्यसङ्कल्पत्वादेरुपयोगाभावस्य स्पष्टतया जीवे पृथक् तत्कल्पनावैयर्थ्याच्च।

य आत्मापहतपाप्मेत्याद्युपन्यासेन स तत्र पर्य्येति यच्चत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा इत्याद्यै-श्वर्य्याविदनेन चेति जैमिनिमतं चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिरित्यनन्तरसूत्रेण एवं वा अरे अयमात्मा अनन्तरोऽवाह्यः कृत्स्नः प्रज्ञान-घन एवेत्यादिश्रुत्या चैतन्यमात्रमात्मस्वरूपमित्यव-गतेः तन्मात्रेणाभिनिष्पत्तिरिति मतान्तरं चोप-न्यस्य एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण इति सिद्धान्तसूत्रेण वस्तुदृष्ट्या चैतन्यमात्रत्वेऽपि पूर्वोक्तगुणकलापस्य उपन्यासाद्यवगतस्य माया-मयस्य बद्धपुरुषव्यवहारदृष्ट्या सम्भवान्न श्रुतिद्वय-

---

न च बन्धदशायामेव सगुणविद्याफलभूतावान्तरमुक्तौ सत्यसङ्कल्पत्वादेरुपयोगोऽस्तीति न तद्वैयर्थ्यमिति वाच्यम्। तत्रापि ईश्वरसमानसत्यसङ्कल्पत्वाद्यभिव्यक्त्यनभ्युपगमेन जीवे तत्समानैश्वर्य्यस्य तिरोहितस्य कल्पनावैयर्थ्यात्। तस्मात् प्रतिबि-म्बचैतन्यरूपजीवे पृथक् सत्यसङ्कल्पत्वादिकल्पनं प्रमाणप्रयोजन-शून्यम्। तथा बिम्बभूतेश्वरगतं सत्यसङ्कल्पत्वाद्यैश्वर्य्यं बन्धदशायां जीवान् प्रति जीवाविद्याभिः तिरोहितं सत् ईश्वरसाक्षात्का-रान्मुक्तौ तेषामभिव्यज्यत इति द्वितीयपक्षोऽप्यनुपपन्नः। सत्य-सङ्कल्पत्वादिविशिष्टेश्वरस्याविद्यावृतत्वे मानाभावात्। न च इदानीमहं सत्यसङ्कल्पत्वादिगुणक ईश्वरोऽस्मि इत्यनुभवाभावात् तद्विशिष्टेश्वरस्यावृतत्वं कल्प्यत इति वाच्यम्। प्रतिबिम्बजीवानां

विश्वभूतेश्वरस्य च कल्पितभेदाभ्युपगमे तत एव जीवस्य जीवान्तरसाक्षात्काराभाववदीश्वरसाक्षात्काराभावोपपत्त्या तद्विशिष्टेश्वरस्यावृतत्वकल्पनावैयर्थ्याद्विशिष्टेश्वरस्यावृतत्वकल्पने विशिष्टावारकाविद्यानिवर्त्तकज्ञानासम्भवेन तदनिवृत्तिप्रसङ्गाच्च। तत्त्वमस्यादिवाक्यजन्यज्ञानस्य शुद्धचिन्मात्रगोचरस्य तद्विशिष्टेश्वरविषयकत्वाभावेन विशिष्टावरणानिवर्त्तकत्वादविद्यायाः शुद्धचिन्मात्रावारकत्वाश्रयणे च सत्यसङ्कल्पत्वाद्यैश्वर्य्यस्याविद्यया तिरोधानासिद्धेश्च। न च जीवस्य स्वकीयत्वेन ईश्वरगतसत्यसङ्कल्पत्वाद्यप्रतीतिरेवात्र तिरोधानं विवक्षितमिति वाच्यम्। तथा सति तदुत्तरसूत्रे तिरोधानस्याविद्याप्रयुक्तावरणरूपत्वप्रतिपादनविरोधात्। तस्मादीश्वरगतसत्यसङ्कल्पत्वाद्यैश्वर्य्यस्य जीवाविद्यातिरोहितत्वमैश्वर्य्यतिरोधानस्य तत्त्वसाक्षात्कारनिवर्त्त्यत्वं चाभ्युपेत्य पराभिध्यानादिति सूत्रतद्भाष्ययोः प्रवृत्तिरिति वक्तव्यम्। उक्तं च अस्य सूत्रस्याभ्युपेत्यवादत्वं सर्वज्ञात्ममुनिभिः। तेषां वचनं मूल एवोदाहरिष्यत इति मुक्तस्येश्वरभावापत्तौ नैतत् सूत्रादिकमपि मानमित्यस्वरसादाह फलाध्यायेऽपीति केन रूपेणेति। किं सर्वज्ञत्वसर्वेश्वरत्वापहतपाप्मत्वादिगुणविशिष्टेन रूपेण मुक्तोऽवतिष्ठते किं वा शुद्धचिन्मात्ररूपेणैव अवतिष्ठते अथवा द्विविधेन रूपेणेति जिज्ञासायां सत्यामित्यर्थः। उपन्यासेनेति। उद्देश्यरूपवाक्यजातेनेत्यर्थः। य आत्मापहतपाप्मेत्युपक्रम्य सोऽन्वेष्टव्य इति विचारविधानात् तथा एष सर्वेश्वर इत्याद्युपक्रम्य तमेतं यज्ञादिना विविदिषन्तीति तद्वेदने यज्ञादिविधानादुपन्यासग्रहणं सर्वज्ञत्वादिव्यपदेशस्याप्युपलक्षणम्। तथा च व्यपदेशः यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तप इत्यादिः। व्यपदेशो नाम यो वाक्यसन्दर्भः उद्देश्यरूपो न भवति विधिरूपश्च न

भवति स एव। सर्वज्ञत्वादिसन्दर्भश्च नोद्देश्यरूपः। विधेयानुपलम्भात्। नापि विधिः। यच्छब्दघटितत्वेनानुवादत्वप्रतीतेः। तथाच मुक्तो ब्राह्मेण वास्तवेन धर्मजातेन युक्तोऽवतिष्ठते। कुतः। उपन्यासव्यपदेशविधिभ्यः तस्य ब्रह्माभिन्नस्य तद्रूपयुक्तत्वावगमादिति सूत्रार्थः। स मुक्तः तत्र प्रकृते ब्रह्मणि स्थितः जच्चत् हसन्। ऐश्वर्य्यावेदनेनेति। अज्ञातस्यैश्वर्य्यस्यावेदनेन ज्ञापकेन विधिवाक्येनेति यावत्। अज्ञातज्ञापकवाक्यस्यापि उत्पत्तिविधित्वस्वीकारात्। चिति तन्मात्रेणेति। चितिश्चैतन्यं चैतन्यमात्ररूपेणैव मुक्तोऽवतिष्ठत इत्यर्थः। यथा लवणपिण्डो वहिरन्तश्च लवणैकरसः एवमेव अरे मैत्रेयि प्रकृत आत्मा शरीराद्यन्तस्तद्वहिश्च चैतन्यैकस्वभाव इति श्रुत्यर्थः। तन्मात्रेणेति। मुक्तौ ब्रह्माभेदेन विद्यमानस्य न कश्चिद्धर्मोऽस्ति। ब्रह्मस्वरूपे मुक्ते उपन्यासाद्यवगतगुणैश्वर्य्यादीनां श्रुतितात्पर्य्यविषयत्वाभावेन तुच्छत्वादिति तात्पर्य्यकमौडुलोमिमतम्। इदञ्च मतद्वयं पूर्वपक्षः। सूत्रं व्याचष्टे वस्तुदृष्ट्येति। परमार्थत इत्यर्थः। जैमिनिमत इव गुणकलापस्य वास्तवत्वानभ्युपगमात् न चिन्मात्रत्वप्रतिपादकश्रुतिविरोधः। औडुलोमिमत इव गुणकलापस्य तुच्छत्वानभ्युपगमात् न गुणकलापश्रुतीनां निर्विषयत्वापत्तिरूपोऽपि विरोधोऽस्तीत्यर्थः। एवमपीति। सौत्रभागेन मुक्तस्य चिन्मात्रत्वमुपेत्य उपन्यासाद्यवगतगुणकलापादेरपि पूर्वभावादित्यनेन सौत्रभागेन मुक्तात्मनि अङ्गीकृतत्वादीश्वरभावापत्तिं विना मुक्तस्य गुणकलापादेरयोगात् तस्य ईश्वरभावापत्तिः सूत्रे भातीत्यर्थः। अस्यार्थस्य भाष्यादिकमपि न प्रतिकूलं किन्तु अनुकूलमेव इत्याह सूत्रद्वयमित्यादिना। अत्रेदं विचार्य्यते मुक्तस्येश्वरभावापत्तिस्वीकारे विश्वभूतेश्वरस्य साधकानुग्रहार्थं मायामयशरीराङ्गीकारेण मुक्तोऽपि शरीर्य्येव स्यात्। अन्यथा रतिक्रीडादिश्रुतिसिद्धैश्वर्य्या-

विरोध इति अविरोधं वदन् सूत्रकारः सूत्रत्रय-मिदमुक्तार्थपरत्वेन व्याकुर्वन् भाष्यकारश्च मुक्तस्ये-श्वरभावापत्तिं स्पष्टमनुमेने। भामतीनिबन्धप्र-भृतयश्च श्रुत्युपवृंहितमिदं सूत्रजातं भगवतो भाष्य-कारस्योदाहृतं वचनजातं च तथैवान्ववर्त्तन्त।

---

योगात्। तथा चाशरीरं वाव सन्तमिति श्रुत्या मुक्तस्याशरीरत्व-प्रतिपादनं विरुध्येत। कथमिदमशरीरत्वं सम्भवतीति जिज्ञा-सायां विद्यासामर्थ्यात् परब्रह्मप्राप्तौ सत्यां तत् सम्पद्यते नान्यथेति प्रतिपादनार्थमशरीरत्वप्रतिपादकवाक्यानन्तरं परं ज्योतिरुपसम्पद्येति वाक्यमिति प्रतिपादकं ज्योतिरधि-करणभाष्यं च विरुध्येत। परब्रह्मप्राप्त्यनन्तरमपि सशरीरत्वाभ्यु-पगमात्। तथा च तदधिकरणभाष्यम् अशरीरं वाव सन्तमिति च अशरीरतायै ज्योतिःसम्पत्तेरस्याभिधानादब्रह्मभावाच्च अन्य-त्राशरीरत्वानुपपत्तेरिति। ज्योतिरत्र ब्रह्म विवक्षितम्। किञ्च मुक्तस्य सर्वज्ञत्वाद्यभ्युपगमे यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् इत्यादिना तस्य विशेषज्ञानाभावप्रतिपादनं विरुध्येत। इदञ्च वचनं परममुक्तिविषयमिति स्वाप्ययसम्पत्त्योरिति सूत्र-तद्भाष्यादौ स्पष्टम्। किञ्च सर्वेश्वरभावं प्राप्तस्य मुक्तस्य तद्भा-वापत्तिदशायां सगुणविद्याफलभूतेश्वरभावापत्तिदशायामिव योऽहं पुरा संसार्यभूवं सोऽहमिदानीमीश्वरः सम्पन्न इति प्रति-सन्धानमभ्युपगम्यते न वा। नाद्यः। पूर्वोपाधेर्निवृत्तत्वेन तथानुसन्धानासम्भवात् उपाध्यैक्यस्य अनुसन्धानप्रयोजकशरीर-प्रविष्टत्वात्। न द्वितीयः। ईश्वरभावापत्तौ केवलस्वरूपेणैव

न च श्रुत्युपबृंहितस्य एतावतः सूत्रभाष्य-वचनजातस्य ऐश्वर्य्यमज्ञानतिरोहितं सत् ध्याना-

---

अवस्थानापेक्षया मुक्तस्य फलतो विशेषाभावेन तद्भावापत्त्युपपादनस्यानतिप्रयोजनत्वापत्तेः। तस्मात् मुक्तस्येश्वरभावापत्तिप्रतिपादनं यत्र त्वस्येत्यादिश्रुतिविरुद्धं तदनुसारिबहुभाष्यादिविरुद्धं प्रयोजनशून्यं चेति सिद्धम्। अत एव न्यायरक्षामणौ यावत् सर्वमुक्ति विश्वेश्वरभावापत्तिरस्तीत्यस्माभिः सिद्धान्तलेशसंग्रहे समर्थितत्वेन आविर्भूतस्वरूपस्य सत्यकामत्व-सर्वेश्वरभावापत्तावत्र साधितायां यथोक्तमस्वरसं मनसि निधाय मुक्तानां शुद्धचैतन्यभावापत्तिः तत्पक्षे जक्षणाद्यैश्वर्य्योपपत्तिश्च दर्शिता दीक्षितैरेव मुक्तानां यावत् सर्वमुक्ति सत्यसङ्कल्पत्वादिकं चोपपद्यते। तस्य शुद्धचैतन्यभावापत्तावपि तत्तत् सर्वमुपपद्यते एव। शुद्धचैतन्यस्य जीवेश्वरानुस्यूतचैतन्यसामान्यात्मना अवस्थानात्। अतएव साक्षात्कृतब्रह्मणां यावत् सर्वमुक्ति सर्वात्मतापत्तिरस्तीति वामदेवस्य मनुसूर्य्यादिभावापत्तिः श्रूयते। एवञ्च मुक्तस्य सार्वभौमादिमानुषात्मना इन्द्रादिलोकपालात्मना दहराद्युपासनाफलानुभवितृपुरुषात्मना च जक्षणादिकं सर्वलोककामावाप्तिमत्त्वं ब्रह्मलोकसमाहितसत्यकामाद्यनुभवितृत्वञ्च व्यपदेष्टुं शक्यमिति जक्षणादिश्रवणमप्युपपद्यत इत्यादिग्रन्थेन। तथा च तदनुसारेण प्रकृतसूत्रभाष्यादौ ब्रह्मगतस्यैश्वर्य्यस्य मुक्तजीवगतत्वाङ्गीकरणं मुक्तस्य ब्राह्मेण रूपेण अवस्थानाभ्युपगमेऽपि जैमिनिमत इव सिद्धान्ते नाद्वैतविरोधः। तस्य रूपस्य बद्धजीवान्तराविद्याकल्पितत्वाभ्युपगमादित्येतावन्मात्रपरं न तु मुक्तस्येश्वरभावापत्तिपरमिति संक्षेपः।

ननु अध्यायचतुष्टयेऽपि उदाहृतश्रुतिसूत्रभाष्यादिग्रन्थजातस्य

दभिव्यज्यते इत्यवोचत्। शरीरिणः सूत्रकृदस्य यत्तु तदभ्युपेत्योदितमुक्तहेतोरिति संक्षेपशारीरकोक्तरीत्याभ्युपेत्यवादत्वं युक्तं वक्तुम्।

तस्मान्मुक्तानामीश्वरभावापत्तेरवश्याभ्युपेयत्वादेतदसम्भव एव प्रतिबिम्बेश्वरवादे दोषः। तदाहुः कल्पतरुकाराः। न मायाप्रतिबिम्बस्य विमुक्तैरुपसृप्यतेति। एतदसम्भवश्चैकजीववादपारमार्थिकजीवभेदवादयोरपि दोषः।

---

सर्वज्ञात्ममुनिभिरुपदर्शितयुक्तिभिः प्रौढवादत्वप्रतीतेः कथं मुक्तस्येश्वरभावापत्तावितच्छ्रुत्यादिकं प्रमाणं स्यादित्यत आह न चेति। एतावत इत्यनेन बहुश्रुतिसूत्रभाष्यादिविरोधात् संक्षेपशारीरकमतं हेयमिति सूचितम्। अस्य शरीरिणस्तत् सत्यसङ्कल्पत्वादिलक्षणमैश्वर्यमुपेत्य मुक्तौ ध्यानादभिव्यज्यत इत्युदितमुक्तं सूत्रकृतेत्यर्थः। अभ्युपेत्यवादत्वे हेतुमाह उक्तहेतोरिति। मुक्तस्येश्वरभावापत्तौ प्रमाणत्वेनोदाहृतश्रुतिभाष्यादिकं व्याख्याय अन्ते अस्वरसादिरूपेण मुक्तस्येश्वरभावापत्तिं प्रति अनुपपत्तिरूपा या युक्तयोऽस्माभिः प्रदर्शिताः ताः सर्वा,अप्यत्र उक्तहेतोरित्यनेन विवक्षिता इति मन्तव्यम्।

तस्मादिति। उक्तप्रमाणबलादित्यर्थः। मुक्तस्येश्वरभावापत्तिरेतच्छब्दार्थः। उपसृप्यता प्राप्यता। एकेति। एकजीववादे एतदसम्भवः प्रागेव दर्शितः। पारमार्थिकेति। पारमार्थिको जीवेश्वरयोर्भेद इति वादेऽपि मुक्तस्येश्वरभावापत्त्य-

यत्तु कैश्चित् द्वैतिभिरुच्यते भेदस्य पारमार्थिकत्वेन मुक्तौ जीवस्येश्वरभावाभावेऽपि तत्रापीश्वर इव पृथगपहतपाप्मत्वादिगुणसम्भवादविरोध इति। तत्तुच्छम्।

तथा सति जीवस्याप्यपहतपाप्मत्वादिकमस्तीति न तस्य ब्रह्मलिङ्गत्वमिति शङ्कापरिहारालाभेन उत्तराच्चेदाविर्भूतस्वरूपस्त्विति सूत्रविरोधात्।

---

सम्भवो दोष इत्यर्थः। एतदुपलक्षणम्। शुद्धब्रह्मरूपेण अवस्थानलक्षणमुक्त्यसम्भवोऽपि पारमार्थिकजीवेश्वरभेदवादे दोष इति बोध्यम्।

ननु प्रजापतिविद्यायां मुक्तस्यापहतपाप्मत्वादिगुणाष्टकं प्रतिपाद्यते। तच्च मुक्तस्येश्वरभावापत्त्यनभ्युपगमे न सम्भवतीति तस्य तद्भावापत्तिरेष्टव्या। सा च पारमार्थिकजीवेशभेदवादे न सम्भवतीति खलु तवाभिप्रायः। स च अनुपपन्नः। भेदपक्षेऽपि श्रुतिसूत्राभ्यां निरूपितस्य मुक्ते गुणकलापस्य मुक्तेश्वरभावापत्त्या विनापि सम्भवादिति द्वैतिनां मध्ये केचिच्छ्रुतिसूत्रव्याख्यातारः। तेषां मतमनूद्य दूषयति यत्त्वित्यादिना तत्रापीति। मुक्तजीवेऽपीत्यर्थः।

तथा सतीति। जीवस्य पृथगपहतपाप्मत्वाभ्युगमे सतीत्यर्थः। इति या शङ्का उत्तराच्चेदिति सूत्रभागेन कृता तस्या आविर्भूतस्वरूपस्त्विति परिहारभागेन मुक्तजीवे गुणाष्टकाविर्भावकथनेऽपि परिहारालाभादि-

ब्राह्मेण जैमिनिरिति सूत्रे जीवगतस्यापहत-पाप्मत्वादेरुपन्यासादिभ्य इत्यत्रादिशब्दार्थत्वेन परेषामप्यभिमतस्य जक्षत् क्रीडन् रममाण इत्यादिश्रुत्युदितस्य जक्षणादेश्च ब्राह्मत्वनिर्देशविरोधाच्च। भेदे तेषां गुणानां सत्यत्वेन चिति तन्मात्रेणेति सूत्रोक्तस्य मुक्तजीवानां चैतन्यमात्रत्वस्य एवमपीति सिद्धान्तसूत्रेऽङ्गीकारविरोधाच्च।

सम्पद्याविर्भाव इत्यधिकरणविरोधाच्च। तत्र हि स्वेन रूपेणाभिनिष्पद्यत इतिश्रुतावागन्तुना केनचिद्रूपेणाभिनिष्पत्ति र्नोच्यते। स्वेन शब्दवैयर्थ्यापत्तेः।

---

त्यर्थः। तथाच मुक्तब्रह्मणोर्भेदपक्षे गुणकलापस्य जीवसाधारणस्य ब्रह्मासाधारणत्वरूपब्रह्मलिङ्गत्वालाभाद्दहराकाशस्येश्वरत्वनिर्णायकं गुणाष्टकं न स्यादिति भावः।

भेदपक्षे मुक्तजीवगतस्यापहतपाप्मत्वादेर्ब्राह्मत्वनिर्देशविरोधश्चेत्याह ब्राह्मेणेति। ननु भेदवादिनां मते मुक्तगतापहतपाप्मत्वादेर्जक्षणाद्यैश्वर्यस्य ब्राह्मत्वमसिद्धम्। अत आह परेषामपीति भेद इति। जीवब्रह्मभेदपक्षे वास्तवगुणवतो जीवस्य चिन्मात्रत्वायोगादिति भावः।

किञ्च किं गुणजातं मुक्तावुत्पद्यते किं वा नित्यसिद्धमिति विकल्पं मनसि निधाय आद्यनिराकरणपूर्वकं द्वितीयं परिशेषयति सम्पद्याविर्भाव इत्यादिना तत्र हीति। सम्पद्याधिकरणे हि इत्यर्थः। स्वेन रूपेणाभिनिष्पद्यत इत्यनेन मुक्ति-

येन रूपेणागन्तुना स्वयमभिनिष्पद्यते तस्या-त्मीयत्वस्यावक्तव्यत्वात्। तस्मादात्मवाचिस्वशब्दो-पादानात् नित्यसिद्धेन स्वस्वरूपेणैवाभिनिष्पत्ति-र्विवक्षिता न तु केनचिद्धर्मेणेति व्यवस्थापितम्।

---

रभिधीयते। सा किम् आगन्तुकस्य स्वरूपस्योत्पत्तिरिव स्वर्गादि-रूपोत्पत्तिवत् विवक्षिता किं वा आत्मस्वरूपस्यैव विद्ययावि-र्भावमात्ररूपा विवक्षितेति संशये मुक्तेरपि स्वर्गादिवत् फल-त्वात् तद्वदेव आगन्तुकातिशयरूपनिष्पत्तिर्मुक्तिरिति पूर्वपक्ष-निषेधपूर्वकं सिद्धान्तमाह आगन्तुनेत्यादिना।

कथं तद्वैयर्थ्यम्। अत आह येनेति। स्वर्गाद्यागन्तुकरूपवत् यन्मु-क्तिलक्षणं स्वरूपमुत्पद्यते मुक्तस्य तत् स्वशब्देनानुक्तावपि स्वीयमेव भवति। अतः स्वशब्दस्य स्वीयवाचित्वे वैयर्थ्यमेवेत्यर्थः। तस्मादिति। आगन्तुकरूपाभिनिष्पत्तिर्मुक्तिरिति पक्षे स्वशब्दस्य स्वकीयार्थक-ताया एव वक्तव्यत्वेनोक्तरीत्या तद्वैयर्थ्यापत्तेरित्यर्थः। आत्मेति। स्वकीय इव स्वस्वरूपेऽपि स्वशब्दस्य रूढत्वेन नानार्थत्वे सति स्वकीयार्थकत्वस्य प्रकृते असम्भवादात्मस्वरूपवाचित्वं निश्चितमिति भावः। इदमेव अत्र आत्मवाचिस्वपदोपादानप्रयोजनम्। यन्मुक्तेः स्वर्गादिवत् आगन्तुकरूपत्वनिराकरणम्। अन्यथा आत्मवाचि-स्वपदवैयर्थ्यादेवेति बोध्यम्। सत्यसङ्कल्पत्वादिरूपस्य स्वेन रूपेण इत्यत्र मुक्तित्वेनाभिमतस्य आगन्तुकत्वपक्षे तदागन्तुकत्वनिषेध-काधिकरणविरोधवत् तस्य बन्धदशायां तिरोधानप्रतिपादक-सूत्रेण मुक्तिदशायामाविर्भावप्रतिपादकसूत्रेण च विरोधो भवेत्।

किञ्च इदमपहतपाप्मत्वादि जीवस्य मुक्तावागन्तुकं चेत् सम्पद्याविर्भाव इति मुक्तावागन्तुकरूपनिषेधेन पराभिध्यानात्तु तिरोहितम् उत्तराच्चेदाविर्भूतस्वरूपस्त्विति अपहतपाप्मत्वादेर्बन्धमुक्त्योस्तिरोभावाविर्भावप्रतिपादनेन च विरोधः स्यादिति नित्यसिद्धं वाच्यमिति बन्धस्य मिथ्यात्वं दुर्वारम्। नित्यसिद्धमपहतपाप्मत्वं हि सर्वदा पाप्मरहितत्वम्। न च वस्तुतः सर्वदा पाप्मरहिते पाप्मसम्बन्धः तन्मूलककर्त्तृत्वभोक्तृत्वसम्बन्धो वा पारमार्थिकः सम्भवति।

एवं च जीवस्येश्वराभेदोऽपि दुर्वारः। श्रुतिबोध्यतदभेदविरोधिबन्धस्य सत्यत्वाभावात्।

---

मुक्तावभिनवतयोत्पद्यमानस्य उक्ततिरोधानाविर्भावयोरयोगादित्याह किञ्चेदमिति। द्वितीयविकल्पपरिशेषस्य फलमाह इति बन्धस्येति। अपहतपाप्मत्वादेरीश्वर इव जीवेऽपि नित्यसिद्धत्वादिति इति शब्दार्थः। तदेवोपपादयति नित्यसिद्धमिति तन्मूलेति। पाप्मसम्बन्धमूलकेत्यर्थः।

एवञ्चेति। बन्धस्य मिथ्यात्वे सतीत्यर्थः। ननु किं बन्धस्य मिथ्यात्वसाधनेन तस्य सत्त्वेऽपि जीवब्रह्माभेदबोधनसम्भवादिति भास्करमतमाशङ्क्याह श्रुतीति। बन्धस्य सत्यत्वमते परमात्मगतनित्यमुक्तत्वस्यापि सत्यत्वेन परमार्थभूतविरुद्धधर्माक्रान्तयोर्जीवब्रह्मणोर्दहनतुहिनयोरिव श्रुतिबोध्याभेदासम्भवादित्यर्थः।

अन्यथा संसारिणि नित्यसिद्धसत्यसङ्कल्प-तिरोधानोक्त्ययोगाच्च ।

न हि जीवस्य संसारदशायामप्यनुवर्त्तमानो यत्किञ्चिदर्थगोचरः कश्चिदस्ति अवितथसङ्कल्पस्ति-रोहित इति परैरपीष्यते । किं त्वीश्वरस्य यत् नित्यसिद्धं निरवग्रहं सत्यसङ्कल्पत्वं तदेव जीवस्य संसारदशायामीश्वराभेदानभिव्यक्त्या स्वकीयत्वेना-नवभासमानं तं प्रति तिरोहितमित्येव समर्थ-नीयमिति घट्टकुटीप्रभातवृत्तान्तः ।

---

अन्यथेति । बन्धस्य मिथ्यात्वस्वीकारपूर्वकं जीवब्रह्मणोर-भेदानङ्गीकार इत्यर्थः । कुतः तिरोधानोक्त्ययोग इति चेत् तत्र वक्तव्यम् ।

किं जीवगतस्य नित्यसिद्धसत्यसङ्कल्पत्वादेः तिरोहितत्वं पराभिध्यानादिति सूत्रेण अभिधीयते किं वा ईश्वरगतस्यैव जीवं प्रति तेन तिरोहितत्वमभिधीयते । नाद्य इत्याह न हीति । यत्किञ्चिदर्थगोचरोऽपि सत्यसङ्कल्पः तिरोहितो-ऽस्तीति नेष्यते । सर्वार्थगोचरः सत्यसङ्कल्पः तिरोहितोऽस्तीति नेष्यते इति किमु वक्तव्यमित्यर्थः । अद्वैतिभिरिव इत्यपि-शब्दार्थः । न हि सिद्धान्ते प्रतिबिम्बचैतन्यरूपेषु जीवेषु बिम्बचैतन्यरूपेश्वरगतसत्यसङ्कल्पत्वाद्यपेक्षया पृथक् सत्य-सङ्कल्पत्वादिकं संसारदशायां तिरोहितमस्तीतीष्यते । तत्र प्रमाणप्रयोजनयोरभावात् । एतच्च प्रागेव अस्माभिर्दर्शितम् । द्वितीये तु कल्पे दूरं गत्वापि सिद्धान्तिमतमेवालम्बनीयम् । तथा

नन्वपहतपाप्मत्वं न पाप्मविरहः किन्तु पाप्महेतुकर्माचरणेऽपि पापोत्पत्तिप्रतिबन्धक-शक्तियोगित्वमिति न तस्य नित्यसिद्धत्वेन बन्धस्य मिथ्यात्वप्रसङ्गः। एवं सत्यसङ्कल्पत्वमपि शक्ति-रूपेण निर्वाच्यमिति नेश्वराभेदप्रसङ्ग इति चेत् नैवम्। एवं शब्दार्थकल्पने प्रमाणाभावात्।

न हि पापजननप्रतिबन्धिका शक्तिः संसार-रूपपरिभ्रमणदशायां पापानुत्पत्त्यर्थं कल्पनीया। तदानीं तदुत्पत्तेरिष्टत्वात्। विद्योदयप्रभृति तु विद्यामाहात्म्यादेवाश्लेषः तदधिगमे उत्तरपूर्वा-घयोरश्लेषविनाशौ तद्व्यपदेशादितिसूत्रेण दर्शितः।

---

च न पारमार्थिकभेदसिद्धिरिति दूषणमाह किन्तु ईश्वरस्येति ईश्वरेति। विश्वभूतेनेश्वरेण सह जीवस्य यो वास्तवाभेदस्तद-नभिव्यक्त्येत्यर्थः।

जीवब्रह्मणोरभेदापत्तिभयाज्जीवे पृथगेवापहतपाप्म-त्वादिकं स्वीकृत्य तस्य वास्तवबन्धाविरुद्धत्वं शङ्कते नन्विति।

किञ्च निषिद्धकर्माचरणेऽपि पापोत्पत्तिप्रतिबन्धकशक्तिरप-हतपाप्मशब्दार्थत्वेन कल्प्यमाना किं विद्योदयात् प्राक् तत्-प्रतिबन्धार्थं कल्प्यते किं वा विद्योदयानन्तरं त्वदभिमतमुक्तेः प्राक् तत्प्रतिबन्धार्थं कल्प्यते अथवा त्वदभिमतमुक्तिकाले मुक्तस्य देहेन्द्रियादिसत्त्वेन पापमहेतुनिषिद्धकर्माचरणसम्भवात् तदा तत्प्रतिबन्धार्थं कल्प्यते इति विकल्पं मनसि निधाय क्रमेण दूषयति न हि इत्यादिना इष्टत्वादिति। तत्रापि सम्मतत्वादि-

तत एव मुक्तावप्यश्लेषः उपपद्यत इति व्यर्था श्रुतिकल्पना ।

तस्मादुदाहृतश्रुतिसूत्रानुसारिभिर्मुक्तजीवानां यावत्सर्वमुक्ति वस्तुसच्चैतन्यमात्रत्वाविरोधिबद्धपुरुषाविद्याकृतनिरवग्रहैश्वर्य्यतदनुगुणगुणकलापविशिष्टनिरतिशयानन्दस्फुरणसमृद्धनिःसन्धिबन्धपरमेश्वरभावापत्तिरादर्त्तव्येति सिद्धम् ।

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरप्पय्यदीक्षित इति प्रथितस्तनूजः ॥१॥
तन्त्राण्यधीत्य सकलानि सदावदातव्याख्यानकौशलकलाविशदीकृतानि ।
आम्नाय मूल मनुसृत्य च सम्प्रदायम् सिद्धान्तभेदलवसंग्रहमित्यकार्षीत् ॥२॥

इति शास्त्रसिद्धान्तलवसंग्रहे चतुर्थः परिच्छेदः सम्पूर्णः ।

---

त्यर्थः । तस्य ब्रह्मणोऽधिगमे साक्षात्कारे सति विद्योदयात् पूर्वाघस्य नाशो भवति । तदुदयोत्तरकालीनाघस्य च अश्लेषो भवति । कुतः । तस्य विद्ययाघनाशादेः श्रुतिस्मृतिषु व्यपदेशात् सूत्रादिसिद्धत्वादित्यर्थः ।

मुक्तस्येश्वरभावापत्तिमुपपादितामुपसंहरति तस्मादिति । उदाहृतश्रुतिसूत्रभाष्यादिस्वारस्यादित्यर्थः । अविरोधित्वमैश्वर्य्यविशेषणम् । तदनुगुणेति । ऐश्वर्य्यानुगुणेत्यर्थः । समृद्धत्वमीश्वरभावापत्तिविशेषणम् ।

इति सिद्धान्तलेशसंग्रहस्य चतुर्थपरिच्छेदः ।

बि, ए, उपाधिधारिणा पण्डितकुलपतिना श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण प्राचीनां व्याख्यामवलम्ब्य सङ्कलिता सिद्धान्तलेशव्याख्या समाप्ता ।

---

